# सुन्दर-काण्डम्

## प्रथमोऽध्यायः

श्रीमहादेव उवाच—

शतयोजनविस्तीर्णं समुद्रं मकरालयम् ।
[1]लिलङ्घ[2]यिषुरानन्दसन्दोहो मारुतात्मजः ।
ध्यात्वा रामं परात्मानमिदं वचनमब्रवीत् ॥ १ ॥
पश्यन्तु वानराः सर्वे गच्छन्तं मां विहायसा ।
अमोघं रामनिर्मुक्तं महाबाणमिवाखिलाः ॥ २ ॥

---

१ । नरो० । आदौ शतयोजनविस्तीर्णं तत्रापि मकरालयं जलजन्तुभेदाश्रयमित्यर्थः । विशेषणद्वयेन दुर्लङ्घ्यत्वं सूचितम् । लिलङ्घयिषुर्लङ्घयितुमिच्छुरित्यर्थः । आनन्दानां सन्दोहः समूहो यस्य स तथा । ध्यातुर्ध्येयस्य श्रीरामस्य वैलक्षण्यसूचनाय परेत्युक्तम् । परमत्वञ्च सर्वज्ञत्वादिना ।

२ । नरो० । विहायसा आकाशेन । अमोघम् अव्यर्थम् । एतदुक्त्यात्मनः गत्वा कार्यमकृत्वा परावृत्तिर्नास्तीति रामविर्मुक्तबाणवेगसमवेगत्वञ्च सूचितम् ।

---

१ । शतेति । लिलङ्घयिषुः स्वार्थे णिच् । आनन्दसन्दोहस्तत्समूहरूपः, तत्समूहवान् वा । रा० ।

मातृरूपायाः सीताया दर्शनं भविष्यति, सर्वकार्यसम्पादकस्य रामस्यापि कार्यं सम्पादयिष्यामीति तादृशामानन्दानां समावेशः ।

२ । रामनिर्मुक्तमिति पाश्चात्यवाल्मीकीयसम्मतम् । तथाच—

वानरान् वानरश्रेष्ठ इदं वचनमब्रवीत् ।
यथा राघवनिर्मुक्तः शरः श्वसनविक्रमः ॥
गच्छेत्तद्वद् गमिष्यामि लङ्कां रावणपालिताम् ॥ इति । ५।१।३९-४० ।

---

1. च-छ 'विल-' । 2. ग '-यिषु-' ।

पश्याम्यद्यैव रामस्य पत्नीं जनकनन्दिनीम् ।
कृतार्थोऽहं कृतार्थोऽहं पुनः पश्यामि राघवम् ॥ ३ ॥

प्राणप्रयाणसमये यस्य नाम सकृत् स्मरन् ।
नर[1]स्तीर्त्वा भवाम्भोधिमपारं याति तत्पदम् ॥ ४ ॥

किं पुनस्तस्य दूतोऽहं तद[2]ङ्गाङ्गुलि[3]मुद्रकः ।
तमेव हृदये ध्यात्वा लङ्घयाम्यल्पवारिधिम् ॥ ५ ॥

इत्युक्त्वा हनुमान् बाहू प्रसा[4]र्याऽऽयतबालधिः ।
ऋजुग्रीवोर्ध्वदृष्टिः सन्नाकुञ्चितपदद्वयः ॥ ६ ॥

दक्षिणाभिमुखस्तूर्णं पुप्लुवेऽनिलविक्रमः ।
आका[5]शात् [6]त्वरितं देवैर्वीक्ष्यमाणो जगाम सः ॥ ७ ॥

---

४ । नरो० । प्राणप्रयाणसमये मरणसमये । भवाम्भोधिं संसारसमुद्रम् ।

५ । नरो० । तदङ्गस्य अङ्गुलिमुद्रा अक्षरयुक्तोर्मिका यत्र स तथा ।

६ । नरो० । आयतो दीर्घो बालधिः पुच्छं यस्य स तथा । ऋजुरवक्रा ग्रीवा यस्य स चासौ ऊर्ध्वदृष्टिश्चेति स तथा । आकुञ्चितं पदद्वयं येन स तथा ।

७ । नरो० । अनिलस्येव विक्रमो यस्य स तथा ।

---

३ । पश्यामीति भाविन्यपि वर्त्तमानत्वारोपोऽवश्यंभावित्वद्योतनाय । कृतार्थो जगन्मातृदर्शनेनेति भावः ।

४ । मम समुद्रलङ्घनमकिञ्चित्करमित्याह—प्राणेति ।

५ । अल्पवारिधिमित्यपारभवाम्भोधेर्व्यतिरेकालङ्कारः । तं लङ्घयामीति किं वक्तव्यमित्यन्वयः । रा० ।

६ । बाहू इत्यादि वानरोत्प्लवनजातिवर्णनम् । आयतबालधिः प्रसारितपुच्छः । ऋजुग्रीव ऊर्ध्वदृष्टिरित्यर्थः । कर्मधारयः । रा० ।

७ । अनिलो वायुस्तत्सदृशपराक्रमः । आकाशात् आकाशे स्थित्वेत्यर्थः । रा० ।

हनूमत उत्पतनप्रकारमाह वाल्मीकीये—

पद्भ्यां दृढमवस्थानं स कृत्वा कपिकुञ्जरः ।
विकुञ्च्य कर्णौ हनुमानुत्पपात महाबलः ॥ इति ।५।५।१८ ।

---

1. ग-ङ '-स्तीर्णो' । 2. च '-ङ्गरिकमुद्रकः' । 3. क-ख-ग-घ-ङ छ '-मुद्रिकः' । 4. ग '-र्य वानरर्षभः' । 5. ङ '-शे' । 6. छ 'त्वरितो' ।

दृष्ट्वाऽनिलसुतं देवा गच्छन्तं वायुवेगतः ।
परीक्षणार्थं सत्त्वस्य वानरस्येदमब्रुवन् ॥ ८ ॥
गच्छत्येष महासत्त्वो वानरो वायुविक्रमः ।
लङ्कां प्रवेष्टुं शक्तो वा न वा जानीमहे [1]बलम् ॥ ९ ॥
एवं विचार्य नागानां मातरं सुरसाभिधाम् ।
अब्रवीद्देवतावृन्दः कौतूहलसमन्वितः ॥ १० ॥
गच्छ त्वं वानरेन्द्रस्य किञ्चिद्विघ्नं समाचर ।
ज्ञात्वा तस्य बलं बुद्धिं पुनरेहि त्वरान्विता ॥ ११ ॥
इत्युक्ता सा ययौ [2]शीघ्रं हनूमद्विघ्नकारणात् ।
आवृत्य मार्गं पुरतः स्थित्वा वानरमब्रवीत् ॥ १२ ॥

---

८ । नरो० । सत्त्वस्य वीर्यस्य ।
१० । नरो० । कौतूहलसमन्वितो हर्षसमन्वितः ।
१२ । नरो० । हनूमद्विघ्न एव कारणं हनूमद्विघ्नकारणं तस्मात् हनूमद्विघ्नकारणात् ।

---

८ । वानरस्य सत्त्वस्य वानरीयबलस्य परीक्षणार्थमिदमब्रुवन् विचारयामासुरित्यर्थः । तद्वक्ष्यति एवं विचार्येति । धातूनामनेकार्थत्वात् ब्रुञोऽपि विचारे वृत्तिः । रा० ।

९ । लङ्काप्रवेशे शक्तो वा नेति सन्देहः, तस्मादस्य बलं जानीमहे निर्णेष्याम इत्यर्थः । रा० ।

अस्य बलं न जानीमहे अतो लङ्कां प्रवेष्टुं शक्तोऽशक्तो वा तदपि न जानीमहे । अविज्ञातबलस्यास्य शतयोजनायामं सागरमुल्लङ्घ्य लङ्कागमनं सम्भवति न वेति सन्देहः ।

११ । त्वं राक्षसीं तनुं धृत्वेति शेषः, वाल्मीकीयसंवादात् ।

राक्षसीरूपमास्थाय सुघोरा पर्वतोपमा ।
दंष्ट्राकरालपिङ्गाक्षं वक्त्रं कृत्वा नभःस्पृशम् ॥ इति ।५।१।४ ।

अग्रेऽपि— एवमुक्ता तु सा देवी दैवतैरभिसत्कृता ।
समुद्रमध्ये तरसाऽधारयद्राक्षसीं तनुम् ॥ इति । ५।१।६ ।

केवलेन बलेन कार्यसिद्धिर्न भविष्यतीति मत्वा प्राह—बुद्धिमिति । बलं बुद्धिमपि ज्ञात्वेत्यर्थः । त्वरान्वितेति, विलम्बे हनूमद्गमनस्यापि विलम्बो भविष्यति, ततश्च रावणादीनां विनाशेऽपि विलम्बो भविष्यतीति त्वरया कार्यं साधयितव्यमिति प्रत्यादेशः ।

१२ । सा सुरसा इत्युक्ता दैवैरिति शेषः । मार्गम् आवृत्य आच्छाद्य आक्रम्य वा पुरतः हनूमत इति शेषः ।

---

1. च 'वयम्' । 2. ग-च 'तव' ।

[1]एहि [2]मे वदनं शीघ्रं प्रविशस्व महामते ।
देवै[3]स्त्वं कल्पितो [4]भक्ष्यः क्षुधासम्पीडितात्मनः ॥ १३ ॥
तामाह हनुमान् मातरहं रामस्य शासनात् ।
गच्छामि जानकीं द्रष्टुं पुनरा[5]गम्य सत्वरः ॥ १४ ॥
रामाय कुशलं तस्याः कथयित्वा [6]त्वदाननम् ।
[7]निवेक्ष्ये देहि मे मार्गं सुरसायै नमोऽस्तु ते ॥ १५ ॥
[8]इत्युक्ता पुनरेवाऽऽह सुरसा क्षुधिताऽस्म्यहम् ।
प्रविश्य गच्छ मे वक्त्रं [9]नो चेत् त्वां भक्षयाम्यहम् ॥ १६ ॥
इत्युक्तो हनुमानाह [10]मुखं शीघ्रं विदारय ।
प्रविश्य वदनं तेऽद्य गच्छामि त्वरयाऽन्वितः ।
इत्युक्त्वा योजनायामदेहो भूत्वा पुरः स्थितः ॥ १७ ॥

---

१३ । नरो० । क्षुधासंपीडितात्मन इति । आत्मा जीवः ।

१७ । नरो० । योजनमायामो दैर्घ्यं यस्य तादृशो देहो यस्य स तथा ।

---

१३ । क्षुधया सम्पीडित आत्मा यस्यास्तस्या इत्यर्थः । रा० । क्षुधासम्पीडितात्मनः ममेति शेषः । वाल्मीकिरपि—

मम भक्ष्यः प्रदिष्टस्त्वं सेन्द्रैः सुरगणैः कपे ।
छायां गृह्णामि भूतानां प्रविशेदं ममाऽऽननम् ॥ इति । ५।६।८ ।

१४ । गच्छामि लङ्कामिति शेषः । पुनरागम्य सत्वरः प्रवेक्ष्ये इत्यग्रेणान्वयः ।

१५ । निवेक्ष्ये प्रवेक्ष्यामि । रा० ।

अत्र वाल्मीकिः—

अहन्तु मैथिलीं दृष्ट्वा रामं चाक्लिष्टकारिणम् ।
आगमिष्यामि ते वक्त्रं सत्यमेतद्ब्रवीम्यहम् ॥ इति । ५।६।१३ ।

१७ । सुरसाहनुमत्कायविस्तृतिविषये ज्यायान् मतभेदो वाल्मीकीयेन, तदत्र वाल्मीकीयं विस्तृतिप्रकारं दर्शयामः—

इत्युक्त्वा सुरसां क्रुद्धस्त्रिंशद्योजनमायतः ।
दशयोजनविस्तारो बभूव पवनात्मजः ॥

---

1. ग-ङ-च-छ 'अद्य' । 2. ङ-छ 'मद्वदनं' । 3. क '-स्ता', छ '-स्त्वा' । 4. ख-च 'भच.' । 5. च '-गत्य' । 6. ग-ङ-च-छ 'तवाऽऽननम्' । 7. ग 'निरीक्ष्ये', ङ-च 'निर्वेक्ष्ये', छ 'प्रवेक्ष्ये' । 8. क 'इत्युक्ता', च 'तक्त्रुत्वा' । 9. ग-ङ 'न' । 10. ग-ङ-छ 'विदारय मुखं तव', च 'विस्तारय मुखं तव' ।

दृष्ट्वा हनूमतो रूपं सुरसा पञ्चयोजनम्।
मुखं चकार हनुमान् द्विगुणं रूप[1]मादधत् ॥ १८ ॥
ततश्चकार सुरसा योजनानाञ्च विंशतिम्।
वक्त्रं चकार हनुमांस्त्रिंशद्योजन[2]सम्मितम् ॥ १९ ॥

---

१८। नरो०। पञ्चयोजनमिति 'कालाध्वभ्यामविच्छेद' इति द्वितीया। इदानीं धृतरूपे द्वे गुणौ अवयवौ यस्य तत्तथा।

१९। नरो०। विंशतिमिति पूर्ववद्द्वितीया। हनुमान् त्रिंशद्योजनसम्मितं रूपं चकारेत्यन्वयः, रूपमिति शेषः।

---

तद्दृष्ट्वा सुमहद्रूपं राक्षसी घोरदर्शना।
चकार सुरसा वक्त्रं दशयोजनमायतम् ॥
तां दृष्ट्वा दशविस्तारां सोऽभूद्विंशतियोजनः।
दृष्ट्वा विंशतिविस्तारं सा त्रिंशद्योजनाऽभवत् ॥
त्रिंशद्योजनिकां दृष्ट्वा चत्वारिंशद्गतो ह्यसौ।
चत्वारिंशद्गतं दृष्ट्वा सा तु पञ्चाशतं गता ॥
स तां पञ्चाशतं दृष्ट्वा षष्टियोजनिकोऽभवत्।
षष्टियोजनिकां दृष्ट्वा साऽभूत् सप्ततियोजना ॥
सप्तत्यां राक्षसीं दृष्ट्वा अशीत्येवं गतो ह्यसौ।
अशीतिकं च तं दृष्ट्वा साऽभून्नवतियोजना ॥
नवत्यां राक्षसीं दृष्ट्वा सोऽभवच्छतयोजनः।
शतयोजनविस्तारं तं दृष्ट्वा राक्षसी ततः ॥
चकार सुरसा वक्त्रं शतयोजनमायतम् ॥
अलं खेदेन महता प्रविश स्वोदरं मम ॥
दीप्तजिह्वं सुरसाया विलोक्य निरयोपमम्।
स संक्षिप्याऽऽत्मनः कायं जीमूत इव मारुतिः ॥
तस्मिन् मुहूर्त्ते हनुमान् बभूवाङ्गुष्ठमात्रतः। इति ।५।६।१६-२९ ॥

सुरसाहनूमत्सम्मेलनं पाश्चात्त्ये वाल्मीकीये मैनाकसम्मेलनात् परम्। वृत्तान्तजातन्तु प्रायः समानरूपमेव प्राच्येन (५।१।१३९-१६३)।

---

1. ग '-मावहन्', ङ-छ '-मावहत्', च '-मादधे'। 2. ग '-संयुतम्'।

ततश्चकार सुरसा पञ्चाशद्योजनायतम् ।
वक्त्रं तदा [1]हनूमांस्तु बभूवाङ्गुष्ठ[2]सम्भवः ॥ २० ॥
प्रविश्य वदनं तस्याः पुन[3]रेत्य पुरः स्थितः ।
प्रविष्टो निर्गतोऽहं ते वदनं देवि ते नमः ॥ २१ ॥
एवं [4]वदन्तं [5]दृष्ट्वा सा हनूमन्तमथाब्रवीत् ।
गच्छ साधय रामस्य कार्यं बुद्धिमतां वर ॥ २२ ॥
देवैः [6]सम्प्रेषिताऽहं ते [7]बलं जिज्ञासुभिः कपे ।
दृष्ट्वा सीतां पुनर्गत्वा रामं द्रक्ष्यसि गच्छ भोः ॥ २३ ॥
इत्युक्त्वा सा ययौ देवलोकं वायुसुतः पुनः ।
जगाम वायु[8]मार्गेण गरुत्मानिव पक्षिराट् ॥ २४ ॥
समु[9]द्रोऽप्याह मैनाकं मणिकाञ्चन[10]पर्वतम् ।
गच्छ[11]त्येष महासत्त्वो हनूमान् [12]मारुतात्मजः ।
रामस्य कार्यसिद्ध्यर्थं तस्य त्वं सचिवो भव ॥ २५ ॥

---

२० । नरो० । पञ्चाशद्योजनायतमिति, पञ्चाशद्योजनानि आयतमिति वाक्ये पूर्ववद्द्वितीया, 'क्वचिदन्यत्रापी'ति समासः । अङ्गुष्ठस्येव सम्भवो यस्य स तथा ।

२५ । नरो० । मणयश्च काञ्चनानि च तैर्घटितः खचितो वा पर्वतो मणिकाञ्चनपर्वतस्तम् । यद्वा मणयः काञ्चनानि च यत्र स चासौ पर्वतश्चेति तं तथा । सचिवः सहायः ।

---

२१ । तस्याः सुरसाया वदनं प्रविश्य पुनरेत्य उदरात् बहिरागत्य पुरः स्थितः सुरसाया इति शेषः । ते तव वदनम् । ते तुभ्यं नमः ।

वाल्मीकीयेऽपि—

सोऽभिपत्य महावक्त्रे निष्पत्य च महाजवः ॥
अन्तरीक्षे स्थितः श्रीमानिदं वचनमब्रवीत् ।
दाक्षायणि प्रविष्टोऽहं तव वक्त्रं नमोऽस्तु ते ॥ ५।१।१५-१६ ।

एवं पाश्चात्त्येऽपि ( ५।१।१६०-१६१ ) ।

२४ । सा सुरसा देवलोकं ययौ । वायुसुतः पुनर्वायुमार्गेण जगाम लङ्कामुद्दिश्य इति शेषः ।

२५ । मणिकाञ्चनपर्वतं मण्यादियुक्तशृङ्गयुतं पर्वतम् । सचिवो भव मध्ये विश्रामदानेन सहायो भवेत्यर्थः । रा० ।

---

1. ङ 'तु हनुमान् ब-' । 2. क-ख-ग-घ-ङ '-सन्निभः', च '-मारुतः' । 3. छ '-रेव' । 4 च 'ब्रुवन्तं' । 5. ङ 'तं दृष्ट्वा' 6. ङ 'सम्प्रेरिताऽ-' । 7. ग-छ 'बलजि-' । 8. च '-वेगेन' । 9. ग '-द्रः प्राह' । 10. ग '-भूषितम्' । 11. ग '-त्यत्र' । 12. ख 'मरुता-' ।

सगरै[1]र्वर्द्धितो[2] यस्मात् पुराऽहं सागरोऽभवम् ।
तस्यान्वये बभूवासौ रामो दाशरथिः प्रभुः ॥ २६ ॥
तस्य [3]कार्यानुसिद्ध्यर्थं गच्छत्येष महाकपिः ।
त्वमुत्तिष्ठ जलात् तूर्णं त्वयि [4]विश्राम्य गच्छतु ॥ २७ ॥
स तथेति प्रादुरभूज्जलमध्यान्महोन्नतः ।
नानामणिमयैः शृङ्गैस्तस्योपरि नराकृतिः ॥ २८ ॥

---

२६ । नरो० । सगरैः सगरवंशैः । तस्य सगरस्य अन्वये वंशे ।
२८ । नरो० । नानामणिमयैर्नानाविधमणिप्रचुरैः ।

---

२६ । तत्सहायनिमित्तं मत्प्रेरणे को हेतुस्तत्राऽऽह—सगरैरिति । पुरा पूर्वं सगरैर्वर्द्धित इति हेतोरहं सागरस्तन्नामाऽभवम् । रा० ।

[ पुरा पूर्वमहं यतः सगरैः सगरात्मजैर्वर्द्धितः, अतोऽहं सागरोऽभवमित्यन्वयः । गो० ]

सगरैः सगरपुत्रैः षष्टिसहस्रैः । पुरा कृताश्वमेधयज्ञारम्भस्य सगरस्य यज्ञीयाश्वं नागरूपी वासुदेवो हृत्वा रसातलमानिनाय, तदश्वोद्धाराय पित्राज्ञप्ताः सगरसन्ततयः पृथिवीं निचख्नुः, तेन खननेनायं वर्द्धितः सागरनाम्ना च ख्यातोऽभवत् ।

तथाच वाल्मीकीये—

यजतस्तस्य तं यज्ञमुत्थाय धरणीतलात् ।
तमश्वं यज्ञियं नागो जहारानन्तरूपवान् ॥ इति । १।४१।७
इत्युक्त्वा हृष्टमनसः पित्राऽथ सगरेण ते ।
बिभिदुर्वसुधां राम पितुर्वचनकारिणः ॥
योजनायामविस्तारमेकैको धरणीतलम् ।
बिभिदुः पुरुषव्याघ्रा वज्रसारभुजैर्बलात् ॥ इति १।४१।१९-२०
अक्षयः सगरस्यायं नाम्ना ख्यातो महोदधिः ।
व्यक्तं सागर इत्येव ख्यातिं लोके गमिष्यति ॥ इति च १।४५।३६ ।

अत्रार्थे कालिदासः—

गुरोर्यियक्षोः कपिलेन मेध्ये रसातलं संक्रमिते तुरङ्गे ।
तदर्थमुर्वीमवदारयद्भिः पूर्वैः किलायं परिवर्द्धितो नः ॥ इति ( रघु० १३।३ ) ।

२८ । नानामणिमयैः शृङ्गैर्महोन्नत इत्यन्वयः । तस्योपरि नराकृतिर्मनुष्याकारेण स्थितो मैनाकः । रा० ।

---

1. च '-विंर्द्धितो' । 2. ग छ '-तोऽहं वै पुराऽहं सगरोद्भवः', ङ '-तोऽहं वै' । 3. ग-घ-च 'कार्यार्थसिद्ध्यर्थं' । 4. ग 'विश्रम्य' ।

प्राह यान्तं हनूमन्तं मैनाकोऽहं महाकपे ।
समुद्रेण समादिष्टस्त्वद्विश्रामाय मारुते ॥ २९ ॥
आगच्छामृतकल्पानि [1]जग्ध्वा पक्वफलानि [2]मे ।
[3]विश्राम्यात्र क्षणं पश्चाद् गमिष्यसि यथासुखम् ॥ ३० ॥
एवमुक्तोऽथ तं प्राह हनूमान् मारुतात्मजः ।
गच्छतो रामकार्यार्थं भक्षणं मे कथं भवेत् ॥ ३१ ॥
विश्रामो वा कथं मे स्याद् गन्तव्यं त्वरितं मया ।
इत्युक्त्वा स्पृष्टशिखरः कराग्रेण ययौ कपिः ॥ ३२ ॥

---

समुद्रादुत्थितस्य मैनाकस्य रूपवैशिष्ट्यं वाल्मीकीये—

हिरण्यनाभस्तद्वचो निशम्य लवणाम्भसः ।
उत्पपात जलात्तूर्णं महाद्रुमलतावृतः ॥
ततो नीलात् समुद्रस्य सलिलात् प्रज्वलन्निव ।
उत्पपात महातेजाः पर्वतः सूर्यसन्निभः ॥
स सागरतलं भित्त्वाऽविदूरादुत्थितस्तथा ।
यथा जलधरं भित्त्वा दीप्तरश्मिर्दिवाकरः ॥
शातकुम्भमयैः शृङ्गैः सकिन्नरमहोरगैः ।
आदित्योदयसंकाशैरुल्लिखद्भिरिवाम्बरम् ॥
तस्य जाम्बूनदैः शृङ्गैः पर्वतस्य समुच्छ्रितैः ।
आकाशं रत्नसङ्काशमभवत् काञ्चनप्रभम् ॥
जातरूपमयैः शृङ्गैः सोऽभवद् गिरिसत्तमः ।
आदित्यवर्णसङ्काशो भ्राजमानैः स्वयंप्रभैः ॥ इति । ५।७।१९-२० ।

३० । विश्राम्येत्यार्षम् । रा० ।

३१ । कथं भवेदित्यादेरनुचितं तदित्यर्थः । रा० ।

३२ । तत्र हेतुर्गन्तव्यं त्वरितं मयेति । कराग्रेण स्पृष्टशिखरो ययावित्यन्वयः । रा० । कराग्रेण स्पृष्टशिखर इति । वाल्मीकीयेऽपि—

अब्रवीत् कृतकृत्योऽस्मि विश्रान्तश्च नगोत्तम ।
प्रीतोऽस्मि कृतमातिथ्यं हार्दिक्यञ्चापि दर्शितम् ॥
त्वरया कार्यहेतोर्मे कालश्चैवातिवर्त्तते ।
क्रमिष्यता प्रतिज्ञातं मया च ज्ञातिमण्डले ॥

---

1. ग 'भुक्त्वा' । 2. ग 'भोः' । 3. क 'विश्रम्यात्र' ।

किञ्चिद् दूरं गतस्यास्य च्छायां छाया[1]ग्रहाऽग्रहीत् ।
सिंहिका नाम सा घोरा जलमध्ये स्थिता सदा ।
आकाशगा[2]मिनां छायामाक्रम्याऽऽकृष्य भक्षयेत् ॥ ३३ ॥
[3]तया गृहीतो हनुमांश्चिन्तयामास वीर्यवान् ।
केनेदं मे कृतं [4]वेगरोधनं विघ्नकारिणा ॥ ३४ ॥
दृश्यते नैव कोऽप्यत्र विस्मयो मे प्रजायते ।
एवं [5]विचिन्त्य हनुमानधो दृष्टिं प्रसारयत् ॥ ३५ ॥
तत्र दृष्ट्वा महाकायां सिंहिकां घोररूपिणीम् ।
पपात सलिले तूर्णं पद्भ्यामेवाहनद्रुषा ॥ ३६ ॥

---

३३ । नरो० । अस्य पर्वतस्य । छायाया ग्रहो यया सा छायाग्रहा ।

---

अप्राप्ते योजनशते नान्तरा स्थेयमित्युत ।
तस्मादिह न तिष्ठामि त्वयि पर्वतसत्तम ॥
स्पृशामि त्वाऽहमङ्गुल्या मानितोऽस्तु भवानिति ।
इत्युक्त्वा पाणिना शैलं संस्पृश्य हरिपुङ्गवः ॥ इति । ५।७।९२-९५ ।

३३ । छायास्पर्शमात्रेण जन्तूनां गतिनिरोधेनाऽऽकर्षकश्छायाग्रह इत्युच्यते । तद्देवाऽऽह—सिंहिकेति । भक्षयेत् भक्षयति इत्यर्थे आर्षः । रा० ।

छायाग्रहाऽग्रहीदिति । वाल्मीकीयेऽपि—

इति सञ्चिन्त्य मनसा छायां वक्त्रमिवाक्षिपत् ।
छायायां निगृहीतायां चिन्तयामास वानरः ॥ इति । ५।८।३ ।

३५ । विस्मय आश्चर्यम् । कस्याप्यदर्शनं वेगरोधश्चेत्याश्चर्यम् । प्रसारयत् प्रासारयत् । अडभाव आर्षः । रा० ।

अधो दृष्टिमित्यत्र ।

तिर्यगूर्ध्वमधस्ताच्च वीक्षमाणस्तु मारुतिः । ५।८।९ ।

इत्यादिवाल्मीकीयेन प्रायः सर्वत्रावलोकनं मारुतेः ।

३६ । वाल्मीकीये सिंहिकानाशवृत्तान्ते वैचित्र्यान्तरं दृश्यते । तथाच—

स तां बुद्ध्वाऽथ तत्त्वेन सिंहिकां मतिमान् कपिः ।
व्यवर्धत महाकायः प्रावृषीव पयोधरः ॥

---

1. क-ख-ग-घ-ङ-छ '-ग्रहोऽग्रहीत्' । 2. च छ '-मिनी' । 3. ग 'तया' । 4. च 'विघ्नकारिणा वेगरोधनम्' । 5 छ 'विचार्य' ।

पुन[1]रुत्प्लुत्य हनुमान् दक्षिणाभिमुखो ययौ ।
ततो दक्षिणमासाद्य [2]कूलं नानाफलद्रुमम् ॥ ३७ ॥
नानापक्षि[3]मृगाकीर्णं नानापुष्प[4]लतावृतम् ।
ततो ददर्श नगरं त्रिकूटाचलमूर्द्धनि ॥ ३८ ॥
प्राकारैर्बहुभिर्युक्तं परिखाभिश्च सर्वतः ।
प्रवेक्ष्यामि कथं लङ्कामिति चिन्तापरो[5]ऽभवत् ॥ ३९ ॥
रात्रौ [6]वेक्ष्यामि सूक्ष्मोऽहं लङ्कां रावणपालिताम् ।
एवं विचिन्त्य तत्रैव स्थित्वा लङ्कां जगाम सः ।
धृत्वा सूक्ष्मं वपुर्द्वारं प्रविवेश प्रतापवान् ॥ ४० ॥

---

३७। नरो०। नाना अनेकः फलद्रुमो यत्र तत्तथा ।

---

तस्य सा कायमुद्वीक्ष्य वर्धमानं महाकपेः ।
वक्त्रं व्यवृणुतात्यर्थं पातालसदृशं तदा ॥
स ददर्श ततस्तस्याः सुमहद्विवृतं मुखम् ।
कार्यवत्तां च मेधावी मर्माणि च महाकपिः ॥
तस्मिन् स विवृते वक्त्रे वज्रसंहननः कपिः ।
सङ्क्षिप्य मुहुरात्मानं प्रविवेश महाबलः ॥
ततस्तस्या नखैस्तीक्ष्णैर्मर्माण्युत्कृत्य वानरः ।
उत्पपाताथ वेगेन मनोमारुतविक्रमः ॥
दृष्ट्या धाष्ट्यन धृत्वा च दाक्ष्येण च बलेन च ।
स कपिः परमं वेगं विदधे पुनरात्मवान् ॥
सा तु तेनातिवेगेन मनोमारुतरंहसा ।
निहता वानरेन्द्रेण निपपात महोदधौ ॥ इति ।५।८।८-१३ ।

पाश्चात्त्ये एवमेव वृत्तान्तजातम् ( ५।१।१८३-१९० ) ।

३९। बहुभिः प्राकारैः अन्तर्दुर्गमध्यदुर्गबहिर्दुर्गसम्बन्धिभिः । परिखाः प्राकार-बहिर्गर्त्ताः । रा० ।

४०। वेक्ष्यामि प्रवेक्ष्यामि, सूक्ष्मः सूक्ष्मशरीरो भूत्वेत्यर्थः । लङ्कां जगाम रात्राविति शेषः । सूक्ष्मं वपुर्धृत्वा द्वारं प्रविवेश । रा० ।

---

1. ङ-च '-रुत्पत्य'। 2. च 'स्थलं'। 3. छ '-गणा-'। 4. छ '-फला-'। 5. ग '-रो भवेत्'। 6. ङ-छ 'प्रवेक्ष्ये'।

तत्र लङ्कापुरी साक्षाद्राक्षसीवेशधारिणी ।
प्रविशन्तं हनूमन्तं दृष्ट्वा लङ्का व्यतर्जयत् ॥ ४१ ॥

कस्त्वं वानररूपेण मामनादृत्य लङ्किनीम् ।
प्रविश्य [1]चोरवद्रात्रौ किं भवान् कर्त्तुमिच्छति ॥ ४२ ॥

इत्युक्त्वा रोषताम्राक्षी पादेनाभिजघान तम् ।
हनूमानपि तां वाममुष्टिनाऽवज्ञयाऽहनत् ॥ ४३ ॥

---

रात्राविति । वाल्मीकीयेऽपि—

तदनेनैव रूपेण रजन्यां ह्रस्वतां गतः ।
लङ्कामभिपतिष्यामि राघवस्यार्थसिद्धये ॥ इति । ५।१।४४ ।

सूक्ष्मतास्वरूपमाह वाल्मीकीये—

वृषदंशप्रमाणस्तु ततो भूत्वा गतेऽहनि ।
निशि लङ्कां महातेजाः प्रवेक्ष्यन् मारुतात्मजः ॥ इति । ५।१।४७ ।

४१ । लङ्कापुरी साक्षादित्यादिना लङ्किनीहनूमत्संवादरूपा या वार्त्ताऽत्र वर्त्तते सा प्राच्यवाल्मीकीयानाघ्राता, परं पाश्चात्त्यवाल्मीकीयानुमता । तथाच तत्र—

अथ सा हरिशार्दूलं प्रविशन्तं महाकपिम् ।
नगरी स्वेन रूपेण ददर्श पवनात्मजम् ॥

सा तं हरिवरं दृष्ट्वा लङ्का रावणपालिता ।
स्वयमेवोत्थिता तत्र विकृताननदर्शना ॥ इत्यादि । ५।३।२०-२१ ।

४२ । रात्रौ चोरवत् प्रविश्य गच्छसीति शेषः । स त्वं क इत्येकः, किं भवानित्यादि प्रश्नान्तरम् । रा० ।

वानररूपेण त्वं कः ? लङ्किनीं लङ्कारक्षयित्रीमित्यर्थः । भवान् मामनादृत्य रात्रौ चोरवत् प्रविश्य लङ्कामिति शेषः । किं कर्त्तुमिच्छतीत्यन्वयः ।

४३ । पादाभिघातं वाल्मीकीयान्नवीनम् । तथाच पाश्चात्त्ये—

ततः कृत्वा महानादं सा वै लङ्का भयङ्करम् ।
तलेन वानरश्रेष्ठं ताडयामास वेगिता ॥

ततः स हरिशार्दूलो लङ्कया ताडितो भृशम् ।
ननाद सुमहानादं वीर्यवान् मारुतात्मजः ॥

---

1. च 'चौर-' ।

तदैव पतिता भूमौ रक्तमुद्वमती भृशम् ।
उत्थाय प्राह सा लङ्का हनूमन्तं महाबलम् ।
हनूमन् गच्छ भद्रं ते जिता लङ्का त्वयाऽनघ ॥ ४४ ॥
पुराऽहं ब्रह्मणा प्रोक्ता ह्यष्टाविंश[1]तिमे युगे ।
त्रेतायुगे दाशरथी रामो नारायणोऽव्ययः ॥ ४५ ॥
जनिष्यते योगमाया सीता जनकवेश्मनि ।
भूभारहरणार्थाय प्रार्थि[2]तोऽयं मया क्वचित् ॥ ४६ ॥

---

४५ । नरो० अष्टाविंशतिमे युगे पुराऽहं ब्रह्मणा प्रोक्तेत्यन्वयः । अष्टाविंशतिमे युगे इति सप्तममन्वन्तरप्रथमयुगमवधीकृत्य गणनया बोध्यम् ।

---

ततः संवर्त्तयामास वामहस्तस्य सोऽङ्गुलीः ।
मुष्टिनाऽभिजघानैनां हनूमान् क्रोधमूर्च्छितः ॥ इति ।५।३।३८-४० ।

अवज्ञयेति । रमणीजनत्वेन हनूमत इयमवज्ञा । तथाच पाश्चात्त्ये वाल्मीकीये—

स्त्री चेति मन्यमानेन नातिक्रोधः स्वयं कृतः ।
सा तु तेन प्रहारेण विह्वलाङ्गी निशाचरी ॥ इति ।५।३।४१।
ततस्तु हनुमान् वीरस्तां दृष्ट्वा विनिपातिताम् ।
कृपां चकार तेजस्वी मन्यमानः स्त्रियञ्च ताम् ॥ इति च । ४।३।४२

इत्यादिना अवज्ञा करुणा वा ध्वनितेति चिन्त्यम् ।

४५ । अष्टाविंशतिपर्यये इति । यद्यप्यन्यत्र चतुर्विंशतिमे पर्याये त्रेतायां रामावतारोऽष्टाविंशतिमे पर्याये द्वापरान्ते कृष्णावतार इत्युक्तम्, तथाऽपि कल्पान्तरपरतया विरोधपरिहारोऽवसेयः । रा० ।

[ अष्टाविंशतिपर्ययः चतुर्युगस्य अष्टाविंशत्यावृत्तौ यत् त्रेतायुगं तस्मिन् । एतत् कल्पान्तरीयम्, हरिवंशे ब्रह्मपुराणे च चतुर्विंशावृत्तौ श्रीरामावतारस्योक्तत्वात् । तथाच तत्र तत्र

चतुर्विंशयुगे चापि विश्वामित्रपुरःसरः ।
राज्ञो दशरथस्याथ पुत्रः पद्मदलेक्षणः ॥ इति ।

ब्रह्मपुराणे तु 'राज्ञ' इत्यत्र 'यज्ञे' इत्येव पाठभेदः । गो० ]

४६ । योगमाया च सीतेति जनिष्यत इत्यन्वयः । क्वचिदवतारपूर्वकाले । प्रार्थितो जनिष्यत इत्यन्वयः ।

---

1. क-ख-ग-घ-ङ-च-छ '-तिपर्यये' । 2. ग '-तो मायया,' च '-तश्च मया' ।

सभार्यो राघवो भ्रात्रा गमिष्यति महावनम् ।
तत्र सीतां महामायां राव[1]णोऽपहरिष्यति ॥ ४७ ॥
पश्चाद्रामेण साचिव्यं सुग्रीवस्य भविष्यति ।
सुग्रीवो जानकीं द्रष्टुं वानरान् [2]प्रेषयिष्यति ॥ ४८ ॥
तत्रैको वानरो [3]रात्रावागमिष्यति तेऽन्ति[4]कम् ।
त्वया च भर्त्सितः सोऽपि त्वां हनिष्यति मुष्टिना ॥ ४९ ॥
तेनाऽऽहता त्वं व्यथिता भवि[5]ष्यसि यदाऽनघे ।
[6]तदैव रावणस्यान्तो भविष्यति न संशयः ।
तस्मात् त्वया जिता लङ्का जितं सर्वं त्वयाऽनघ ॥ ५० ॥
रावणान्तःपुरवरे क्रीडाकाननमुत्तमम् ।
तन्मध्येऽशोकवनिका दिव्यपादपसङ्कुला ॥ ५१ ॥
अस्ति तस्यां महावृक्षः शिंशपा नाम [7]विश्रुतः ।
[8]तत्राऽऽस्ते जानकी [9]घोरराक्षसीभिः सुरक्षिता ।
दृष्ट्वैव गच्छ त्वरितं राघवाय निवेदय ॥ ५२ ॥

---

५१ । नरो० । दिव्यपादपसङ्कुला मनोहरवृक्षव्याप्ता इत्यर्थः । वृक्ष इत्युक्त्वा (?) यत् पादप इत्युक्तं तद दृढसंस्कारार्थम् । यद्वा हर्षादियुक्ते वक्तरि कथितं पदं गुण इति नास्ति विरोधः ।

---

५० । यतस्त्वयाऽहं लङ्का जिता तस्मात्त्वया सर्व राक्षसकुलं जितम् । रा० ।

अत्राऽऽह वाल्मीकीये—

इदञ्च तथ्यं शृणु मे ब्रुवन्त्या वै हरीश्वर ।
स्वयं स्वयम्भुवा दत्तं वरदानं यथा मम ॥
यदा त्वां वानरः कश्चिद् विक्रमाद्वशमानयेत् ।
तदा त्वया हि विज्ञातं रक्षसां भयमागतम् ॥ इत्यादि । ५।३।४६-४७ ।

५१ । अथ सीतास्थितिस्थानमाह—रावणान्तःपुरवर इति । रा० ।

[ रावणस्यान्तःपुरद्वारे यत् क्रीडाकाननं तस्य मध्ये या अशोकवनिका तस्यां वनिकायां मध्यगः शिंशपा नाम महावृक्षोऽस्ति तत्राऽऽस्ते इति द्वाभ्यामन्वयः । गो० ]

---

1. क्ष '-णोऽपि ह' । 2. ग-ङ च-क्ष 'प्रेषयेत् सुधीः' । 3 च 'रात्रौ चाऽऽ-' । 4 ग '-के' । 5. ग ङ-क्ष '-ष्यति' । 6. क 'तत्रैव' । 7. क-ख-च 'मध्यगः,' ङ 'पादपिः,' क्ष 'पादपः' । 8 ग-च 'तत्र सा' । 9. च 'सेव्या रा-' ।

धन्याऽहं[1]मप्यद्य चिराय राघवस्मृतिर्ममाऽऽसीद्भवपाशमोचनी ।
तद्भक्तसङ्गोऽप्यतिदुर्लभो मम प्रसीदतां दाशरथिः सदा हृदि ॥ ५३ ॥

उल्लङ्घितेऽब्धौ पवनात्मजेन धरासुतायाश्च दशाननस्य ।
पुस्फोर वामाक्षि भुजश्च [2]तीव्रं रामस्य [3]दक्षाङ्ग[4]मतीन्द्रियस्य ॥ ५४ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे सुन्दरकाण्डे
प्रथमोऽध्यायः ॥ १ ॥

---

५३ । नरो० । भवः संसारः, स एव पाशस्तं मुञ्चतीति भवपाशमोचनी । प्रसीदतां स्फुरतु इत्यर्थः ।

५४ । नरो० । धरासुतायाः सीताया भुजो वामभुजः । पुरुषस्य वामाक्षिभुजस्फुरणमनिष्टसूचकं स्त्रियास्तु तदिष्टसूचकमिति भावः । दक्षाङ्गं दक्षिणाङ्गम् । अतीन्द्रियस्य इन्द्रियागोचरस्य ।

[ सुन्दरकाण्डे प्रथमाध्यायव्याख्या समाप्ता ॥ १ ॥ ]

---

५३ । यतो मे राघवस्मृतिरासीदतोऽहमपि धन्या । तदभक्तसङ्गस्यापि दुर्लभत्वं किं वक्तव्यमिति भावः । प्रसीदतां प्रसन्नः स आस्ताम् । रा० ।

५४ । पुस्फोर स्फुरितमभवत् । भुजो वाम एव । स्त्रिया वामाङ्गस्फुरणं शुभसूचकं पुंसोऽशुभदमिति भावः । अतीन्द्रियस्य इन्द्रियाविषयस्य रामस्य दक्षाङ्गं पुस्फोर । यद्वा रामसंबन्धि अतीन्द्रियं गुप्तं यदिन्द्रियं तस्य दक्षाङ्गं दक्षिणभागः पुस्फोर । तत्स्फुरणञ्च स्त्रीलाभ सूचकं पुंसामित्याहुः । रा० ।

धरासुतायाः सीताया वामाक्षि वामभुजश्च तीव्रं यथा स्यात्तथा पुस्फोर । दशाननस्यापि तथा । तेन च सीतायाः शुभसूचकत्वं दशाननस्याशुभसूचकत्वं बोध्यम् ।

अङ्गदक्षिणभागे तु शस्तं प्रस्फुरणं भवेत् । २४१।२
विपर्ययेण विहितः सर्वः स्त्रीणां फलागमः ॥ २४१।१२

इत्यादिमत्स्यपुराणीयवचनेन दक्षाङ्गस्फुरणेन रामस्य वामाङ्गस्फुरणेन च सीताया भविष्यच्छुभसूचनं वामाङ्गस्फुरणेन रावणस्य भविष्यदशुभसूचनमिति । तीव्रमिति, अतिस्पन्दनम् अतिशयितलाभस्य अतिशयितक्षयस्य च निदानम् ।

---

1. क '-मप्यच' । 2. च 'वामो' । 3. च 'दचांग-' । 4. क 'मतीव चित्रम्' ।

# द्वितीयोऽध्यायः

——:*:——

[1]श्रीमहादेव उवाच—

तततो जगाम हनुमाल्लँङ्कां परम[2]शोभनाम् ।
रात्रौ सूक्ष्म[3]तनुर्भूत्वा बभ्राम परितः पुरीम् ।
सीतान्वेषणकार्या[4]र्थी प्रविवेश नृपालयम् ॥ १ ॥
तत्र सर्वप्रदेशेषु विविच्य हनुमान् कपिः ।
नापश्यज्जानकीं स्मृत्वा ततो लङ्काभिभाषितम् ।
जगाम हनुमान् शीघ्रमशोकवनिकां शुभाम् ॥ २ ॥

---

१। तत इति। लङ्किनीनिर्देशानन्तरमित्यर्थः। हनुमान् सूक्ष्मतनुर्भूत्वा रात्रौ परमशोभनां लङ्कां जगाम प्रविवेशेत्यर्थः। तत्र गत्वेति शेषः, पुरीं परितः बभ्राम च इत्यन्वयः। सीतान्वेषणकार्यार्थी कपिर्हनुमान् नृपालयं रावणराजसदनं प्रविवेश।

२। तत्र रावणगृहे प्रविश्येति शेषः, सर्वप्रदेशेषु सीतां विविच्य विचित्य इत्यर्थः, धातूनामनेकार्थत्वात्; जानकीं नापश्यत्। ततो लङ्काभिभाषितं स्मृत्वा शुभाम् अशोकवनिकां जगाम इत्यन्वयः।

लङ्काभिभाषितं स्मृत्वा हनुमतोऽशोकवनिकायानं वाल्मीकीयान्नवीनम्। प्राच्ये वाल्मीकीये हनुमल्लँङ्कासंवादरूपः प्रबन्ध एव नास्ति, पाश्चात्त्ये पुनः सत्यपि तादृशप्रबन्धे लङ्कायाः 'अशोकवनिकायां सीता स्थिते'ति भाषितं नास्तीति व्यासस्य कल्पनाप्रसूतमिदम्। पाश्चात्त्ये वाल्मीकीये सीतामन्विष्यतो हनुमतः सर्वरावणगृहविचयनम्। तत्र कस्मिन्नपि देशे तामदृष्ट्वा परिदेवनं ध्यानञ्च। वृत्तमिदं सुन्दरकाण्डीयद्वादशसर्गतः पञ्चदशसर्गान्ते ग्रन्थे वर्त्तते। ततश्च अशोकवनिकादर्शनेन प्राकारस्थस्य हनूमतस्तत्र प्रवेशः, स च स्वयैव बुद्ध्या। तथाच—

स तु शोकसमाविष्टः प्राकारस्थो महाकपिः ।
पुष्पिताग्रानथापश्यदेकत्र विविधान् द्रुमान् ॥
शालानशोकानन्यांश्च चम्पकानतिमुक्तकान् ।
ददर्श नागपुष्पांश्च चूतान् कपित्थकानपि ॥

---

1 क-ख-घ-ङ-पुस्तकेषु 'श्रीमहादेव उवाच' इति नास्ति। 2. छ '-शोभिताम्'। 3 ग-ङ-च छ '-तरी भू-'। 4. ग-च 'र्थं', छ '-र्थे'।

सुरपादप[1]सम्बाधां रत्नसोपान[2]वापिकाम् ।
नानापक्षि[3]मृगाकीर्णां स्वर्णप्रासादशोभिताम् ।
फलैरानम्र[4]शाखाग्रपादपैः परिवारिताम् ॥ ३ ॥
विचिन्वञ् जानकीं तत्र [5]वृक्षषण्डं मरुत्सुतः ।
ददर्शाभ्रंलिहं तत्र चैत्यप्रासादमुत्तमम् ।
दृष्ट्वा विस्मयमापन्नो मणिस्तम्भ[6]शतान्वितम् ॥ ४ ॥

---

३ । नरो० । सुरपादपैः कल्पवृक्षैः संबाधः सङ्कटत्वं यस्यास्तां तथा, सुरपादपैर्व्याप्तामित्यर्थः । रत्नखचितानि सोपानानि यस्यास्तादृशी वापी यस्यां तां तथा । 'आरोहणं स्यात् सोपानमि'त्यमरः । नानापक्षिमृगाकीर्णां नानाविधपक्षिभिर्नानाविधमृगैश्च व्याप्तामित्यर्थः । स्वर्णप्रासादशोभितामिति 'प्रासादो देवभूभुजाम्' इत्यमरः । आनम्राणि शाखाग्राणि येषां ते च ते पादपाश्चेति तैस्तथा, परिवारितां परिवेष्टिताम् ।

४ । नरो० । विचिन्वन् अन्विष्यन् । वृक्षषण्डं वृक्षसमूहम् । अभ्रंलिहमत्युच्चमित्यर्थः । चैत्यप्रासादमिति 'चैत्यमायतनं तुल्ये' इत्यमरः । मणिभिः खचितं निर्मितं वास्तुस्तम्भशतं यस्य तम् । अत एवास्य विस्मयजनकत्वम् उत्तमत्वञ्च ।

---

तान्तु दृष्ट्वा महाबाहुरशोकवनिकां शुभाम् ।
चिन्तयामास मेधावी हनूमान् मारुतात्मजः ॥
अशोकवनिका ह्रीयं महती सुमहाद्रुमा ।
इमामपि विचेष्यामि न ह्येषा विचिता मया ॥
अथ धैर्यं समालम्ब्य प्रमृज्याश्रूणि वानरः ।
ज्यामुक्त इव नाराचः पुप्लुवेऽशोकवाटिकाम् ॥ इत्यादि ।५।१६।१-५ ।

३ । फलैरानम्रशाखाग्राणि येषां तैः पादपैः । रा० ।

अशोकवनिकावर्णनं वाल्मीकीये सुन्दरकाण्डे पञ्चदशषोडशसर्गयोः ।

४ । अभ्रंलिहमत्युच्चं चैत्यप्रासादं देवतास्थानविशेषम् । अत्युच्चत्वान्मणिस्तम्भमयत्वाच्च विस्मयः । रा० ।

---

1. ग '-संयुता' । 2. ग-ङ '-वाटि-' । 3. ङ-च '-गणा-' । 4. च '-शाखाभिः पा-' । 5. क-ख-घ 'प्रतिवृक्षं' । 6. घ '-समन्वितम्', च '-ततान्वितम्' ।

समतीत्य पुनर्गत्वा किञ्चिद् दूरं स मारुतिः ।
ददर्श शिंशपावृक्षमत्यन्तनिविडच्छदम् ।
अदृष्टातप[1]माकीर्णं[2] स्वर्णवर्णविहङ्गमम् ॥ ५ ॥
तन्मूले राक्षसीमध्ये स्थितां जनकनन्दिनीम् ।
ददर्श हनुमान् वीरो देवतामिव भूतले ॥ ६ ॥
एकवेणीं कृशां दीनां मलिनाम्बरधारिणीम् ।
भूमौ शयानां शोचन्तीं राम रामेति भाषिणीम् ॥ ७ ॥

---

५ । नरो० । अत्यन्तनिविडाश्छदाः पत्राणि यस्य तम्, अत एव अदृष्टातपम् । आकीर्णं व्याप्तम् ।

७ । नरो० । एकवेणीत्यादिविशेषणानि पतिव्रतात्वसूचकानि । यतः कृशाम् अतो दीनाम् अनोजसम् । कृशां विरहेणेति शेषः । अम्बरं वस्त्रम् ।

---

५ । समतीत्येति चैत्यप्रासादमिति शेषः । अत्यन्तनिविडपत्रत्वादेव अदृष्ट आतपो यत्र जनैस्तम् । स्वर्णवर्णैर्विहङ्गमैः पक्षिभिराकीर्णं व्याप्तमित्यर्थे मयूरव्यंसकादित्वात् समासः । रा० ।

शिंशपावृक्षं विशेषयति वाल्मीकिः—

ततां प्रवालैस्तरुणैः पत्रैश्च बहुभिर्वृताम् ।
काञ्चनीं शिंशपामेकां ददर्श महतीं कपिः ॥
तेषां काञ्चनवृक्षाणां मध्ये जातं महाद्रुमम् ।
प्रवृद्धं शिंशपावृक्षं पुप्लुवे तं महाकपिः ॥ इति ५।१६।४६-४७ ।

७ । एकवेणीं हरणदिनावधि संस्काररहितामित्यर्थः । यद्वा शोभनार्थमन्यदा वेणीत्रयबन्धः पुरतो द्वयं पश्चादेकेति, संप्रति तु संस्कारराहित्यात् पृष्ठलम्बिनी एकैवेत्यर्थः । दीनां स्वजनविरहाद्दीनामिव शोचन्तीम् आत्मानमिति शेषः । रा० ।

एकवेणीमित्यादि । अत्र वाल्मीकिः—

ताभिः परिवृतां तत्र सग्रहामिव रोहिणीम् ।
ददर्श हनुमांस्तत्र लतां कुछमितामिव ॥ ५।१७।३६ ।
मलिनाम्बरसंवीतां राक्षसीभिः सुरक्षिताम् ।
उपवासकृशां दीनां निश्वसन्तीं पुनः पुनः ॥
ध्यानशोकपरां देवीं भर्तृव्यसनकर्षिताम् ।
ददर्श हनुमान् वीरो बद्धां गजवधूमिव ॥ ५।१८।१-२ ।

---

1. छ '-सङ्कीर्ण' । 2. च '-र्णस्वर्ण-' ।

त्रातारं नाधिगच्छन्तीमुपवासकृशां शुभाम् ।
शाखान्तच्छदमध्यस्थो ददर्श कपिकुञ्जरः ॥ ८ ॥

कृतार्थोऽहं कृतार्थोऽहं दृष्ट्वा जनकनन्दिनीम् ।
मयैव साधितं कार्यं रामस्य परमात्मनः ॥ ९ ॥

ततः किलकिलाशब्दो बभूवान्तःपुराद्बहिः ।
किमेतदिति संलीनो वृक्ष[1]पत्रेषु मारुतिः ॥ १० ॥

[2]आयान्तं रावणं तत्र स्त्री[3]जनैः परिवारितम् ।
दशास्यं विंशतिभुजं नीलाञ्जनचयोपमम् ।
दृष्ट्वा विस्मयमाप[4]न्नः पत्रखण्डेष्वलीयत ॥ ११ ॥

---

११ । नरो० । दशास्यत्वादीनि हनूमद्विस्मयजनकानि । नीलाञ्जनचयोपमं नीलाञ्जनसमूहतुल्यमित्यर्थः ।

---

इक्ष्वाकुसरसस्तावद् रावणेनोद्धृता बलात् ।
मृणाली पङ्कलिप्तेव न विभाति तपस्विनी ॥
इयं सा यत्कृते रामश्चतुर्भिः परितप्यते ।
कार्पण्येनाऽऽनृशंस्येन शोकेन मदनेन च ॥
स्त्री प्रनष्टेति कार्पण्यमाश्रितेत्यनृशंसता ।
पतिव्रतेति शोकेन प्रियेति मदनेन च ॥ इति । ५।१९।१५-१७ ।

अन्यानि विशेषणानि विरहकृशायाः सीतायाः सन्त्यपि ग्रन्थविस्तृतिभियाऽस्माभिरुपेक्षितानि ।

८ । शाखानामन्ते प्रान्ते ये छदाः पत्राणि तेषां मध्यस्थः । रा० ।

११ । अलीयत, तद्दर्शनेन करिष्यमाणकार्यभङ्गभियेति भावः । रा० ।

स्त्रीजनैः परिवारितमिति । व्यक्तं वाल्मीकीये—

अङ्गनाशतमात्रन्तु तं व्रजन्तमुपाव्रजत् ।
कुबेरमिव पौलस्त्यं देवगन्धर्वयोषितः ॥
काञ्चनीर्दीपिकाश्चित्रा जगृहुस्तत्र योषितः ।
बालव्यजनमन्यास्तु तालवृन्तानि चापराः ॥

---

1. क '-षण्डेषु' । 2. च 'प्रयान्तं' । 3. च '-शतै.' । 4. क '-न्नसरु-', ग-ङ '-न्न: पत्रषण्डेषु लीयते', च '-न्न: पत्रषण्डे-' ।

रावणो राघवेणाऽऽशु मरणं मे कथं भवेत् ।
सीतार्थमपि नाऽऽयाति रामः किं [1]कारणं भवेत् ।
इत्येवं चिन्तयन् नित्यं राममेव सदा हृदि ॥ १२ ॥
तस्मिन् [2]दिने परे रात्रौ रावणो राक्षसाधिपः
स्वप्ने रामेण सन्दिष्टः कश्चिदागत्य वानरः ।
कामरूपधरः सूक्ष्मो वृक्षाग्रस्थोऽनुपश्यति ॥ १३ ॥

---

१२ । नरो० । राघवेण आशु शीघ्रं मे मम मरणं कथं केन प्रकारेण भवेत् । रामः सीतार्थमपि नाऽऽयाति किं कारणं भवेत् । इत्येवं सदा सर्वस्मिन् काले । नित्यं प्रतिदिनम् । राममेव चिन्तयन्नास्ते इत्यन्वयः ।

१३ । नरो० । तस्मिन् दिने हनुमदागमनवासरे इत्यर्थः । रात्रौ निशि । परे परार्द्धे ।

---

काश्चिद्रत्नमयीः पात्रीः पूर्णाः पानस्य योषितः ।
दक्षिणा दक्षिणैर्हस्तैरादाय जग्मुरङ्गनाः ॥ इति । ५।२०।१३-१५ ।

रावणरूपस्य तदानीन्तनं वैशिष्ट्यमाह वाल्मीकिः—

क्षीवो विचित्राभरणः शङ्कुकर्णो महाबलः ।
श्मशानचैत्यद्रुमवद् भूषितोऽपि भयङ्करः ॥ इति । ५।२०।२४ ।

तरुखण्डेष्वलीयत इति । अत्र कारणमाह वाल्मीकीये—

तं दृष्ट्वा च महातेजास्तेजोऽनन्तकरं कपिः ।
राजाऽयं स महाबाहुरिति सञ्चिन्त्य वीर्यवान् ॥
अवप्लुत्य महाबुद्धिर्दिदृक्षुस्तस्य चेष्टितम् ।
पर्णगुल्मवृतामन्यां शाखां गत्वा स्थितोऽभवत् ॥ इति । ५।२०।२६-२७ ।

१२ । इत्येवं चिन्तयन् रावणो राघवेणेति श्लोकोक्तं चिन्तयन्नित्यं सदा हृदि राममेव ध्यायन्नास्त इति शेषः ।

१३ । अतस्तस्मिन् दिनेऽपररात्रौ हनूमत्प्रवेशदिनरात्रिसंबन्ध्यपररात्रे इत्यर्थः । समासान्ताभावस्तदनित्यत्वात् । स्वप्ने निद्रासमये । रामादिष्टः कश्चिद्वानरो लङ्कामागत्य वृक्षाग्रस्थोऽनुपश्यति सीतामिति शेषः । रा० ।

---

1. च 'कारणान्तरे'। 2. क-ख-ग 'दिने परं', ग 'दिने परे रात्रे', घ 'दिनेऽपररात्रौ', छ 'दिने पुरे'।

इति दृष्ट्वाऽद्भुतं [1]स्वप्नं स्वात्म[2]न्येवानुचिन्त्य सः ।
स्वप्नः कदाचित् सत्यः स्यादेवं तत्र करोम्यहम् ॥ १४ ॥
जानकीं वाक्शरै[3]र्विद्ध्वा दुःखितां नितरामहम् ।
करोमि दृष्ट्वा रामाय निवेदयतु वानरः ।
इत्येवं चिन्तयन् सीतासमीपमगमद् द्रुतम् ॥ १५ ॥
नूपुराणां किङ्किणीनां श्रुत्वा शिञ्जितमङ्गना ।
सीता भीता लीयमाना स्वात्मन्येव सुमध्यमा ।
अधोमु[4]ख्यश्रुनयना [5]स्थिता रामार्पितान्तरा ॥ १६ ॥
रावणोऽपि तदा सीतामालोक्याऽऽह सुमध्यमे ।
मां दृष्ट्वा किं वृथा सुभ्रु [6]स्वात्मन्येव विलीयसे ॥ १७ ॥

१४ । नरो० । स्वात्मन्येव स्वमनस्येव ।

१५ । नरो० । वाच एव शरास्तैः ।

१६ । नरो० । शिञ्जितं शब्दम् । स्वात्मन्येव स्वशरीर एव । अधो मुखं यस्याः सा । अश्रुयुक्ते नयने यस्याः सा । रामेऽर्पितम् अन्तरमन्तःकरणं यया सा । अत्र लज्जाशोकचिन्ता व्यङ्ग्याः ।

१७ । नरो० । रामोऽत्राऽऽगत्य रावणादीन् हत्वा मां पुरं नेष्यतीति मनसि यत्

१४ । इति अद्भुतं स्वप्नं दृष्ट्वा अयं स्वप्नः कदाचित् सत्यो भवेत्, अतस्तत्र सीतासमीपं गत्वा एवं करोमीत्यचिन्तयदिति शेषः । रा० ।

१५ । यदचिन्तयत्तदाह—जानकीमिति । विध्येति ल्यबार्षः । तां वाक्शरैर्विद्ध्वा नितरां दुःखितां करोमि, दृष्ट्वा वानरो रामाय निवेदयतु । एवं हि रामः शीघ्रमागच्छेदिति भावः । रा० ।

१६ । नूपुराणि पादभूषणानि । किङ्किण्यो जघनभूषणानि । शिञ्जितं शब्दम् । भीता सीतारूपाऽङ्गना स्वात्मन्येव स्वशरीरे एव लीयमाना स्थितेत्यन्वयः । रामे अर्पितं स्थापितम् आन्तरं चित्तं यया । रा० ।

रावणदर्शनेन सीताया अवस्थान्तरं वर्णयामास वाल्मीकिः—

ततो दृष्ट्वैव वैदेही रावणं राक्षसाधिपम् ।
प्रावेपत महाभागा कदलीवानिलाहता ॥
प्रच्छाद्योदरमूरुभ्यां बाहुभ्याञ्च पयोधरौ ।
उपविष्टा वरारोहा रुदती वरवर्णिनी ॥ इत्यादि । ५।२१।१-२ ।

1. ङ-च 'स्वप्नमात्म-' । 2. ग '-न्येव विचिन्तयन्', क '-न्येवानुचिन्तयन्' । 3. क-ख-घ '-र्विध्य' । 4. ग-घ '-खाऽश्रु-' । 5. ख 'स्थितरामा-' । 6. च 'आत्म-' ।

रामो वनचराणां हि मध्ये तिष्ठति [1]सानुजः ।
कदाचिद् दृश्यते कैश्चित् कदाचिन्नैव दृश्यते ॥ १८ ॥
मया तु बहुधा लोकाः प्रेषितास्तस्य दर्शने ।
[2]न पश्यन्ति प्रयत्नेन वीक्षमाणाः समन्ततः ॥ १९ ॥
किं करि[3]ष्यसि रामेण निस्पृहेण सदा त्वयि ।
त्वया सदालिङ्गितोऽपि समीपस्थोऽपि [4]ते सदा ।
हृदयेऽस्य [5]न च स्नेहस्त्वयि रामस्य जायते ॥ २० ॥

---

क्रियते तद्वृथैव, अत्राऽऽगमनं तस्य तावद्दूरे तिष्ठतु तत्रापि स मद्भयात् लुकायमान आस्ते इत्याह—मामित्यादिना ।

२० । नरो० । किञ्च अननुरक्ते रामे तवानुरागोऽनुचित इत्याह—किमिति सार्द्धेन ।

---

१८ । अत्राऽऽह वाल्मीकीये—

ऊर्द्ध्वं मामनुपश्य त्वं श्रियं भद्रे यशश्च मे ।
किं करिष्यसि रामेण सुभगे चीरवाससा ॥

निक्षिप्तविषयो रामो गतश्रीर्वनगोचरः ।
व्रती स्थण्डिलशायी च शङ्के जीवति वा न वा ॥

न च वैदेहि रामस्त्वां भूयः पश्येत् कथञ्चन ।
स्निग्धैर्वलाहकैर्व्योम्नि चन्द्ररेखामिवाऽऽवृताम् ॥

न च त्वां मम हस्ताद्धि प्राप्तुमर्हति राघवः ।
हिरण्यकशिपुर्लक्ष्मीमिन्द्रहस्तगतामिव ॥ इत्यादि । ५।२२।२५-२८ ।

अग्रेऽपि—

न रामस्तपसा सीते न बलेन न विक्रमैः ।
न धनेन मया तुल्यस्तेजसा यशसाऽपि वा ॥ इति । ५।२२।३४ ।

१९ । लोकाश्चाररूपाः प्रयत्नेन समन्ततो वीक्षमाणा अपि रामं न पश्यन्ति । रा० ।

२० । त्वयि निस्पृहेण इच्छाहीनेन । पूर्णकामत्वादित्यान्तरोऽर्थः । त्वया सदालिङ्गितोऽपि, ध्यानेन सदा हृदि चिन्तनात् ; अत एव समीपस्थोऽपि । यद्वा शक्तिशक्तिमतोरभेदात् सदालिङ्गितो विभुत्वाच्च समीपस्थो यद्यपि तथाऽप्यस्य रामस्य हृदये त्वद्विषये स्नेहो न जायते । अत एवेयत्कालं त्वदुपेक्षा तस्येति भावः । सर्वत्र समत्वात् तस्य न क्वापि स्नेह इति तत्त्वम् । रा० ।

---

1. च 'निर्भय.' । 2. क 'पश्यन्ति हि' । 3. क '-ष्यवि' । 4. क-ख घ 'सर्वदा' । 5. क 'च न' ।

त्वत्कृतान् सर्वभोगांश्च त्वद्गुणानपि राघवः ।
भुञ्जानोऽपि न जानाति कृतघ्नो निर्गु[1]णोऽधमः ॥ २१ ॥

त्वमानीता मया [2]साध्वी दुःखशोकसमाकुला ।
इदानीमपि नाऽऽयाति [3]शक्तिहीनः कथं व्रजेत् ।
निःसत्त्वो निर्ममो मानी मूढः पण्डितमानवान् ॥ २२ ॥

---

२१ । नरो० । किञ्च कृतघ्नत्वान्निर्गुणत्वाच्च तस्य त्याग एव उचित इत्याह—त्वत्कृतानिति पद्येन । सर्वभोगान् स्रक्चन्दनादीन् पादसंवाहनादीन् आलिङ्गनादीन् वा । त्वद्गुणान् तव रूपादीन् पद्मगन्धसमगन्ध-निदाघकालीनशीतस्पर्श-शीतकालीनोष्मस्पर्शान् वा । भुक्तस्य कदाचिद् विस्मृतिर्भवतीति चेत्तत्राऽऽह—भुञ्जानोऽपीति । न जानाति न मन्यते । तत्रापि निर्गुणो नायकगुणशून्य इत्यर्थः । अत एव अधमः ।

२२-२३ । नरो० । प्राप्तेरपि फलं नास्तीत्याह—निसःत्त्व इति । निःसत्त्वो द्रव्यशून्यः वीर्यशून्यो वा । तत्रापि निर्ममो ममताशून्यः, तत्रापि मानी अतिरोषी, तत्रापि मूढो मूर्खः,

---

[ त्वया सदालिङ्गितोऽपीत्यादि । यो रामस्त्वया सदालिङ्गितोऽपि सर्वदा समीपस्थोऽपीति सुपां सुबिति षष्ठ्याः प्रथमा, सदालिङ्गितस्यापि समीपस्थस्यापीत्यर्थः । त्वयि सदा निस्पृहेण रामेण त्वं किं करिष्यसि ? परमार्थतस्तु परमात्मत्वान्मायाधिष्ठातृत्वाच्च निस्पृहत्वं समीपस्थत्वञ्च, मायायाः सीतायास्तस्याश्चिच्छक्तित्वात् सदालिङ्गितत्वम् । गो० ]

२१ । किञ्च त्वत्कृतान् सर्वभोगान्, त्वया स्ववृत्तिद्वारोपनीतान् सर्वभोगान् सर्वविषयान्, तथा त्वद्गुणान् सुखसङ्कल्पकामादीन् भुञ्जानोऽपि अहं भोक्तेति न जानाति । तथाभिमानराहित्यात् । अत एव कृतघ्नः, अत एव निर्गुणः ; यो हि गुणवान् स उपकारं मनुत एव । अधमः उपकारविस्मरणात् । किञ्च न धमति शब्दविषयो भवतीत्यधमः शब्दावाच्य इति यावत् । रा० ।

[ त्वत्कृतान् त्वया कृतान् भोगान् भावहावादिशृङ्गारविलासान्, त्वद्गुणान् सौकुमार्यादीन् अथच गुणान् गुणमयान् भोगान् रूपरसादीन् भुञ्जानोऽपि न जानाति अविदग्धत्वात् । परमार्थतस्तु वस्तुबुद्ध्या न सज्जते आत्मारामत्वात् । कृतं शुभाशुभं कर्म हन्ति नाशयति मुक्तिप्रदत्वादिति कृतघ्नः परब्रह्मेत्यर्थः, अतो निर्गुणः गुणसम्बन्धरहितः, प्रकृतेः परत्वात् । मायया अधमगुणवत् प्रतीयमान इति वास्तवोऽर्थः । शक्त्या प्रकृत्या हीनो रहितस्तत्परवर्तित्वात् । गो० ]

---

1. छ '-णाधमः' । 2. ङ-छ 'साध्वि' । 3. क-घ 'भक्ति-' ।

नराधमं[1] त्वद्विमुखं किं करि[2]ष्यसि [3]भामिनि ।
त्वय्यतीव समा[4]सक्तं मां भज[5]स्वासुरोत्तमम् ॥ २३ ॥
देवगन्धर्वनागानां यक्ष[6]किन्नरयोषिताम् ।
भविष्यसि नियोक्त्री त्वं यदि मां प्रतिपद्यसे ॥ २४ ॥

---

तत्रापि पण्डितमानवान् पण्डितमानीत्यर्थः । अत एव नराधमं नरेभ्योऽपकृष्टमित्यर्थः, प्राप्येति शेषः । तर्हि किं कर्तव्यमिति चेत्तत्राऽऽह—त्वयीत्यादि । उत्कर्षानुरागहीनं कथं भजे इति चेत्तत्राऽऽह—अतीव समासक्तमसुरोत्तममिति च ।

२४ । नगे० । त्वद्भजनस्य किं फलमिति चेत्तत्राऽऽह—देवगन्धर्वनागानामित्यादि । योषितामिति शेषः ।

---

२२-२३ । कृतघ्नत्वमुपपादयति—त्वमिति । यतस्त्वयि भक्तिहीनः अतः कथं व्रजेत् स्वस्थानतस्त्वत्परित्राणार्थमिमं देशमित्यर्थः । निःसत्त्वो निर्बलः, निर्ममो ममताहीनः, त्वयि 'इयं ममे'तिबुद्धिहीनः । नराधमं पञ्चम्यर्थे बहुव्रीहिरिति कश्चित् । किं करिष्यसि तादृशे अनुरागेण किं प्रयोजनमित्यर्थः । असुरोत्तममिति नराधमव्यतिरेक उक्तः । रा० ।

[ कथं व्रजेत् अचेतनत्वात् । निःसत्त्व इति मिश्रितसत्त्वरहितः, शुद्धसत्त्वमयत्वात् ; अत एव निर्ममः । मानी अकारप्रश्लेषादमानी मानवर्जितः । 'पण्डितो बन्धमोक्षविदि'ति श्रीभागवतोक्तत्वात पण्डितानां बन्धमोक्षविदुषां मानः पूजाऽस्मिन्नस्ति इति पण्डितमानवान् । एवं सर्वाराध्योऽपि अनहङ्कारत्वान्मूढः मूढवत् प्रतीयमानः । नरा जीवा अधमा यस्मादिति वस्तुतः श्रीरामं तत्त्वतो जानतो रावणस्य हार्दम्, निन्दार्थस्तु सीतायाः कोपाय । 'त्वय्यतीव समासक्तमि'ति, परमार्थतस्तु त्वयि अतीव समासक्तं तस्या मूलप्रकृतित्वेन मातृत्वात् । मां भजस्व सेवकोऽयमित्यनुग्रहेण । गो० ]

मयि स्नेहाभावस्तस्य केन कथित इति चेत्तत्राऽऽह—त्वमित्यादि । तदानीमेवाऽऽगमनमुचितमिति सूचनाय इदानीमपि नाऽऽयातीत्युक्तम् । नाऽऽयाति राम इति शेषः । अनागमस्य कारणमाह—शक्तिहीन इति । सागरमुल्लङ्घ्य अत्राऽऽगमने यादृशशक्तेः प्रयोजनं तादृशी शक्तिस्तस्मिन्नास्तीति कथमत्राऽऽगच्छेदित्याशयः ।

२४ । देवगन्धर्वनागानां तद्योषितामित्यर्थः । नियोक्त्री प्रभुतया आज्ञापयित्री । प्रतिपद्यसे अङ्गीकरोषि । रा० ।

---

1. च '-मत्त्वदविमुख.' । 2. च-छ '-ष्यति' । 3. च 'मानिनि', छ 'भाविनि' । 4. ग '-युक्त' । 5 छ '-स्व सुरोत्तमा' । 6. ङ '-राक्षस-' ।

रावणस्य वचः श्रुत्वा सीताऽमर्षसमन्विता।
उवाचाधोमुखी भूत्वा [1]निधाय तृणमन्तरे ॥ २५ ॥

राघवाद्बिभ्यता नूनं भिक्षुरूपं [2]त्वया धृतम्।
रहिते राघवाभ्यां त्वं शुनीव हविरध्वरे।
हृतवानसि मां नीच तत्फलं प्राप्स्यसेऽचिरात् ॥ २६ ॥

---

२५। नरो०। अन्यपुरुषमुखदर्शनमनुचितमिति हृदि कृत्वा अधोमुखीभवनम्। अन्तरे मध्ये। अन्तरे तृणनिधानं व्यवधानार्थम्।

२६। नरो०। रहिते स्थले इति शेषः। उपमामाह—शुनीति। हविरध्वरे इति, हविर्घृतम् अध्वरे यज्ञे। अल्पभयहेतोरपि स्त्रिया महद्भयं भवतीति सूचनाय अत्यन्तायोग्यत्व-सूचनाय च शुनीवेत्युक्तम्। अतिपवित्रत्वसूचनाय हविरध्वरे इत्युक्तम्। अत्र द्वन्द्वसमासो बोध्यः। भयाश्रयत्वायोग्यत्वसूचनाय नीचेति रावणसम्बोधनम्।

---

२५। निधाय तृणमन्तरे, पतिव्रतायाः साक्षात् परपुरुषेण वार्त्तालापस्यानौचित्याद् इति भावः; त्वञ्च तृणतुल्य इत्यपि द्योतयितुञ्च। रा०।

[ निधाय तृणमन्तरे इति। कामुकपुरुषेण सह सङ्कथनं विरुद्धमिति मध्ये तृणव्यव-धानम्। यद्वा दुस्तरसमुद्रव्यवधानं दुर्भेद्यलङ्कादुर्गमपि रामस्य तृणतुल्यमिति सूचनार्थं तृण-व्यवधानम्। गो० ]

निधाय तृणमन्तरे इत्येतद्वचनं न प्राच्यवाल्मीकीयानुमतम्, अपि तु पाश्चात्त्य-वाल्मीकीयानुमतम्। प्राच्ये तु—

एवमुक्त्वा तु वैदेही राक्षसेन्द्रं तपस्विनी।
रावणं पृष्ठतः कृत्वा भूयोऽप्याह शुभानना ॥ इति ।५।२३।३।

पाश्चात्त्ये पुनः—

तृणमन्तरतः कृत्वा प्रत्युवाच शुचिस्मिता।
निवर्त्तय मनो मत्तः स्वजने प्रीयतां मनः ॥ इति ५।२१।३।

२६। शुनीवेत्युपमया अत्यन्तपराक्रमराहित्यं सूचितम्। अचिरादिति च्छेदः, अल्पेनैव कालेनेत्यर्थः। रा०।

---

1. घ 'विधाय'। 2. ग-ङ-च-छ 'धृत त्वया'।

यदा रामशराघातविदारितवपुर्भवान् ।
[1]जानीषे मानुषं [2]रामं गमिष्यसि यमान्तिकम् ॥ २७ ॥
समुद्रं शोषयित्वा वा शरै[3]र्बद्ध्वाऽथ वारिधिम् ।
हन्तुं त्वां समरे रामो लक्ष्मणेन समन्वितः ॥ २८ ॥
आगमिष्यत्यसन्देहो द्रक्ष्यसे राक्षसाधम ।
त्वां सपुत्रं सहबलं हत्वा नेष्यति मां पुरम् ॥ २९ ॥
श्रुत्वा [4]रक्षःपतिः क्रुद्धो जानक्याः परुषाक्षरम् ।
वाक्यं क्रोधसमावि[5]ष्टः खड्गमुद्यम्य सत्वरः ।
हन्तुं जनकराजस्य तनयां ताम्रलोचनः ॥ ३० ॥

---

२७। नरो०। रामशराघातेन विदारितं वपुर्यस्य स तथा। जानीषे मानुषं राममिति तदानीमेव श्रीरामे मानुषबुद्धिस्तव नङ्क्ष्यतीति भावः। यमान्तिकं यमसमीपम्।

२८। नरो०। समुद्रं तीर्त्वा कथमत्राऽऽगमिष्यतीति चेत्तत्राऽऽह—समुद्रमित्यादि। समुद्रं वारिधिं जलाधारं शरैः शोषयित्वा बध्वा वेत्यन्वयः।

२९। नरो०। मयि मृतेऽपि पुत्रादिषु सत्सु त्वां पुरं नेतुं न शक्ष्यतीति चेत्तत्राऽऽह—सपुत्रं सहबलमिति।

३०। नरो०। परुषवाक्यघटकत्वात् परुषाणि अक्षराणि यत्र तत्तथा। क्रोधसमाविष्टः क्रोधव्याप्तः।

---

२७। यदा रामशराघातैर्विदारितवपुर्भवान् भविष्यतीति शेषः। तदा रामं मानुषं ज्ञास्यसि, यमान्तिकञ्च गमिष्यसि। रा०।

२८। शरैः समुद्रं शोषयित्वा अथ अथवा वारिधिं बद्ध्वा सेतुबन्धेनेति शेषः। रा०।

३०। जानक्या वाक्यं श्रुत्वा रक्षःपतिः रावणः क्रोधसमाविष्टोऽभवदिति शेषः। क्रोधाविष्टश्च स खड्गम् उद्यम्य जनकराजस्य तनयां हन्तुं सत्वरस्त्वरावान् अभूत्। अत्र च तत्रभवान् लब्धभारतीप्रसादो भारतकविर्वाल्मीकिः प्रसादगुणभूयिष्ठेन रचनापाटवेन सर्वलोकद्रावकस्य रावणस्य युगपद् धीरत्वं नयवेदित्वं दाक्षिण्यं च प्रदर्श्याऽऽत्मानमात्मकाव्यञ्चामरत्वमुपनिनाय। तत्र वैदेह्याः क्रमविवर्द्धमानेन कटुतिक्तवचनजातेन जातक्रोधोऽपि रावणः 'स्त्री'ति विजानन् वैदेहीं सान्त्वयन् शिक्षयन्निव चाऽऽह—

---

1. क-ख-घ 'ज्ञास्यसे'। 2. ग 'रूपं'। 3. ग-ङ-च-छ '-र्बद्ध्वाऽपि'। 4. घ 'रक्षोऽधिपः'। 5. छ '-ष्ट'।

एवमुक्तस्तु संक्रुद्धो मैथिल्या राक्षसाधिपः ।
अमर्षादभवत् क्रुद्धो वचनञ्चेदमब्रवीत् ॥
स्त्रीत्वादवध्यमात्मानं मन्यसे त्वमसंशयः ।
तथा हि परुषाण्येवं भाषसे गतसाध्वसा ॥
न युक्तं परुषं वक्तुमीश्वरे विप्रियाणि च ।
जनस्य महतो मध्ये प्रभविष्णोर्विशेषतः ॥
अलङ्कारो हि नारीणां दाक्षिण्यं परमुच्यते ।
दुर्लभं तच्च ते भद्रे भर्त्तुरिच्छा कथं त्वयि ॥
यादृशोऽयं मम क्रोधो यथा च त्वामुपस्थितः ।
वधाय विसृजेयं त्वां स्त्रीस्वभावेन धार्यते ॥ इत्यादि । ६।२३।२४-२८ ।

द्वितीयावसरेऽपि—

सीतायास्तु वचः श्रुत्वा परुषं राक्षसेश्वरः ।
प्रत्युवाच पुनः सीतां विप्रियं प्रियदर्शनाम् ॥
यथा यथा सान्त्वयिता वश्यः स्त्रीणां तथा तथा ।
यथा यथा प्रियं वक्ता परिभूतस्तथा तथा ॥
संनियच्छति मे क्रोधं त्वयि कामः समुत्थितः ।
द्रवतो मार्गमासाद्य हयानिव सुसारथिः ॥
कामं कामो मनुष्याणां यस्मिन् किल निबध्यते ।
जने तस्मिन्ननुक्रोशः स्नेहश्च खलु जायते ॥
एतस्मात् कारणान्न त्वां घातयामि वरानने ।
वधार्हामपमानार्हां मिथ्या प्रव्रजिते रताम् ॥ ६।२४।१-६ ।

इत्यादि उक्त्वा भयं प्रदर्शयन्नाह—

परुषाणि हि वाक्यानि यानि यानि ब्रवीषि माम् ।
तेषु तेषु वधो युक्तस्तव मैथिलि दारुणः ॥
द्वौ मासौ क्षमितव्यौ मे कालो यस्ते कृतो मया ।
ततः शयनमारोह मामकं मदिरेक्षणे ॥
द्वाभ्यामूर्ध्वन्तु मासाभ्यां भर्त्तारं मामनिच्छतीम् ।
मम त्वां प्रातराशाय सूदाश्छेत्स्यन्ति खण्डशः ॥ इत्यादि । ६।२४।६-८ ।

तृतीयावसरे—

श्रोणीसूत्रेण महता मेखलेन सुसंवृतः ।
उवाच रावणः सीतां भुजङ्ग इव निश्वसन् ॥

मन्दोदरी निवार्याऽऽह पतिं [1]पतिहिते रता[2] ।
त्यजैनां मानुषीं [3]दीनां दुःखितां कृपणां कृशाम् ॥ ३१ ॥
देवगन्धर्वनागानां [4]बह्व्यः सन्ति वराङ्गनाः ।
त्वामेव वरयन्त्युच्चैर्मदमत्तविलोचनाः ॥ ३२ ॥

---

३१ । नरो० । यतो दुःखिताम् अतः कृशाम् अत एव दीनामनोजसम् । यतो मानुषीमतः कृपणां क्षुद्राम् ।

३२ । नरो० । मानुष्यपीयं वराङ्गनेति इमां त्यक्तुं न शक्नोमीति चेत्तत्राऽऽह—देव-

---

अनयेनाभिसंयुक्तामर्थहीनामनुव्रताम् ।
नाशयाम्यहमद्य त्वां सूर्यः सन्ध्यामिवोदितः ॥ ५।२४।२७-२८

इत्युक्तिरपि भयप्रदर्शनाय इति वक्ष्यमाणेन—

इत्युक्त्वा मैथिलीं तत्र रावणो लोकरावणः ।
सन्दिदेश ततः सर्वा राक्षसीर्घोरदर्शनाः ॥ ५।२४।२९ ।
* * * * *
यथा मद्वशगा सीता क्षिप्रं भवति जानकी ।
तथा कुरुत राक्षस्यो निःशङ्कं मम शासनात् ॥ ५।२४।३३ ।
* * * * *
इति प्रति समादिश्य राक्षसी राक्षसेश्वरः ।
काममन्युपरीतात्मा जानकीं पर्यवर्जयत् ॥ ५।२४।३९ ।

इत्यादिना स्पष्टम्, न तु नाशायास्याः कदाऽपि रावणस्य समुद्योग इति साधु समाधानं तत्रभवतः ।

३१ । अन्यानुरक्तत्वाद् वियोगाच्च दैन्यादिविशिष्टाम् । रा० ।

निवार्य पतिं रावणमित्यर्थः । एनां त्यज मा हिंसीरित्यर्थः । कथं त्यक्ष्यामीति चेदाह—मानुषीमित्यादि । मानुषी इत्यनेन कृशेत्यनेन च अतिहेयत्वबुद्ध्या त्वद्विधपराक्रमशालिनो रक्षोऽधिपतेर्हिंसायोग्येयमिति ध्वनितम् , दुःखिता दीना इत्यादिना च कृपायोग्येयमिति । यद्वा एनां त्यज, अस्या उपभोगवासनाया विरतो भव इत्यर्थः । तत्रापि मानुषी कृशा दीनेति विशेषणसमूहेन भवादृशस्य सर्वसम्पदधीश्वरस्य विशेषतो राक्षसस्य उपभोगायोग्येयमिति ध्वनितम् ।

३२ । यास्त्वामेव वरयन्ति ता बह्व्यः सन्तीति योजना । मदेन काममदेन मत्ते मदयुक्ते इव विलोचने यासां ताः । रा० ।

---

1. च 'पतिपरायणा' । 2. अतः परं ग-च-पुस्तकयोः 'मन्दोदर्युवाच' इत्यधिकम् । 3. च 'सीतां' । 4. क-ख-च 'वध्वः' ।

ततोऽब्रवीद्दशग्रीवो राक्षसीर्विकृता[1]ननाः ।
यथा मे वशगा सीता भविष्यति [2]सकामना[3] ।
तथा यतध्वं त्वरितं तर्जनादरणादिभिः ॥ ३३ ॥

द्विमासाभ्यन्तरे सीता यदि मे वशगा भवेत् ।
तदा सर्वसुखोपेता राज्यं भोक्ष्यति सा मया ॥ ३४ ॥

---

गन्धर्वनागानामित्यादिना । नागः सर्पः । ता अपि न मत्कामा इति चेत्तत्राऽऽह—त्वामेवेत्यादि । वरयन्तीति 'वर ईप्सायामि'त्यस्य रूपम् । उच्चैर्महत्, तासां भोगस्तवातिसुखद इत्याशयेनाऽऽह—मदमत्तविलोचना इति । मदेन मत्तानि विलोचनानि यासां तास्तथा ।

---

ननु कथं मां वारयसि, इमां विहाय कथं मे वासना चरितार्था स्यादित्याह—देवगन्धर्वनागानामित्यादि । मदमत्तविलोचना इत्युक्त्या तासाम् उपभोगसामर्थ्यं स्वस्यापि चरितार्थता भविष्यतीति सूचितम् । तादृशीनां मदमत्तानां रमणीनां सकाशे मानुषीयमतीव घृणार्हा भवादृशामित्याशयः ।

मन्दोदरीवचनं वाल्मीकीये—

मया क्रीड महाराज सीतया किं करिष्यसि ।
अकामां कामयानस्य शरीरं परिपात्यते ॥

इच्छन्तीं कामयानस्य रतिर्भवति शोभना ।
प्रीतिमाहुस्तु विद्वांसः कामस्य फलमुत्तमम् ॥ इति । ५।२४।२७-२८ ।

३३ । सकामना मद्विषयककामनासहिता सीता यथा मे वशगा भविष्यतीति न तु बलात्तथा यतध्वमित्यन्वयः । तर्जनं भीषणम् । आदरणं सान्त्वम् । रा० ।

सकामनेति मयि अभिलाषवतीत्यर्थः । अन्यथा तस्या उपभो गेपरितृप्तिर्न भविष्यतीति भावः । तर्जनादरणादिभिरिति,

सामदानविभेदैश्च प्रतिलोमानुलोमतः ।
आवर्त्तयत वैदेहीं बहुदण्डोद्यमैरपि ॥ ५।२४।३४ ।

इत्यादिवाल्मीकीयेन स्पष्टम् ।

---

1. च '-त्मनः' । 2. ङ 'सकामतः', च 'सकोपिनी' । 3. अतः परं ग-पुस्तके 'रावण उवाच' इत्यधिकम् ।

यदि मासद्वयादूर्द्ध्वं[1] मच्छय्यां नाभिनन्दति ।
तदा मे प्रातराशाय हत्वा कुरुत मानुषीम् ॥ ३५ ॥

इत्युक्त्वा प्रययौ स्त्रीभी रावणोऽन्तःपु[2]रालयम् ।
राक्षस्यो जानकीमेत्य भीषयन्त्यः [3]स्वतर्जनैः[3] ॥ ३६ ॥

[4]तत्रैका जान[5]कीमाह यौवनं ते वृथा गतम् ।
रावणेन समासाद्य सफ[6]लन्तु भविष्यति ॥ ३७ ॥

अपरा चाऽऽह कोपेन किं विलम्बेन जानकी ।
इदानीं [7]छिद्यतामङ्गं विभज्य च पृथक् पृथक् ॥ ३८ ॥

अन्या तु खड्गमुद्यम्य जानकीं हन्तुमुद्यता ।
अन्या करालवदना विदार्याऽऽ[8]स्यमभीषयत् ॥ ३९ ॥

एवं तां भीषयन्तीस्ता [9]राक्षसीर्विकृताननाः ।
[10]निवार्य त्रिजटा वृद्धा राक्षसी वाक्यमब्रवीत् ॥ ४० ॥

शृणुध्वं दुष्टराक्षस्यो मद्वाक्यं वो हितं भवेत् ।
न भीषयध्वं रुदतीं नमस्कुरुत जानकीम् ॥ ४१ ॥

---

३५ । नरो० । प्रातराशाय प्रातर्भोजनाय ।

३७ । नरो० । समासाद्य मिलित्वा ।

---

३६ । स्वतर्जनैः स्वबुद्धिकल्पितभीषणोपायैः स्वक्रौर्ययोग्यैर्वा । रा० ।

राक्षसीनां तर्जनादिकं वाल्मीकीये सुन्दरकाण्डीयपञ्चविंशषड्विंशसर्गयोः ।

३८ । भीषणान्याह—अपरा चेति । किं विलम्बेन अस्या वधे इति शेषः । जानकी इदानीमेव छिद्यताम् । अस्या अङ्गं पृथक् पृथग् विभज्य पच्यतामिति शेषः । रा० ।

४० । त्रिजटायाः स्वप्नवृत्तान्तवर्णनं वाल्मीकीये सुन्दरकाण्डे सप्तविंशसर्गे ।

---

1. च '-राजिरम्' । 2. ग-च-छ 'सुत-' । 3. अत परं छ-पुस्तके 'ता एव जानकीमेत्य भीषयन्त्यः सुतर्जनैः' इत्यधिकम् । 4. छ 'ता एव' । 5. ङ '-की प्राह', छ '-कीमाहयौं-' । 6. च-छ '-लन्तं' । 7. क-ख-ग-घ-च 'छेद्यता-' । 8. ङ-च-छ '-स्यमभाषत' । 9. छ '-स्त्रिजटा वाक्यमब्रवीत्' । 10. छ-पुस्तके इदमर्द्धं नास्ति ।

[1]इदानीमेव [2]मे स्वप्ने रामः कमललोचनः ।
आरुह्यैरावतं शुभ्रं लक्ष्मणेन [3]समागतः ॥ ४२ ॥

दग्ध्वा लङ्कापुरीं [4]कृत्स्नां हत्वा [5]रावणमाहवे ।
आरोप्य जानकीं स्वाङ्के स्थितो [6]दृष्टोऽगमूर्द्धनि ॥ ४३ ॥

रावणो गोमयह्रदे तैलाभ्यक्तो दिगम्बरः ।
अगाहत् पुत्रपौत्रैश्च [7]कृत्वा वदनमालिकाम् ॥ ४४ ॥

विभीषणस्तु रामस्य सन्निधौ हृष्टमानसः ।
सेवां करोति रामस्य पादयोर्भक्तिसंयुतः ॥ ४५ ॥

---

४३ । नरो० । कृत्स्नां सकलाम् । आहवे युद्धे । स्वाङ्के स्वक्रोडे । अगमूर्धनि शैलोपरि ।

४४ । नरो० । दिगेवाम्बरं वस्त्रं यस्य स तथा । वदनमालिकां मुण्डमालाम् । एतद्विधमवगाहनं मरणसूचकम् ।

---

४२ । इदानीमेव मया रामः स्वप्ने दृष्ट इत्यन्वयः । कथं दृष्टस्तदाह—आरुह्येति । समागतः संयुक्तः । रा० ।

४३ । स्वाङ्के जानकीमारोप्य अगस्य पर्वतस्य मूर्धनि ऊर्द्ध्वभागे स्थितो दृष्टः ।

४४ । एवं रामविषयं शुभस्वप्नमुक्त्वा रावणविषयमनिष्टस्वप्नमाह—रावण इति । वदनमालिकां स्वमुण्डमालां स्वहस्ते कृत्वाऽगाहदित्यर्थः । रा० ।

तैलाभ्यक्तो दिगम्बर इति । ब्रह्मवैवर्त्तपुराणीयश्रीकृष्णजन्मखण्डे—

अभ्यङ्गितस्तु तैलेन यो गच्छेद्दक्षिणां दिशम् ।
खरोष्ट्रमहिषारूढो मृत्युस्तस्य न संशयः ॥ अ० ६३ इति ।
चूर्णकं मूर्ध्नि कांस्यानां मुण्डनं नग्नता तथा ।
मलिनाम्बरधारित्वमभ्यङ्गः पङ्कदिग्धता ॥ मत्स्यपु० । २४१।२

इत्याद्युक्तेश्च ।

४९ । नन्वेवं किं लङ्का अराक्षसैव भविष्यतीत्याशङ्क्य नेत्याह—विभीषण इति । रा० ।

---

1. च 'स्वप्नं दृष्टो मयेदानीं' । 2. ङ 'स्वप्नं च' । 3. ग-च-ङ 'समन्वितः' । 4. क-ख-घ 'सर्वां' । 5. ङ 'सबलवाहनम्' । 6. ग-ङ-च 'दृष्टो' । 7 च 'जवाकुसुममालिकाम्', च-टि 'कण्ठे' ।

सर्वथा रावणं रामो हत्वा सकुलमञ्जसा ।
विभीषणायाऽऽधिपत्यं दत्त्वा सीतां शुभाननाम् ।
[1]अङ्के निधाय स्वपुरीं गमिष्यति न संशयः ॥ ४६ ॥
त्रिजटाया वचः श्रुत्वा भीतास्ता राक्षसस्त्रियः ।
तूष्णी[2]मासंस्तत्र तत्र निद्रावशमुपागताः ॥ ४७ ॥
तर्जिता राक्षसीभिः सा सीता भीताऽतिविह्वला ।
त्रातारं नाधिगच्छन्ती दुःखेन परिमूर्च्छिता ।
अश्रुभिः पूर्णनयना चिन्तयन्तीदमब्रवीत् ॥ ४८ ॥
प्रभाते भक्षयिष्यन्ति राक्षस्यो मां न संशयः ।
इदानीमेव मरणं केनोपायेन मे भवेत् ॥ ४९ ॥
एवं सुदुःखेन परिप्लुता सा विमुक्त[3]कण्ठा रुदती चिराय ।
आलम्ब्य शाखां कृतनिश्चया मृतौ न जानती [4]कञ्चिदुपायमङ्गना ॥ ५० ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे सुन्दरकाण्डे द्वितीयोऽध्यायः ॥ २ ॥

---

४६ । नरो० । अयं स्वप्नः सत्योऽसत्यो वेति संशयो न कर्त्तव्य इत्याशयेनाऽऽह— सर्वथा रावणमित्यादि ।

४९ । नरो० । प्रभाते भक्षयिष्यन्तीति राक्षसीभिर्भक्षणेन मरणादन्योपायेन मरणं श्रेय इति भावः ।

५० । नरो० । परिप्लुता व्याप्ता । विमुक्तः कण्ठः कण्ठोद्भवो ध्वनिर्यया सा तथा ।

[ सुन्दरकाण्डे द्वितीयाध्यायव्याख्या समाप्ता ॥ २ ॥ ]

---

४६ । रामस्य सेवां करोति एवंविधः स्वप्ने दृष्टः, अतः सोऽत्र राज्यं कर्त्तेत्याह— सर्वथेत्यादि । रा० ।

४८ । त्रातारमप्राप्नुवती दुःखेन मूर्च्छिता मूर्च्छितेवाश्रुयुक्तनेत्रा चिन्तयन्तीदमात्मना सहाब्रवीत् । रा० ।

५० । मृतौ कृतनिश्चया मरणस्य कञ्चिदुपायं कमप्युपायमजानती शाखामालम्ब्य चिरायातिष्ठदिति शेषः । रा० ।

आलम्ब्य शाखामिति । व्यक्तमाह वाल्मीकीये—

सा त्वशोकस्य विपुलां शाखामालम्ब्य पुष्पिताम् ।
चिन्तयामास शोकार्त्ता भर्त्तारं गतमानसा ॥ इति । ५।१६।१० ।

---

1. च 'साङ्के' । 2. क '-मासुस्त-' । 3 क-ख-ग-घ-ङ-क '-कण्ठ' । 4 ङ 'किञ्चि-' ।

# तृतीयोऽध्यायः

——:o ——

उद्बन्धनेन वा मोक्ष्ये शरीरं राघवं विना ।
जीवितेन फलं किं स्यान्मम रक्षोधिमध्यतः ।
दीर्घा वेणी[2] ममा[3]त्यर्थमुद्बन्धाय भविष्यति ॥ १ ॥
एवं निश्चितबुद्धिं तां मरणायाथ जानकीम् ।
विलोक्य हनुमान् किञ्चिद्विचा[4]र्यैतदभाषत ।
शनैः शनैः सूक्ष्मरूपो जानक्याः श्रोत्रगं वचः ॥ २ ॥

---

२ । नरो० । शनैः शनैः नीचं नीचम्, सूक्ष्मं रूपं यस्य स तथा ।

---

१ । ततस्तदुपायं निश्चित्याऽऽह—उद्बन्धनेन वेति । उद्बन्धनसाधनमाह—दीर्घा वेणीति । रा० ।

[ उद्बन्धनेन गले रज्जुं बद्ध्वा वृक्षाधोलम्बनेन । गो० ]

उद्बन्धनेनेत्यादि । प्राकृतस्त्रीजनोचिता उद्बन्धनादिना प्राणनाशकामना वाल्मीकिना स्पष्टं नोक्ता, तेन च—

जीवितं त्यक्तुमिच्छामि शोकेन महतावृता ।
मया नावाप्यते कामो राक्षसीभिः सुरक्षिता ॥
धिगस्तु खलु मानुष्यं धिगस्तु परवश्यताम् ।
यन्न शक्यं परित्यक्तुमात्मच्छन्देन जीवितम् ॥ ५।२६।१६-१७

इत्यादिना विलापच्छलेन जीवनपरित्यागस्य बलवदिच्छा प्रकाशिता ।

अग्रेऽपि—

मुहूर्त्तमपि जीवामि जीवन्ती पापजीविकाम् ।
का नाम जीविते श्रद्धा सुखे वा तं प्रियं विना ॥ इति । ५।२६।२५ ।

२ । अथ अनन्तरम्, एवं मरणाय निश्चितबुद्धिं जानकीं विलोक्येत्यन्वयः । किञ्चिद् विचार्य अयं वचनावसर इति निश्चित्य सूक्ष्मरूपः सन् जानक्यास्तस्या एवं श्रोत्रगं यथा भवति तथा शनैः शनैः अभाषतेत्यन्वयः । रा० ।

---

1. ग-च-छ- पुस्तकेषु 'श्रीमहादेव उवाच' इत्यधिकम् । 2. ग '-णीग्रमत्य-' । 3 च '-त्यन्तमु-', छ '-त्यर्थबन्धनाय' । 4. ग-छ '-र्यं तद्-' ।

इक्ष्वाकुवंशसम्भूतो राजा दशरथो महान् ।
अयोध्याधिपतिस्तस्य चत्वारो लोकविश्रुताः ॥ ३ ॥
पुत्रा देवसमाः सर्वे [1]लक्षणैरुपलक्षिताः ।
रामश्च लक्ष्मणश्चैव भर[2]तश्चैव शत्रुहा ॥ ४ ॥
ज्येष्ठो रामः पितुर्वाक्याद्दण्डकारण्यमागतः ।
लक्ष्मणेन सह भ्रात्रा सीतया भार्यया सह ।
उवास गौतमीतीरे पञ्चवट्यां महा[3]मनाः ॥ ५ ॥

---

३ । नरो० । परिपाट्या कथनं विना दृढप्रतीतिर्न भविष्यतीति हृदि कृत्वाह—इक्ष्वाकुवंशसम्भूत इत्यादि ।

४ । नरो० । लक्षणैः पद्मवज्राङ्कुशैश्चरणचिह्नैः ।

---

किञ्चिद् विचार्येति । हनूमतो विचारस्तु—सीतेयं मया सम्भाषणीयाऽसम्भाषणीया वा । असम्भाष्य प्रतिनिवृत्तो रामाय किं विनिवेदयिष्यामि, सीतावाक्याश्रवणे स भवान् जातशोको मां हनिष्यति प्राणान् वा त्यक्ष्यति, रामवार्त्तालाभे विगतधैर्या रावणपीडिता इयमपि इदानीमेव जीवनं हास्यति, एवञ्चेत् निखिलमेव कार्यजातं विनाशपथमुपेयात् । सम्भाषणीया चेदियं वानरेण मया कथं सम्भाष्यताम् ? कथञ्चिद् वृत्ते वा सम्भाषणे राक्षस्यो मां जानत्यो मद्वधे ग्रहणे वा यतिष्यन्ते, सीताऽपि मद्वाक्यश्रवणेनोत्तेजिता वा भविष्यतीति का गतिरित्येवंप्रकारः । स च वाल्मीकीये सुन्दरकाण्डे ऊनविंशसर्गे । विचारात् परं बुद्धिमत्तरस्य पवनतनयस्य कर्त्तव्यस्थिरीकरणमाह वाल्मीकीये—

इति चिन्तापरो भूत्वा चकार मतिमान् मतिम् ।
राममक्लिष्टकर्माणं निमित्तैरनुकीर्त्तयन् ॥
तस्माद्वक्ष्याम्यहं वाक्यं मनुष्य इव संस्कृतम् ।
नैनामुद्वेजयिष्यामि तद्बुद्धिगतमानसाम् ॥
पतिं हि परिशृण्वन्ती राममक्लिष्टकारिणम् ।
पश्यन्ती चाग्रतः साध्वी नोद्वेगं मे गमिष्यति ॥ इति ५।१०।३३-३५ ।

३ । तद्वच आह—इक्ष्वाकिति । रा० ।
लोकविश्रुताश्चत्वारः पुत्रा इत्यग्रेणान्वयः, अभवन् इति शेषः ।
४ । लक्षणैः सामुद्रिकोक्तोत्तमलक्षणैः । शत्रुहा शत्रुघ्नाख्यः । रा० ।

---

1. च 'सर्वलक्षणसंयुताः' । 2. ग-ङ-छ '-तश्च स शत्रुहा' । 3. ग-च '-बल.' ।

तत्र [1]नीता महाभागा [2]सीता जनकनन्दिनी ।
[3]रहिते रामचन्द्रेण रावणेन दुरात्मना ॥ ६ ॥
ततो रामोऽतिदुःखार्त्तो मार्गमाणोऽथ जानकीम् ।
जटायुषं पक्षि[4]राजमपश्यत् पतितं भुवि ॥ ७ ॥
तस्मै दत्त्वा दिवं शीघ्रमृष्यमूकमुपागमत् ।
सुग्रीवेण कृता मैत्री राम[5]स्य विदितात्मनः ॥ ८ ॥
तद्भार्याहारिणं हत्वा वालिनं रघुनन्दनः ।
राज्येऽभि[6]षिच्य सुग्रीवं मित्रकार्यं चकार सः ॥ ९ ॥
सुग्रीवस्तु समा[7]नीय वानरान् [8]वानरप्रभुः ।
प्रेषयामास परितो वानरान् परिमार्गणे ।
[9]सीतायास्तत्र चैकोऽहं सुग्रीवसचिवो हरिः ॥ १० ॥

---

८ । नरो० । दिवमिति । दिव्शब्दस्यात्र लक्षणया वैकुण्ठबोधकत्वम्, अन्यथा 'जटायो गच्छ मत्पदमि'ति श्रीरामवचनविरोधः स्यात् ।

१० । नरो० । सुग्रीवसचिवः सुग्रीवमन्त्री, हरिर्वानरः ।

---

६ । तत्र रामलक्ष्मणाभ्यां रहिते गोमतीतीरे सीता नीता रावणेन गृहीतेत्यर्थः । यद्वा तत्रेति पञ्चम्यर्थे सप्तमी । तत्र तस्मात् नीता आनीता इत्यर्थः, लङ्कामिति शेषः । वाल्मीकीयेऽपि—

जनस्थानवधं श्रुत्वा हतौ च खरदूषणौ ।
तेनामर्षादिहाऽऽनीता रावणेन दुरात्मना ॥ इति । ५।३०।९ ।

७ । ततः सीताहरणाद् रामोऽतिदुःखार्त्तो बभूवेति शेषः । अथ अनन्तरं दुःखाभिभवात् परमित्यर्थः ।

८ । दिवं स्वर्लोकं तल्लोकवासमिति यावत् । रामस्य सङ्कल्पमात्रात् सर्वसाधकस्य न वानरमैत्र्याः प्रयोजनमित्यौद्धत्यपरिहाराय सुग्रीवेण कृतेत्युक्तम्, न रामेण कृतेति । रा० ।

तस्मै जटायुषे दिवं स्वर्लोकं स्वसायुज्यमित्यर्थः, दत्त्वा शीघ्रं सीतान्वेषणजन्यया त्वरयेत्यर्थः, उपागमत् राम इति शेषः । रामस्य ऋष्यमूकगतस्येति शेषः । मैत्री कृता मयेति शेषः ।

९ । मित्रकार्यं सुग्रीवकार्यम् ।

---

1. च 'सीता' । 2. च 'हृता' । 3. ग 'रहिता' । 4. ङ-छ '-राजं व्यप-' । 5. घ-छ '-स्यावि-' । 6. क-ख-ग-च '-षिच्य' । 7. क-ख-घ '-माय' । 8. ग 'जानकीं शुभाम्' । 9. ग-पुस्तके श्लोकमत आरभ्य त्रयोदशश्लोकान्तोऽंशो नास्ति ।

सम्पातिवचनाच्छीघ्रमुल्लङ्घ्य शतयोजनम् ।
समुद्रं नगरीं लङ्कां विचिन्वञ् जानकीं शुभाम् ।
शनैरशोकवनिकां विचिन्वञ् शिंशपातरुम् ॥ ११ ॥
अद्राक्षं जान[1]कीमत्र शोचन्तीं दुःखसंप्लुताम् ।
रामस्य महिषीं देवीं कृतकृत्योऽहमागतः ।
इत्युक्त्वोपरराभाथ मारुतिर्बुद्धि[2]मत्तरः ॥ १२ ॥
सीता क्रमेण तत् सर्वं श्रुत्वा विस्मयमाययौ ।
किमिदं मे श्रुतं व्योम्नि वायुना समुदीरितम् ।
स्वप्नो वा मे मनोभ्रान्तिर्यदि वा सत्यमेव तत् ॥ १३ ॥

---

१० । सहायभूतान् समानीय नानापर्वतादिभ्यो दूतैर्वानरान् किष्किन्ध्यां समानाय्य । तान् वानरान् सीतायाः परिमार्गणे तन्निमित्तं परितः प्रेषयामास इत्यन्वयः । रा० ।

वानरप्रभुः सुग्रीवः वानरान् समानीय सीतान्वेषणार्थमित्यर्थः । रामाय न्यवेदयदिति शेषः । ततश्च रामचोदितः स परितः सीतायाः परिमार्गणे वानरान् प्रेषयामास इत्यन्वयः, वानरान् वानरानिति कर्मद्वयानुरोधात् ।

११ । समुद्रमुल्लङ्घ्य लङ्कानगरीं दृष्ट्वा तत्र तत्र जानकीं विचिन्वन् शनैः क्रमेण अशोकवनिकां दृष्ट्वा तत्र तां विचिन्वन् शिंशपातरुं दृष्टवान् । रा० ।

[ समुद्रनगरीं लङ्कामिति । समुद्रमध्यस्थां नगरीं समुद्रनगरीम् । गो० ]

१२ । अत्र शिंशपामूले जानकीमद्राक्षमनोऽत्राऽऽगतोऽहं कृतकृत्यः संवृत्त इति शेषः । रा० ।

इत्युक्त्वोपरराम इति । वाल्मीकीये नात्र विरामो वायुपुत्रस्य । तत्र

देवि वैदेहि रामस्त्वां पतिः कौशल्यमब्रवीत् ।
देवरश्चापि ते वीरः कुशलं लक्ष्मणोऽब्रवीत् ॥ ५।३०।१० ।

इत्युक्त्वा विरामः ।

१३ । वायुनेति । तस्य जगत्क्रियासाक्षित्वात्तेन कथितत्वसम्भावना । स्वप्नो वेत्यादि विकल्पत्रयम् । सत्यं स्वप्नभ्रमातिरिक्तं किञ्चित्कर्तृकं प्रमाणजनकं वाक्यमित्यर्थः । रा० ।

स्वप्नोऽयमित्यादि वाक्यं सीताया हनुमद्दर्शनानन्तरं वाल्मीकीये—

ततः शाखान्तरे लीनं त्रस्ता चलितमानसा ।
ददर्श प्रसुता सीता वानरं प्रियवादिनम् ॥

---

1. घ '-की तव' । 2. ङ-छ '-मत्तमः' ।

निद्रा मे नास्ति दुःखेन जानाम्येतत् कुतो भ्रमः ।
येन मे कर्णपीयूषं वचनं समुदीरितम् ।
स दृश्यतां महाभागः प्रियवादी ममाग्रतः ॥ १४ ॥
[1]श्रुत्वा तज्जानकीवाक्यं हनुमान् पत्र[2]षण्डतः ।
अवतीर्य शनैः सीतापुरतः समवस्थितः ॥ १५ ॥
कलविङ्कप्रमाणाङ्गो रक्तास्यः पीतवानरः ।
ननाम शनकैः सीतां [3]प्राञ्जलिः पुरतः स्थितः ॥ १६ ॥
दृष्ट्वा तं [4]जानकी भीता रावणोऽयमुपागतः ।
मां मोहयितुमायातो मायया वानराकृतिः ।
इत्येवं चिन्तयित्वा सा [5]तूष्णीमासीदधोमुखी ॥ १७ ॥
पुनरप्याह तां सीतां देवि यत् त्वं विशङ्कसे ।
नाहं तथाविधो मातस्त्यज शङ्कां मयि स्थिताम् ॥ १८ ॥

---

१५ । नरो० । पत्रषण्डतः पत्रसमूहात् ।

१६ । नरो० । कलविङ्कप्रमाणाङ्गश्चटकप्रमाणाङ्गः । पीतवानरो गौरकपिः ।

---

सा च दृष्ट्वा हरिवरं विनीतवदुपस्थितम् ।
मैथिली चिन्तयामास स्वप्नोऽयमिति भाविनी ॥ इति ५।३०।१३-१४ ।

१४ । तत्र दुःखहेतुना निद्राभावात् स्वप्नस्यासम्भवः । भ्रमोऽपि नेत्याह जानाम्येतत्, एतत् पदार्थजातं यथास्थितस्वरूपेण जानामि अतो न भ्रमसम्भवः । यद्वा भ्रान्तः स्वाज्ञाने भ्रमत्वं न विकल्पयति मम च तथा विकल्पोऽतो न भ्रम इति भावः । तस्मात् सत्यमेव निश्चित्याऽऽह—येनेति । स ममाग्रतो दृश्यतां ममाग्रतो भूत्वा आत्मानं दर्शयत्वित्यर्थः । रा० ।

१६ । कलविङ्कश्चटकः । भाषायां चिमणा चिमणी । 'चटकः कलविङ्कः स्यात्तस्य स्त्री चटका तयोः । पुमपत्ये चाटकैरस्त्र्यपत्ये चटकैव हि ।' इत्यमरः । पीतवर्णो वानरः पीतवानरः । रा० ।

१७ । जानकी तं दृष्ट्वा उपागतः उपस्थितोऽयं वानराकृती रावण इति भीताऽभवत् । भीता च सा कथमयं मायया वानराकृतिः सन् आयात इति विचिन्त्याऽऽह—मां मोहयितुमिति ।

१८ । पुनरप्याहेति हनुमानिति शेषः । त्वं रावण इति यद् विशङ्कसे अहं न तथाविधः तद्रूपधर इत्यर्थः ।

---

1. च 'तच्छ्रुत्वा जा-' । 2. क-ख-घ '-खण्डत.' । 3. छ 'दासोऽहं' । 4. च 'वान' सीता' । 5. ग 'दृष्ट्वा आसी-' ।

दासोऽहं कोशलेन्द्रस्य रामस्य परमात्मनः ।
सचिवोऽहं हरीन्द्रस्य सुग्रीवस्य [1]शुभप्रदे ।
वायोः पुत्रोऽहमखिलप्राणभूतस्य शोभने ॥ १९ ॥
तच्छ्रुत्वा जानकी प्राह हनूमन्तं कृताञ्जलिम् ।
वानराणां मनुष्याणां सङ्गतिर्घटते कथम् ।
यथा त्वं रामचन्द्रस्य दासोऽहमिति भाषसे ॥ २० ॥
तामाह मारुतिः प्रीतो जानकीं [2]पुरतः स्थितः ।
ऋष्यमूकमगाद्रामः शवर्या [3]नोदितः सुधीः ॥ २१ ॥
सुग्रीव ऋष्यमूकस्थो दृष्टवान् रामलक्ष्मणौ ।
भीतो मां प्रेषयामास ज्ञातुं रामस्य हृद्गतम् ॥ २२ ॥
ब्रह्मचारिवपुर्धृत्वा गतोऽहं रामसन्नि[4]धिम् ।
ज्ञात्वा रामस्य सद्भावं स्कन्धोपरि निधाय तौ ।
नीत्वा सुग्रीवसामीप्यं सख्यञ्चाकरवं तयोः ॥ २३ ॥
सुग्रीवस्य हृता भार्या वालिना तं रघूत्तमः ।
जघानैकेन बाणेन ततो राज्येऽभ्यषेचयत् ॥ २४ ॥

---

२३ । नरो० । सद्भावं साधुत्वम् ।

---

१९ । परमात्मन इति तत्स्वरूपाभिज्ञत्वेन तद्दासत्वसत्यताप्रत्यायनाय । रा० ।

२० । यथा त्वं दासोऽहमिति भाषसे तथा वानरमनुष्ययोः सङ्गतिः प्रतीयते साऽत्र कथं घटते इत्यर्थः । रा० ।

वानराणामित्यादि । वाल्मीकीयेऽपि—

क्व ते रामेण संसर्गः कथं जानासि लक्ष्मणम् ।
वानराणां नराणाञ्च कथमासीत् समागमः ॥ इति ।५।३२।२ ।

२१ । शवर्येति । भगवता त्वद्वृत्तान्ते शवरीं प्रति पृष्टे सति सुग्रीवसमीपं गच्छ स सीतामार्गणं करिष्यतीति तयोक्त इत्यर्थः । रा० ।

२२ । भीतो वालिप्रेरितौ चराविति मत्वेत्यर्थः ।

२३ । तौ रामलक्ष्मणौ, सख्यञ्च अकरवम् कारितवानित्यर्थः । अन्तर्भावितण्यर्थः । रा० ।

२४ । तं वालिनं जघान । वानराणां राज्ये अभ्यषेचयत् सुग्रीवमिति परेणान्वयः ।

---

1. च 'शुभेक्षणे', छ 'शुभव्रते' । 2. ग-ङ 'दूरतः' । 3. ङ-च-छ 'चोदितः' । 4. छ '-धौ' ।

सुग्रीवं वानराणां स प्रेषयामास वानरान् ।
दिग्भ्यो महाबलान् वीरान् भवत्याः परिमार्गणे ॥ २५ ॥
गच्छन्तं राघवो दृष्ट्वा मामभाषत सादरम् ।
त्वयि कार्यमशेषं मे स्थितं मारुतनन्दन ॥ २६ ॥
ब्रूहि मे कुशलं सर्वं सीतायै लक्ष्मणस्य च ।
अङ्गु[1]रीयकमेतन्मे परिज्ञानार्थमुत्तमम् ।
सीतायै दीयतां साधु मन्नामाक्षरमुद्रि[2]काम् ॥ २७ ॥
इत्युक्त्वा प्रददौ मह्यं कराग्रादङ्गु[3]रीयकम् ।
प्रयत्नेन मयानीतं देवि पश्याङ्गु[4]रीयकम् ॥ २८ ॥
इत्युक्त्वा प्रददौ [5]देव्यै मुद्रिकां मारुतात्मजः ।
[6]नमस्कृत्वा स्थितो दूराद् बद्धाञ्जलिपुटो हरिः ॥ २९ ॥

---

२५ । नरो० । दिग्भ्य इति 'यदभिप्रेत्य धात्वर्थ' इति संप्रदानसंज्ञा ।

२७ । नरो० । परिज्ञानार्थं प्रत्ययार्थम् । अन्यस्यापि एतादृशमङ्गुरीयकमस्ति कथमेतद् दृष्ट्वा तस्याः प्रत्ययो भवेदित्यत आह—मन्नामाक्षरमुद्रिकामिति । पश्येति शेषः । मम नामघटकवर्णयुक्तां मुद्रिकामित्यर्थः ।

---

२६ । अशेषं कार्यं त्वयि स्थितं त्वमेव सकलकार्यसाधने समर्थः । मे मम । रा० ।

२७ । मे मम एतदङ्गुरीयकं सीतायै परिज्ञानार्थं रामीय एवायमिति निश्चयार्थं दीयताम्, मन्नामाक्षरमुद्रितं मन्नामाक्षरमुद्रायुतम् । रा० ।

२९ । नमः कृत्वा मुद्रिकां ददौ पुनर्नमः कृत्वा च दूरात् स्थितः । अनेन दानवेलायां किञ्चित् समीपमुपसृत इति ज्ञायते । रा० ।

अङ्गुरीयकप्रदानमाह वाल्मीकीये—

रामनामाङ्कितञ्चेदं प्रगृहाणाङ्गुरीयकम् ।
त्वदभिज्ञानहेतोर्हि दत्तं तेन महात्मना ॥
सुवर्णस्य सुवर्णस्य सुवर्णस्य च भाविनि ।
रामेण प्रहितं देवि सुवर्णस्याङ्गुरीयकम् ॥ इति । ५।३२।४४-४५ ।

अग्निपुराणेऽपि—

साभिज्ञानञ्चाङ्गुलीयं रामदत्तं गृहाण वै । ९।९ इत्याह ।

---

1. ख ग-घ '-लीयक-' । 2 क-ख-घ '-तम्' । 3. क-ख-ग-घ '-लीयकम्' । 4. क-ख ग-घ '-लीयकम् । 5. ङ- 'तस्यै' । 6. घ 'नमः कृत्वा', ङ 'नमस्कृत्य' ।

[1]दृष्ट्वा सीता प्रमुदिता रामनामाङ्कितां तदा ।
मुद्रिकां शिरसा धृत्वा स्रवदानन्दनेत्रजा ॥ ३० ॥
कपे मे प्राणदाता त्वं बुद्धिमानसि राघवे ।
भक्तोऽसि प्रियकारी त्वं विश्वासोऽस्ति तवैव हि ।
नो चेन्मत्सन्नि[2]धिञ्चान्यं पुरुषं प्रेषयेत् कथम् ॥ ३१ ॥
हनूमन् दृष्टमखिलं मम दुःखादिकं त्वया ।
सर्वं कथय रामाय यथा मे जायते दया ॥ ३२ ॥
मासद्वयावधि प्राणाः स्थास्यन्ति मम सत्तम ।
नाऽऽगमिष्यति चेद्रामो भक्षयि[3]ष्यति मां [4]खलः ॥ ३३ ॥
[5]अतः शीघ्रं कपीन्द्रेण सुग्रीवेण समन्वितः ।
वानरानीकपैः सार्द्धं हत्वा रावणमाहवे ।
सपुत्रं सबलं रामो यदि मां मोचयेत् प्रभुः ॥ ३४ ॥

---

३० । नरो० । स्रवत् आनन्देन नेत्रजं यस्याः सा तथा ।

३४ । नरो० । अनीकपैः सैन्यरक्षकैः ।

---

३० । मुद्रिकां दृष्ट्वा प्रमुदिता जाता, ततः शिरसा धृत्वा स्रवदानन्दनेत्रजा जाता । स्रवन्ति आनन्देन नेत्रजान्यश्रूणि यस्याः सा । रा० ।

अत्राऽऽह वाल्मीकिः—

अथ हर्षपरीताङ्गी बाष्पेणापिहितानना ।
प्रतिजग्राह तं देवी चक्रे शिरसि चैव हि ॥
श्रुत्वा च रामसन्देशं दृष्ट्वा चैवाङ्गुरीयकम् ।
नेत्राभ्यां कृष्णसाराभ्यां मुमोचाऽऽनन्दजं जलम् ॥ इति । ५।३२।४६-४७ ।

३१ । कपे मुद्रिकारक्षणाद् बुद्धिमांस्त्वं मे प्राणदाताऽसि राघवे भक्तोऽसि तस्य प्रियकारी चासि, अतो राघवस्य तवैव विश्वासोऽस्तीति मन्ये च । विश्वास्यतां युक्त्या साधयति—नो चेदिति । नो चेत्त्वयि विश्वासश्चेन्न स्यात्तदाऽन्यमविश्वस्तं पुरुषरूपं त्वां कथं मत्सन्निधिं प्रेषयेत् । रा० ।

३२ । यथा मे मयि राघवस्य दया जायते तथा सर्वं राक्षसीकृततर्जनादिकं कथयेत्यर्थः । रा० ।

---

1. ख 'दृष्टा' । 2. च-छ '-धावन्यं' । 3. ङ '-ष्यन्ति' । 4. ङ 'खला:' । 5. ग 'तत:' ।

तत् तस्य सदृशं वीर्यं [1]वीर वर्णय वर्णितम् ।
यथा मां तारयेद्रामो हत्वा शीघ्रं दशाननम् ।
तथा यतस्व हनुमन् वाचा धर्ममवाप्नुहि ॥ ३५ ॥

हनूमानपि तामाह देवि [2]दृष्टो यथा मया ।
रामः सलक्ष्मणः शीघ्रमागमिष्यति सायुधः ॥ ३६ ॥

सुग्रीवेण ससैन्येन हत्वा दशमुखं बलात् ।
समानेष्यति देवि त्वामयोध्यां नात्र संशयः ॥ ३७ ॥

तमाह जानकी रामः कथं वारिधि[3]माततम् ।
तीर्त्वायास्यत्यमेयात्मा वानरानीकपैः सह ॥ ३८ ॥

हनूमानाह मे [4]स्कन्धमारुह्य पुरु[5]षर्षभौ ।
आयास्यतः ससैन्यश्च सुग्रीवो वानरेश्वरः ॥ ३९ ॥

विहायसा क्षणेनैव तीर्त्वा वारिधि[6]माततम् ।
निर्दहिष्यति रक्षौघांस्त्वत्कृते नात्र संशयः ॥ ४० ॥

अनुज्ञां देहि मे देवि गच्छामि त्वरयाऽन्वितः ।
द्रष्टुं रामं सह भ्रात्रा त्वरयामि तवान्तिकम् ॥ ४१ ॥

देवि किञ्चिदभिज्ञानं देहि मे येन राघवः ।
विश्वसेन्मां प्रयत्नेन [7]ततो गन्ता[8] समुत्सुकः ॥ ४२ ॥

---

३४-३५ । वानरानीकपैः सार्द्धमत्राऽऽगत्य रावणमुक्तविशेषणं हत्वा यदि मां प्रभुर्मोचयेत् तत्कृतबन्धनादिति शेषः । तत्तदा वीर वर्णय । ब्राह्मणैश्च वर्णितं तस्य वीर्यं सदृशं भवेत् यथा वर्णितं भवेत् अन्यथा विपरीतमेवेत्यर्थः । अतस्तथेति, वाचा वचनकृतरामप्रेरणया धर्मं वन्दीमोक्षजम् । रा० ।

४१-४२ । भ्रात्रा सह रामं द्रष्टुं गच्छामि गत्वा च तवान्तिकमागन्तुं त्वरयामि, राघवो यथा मां विश्वसेत् जानकीं सर्वथा दृष्टवानिति तथा किञ्चिदभिज्ञानं देहि । ततोऽहं समुत्सुकः रामदर्शनोत्सुकः प्रयत्नेन त्वद्दत्ताभिज्ञानं रक्षन् गन्ता राघवसमीपमिति शेषः । रा० ।

---

1. ग 'वीरवर्णनवर्णितम्', ङ 'वर्ण्यता वीर वर्णितम्' । 2. ङ 'दृष्ट्वा गते मयि' । 3. च '-मायतम्' । 4. ख-घ-ङ 'स्कन्धावा-' । 5. च '-षोत्तमौ' । 6. च '-मायतम्' । 7. ङ 'यती' । 8. ग-ङ-च-छ '-ऽहमुत्सुकः' ।

ततः किञ्चिद्विचार्याथ सीता कमललोचना ।
विमुच्य केशपाशान्ते स्थितं चूडामणिं ददौ ॥ ४३ ॥
अनेन विश्वसेद्रा[1]मस्त्वां कपीन्द्र सलक्ष्मणः ।
अभिज्ञानार्थम[2]न्यच्च वदामि तव सुव्रत ॥ ४४ ॥
चित्रकूटगिरौ पूर्वमेकदा रहसि स्थितः ।
मदङ्के [3]शिर [4]आधाय निद्राति रघुनन्दनः ॥ ४५ ॥
ऐन्द्रः काकस्तदागत्य नखैस्तुण्डेन चासकृत् ।
मत्पादाङ्गुष्ठमारक्तं विददाराऽऽमिषा[5]शया ॥ ४६ ॥

४६ । नरो० । इन्द्रस्यायम् ऐन्द्रः । तुण्डेन चञ्च्वा । आमिषाशया मांसाशया । आरक्तम् ईषद्रक्तम् ।

४३-४४ । वाल्मीकीये हनूमतः प्रथमप्रार्थनायां सीतायाः स्ववृत्तान्तवर्णनम् , द्वितीय-प्रार्थनायां चूडामणिप्रदानमत्र तु तद्वैपरीत्यम् । वृत्तान्तवर्णने प्रथमं मनःशिलायास्तिलकदानम् । तथाच—

इदं श्रेष्ठमभिज्ञानं ब्रूयास्त्वं मम तं प्रियम् ।
शैलस्य चित्रकूटस्य पादे तरुलताकुले ॥
तापसाश्रमवासिन्याः प्राज्य मूलफलं वने ।
यत् सिद्धसम्मते देशे मन्दाकिन्या ह्यदूरतः ॥
तेषूपवनषण्डेषु नानापुष्पसुगन्धिषु ।
विहृत्य सलिलक्लिन्ना तवाङ्केऽहमुपाविशम् ॥
क्रीडता मे तदा चैव त्वया गृह्य मनःशिलाम् ।
रचितस्तिलको वक्त्रे स संक्रान्तस्तवोरसि ॥ इति । ५।३६।३१-३४ ।

वार्त्तेयं पाश्चात्त्ये वाल्मीकीये न दृश्यते ।

चूडामणिप्रदानमाह वाल्मीकीये—

सा निरीक्ष्य ततः सर्वं वेण्यां ग्रथितमुत्तमम् ।
विमुच्य प्रददौ तस्मै मणिरत्नं हनूमते ॥ इति । ५।३६।३४ ।

४५ । चित्रकूटगिरौ इति प्राच्यरामायणे वृत्तमिदं चित्रकूट एव जात अभिज्ञानदानवेलायां नोल्लिखितम् उल्लिखितं पुनः पाश्चात्त्यरामायणे । तथाच—

इदं श्रेष्ठमभिज्ञानं ब्रूयास्त्वं तु मम प्रियम् ।
शैलस्य चित्रकूटस्य पादे पूर्वोत्तरे पदे ॥ इत्यादि । ५।३८।१२ ।

1. ग '-मः कपीन्द्र सहलक्ष्मणः' । 2. ग '-न्यद्वा', च '-न्यत्तु' । 3. च 'शीर्षमा-' । 4. ङ 'आनीय' । 5. क '-शयः' ।

ततो रामः प्रबुध्याथ दृष्ट्वा [1]पादं कृतव्रणम् ।
केन भद्रे कृतश्चैतद्विप्रियं [2]मे दुरात्मना ॥ ४७ ॥
इत्युक्त्वा पुरतोऽपश्यद्वायसं मां पुनः पुनः ।
अभिद्रवन्तं रक्ता[3]स्य[4]नखतुण्डं चुकोप [5]ह ॥ ४८ ॥
तृणमेकमुपादाय दिव्यास्त्रेणाभि[6]योज्य तत् ।
चिक्षेप लीलया रामो वायसोपरि [7]तज्ज्वलत् ॥ ४९ ॥
अभ्यद्रवद्वाय[8]सश्च भीतो लोकान् भ्रमन् पुनः ।
इन्द्रब्रह्मादिभिश्चापि न शक्यो रक्षितुं तदा ॥ ५० ॥
रामस्य पादयोरग्रेऽपतद्भी[9]त्या दया[10]निधेः ।
शरणागतमालोक्य रामस्तमिदमब्रवीत् ॥ ५१ ॥

---

४८ । नरो० । रक्तम् आस्यनखतुण्डं यस्य तं तथा ।

---

पादाङ्गुष्ठमिति वाल्मीकीयासम्मतम् । तत्र स्तनपरिपीडनम् । तथाच प्राच्ये—

तूर्णमभ्येत्य काकेन स्तनयोरस्मि ताडिता ।
बाष्पपूर्णमुखी दीना चक्षुषी परिमार्जती ॥ इति ५।३६।४० ।

पाश्चात्येऽपि—

ततः सुप्तप्रबुद्धां मां राघवाङ्कात् समुत्थिताम् ।
वायसः सहसागम्य विरराद स्तनान्तरे ॥ इति ५।३८।२२ ।

४९-५० । ज्वलत् अभिमन्त्रितं तृणं वायसमभ्यद्रवत् । स वायसोऽपि भीतः लोकान् ऐन्द्रब्रह्मान्तान् भ्रमंस्तत्र तैरपि यदा रक्षितुं शक्यो नाभवत्तदा । रा० ।

तृणं दर्भमित्यर्थः । तथाच प्राच्ये वाल्मीकीये—

लक्षिताऽहं त्वया तत्र वायसेन प्रकोपिता ।
तस्योद्धृत्य त्वयेषीका क्षिप्ता वरद पाणिना ॥
ब्रह्मास्त्रेणाभिसन्धाय सा प्रजज्वाल खे तदा ॥ इति । ५।३६।४१-४२ ।

पाश्चात्येऽपि—

स दर्भसंस्तराद् गृह्य ब्रह्मणोऽस्त्रेण योजयत्
स दीप्त इव कालाग्निर्जज्वालाभिमुखो द्विजम् ।

---

1. च-छ 'पादक्षतं व्रणम्' । 2. च 'ते' । 3. क-ख-ग-ङ-च '-स्य' नख-' । 4. छ '-नखं तु-' । 5. ङ 'सः' । 6. ङ '-मन्त्र्य च', छ '-योजयेत्' । 7. च 'तर्जयन्' । 8. ग-ङ-छ '-स स', च '-सः स' । 9. ङ '-तो' । 10. ग '-निधिः' ।

अमोघमेतदस्त्रं मे [1]दत्त्वैकाक्षमितो व्रज ।
सव्यं दत्त्वा ततः काकः[2] स्वास्थ्यमाप महाकपे ।
अभिज्ञानं द्वितीयन्ते कथितं वायुनन्दन ॥ ५२ ॥
महाबलो नीतिमांश्च एवं पौरुषवानपि ।
उपेक्षते किमर्थं मामिदानीं सोऽपि राघवः ॥ ५३ ॥
हनूमानपि तामाह श्रुत्वा [3]सीतानुभाषितम् ।
देवि त्वां यदि जानाति स्थितामत्र रघूत्तमः ।
करिष्यति क्षणाद्भस्म लङ्कां राक्षसमण्डिताम् ॥ ५४ ॥
जानकी प्राह तं वत्स कथं त्वं [4]योत्स्यसेऽसुरैः ।
अतिसूक्ष्मवपुः सर्वे वानराश्च भवादृशाः ॥ ५५ ॥
श्रुत्वा तद्वचनं देव्यै पूर्वरूपमदर्शयत् ।
मेरुमन्दरसङ्काशं रक्षोगणविभीषणम्[5] ॥ ५६ ॥

---

५२ । नरो० । एकाक्षम् एकचक्षुः । सव्यं वामम् ।
५६ । नरो० । मेरुमन्दरसङ्काशं सुमेरुमन्दरतुल्यम् ।

---

स तं प्रदीप्तं चिक्षेप दर्भं तं वायसं प्रति ।
ततस्तु वायसं दर्भः सोऽम्बरेऽनुजगाम ह ॥ इति । ५।३८।२९-३० ।

५२ । सव्यं दक्षिणम् , तथाच पाश्चात्त्ये वाल्मीकीये—

ततस्तस्याक्षि काकस्य निहन्ति स्म स दक्षिणम् । इति । ५।३८।३५ ।

५३ । एवं पौरुषवानपि स राघव इदानीमपि एवमवस्थायामपि यदुपेक्षते तत् किमर्थम् । रा० ।

अग्निपुराणेऽपि—

भूयोऽग्रे चोपविष्टं तमुवाच यदि जीवति ।
रामः कथं न नयति.................. ॥ ९।१० ।

इत्यादिना अयमेवार्थो विवृतः ।

५४ । जानाति वर्त्तमानसामीप्ये लट्, ज्ञास्यतीत्यर्थः । रा० ।

५५ । यथा त्वं सूक्ष्मवपुस्तथा सर्वेऽपि वानरा भवादृशाः भवद्वदेव सूक्ष्मवपुष इति । महावपुर्भी राक्षसैर्युद्धमसंभावितमित्यर्थः । रा० ।

५६ । श्रुत्वा तद्वचनं सीताया इत्यर्थः । देव्यै सीतायै । रा० ।

---

1 ग 'त्यक्त्वैकाच-' । 2. क-ख-ग-घ-ङ-पुस्तकेषु अत आरभ्य 'नीतिमांश्च' इत्यन्तोऽशो नास्ति । 3. ग 'सीतासु' । 4. छ 'युध्यसे' । 5. अतः परं ग-च-पुस्तकयोः 'पुच्छेन स्फोटयामास लङ्का शब्देन पूरयन्' इत्यधिकम् ।

दृष्ट्वा [1]सीता हनूमन्तं महापर्वतसन्निभम् ।
हर्षेण महताविष्टा प्राह तं कपिकुञ्जरम् ॥ ५७ ॥
समर्थोऽसि महासत्त्व द्रक्ष्यन्ति त्वां महाबलम् ।
राक्षस्यस्ते शुभः पन्था गच्छ रामान्तिकं द्रुतम् ॥ ५८ ॥
बुभुक्षितः कपिः प्राह दर्शनात् पारणं मम ।
भविष्यति फलैः [2]पक्वैस्तव [3]दृष्टौ स्थितस्य मे ॥ ५९ ॥

---

५७ । नरो० । आविष्टा व्याप्ता ।

५९ । नरो० । मम दर्शनात् (?) तव दृष्टौ दृष्टे पथि स्थितस्य मे मम पक्वैः फलैः पारणं भविष्यतीति सम्बन्धः ।

---

५६ । पूर्वरूपमदर्शयदिति । हनुमद्रूपपरिवर्त्तने वार्त्तान्तरं वाल्मीकीये । रामगत-जीवितां जनकनन्दिनीं जानकीं ज्वालासहस्रेण ज्वलितामिव विलोक्य मातस्त्वं मत्पृष्ठमारोह अहं त्वां रामान्तिकं प्रापयिष्यामीति आह वायुजो हनुमान्, सा च—

कथमल्पशरीरस्त्वं मामितो वोढुमर्हसि ।
सकाशं मनुजेन्द्रस्य भर्त्तुर्मे प्लवगर्षभ ॥ ५।३५।३१

इति प्रत्युवाच । एतच्छ्रुत्वा च कपिप्रवरो हनुमान्—

स सीताया वचः श्रुत्वा हनुमान् प्रत्यभाषत ।
हन्त वीक्षस्व वैदेहि यद्रूपं मम केवलम् ॥
ततः स कपिशार्दूलो द्रुतं प्रस्कन्द्य पादपात् ।
व्यवर्धत महातेजाः कामरूपी प्लवङ्गमः ॥
नीलजीमूतसङ्काशः स भूत्वा कपिकुञ्जरः ।
सीतायाः प्रमुखे स्थित्वा वाक्यमेतदथाब्रवीत् ॥ ५।३५।३२-३४ ।

इत्युक्तरीत्या स्वशरीरं वर्द्धयामास । एवं पाश्चात्त्येऽपि ( ५।३७ ) ।
पृष्ठारोहणप्रार्थना अग्निपुराणेऽपि दृश्यते । तथाच—

अथवा ते त्वरा काचित् पृष्ठमारोह मे शुभे ।
अद्य त्वां दर्शयिष्यामि सुग्रीवञ्च सराघवम् ॥ इति ९।१९ ।

एवम् अग्रेऽपि ।५।५।६ ।

५८ । त्वां राक्षस्यो द्रक्ष्यन्ति दृष्ट्वा च रावणं कथयिष्यन्ति, एवं सति को वेद किं भावीत्याशयः । अतो रामान्तिकं द्रुतं गच्छ । ते पन्थाः शुभः अस्तु इति शेषः । रा० ।

५९ । कपिर्जानकीं प्राह बुभुक्षितोऽस्मि अतस्तव दर्शनान्मम पारणमुचितमिति शेषः ।

---

1. क 'तदा' । 2. क-ख-ग-घ 'सं॑-' । 3. क 'दृष्टौ स्थितैर्हि', ख 'दृष्टेः स्थितस्य' ।

तथेत्युक्तः स जानक्या [1]भक्षयित्वा फलं कपिः ।
ततः प्रस्थापितोऽगच्छज्जानकीं प्रणिपत्य सः ॥ ६० ॥
किञ्चिद् दूरमथो गत्वा स्वात्मन्येवा[2]न्वचिन्तयत् ।
कार्यार्थमागतो दूतः स्वामिकार्याविरोधतः ।
अन्यत् किञ्चिदसम्पाद्य गच्छत्यधम एव सः ॥ ६१ ॥

---

नन्वहं रिक्ता केन त्वां पारयामीति शङ्कायामाह—तव दृष्टौ स्थितैः फलैर्मे पारणा भविष्यतीत्यर्थः । रा० ।

तव दृष्टौ दर्शनपथे स्थितस्य मम पक्वैः फलैः एतद्वनस्थैरिति शेषः, पारणं बुभुक्षानिवृत्तिरित्यर्थः, भविष्यति । दर्शनाद् राक्षस्यः किं करिष्यन्ति इत्यध्याहार इति च-पुस्तकटिप्पन्याम् । एतेन दृष्ट्वाऽपि राक्षस्यो मम किमप्यनिष्टं साधयितुं समर्था न स्युः, परम् एतानि दृष्टिविषयीभूतानि पक्वफलानि परित्यज्य गमने वानराणां महद्दुःखं स्वाभाविकमिति मत्वा त्वं स्वच्छन्देन एतेषां भक्षणे मामनुज्ञातुमर्हसीति हनूमतोऽभिप्रायो ज्ञायते । सीतानिदेशमन्तरेण फलभक्षणमनुचितमिति मत्वा हनूमान् राक्षसीभ्यो भयं न विद्यते इत्यादिना तां प्रबोध्य पारणेत्यादिना फलभक्षणाज्ञां प्रार्थितवान् । पारणरूप एषोऽर्थः वाल्मीकीयविसंवादी ।

६० । ततस्तया प्रस्थापितो जानकीं प्रणिपत्यागच्छत् । रा० ।

स हनुमान् जानक्या तथा फलं भक्षय इत्युक्तः फलं भक्षयित्वा ततस्तया प्रस्थापितः अगच्छत् । प्रणिपत्य पादाभिवन्दनं कृत्वा । वाल्मीकीये—

एवमुक्तस्तु वैदेह्या हनूमान् मारुतात्मजः ।
पादाभिवन्दनं चक्रे विनीतो हरिपुङ्गवः ॥ इति । ५।३७।२६ ।

६१ । अनुचिन्तयत् अन्वचिन्तयत् । अडभाव आर्षः । रा० ।

कार्यार्थं स्वामिनिदेशानुयायिकार्यसम्पादनार्थम् आगतेन तस्य अविरोधेन अन्यदपि किञ्चित् स्वामिप्रियं स्वशक्तिनिवेदकं कार्यं साधनीयमिति भावः । अत्रार्थे वाल्मीकिरपि—

एककार्ये विनिर्दिष्टो यो बहून्यपि साधयेत् ।
पूर्वकार्यक्रियासिद्धौ स कार्यं कर्तुमर्हति ॥

न ह्येकसाधको हेतुः कर्मणामुपपद्यते ।
कर्मणां समवेतानां बहूनामर्थसिद्धये ।
यस्त्वर्थं बहुधा वेत्ति स समर्थोऽर्थसाधने ॥ इति ५।३७।३२-३३ ।

---

1. ग 'त्वरयन् विपिने', ङ-च-छ 'ददर्श विपिनं' । 2. ख-च '-नुचिन्तयत्' ।

अतोऽहं किञ्चिदन्यच्च कृत्वा [1]दृष्ट्वाऽथ रावणम् ।
सम्भाष्य च ततो रामदर्शनार्थं व्रजाम्यहम् ॥ ६२ ॥
इति निश्चित्य मनसा वृक्ष[2]षण्डान् महाबलः ।
उत्पाट्याशोकवनिकां [3]निर्वृक्षामकरोत् क्षणात् ।
सीता[4]श्रयणगं त्यक्त्वा वनं शून्यं चकार [5]सः ॥ ६३ ॥
उत्पाटयन्तं विपिनं दृष्ट्वा राक्षसयोषितः ।
अपृच्छञ् जानकीं कोऽसौ वानराकृतिरुद्भटः ॥ ६४ ॥

[6]जानक्युवाच—

भवत्य [7]एव जानन्ति[8] मायां राक्षसनिर्मिताम् ।
नाह[9]मेनं विजानामि दुःखशोकसमाकुला ॥ ६५ ॥
इत्युक्तास्त्वरितं गत्वा राक्षस्यो भयपीडिताः ।
हनूमता कृतं सर्वं रावणाय न्यवेदयन् ॥ ६६ ॥
देव कश्चिन्महासत्त्वो वानराकृतिदेहभृत् ।
सीतया सह सम्भाष्य ह्यशोकवनिकां क्षणात् ॥ ६७ ॥

---

६७ । नरो० । वानरस्य आकृतिः संस्थानं यत्र तं देहं बिभर्त्तीति वानराकृतिदेहभृत् ।

---

६२ । अन्यत् किञ्चित् स्वाम्याज्ञप्तादधिकमुत्कृष्टं कर्मेत्यर्थः । अन्यत् किञ्चिद्वीरकर्म । रावणं दृष्ट्वा सम्भाष्य चेत्यन्वयः । रा० ।

६३ । वृक्षखण्डान् वृक्षसमूहान् उत्पाट्य निर्वृक्षमकरोत् । सीताश्रयणगं शिंशपातरुम् । शून्यं वृक्षैरिति शेषः ।

६४ । विपिनं वनवृक्षान् । रा० ।

सीताश्रयणगं सीताश्रयं शिंशपावृक्षमित्यर्थः । तथाच वाल्मीकीये—

सर्वं चैवं वनं भग्नं तरसा तेन पार्थिव ।
यत्राऽऽस्ते जानकी सीता तदेव न विनाशितम् ।
चारुपल्लवशाखश्च यं सीता समुपस्थिता ।
प्रवृद्धः शिंशपावृक्षः स तेन परिपालितः ॥ इति । ५।३८।१७ १८ ।

६७ । वानराकृतिदेहभृद् वानरदेहसदृशदेह इत्यर्थः । वानरे एवं पराक्रमासम्भवा-देवमुक्तिः । रा० ।

---

1. ङ 'दृष्ट्वा च' । 2. क ख-घ-ङ-छ '-खण्डान्महा-', च '-षण्ड' महा-' । 3. च 'निर्वृ च-' । 4. ? च '-श्रमवनं' । 5. ग 'च' । 6. च 'सीतोवाच' । 7. घ 'एव' । 8. ग-ङ '-तु' । 9. च 'मेवं' ।

उत्पाट्य चैत्यप्रासादं बभञ्जामितविक्रमः ।
प्रासादरक्षिणः सर्वान् हत्वा तत्रैव तस्थिवान् ॥ ६८ ॥
तच्छ्रुत्वा [1]तूर्णमुत्थाय [2]वनभङ्गं महाप्रियम् ।
किङ्करान् प्रेषयामास नियुतं राक्षसाधिपः ॥ ६९ ॥
[3]निर्भग्नचैत्यप्रासादप्रथमान्तरसंस्थितः ।
हनूमान् पर्वताकारो [4]लौहस्तम्भकृतायुधः ।
किञ्चिल्लाङ्गूलचलनो रक्तास्यो भीषणाकृतिः ॥ ७० ॥
[5]आपतन्तं महासङ्घं राक्षसानां ददर्श सः ।
चकार सिंह[6]नादञ्च श्रुत्वा [7]ते मुमुहुर्भृशम् ॥ ७१ ॥

---

७०। नरो०। निर्भग्नचैत्यप्रासादप्रथमान्तर इति, निर्भग्नो यश्चैत्यप्रासादस्तस्य यः प्रथमः प्रथमभागस्तस्यान्तरं मध्यम्, तत्र संस्थितः। कृतमायुधं येन स कृतायुधः, लौहस्तम्भेन कृतायुधो लौहस्तम्भकृतायुधः।

---

६८। अशोकवनिकां क्षणादुत्पाट्य तैरेव चैत्यप्रासादं बभञ्ज। तस्थिवान् स्थितः। रा०।
प्रासादरक्षिणः सर्वानिति अग्निपुराणेन संवदति। तथाच—

वनं बभञ्ज तत्पालान् हत्वा दन्तनखादिभिः। इति ।९।१६।

पद्मपुराणेऽपि—

समाश्वास्य च वैदेहीं बभञ्जोपवनं तदा ।
वनपालान् किङ्करांश्च पञ्च सेनाग्रनायकान् ॥ इति ।२४२।२८७।

६९। महाप्रियं महच्च तदप्रियञ्चेत्यर्थः। नियुतं दश कोट्यः। रा०।
नियुतमित्यत्र अशीतिसहस्रमिति वाल्मीकिः। तथाच—

सोऽथ मानससम्भूतान् किङ्करान् नाम राक्षसान् ।
आदिदेश महातेजा ग्रहणार्थं हनूमतः ॥
तेषामशीतिसाहस्रा राक्षसानां महाचमूः ।
निर्ययुर्भवनात्तस्य शूलमुद्गरपाणिनाम् ॥ इति। ५।३८।२२-२३।

७०। निर्भग्नो यश्चैत्यप्रासादस्तस्य प्रथमं यदन्तरं प्रथमा या भूमिस्तत्र संस्थितः। लोहस्तम्भ एव कृतमायुधं येन सः। किञ्चिल्लाङ्गूलचलन इति स्वभावोक्तिः। रा०।

---

1. ग 'क्रुद्ध-'। 2. छ 'द्रुम-'। 3. ग 'निर्भग्न चैत्यप्रासादं', छ 'निर्भिन्नचैत्य-'। 4. क-ख-घ-च-छ 'लौह-'। 5. च 'आगच्छन्तं महासैन्य'। 6. च '-नादं स'। 7. च 'ता मुमुहुः स्त्रियः'।

हनूमन्तमथो दृष्ट्वा [1]राक्षसा भीषणाकृतिम् ।
निर्जघ्नुर्विविधास्त्रौघैः सर्वराक्षसघातिनम् ॥ ७२ ॥
तत उत्थाय हनुमान् मुद्गरेण समन्ततः ।
निष्पिपेष क्षणादेव मशकानिव यूथपः ॥ ७३ ॥
निहतान् किङ्करान् श्रुत्वा रावणः क्रोधमूर्च्छितः ।
पञ्च सेनापतींस्तत्र प्रेषयामास दुर्मदान् ॥ ७४ ॥
हनूमानपि तान् स[2]र्वाल्लौँहस्तम्भेन चाहनत् ।
ततः क्रुद्धो मन्त्रिसुतान् प्रेषयामास सप्त [3]सः ॥ ७५ ॥

---

७३ । नरो० । यूथपः तिरश्चां वृन्दरक्षकः, तिर्यङ् इत्यर्थः ।

७४ । नरो० । क्रोधमूर्च्छितः क्रोधेन कर्त्तव्याकर्त्तव्यविवेकाभावाश्रय इत्यर्थः ।

---

७४ । किङ्करसेनापतिवधमन्तरा जम्बुमालिवधरूपः कश्चित् प्रबन्धो वाल्मीकीये । तथाच—

निहतान् किङ्करान् श्रुत्वा रावणो लोकरावणः ।
प्रहस्तस्य सुतं वीरं जम्बुमालिनमादिशत् ॥ ५।३९।१३

इत्यादिना जम्बुमालिप्रेरणं रावणेन,

परिघं पातयामास हृदये जम्बुमालिनः ।
तस्य नैव शिरो नास्ति न जानुर्न भुजद्वयम् ॥
न धनुर्न रथो नाश्वो न सूतश्चापि दृश्यते ।
स हि तस्यातिवेगस्य वेगेन महता हतः ॥
सर्वश्चूर्णीकृतस्तत्र समांसास्थिशिरास्तनुः ।
जम्बुमाली च निहतः किङ्कराश्चेत्यमर्षितः ।
चुक्रोध रावणः श्रुत्वा वायुसूनोर्महाबलः ॥ ५।३९।२९-३१

इत्यादिना तस्य वधो हनूमता, रावणस्य पुनः कोपावेशश्च ।

सेनापतीनां नामानि वाल्मीकीये—

स विरूपाक्ष-यूपाख्यौ दुर्द्धर्षञ्च महाबलम् ।
प्रघसं भासकर्णञ्च पञ्च सेनाग्रगामिनः ॥
सन्दिदेश दशग्रीवो वीरान् नयविशारदान् ॥ इति ५।४१।२-३ ।

---

1, ङ 'किङ्करा' । 2, ख-च '-र्वाल्लौँह-', ग '-र्वाल्लौँहहस्तेन' । 3. ग 'च' ।

आगतानपि तान् सर्वान् पूर्ववद्वानरेश्वरः ।
क्षणान्निःशेषतो हत्वा लौह[1]स्तम्भेन मारुतिः ।
[2]पूर्वस्थानमुपाश्रित्य प्रतीक्षन् राक्षसान् स्थितः ॥ ७६ ॥
ततो जगाम बलवान् कुमा[3]रोऽक्षः प्रतापवान् ।
तमुत्पपात हनुमान् दृष्ट्वाकाशे समुद्गरः ॥ ७७ ॥
गगनात् त्वरितो मूर्ध्नि मुद्गरेण व्यताडयत् ।
हत्वा तमक्षं निःशेषं बलं सर्वं चकार सः ॥ ७८ ॥
[4]ततः प्रहाराभिहतो मूर्च्छितो धरणीतले ।
पपात स क्षणं स्थित्वा पुनरुत्थाय वेगतः ।
शरैस्त्रिभिरथाऽऽविध्य तिष्ठ तिष्ठेति चाब्रवीत् ॥ ७९ ॥

---

७६ । अत्र लौहस्तम्भेन मन्त्रिसुतानां विनाशः, वाल्मीकीये नानाविधेनोपायेन । तथाच—

स कृत्वा निनदं घोरं त्रासयन् परवाहिनीम् ।
चकार हनुमान् वेगं तेषु रक्षःसु विस्मयम् ॥
तलेनाभ्यवधीत् कांश्चित् पद्भ्यामन्यान् परन्तपः ।
मुष्टिनाऽताडयत् कांश्चिन्नखैरन्यानदारयत् ॥
प्रममाथोरसा कांश्चिदूरुभ्यामपरानपि । इति ।५।४०।११-१३ ।

७८ । अक्षहननप्रकारो वाल्मीकीये—

ततस्तलेनाभिजघान तद्रथं तथा प्लवङ्गाधिपमन्त्रिसत्तमः ।
प्रभग्ननीडः सयुगान्तकूबरः पपात भूमौ हतवाजिसारथिः ॥
स तं परित्यज्य महारथो रथं समुत्पपातासिधरः सकार्मुकः ।
तपोऽभियोगादृषिरुग्रसंयमो विहाय देहं मरुतामिवाऽऽलयम् ॥
ततः कपिस्तं विचरन्तमम्बरे पतत्त्रिराजानिलमार्गचारिणम् ।
समाप्लु वद् मारुतसूनुराहवे करेण जग्राह स पादयोर्दृढम् ॥
स तं समाविध्य सहस्रशः कपिर्महोरगं क्रुद्ध इवाण्डजेश्वरः ।
कुमारमक्षं प्रविकीर्णभूषणं विनिष्पिपेषाऽऽशुगतिर्महाबलः ॥
प्रभिन्नवक्षोरुकटीशिरोधरो विलम्बबाहुर्मथितास्थिबन्धनः ।
विमुक्तवासास्त्वगसृक्स्रवोक्षितो हतः क्षितौ वायुसुतेन राक्षसः ॥
इति । ५।४२।१६-२० ।

---

1. ग '-हस्तेन' । 2. च 'पूर्ववत् स्थानमासाद्य' । 3. छ '-राक्षः' । 4. क-ख-ग-घ-पुस्तकेषु अत आरभ्याशीतितमश्लोकान्तोऽंशो नास्ति ।

ततः क्रुद्धोऽतिविद्धः सन् मुद्गरेण तु मूर्धनि ।
अताडयद्वज्रकल्पैर्हनूमान् पवनात्मजः ।
ततः प्रभिन्नमस्तिष्कः पपात च ममार च ॥ ८० ॥
ततः श्रुत्वा कुमारस्य वधं राक्षसपुङ्गवः ।
क्रोधेन महताविष्ट इन्द्रजेतारमब्रवीत् ॥ ८१ ॥
पुत्र गच्छाम्यहं तत्र यत्राऽऽस्ते पुत्रहा रिपुः ।
हत्वा तमथवा बद्ध्वा [1]आनयिष्यामि तेऽन्तिकम् ॥ ८२ ॥
इन्द्रजित् पितरं प्राह त्यज शोकं महामते ।
मयि स्थिते किमर्थं त्वं भाषसे दुःखितं वचः ॥ ८३ ॥
बद्ध्वानेष्ये द्रुतं तात वानरं ब्रह्मपाशतः ।
इत्युक्त्वा रथमारुह्य राक्षसैर्बहुभिर्वृतः ।
जगाम वायुपुत्रस्य समीपं वीरविक्रमः ॥ ८४ ॥
ततोऽतिगर्जितं श्रुत्वा स्तम्भमुद्यम्य वीर्यवान् ।
उत्पपात नभो[2]देशं गरुत्मानिव मारुतिः ॥ ८५ ॥
ततो भ्रमन्तं नभसि हनूमन्तं शिलीमुखैः ।
विद्ध्वा तस्य शिरोभा[3]गमिषुभिश्चाष्टभिः पुनः ॥ ८६ ॥
हृदयं पादयुगलं षड्भिरेकेन बालधिम् ।
भेदयित्वा ततो घोरं सिंहनादमथाकरोत् ॥ ८७ ॥

---

८६ । नरो० । शिलीमुखैर्बाणैः ।

८७ । नरो० । हृदयं वक्षःस्थलम् । बालधिं पुच्छम् ।

---

८२ । इन्द्रजितं प्रति त्वं तं हन्तुं गच्छेति भङ्ग्यन्तरेणाऽऽह—पुत्रेति । हत्वेत्युक्त्वा हन्तुमशक्यत्वं विचार्याऽऽह—बद्ध्वेति ।

पुत्र गच्छाम्यहं तत्र इत्यादिनाऽत्र भङ्ग्यन्तरेण युद्धार्थं पुत्रनियोगः । वाल्मीकीये तु साक्षादेव । तथाच—

ततः स रक्षोऽधिपतिर्महात्मा हनूमताऽक्षे निहते कुमारे ।
मनः समाधाय निवृत्तशोकः समादिदेशेन्द्रजितं रणाय ॥ इति ।५।४३।१ ।

८३ । दुःखितं वचः आज्ञाकर्तुरभाव इवेति भावः । रा० ।

८४ । ब्रह्मपाशतः ब्रह्मास्त्राभिमन्त्रितैः पाशैरित्यर्थः । रा० ।

---

1. ग 'चाऽऽनयि-', च 'प्रापयि-' । 2. ग-ङ '-देशे' । 3. ग '-गं पञ्चभिः पादयोः पुनः', ङ छ '-गं पञ्चभिश्चाष्टभिः पुनः', च '-गं पञ्चभिश्चेषुभिः पुनः' ।

ततोऽति[1]हर्षाद्धनुमांस्तम्भमुद्यम्य वीर्यवान् ।
जघान सारथिं साश्वं रथञ्चाचूर्णयत् [2]क्षणात् ॥ ८८ ॥

ततोऽन्यं रथमादाय मेघनादो महाबलः ।
[3]शीघ्रं ब्रह्मास्त्रमादाय बद्ध्वा वानरपुङ्गवम् ।
निनाय निकटं राज्ञो रावणस्य महा[4]बलः ॥ ८९ ॥

---

८९ । ब्रह्मास्त्रब्रह्मदण्डानामवध्योऽयं भविष्यति । वाल्मीकि० । ६।३९।१२ ।
इत्यादिब्रह्मवरप्रभावेण हनूमतो ब्रह्मास्त्रबन्धो न भवतीति बन्धप्रसङ्गो विरोधमावहति, एवम्—

अस्त्रादुन्मोच्य चाऽऽत्मानं ज्ञात्वा पैतामहान् वरान् । वाल्मीकि० । १।१।८२

इत्यादिना च ब्रह्मास्त्रादुन्मोचनमेव ज्ञायते इति बद्ध्वा निनायेत्यपि विरुद्धमिति चेत् ।

ततस्ते राक्षसा बुद्ध्वा बद्धमस्त्रेण मारुतिम् ।
बबन्धुः शणपट्टैश्च द्रुमवल्कैश्च संहतैः ॥ वाल्मीकि० । ५।४४।१२ ।

इत्यादिना व्यर्पतेऽपि ब्रह्मास्त्रबन्धे शणपट्टादिना बद्ध्वा तं निनायेति यो नाम वाल्मीकीये समाधिः स एवात्र भविष्यतीति न कश्चिद् विरोधः ।

वक्ष्यति च—

ब्रह्मास्त्रमेनं क्षणमात्रसङ्गमं कृत्वा गतं ब्रह्मवरेण सत्वरम् ।
ज्ञात्वा हनूमानपि फल्गुरज्जुभिर्धृतो ययौ कार्यविशेषगौरवात् ॥ इति ।५।४।२

"अस्त्रादुन्मोच्य चाऽऽत्मानं ज्ञात्वा पैतामहान् वरान् ।
ममर्ष रक्षसां वीरो यन्त्रणां तां यदृच्छया ॥ वाल्मीकि० ॥ १।१।८२ ।

अस्त्रादिन्द्रजित्प्रयुक्तब्रह्मास्त्रबन्धनात् आत्मानमुन्मोच्य । अत्र च कण्ठचामीकरवत् सिद्धेऽप्यसिद्धत्वभ्रमात् पूर्वं ब्रह्मवरास्मरणेनाऽऽत्मानं बद्धं पश्चात् स्मरणेन मुक्तं मन्यमान इत्यर्थः । तेन चोन्मोचनं प्रति मारुतेर्भ्रान्तं कर्तृत्वमुपपद्यते । यदृच्छया स्वैरितया तां राक्षसकृतां लताबन्धादिरूपां यन्त्रणां ममर्ष सोढवान् । योऽप्यर्थे, अस्त्रादात्मानमुन्मोच्यापि नाऽऽकाशमुत्पपात न वा राक्षसान् निराचकार परं रावणदर्शनार्थी यन्त्रणामेव सेहे इत्यर्थः ।" इति तट्टिप्पन्यां श्रीमदमरेश्वरवेदान्तशास्त्रिणः । एतेन च मुक्तब्रह्मास्त्रबन्धस्यापि शणपट्टादिबन्धनं विषहमाणस्य हनूमतो रावणदर्शनार्थं गमनमिति सर्वं समञ्जसम् ।

अग्निपुराणे हनुमतो नागपाशबन्धनं न ब्रह्मास्त्रबन्धनम् । तथाच—

...............शक्रजिच्च बबन्ध तम् ।
नागपाशेन पिङ्गाक्षं दर्शयामास रावणम् ॥ इति ।९।१८ ।

---

1. च '-मर्षा-' । 2. च 'द्रुतम्' । 3. गी-ङ-च-छ 'ततो' । 4. छ '-त्मनः' ।

यस्य नाम सततं जपन्ति येऽज्ञानकर्मकृतबन्धनं क्षणात् ।
सद्य एव परिमुच्य तत्पदं यान्ति कोटिरविभासुरं शिवम् ॥ ९० ॥
तस्यैव रामस्य पदाम्बुजं सदा हृत्पद्म[1]मध्ये सुनिधाय मारुतिः ।
सदैव निर्मुक्तसमस्तबन्धनः किं तस्य पाशैरितरैश्च बन्धनैः ॥ ९१ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे सुन्दरकाण्डे
तृतीयोऽध्यायः ॥ ३ ॥

---

९० । नरो० । यस्य नाम सततं ये जपन्ति ते अज्ञानकृतकर्मबन्धनं क्षणाद्विमुच्य सद्य एव तत्पदं यान्ति । अज्ञानञ्च कर्म च ताभ्यां कृतं यद् बन्धनम् अन्तःकरणाद्युपाधिसम्बन्धस्तत्तथा । कोटिरवय इव भासुरं कोटिरविभासुरम् । शिवं मङ्गलरूपम् ।

९१ । नरो० । निर्मुक्तं समस्तं बन्धनं सवासनान्तःकरणोपाधिसम्बन्धादि येन स तथा । इतरैः पाशेतरैः ।

[ सुन्दरकाण्डे तृतीयाध्यायव्याख्या समाप्ता ॥३॥ ]

---

९० । यस्य रामस्य नाम ये प्राणिनो जपन्ति ते अज्ञानजन्यकर्मकृतबन्धनं संसारं परिमुच्य सद्य एव शिवाख्यं तत्पदं सच्चिदानन्दाख्यं याति । रा० ।

९१ । तस्य रामस्य पादाम्बुजं ध्याता मारुतिर्यतः सदैव निर्मुक्तानि समस्तानि बन्धनानि कर्माणि यस्य तादृशो भवति अतस्तस्य पाशैरितरैर्वा बन्धनैः किं दुःखमिति शेषः । रा० ।

---

1. ग '-मध्येषु निधाय' ।

# चतुर्थोऽध्यायः

—: * :—

[1]श्रीमहादेव उवाच—

यान्तं कपीन्द्रं धृतपाश[2]बन्धनं विलोकयन्तं नगरं विभीतवत् ।
अताडयन्मुष्टितलैः [3]सुकोपनाः पौराः समन्तादनु[4]यान्त ईक्षितुम् ॥ १ ॥
ब्रह्मास्त्रमेनं क्षणमात्रसङ्गमं कृत्वा गतं ब्रह्मवरेण सत्वरम् ।
ज्ञात्वा हनूमानपि [5]फल्गुरज्जुभिर्धृतो ययौ कार्यविशेषगौरवात् ॥ २ ॥

---

२ । नरो० । ननु महासत्त्वो रुद्रावतारो हनुमान् कथं धृतपाशबन्धन इत्यत आह—ब्रह्मास्त्रमित्यादि । हनूमानपि ब्रह्मवरेण एनं ब्रह्मास्त्रं सत्वरमागतं ज्ञात्वा क्षणमात्रसङ्गमं कृत्वा फल्गुरज्जुभिर्धृत इति । एनमित्यार्षम् ।

---

१ । धृतं स्वहस्तेन पाशबन्धनं येन तादृशम् । विशेषेण भीतवद् नगरं लङ्कां विलोकयन्तम् । ईक्षितुं कपीन्द्रं द्रष्टुं तमेवानु पश्चाद् यान्त इति पौरविशेषणम् । रा० ।

अनुयान्तमिति पाठे हनूमद्विशेषणम्, धृतपाशानां रक्षिणां पश्चाद् गच्छन्तमित्यर्थः । तथात्वे ईक्षितुं तं द्रष्टुम् आगता इत्यध्याहारेण समाधेयम् ।

२ । क्षणमात्रसङ्गमं क्षणमात्रं सङ्गमः सम्बन्धो यस्य तादृशमेनं हनूमन्तम् । ब्रह्मास्त्रं कर्त्तृ कृत्वा, ब्रह्मवरेण त्वां मदस्त्रं न पीडयिष्यतीति ब्रह्मदत्तवरेण सत्वरं गतम् । हनूमान् तद्गमनं ज्ञात्वाऽपि फल्गुतार्णरज्जुभिर्धृतोऽपि कार्यविशेषस्य कर्त्तव्यरावणदर्शनादिरूपस्य गौरवाद्बद्ध इव ययावित्यर्थः । रा० ।

[ क्षणमात्रं सङ्गमो यस्य तत् कृत्वा गतं रावणसमीपमित्यर्थः । ब्रह्मवरेण अव्यर्थमेतदिति ब्रह्मवरस्य गौरवेण छेत्तुं समर्थोऽपि क्षणं गले निधायेति तात्पर्यार्थः । ज्ञात्वेति,—समस्ततत्त्वं ज्ञात्वा हनूमान् फल्गुरज्जुभिरपि धृतः कार्यविशेषस्य रावणसम्भाषणस्य गौरवाद्धेतोर्ययौ । गो० ]

फल्गुरज्जुभिरिति । शणपट्टैर्द्रुमवल्कलैश्च बन्धनं वाल्मीकीये । तथाच—

ततस्ते राक्षसा बुद्ध्वा बद्धमस्त्रेण मारुतिम् ।
बबन्धुः शणपट्टैश्च द्रुमवल्कैश्च संहतैः ॥ इति । ५।४८।१२ ।

---

1. क-ख-ङ-पुस्तकेषु 'श्रीमहादेव उवाच' इति नास्ति । 2. क '-बन्धं' । 3. ग-छ '-सको-' । 4. ग-ङ छ '-यान्तमी' च '-यातमी-' । 5 छ 'रज्जुभिर्धृतो ययौ' ।

सभान्तरस्थस्य च रावणस्य तं पुरो निधायाऽऽह बलारिजित् तदा ।
बद्धो मया ब्रह्म[1]शरेण वानरः समागतोऽनेन हता महासुराः ॥ ३ ॥
यद्‍ युक्त[2]मत्राऽऽर्य विचार्य मन्त्रिभिर्विधीयता[3]मेष न लौकिकोहरिः ।
ततो विलोक्याऽऽह स राक्षसेश्वरः प्रहस्तमग्रे स्थितमञ्जना[4]द्रिभम् ॥ ४ ॥
प्रहस्त पृच्छैनमसौ किमागतः किमत्र कार्यं कुत एव वानरः ।
वनं किमर्थं सकलं विनाशितं हताः किमर्थं मम राक्षसा बलात् ॥ ५ ॥
ततः प्रहस्तो हनुमन्तमादरात् पप्रच्छ केन प्रहितोऽसि वानर ।
भयञ्च ते माऽस्तु विमोक्ष्यसे मया सत्यं वदस्वाखिलराजसन्निधौ ॥ ६ ॥

---

३ । नरो० । सभान्तरस्थस्य सभामध्यस्थस्य । बलारिजित् इन्द्रजित् ।

४ । नरो० । अलौकिकत्वादस्य वधो हठान्नोचित इत्याह—यद्‍ युक्तमित्यादिना ।

५ । नरो० । केन प्रेरित आगतः किमागतः । यद्वा केन कारणभूतेनाऽऽगतः किमागतः ।

६ । नरो० । यस्य कार्यार्थमागतस्तस्याप्ययं राजेति सूचनाय अखिलेत्युक्तम् ।

---

३ । सभान्तरस्थस्य सभामध्यस्थस्य । तं हनूमन्तम्, बलारिजिदिन्द्रजित्, ब्रह्मवरेण ब्रह्मवरलब्धब्रह्मास्त्रेण, समागतः बन्धपीडामसहिष्णुः स्वयमेवाऽऽगत इत्यर्थः । तद्वृत्तान्तमाह—अनेनेत्यादि । रा० ।

४ । एष हरिर्न लौकिक इति तत्पराक्रमकथनम् । अञ्जनाद्रिभम् अञ्जनाचलवत् श्यामकान्तिम् । रा०

'ब्रह्मशरेणे'त्यत्र 'ब्रह्मवरेण' इति पाठ आदर्शेषु संख्यागरिष्ठेषु, तथाऽपि अस्त्रेणैव ग्रहणस्योचितत्वाद् वाल्मीकीयेऽपि तथा दृष्टत्वाच्च अयमेव पाठोऽस्माभिरङ्गीकृतः । तथाच वाल्मीकीये—

ततस्तं ब्रह्मणोऽस्त्रेण बबन्धेन्द्रजिदस्त्रवित् ।
सोऽभवन्निर्विचेष्टश्च पपात च महीतले ॥ इति । ५।४४।११ ।

५ । प्रहस्त पृच्छैनमिति । वाल्मीकीयेऽपि—

सञ्जातरोषताम्राक्षः प्रहस्तं रक्षसां वरम् ।
कालयुक्तमुवाचेदं वचो विपुलविक्रमः ॥ इति ।५।४६।२।

६ । विमोक्ष्यसे अस्माद्बन्धनात् प्राणभयाच्चेति शेषः । अखिलराजसन्निधौ अखिललोकराजस्य रावणस्य सन्निधावित्यर्थः । रा० ।

---

1. क-ख-घ-ङ-च '-वरेण' । 2. च '-मार्याच' । 3. क '-मेवमलौ-' । 4. क '-द्रितम्' ।

ततोऽतिहर्षात् पवनात्मजो रिपुं निरीक्ष्य लोकत्रयकण्टकासुरम् ।
वक्तुं प्रचक्रे रघुनाथसत्कथां क्रमेण रामं मनसा स्मरन् मुहुः ॥ ७ ॥

श्रृणु स्फुटं देवगणाद्यमित्र हे रामस्य दूतोऽहमशेषहृत्स्थितेः ।
यस्याखिलेशस्य [1]हृताऽधुना त्वया भार्या स्वनाशाय शुनेव [2]सद्धविः ॥ ८ ॥

स राघ[3]वोऽभ्येत्य मतङ्गपर्वतं सुग्रीवमैत्री[4]मनलस्य सन्निधौ ।
कृत्वैकबाणेन निहत्य वालिनं सुग्रीवमेवाधिपतिं चकार तम् ॥ ९ ॥

---

७। नरो०। अतिहर्षादिति, अधुना रामसत्कथा वक्तव्येति हृदि कृत्वा हनूमतोऽतिहर्षः। लोकत्रयकण्टकासुरं त्रिलोकार्यसुरम्। रावणस्य निरीक्षणम् अनन्यचित्तश्रवणार्थम्। प्रचक्रे प्रचक्रमे इत्यर्थः।

८। नरो०। त्वं न केवलमस्माकं रिपुः किन्तु सर्वेषामिति सूचनाय देवगणाद्यमित्रेत्युक्तम्। आदिपदेन मुनिगणादेः परिग्रहः। अशेषहृदि स्थितिर्यस्य तस्य तथा। एतेन साक्षीभूतत्वं सूचितम्। अखिलेशस्य अखिलनियन्तुः। दृष्टान्तमाह—शुनेव सद्धविरिति। सद्धविर्हवनार्थं घृतमित्यर्थः।

९। नरो०। मतङ्गपर्वतमिति। मतङ्गो मुनिविशेषः।

---

अभयप्रदानं वाल्मीकीयेऽपि—

रावणस्य वचः श्रुत्वा प्रहस्तो वाक्यमब्रवीत्।
समाश्वसिहि भद्रन्ते न भीः कार्या त्वया कपे॥ इति ।५।४६।४।
यदि तावत्त्वमिन्द्रेण प्रेषितो राक्षसालयम्।
तत्त्वमाख्याहि मा भूत्ते भयं वानर मोक्ष्यसे॥५।४६।५।

इत्यादिना चाभयं मोक्षस्य भावि सम्भावनञ्च प्रकटिते।

७। लोकत्रयकण्टकासुरं स्वर्गमर्त्यपातालानां लोकत्रयाणां कण्टकस्वरूपमसुरं रावणं निरीक्ष्य वक्तुं वक्ष्यमाणप्रकारं तत्त्वोपदेशमिति शेषः, प्रचक्रे।

८। देवादीनाममित्र शत्रो। आदिना नागादिसंग्रहः। अशेषहृत्स्थितेः अशेषहृदयेषु स्थितिर्यस्य, सर्वान्तर्यामिण इत्यर्थः। अनेन तव ततः कथमपि न मोक्ष इति सूचितम्। किञ्च त्वन्मृत्युं चिकीर्षोस्तस्यैव प्रेरणया सीता हृतेति सूचितम्। रा०।

[ देवगणाद्यमित्र इति हे देवगणादिशत्रो। अशेषहृत्स्थितेरिति अशेषाणां हृदि स्थितिर्यस्य, परमात्मन इत्यर्थः। गो० ]

९। स राघवः सुग्रीवमैत्रीं कृत्वा वालिनं निहत्य तं प्रसिद्धपराक्रमं सुग्रीवमेव वान-

---

1. ङ 'हृता त्वयाऽधुना'। 2. क 'सत्वरः'। 3. ग '-वो ह्येत्य'। 4. क '-मवलम्ब्य'।

स वानराणामधिपो महा[1]बलो महाबलैर्वानरयूथकोटिभिः ।
रामेण सार्द्धं सह लक्ष्मणेन भोः प्रवर्षणेऽमर्षयुतोऽवतिष्ठते[2] ॥ १० ॥

सञ्चोदितास्तेन महाहरीश्वरा धरासुतां मार्गयितुं दिशो दश ।
तत्राहमेकः पवनात्मजः कपिः सीतां विचिन्वञ् शनकैः समागतः ॥ ११ ॥

दृष्टा मया पद्म[3]पलाशलोचना सीता कपित्वाद् विपिनं विनाशितम् ।
दृष्ट्वा [4]ततोऽहं रभ[5]सात् समागतान् मां हन्तुकामान् धृतचापसायकान् ॥ १२ ॥

मया हतास्ते परिरक्षितुं वपुः प्रियो हि देहोऽखिलदेहिनां प्रभो ।
ब्रह्मास्त्रपाशेन निबध्य मां ततः समा[6]गमन्मेघनिनाद[7]नामकः ॥ १३ ॥

---

१० । नरो० । प्रवर्षणे प्रवर्षणाख्ये पर्वते ।

११ । नरो० । धरासुतां सीताम् ।

१२ । नरो० । पद्मपलाशे इव लोचने यस्याः सा तथा । रभसाद् हर्षात् ।

१३ । नरो० । 'प्रियो हि देहोऽखिलदेहिनां प्रभो' इति अध्यस्तचैतन्यत्वाद् देहस्य प्रियत्वं बोध्यम् ।

---

राणामधिपतिं चकार । अनेन रामस्य कृतोपकारत्वात् तन्निमित्तं सुग्रीवः सर्ववानरैर्लङ्कां रोत्स्यत्येवेति सूचितम् । मित्रभार्याहारिणं त्वत्तोऽप्यधिकबलं वालिनं यो हतवान् स त्वां सर्वथा हनिष्यत्येवेति सूचितम् । रा० ।

१० । भो इति रावणसम्बोधनम् । प्रवर्षणे तदाख्ये पर्वते अमर्षयुतस्तद्विषय-क्रोधयुतोऽवतिष्ठते । रा० ।

११ । धरासुतां जानकीम् । अनेन 'किमागत' इत्यस्योत्तरं दत्तम् । रा० ।

१२ । वननाशकारणमाह—कपित्वादिति, चञ्चलस्वभावत्वादित्यर्थः । राक्षसहननहेतु-माह—दृष्ट्वेति । रा० ।

वनभङ्गस्य कारणान्तरं वाल्मीकीये । तथाच—

दुर्लभे राक्षसेन्द्रस्य दर्शने सति तन्मया ।
वनं राक्षसराजस्य दर्शनार्थं विनाशितम् ॥ ५।४६।१३

इत्यादिना रावणदर्शनार्थं वनभङ्गो विहित इति स्फुटम् ।

१३ । वपुः शरीरं परिरक्षितुम् । तत्र हेतुः—प्रियो हीति । रा० ।

---

1 क-ख-घ-छ '-बली' । 2. ङ '-ति' । 3. च '-विशाल-' । 4. च 'ततस्तान्' । 5. क-ख-घ-ङ-च-छ '-सा' । 6. छ '-गतो मेघ-' । 7. ग-ङ '-नायक.', च '-नामत.' ।

[1]स्पृष्ट्वैव मां ब्रह्मवरप्र[2]सादात् त्यक्त्वा गतं सर्व[3]मवैमि रावण ।
तथाऽ[4]प्यहं बद्ध इवाऽऽ[5]गतो हितं प्रवक्तुकामः करुणारसार्द्रधीः ॥ १४ ॥
विचार्य लोकस्य विवेकतो गतिं न राक्षसीं बुद्धिमुपैहि रावण ।
दैवीं गतिं संसृतिमोक्षहैतुकीं समाश्रयात्यन्तहिताय देहिनः ॥ १५ ॥

---

१४ । नरो० । ब्रह्मवरप्रसादात् मां स्पृष्ट्वैव त्यक्त्वा सर्वं बन्धनं गतमवैमीति सम्बन्धः । दृश्यमानं बन्धनं कथमपलपसीति चेत्तत्राऽऽह—तथाऽप्यहमित्यादि । तथाऽपि त्यक्तवत्सर्वबन्धनत्वेऽपि बद्ध इव परमार्थतो न बद्ध इत्यर्थः । तर्हि किमर्थमागत इति चेत्तत्राऽऽह—प्रवक्तुकाम इति । तत्र हेतुः करुणारसार्द्रधीरिति ।

१५ । नरो० । किं वक्तुमिच्छन् त्वमिहाऽऽगत इत्यपेक्षायामाह—विचार्य लोकस्येत्यादि । हे रावण, लोकस्य विवेकतो गतिं विचार्य पर्यालोच्य राक्षसीं बुद्धिं नोपेहि इत्यन्वयः । विवेकतः अनात्मभ्य आत्मनः पृथक्त्वज्ञानात् । गतिं गम्यपुरुषार्थम् । हे रावण, यतः संसृति मोक्षहैतुकीम् अतो देहिनोऽत्यन्तहिताय दैवीं गतिं समाश्रयेत्यन्वयः । अर्चिरभिमानिदेवसम्बन्धिनीं गतिं मार्गम् । संसृतिः संसारः, तस्या मोक्षो निवृत्तिस्तस्य हैतुकी हेतुस्ताम् । तथाच भगवद्गीता—

शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्तिमन्ययावर्त्तते पुनः ॥ (८।२६)

इत्यादि । संसारान्मोक्षमेव देहिनोऽत्यन्तहितम् । तथाच भगवद्गीता—

उद्धरेदात्मनात्मानं नाऽऽत्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ (६।५) इति ।

---

मया हतास्ते परिरक्षितुं वपुरिति ।

वाल्मीकीयेऽपि—

ये च ते राक्षसाः प्राप्ता बलिनो युद्धकाङ्क्षिणः ।
रक्षणार्थं शरीरस्य प्रतियुद्धा रणाजिरे ॥ इति । ५।४६।१४ ।

१४ । त्यक्त्वा गतं ब्रह्मास्त्रमिति शेषः । बद्ध इवाऽऽगतः, तथागमनहेतुः हितं प्रवक्तुकाम इति । तत्र तत्प्रवचने किं निमित्तमत आह—करुणेति । रा० ।

१५ । विवेकतः विवेकेन सदसद्विवेकेन लोकस्य गतिं धर्मात् स्वर्गोऽधर्माद् नरक इत्येवंरूपां विचार्य राक्षसीं बुद्धिं त्यजेत्यर्थः । संसृतेः संसाराद् यो मोक्षस्तस्य हैतुकीं हेतुभूताम् । विनयादित्वाट्ठक् । ईदृशीं देवप्रोक्तां गतिं मार्गं परपीडातो निवृत्तिरूपं मार्गं समाश्रय । देहिनः स्वस्य अत्यन्तहितायेत्यर्थः । रा० ।

---

1. क 'दृष्ट्वैव' । 2. क-ख-ग-घ-च '-भावतस्य-', ङ-छ '-सादतस्य-' । 3. ग-च '-मुपैमि' । 4. ङ-छ '-प्यय' । 5. ग '-गतोऽयं प्र-', च '-गतः पुरः', ङ-छ '-गतोऽह प्र-' ।

त्वं[1] ब्राह्मणो ह्युत्तमवंशसम्भवः पौलस्त्यपुत्रोऽसि कुबेरबान्धवः ।
देहात्मबुद्ध्याऽपि च पश्य राक्षसो [2]नास्यात्मबुद्ध्या किमु राक्षसो न हि ॥१६॥
शरीरबुद्धीन्द्रियदुःखसन्ततिर्न ते न च त्वं तव निर्विकारतः ।
अज्ञानहेतोश्च तथैव सन्तते[3]रसत्त्वमस्याः स्वपतो हि दृश्यवत् ॥ १७ ॥

---

१६ । नरो० । राक्षसोऽहं कथं राक्षसीं बुद्धिं जहामीति चेत्तत्राऽऽह—त्वमित्यादि । तथाविधत्वेऽपि मम राक्षसत्वं विद्यत एवेति चेत्तत्राऽऽह—देहात्मबुद्ध्याऽपि चेत्यादि । देहात्मबुद्ध्या देहे आत्मत्वप्रकारिकया अहं श्याम इत्याद्याकारिकया बुद्ध्येत्यर्थः । आत्मबुद्ध्या आत्मत्वप्रकारिकया ब्रह्माहमित्याकारिकया बुद्ध्या इत्यर्थः ।

१७ । नरो० । तर्हि सुखदुःखादिसम्बन्धः कस्य स्यादित्यत आह—शरीरेत्यादि । दुःखेत्युपलक्षणम् । ननु अहं सुखी अहं दुःखी अहं गच्छामि इत्याद्यनुभवात्तानि अहमित्यत आह—न च त्वमिति, शरीरादीनि न च त्वमित्यर्थः । तत्र हेतुः—तव निर्विकारत इति । ननु शरीरादीनामसत्यत्वं भवतु शरीरजन्यवंशस्य चिरस्थायित्वात्तदर्थं शरीरधारणमुचितमिति चेत्तत्राऽऽह—अज्ञानहेतोश्चेत्यादि । असत्त्वम् असत्यत्वम्, तत्रापि अज्ञानहेतोः अविवेककारणस्येत्यर्थः । दृष्टान्तमाह—स्वपतो हि दृश्यवदिति । स्वपतः शयानस्य ।

---

[ दैवीं गतिमित्यादि । दैवीं सात्त्विकीं गतिं बुद्धिम् । संसृतिमोक्षहैतुकीं संसारमोक्षहेतुम् । तदुक्तं गीतासु—'दैवी सम्पद्विमोक्षाये'त्यादि । गो० ]

१६ । ननु तस्मिन् मार्गे मम नाधिकार इति चेन्न, ब्राह्मणत्वादिना तत्सत्त्वादित्याह—त्वमिति । उत्तमवंशसम्भवत्वस्य विवरणं पौलस्त्यपुत्रोऽसीति । यदि ते देह एवाऽऽत्मेति बुद्धिस्तथाऽपि पश्य विचारय त्वं राक्षसो नासि उत्तमवंशसम्भवत्वेन ब्राह्मणत्वादिति भावः । आत्मबुद्ध्या देहातिरिक्त आत्मेति बुद्ध्या राक्षसो न हि भवसीति शेषः । रा० ।

[ देहात्मबुद्ध्येति । देहे आत्मेति बुद्ध्याऽपि राक्षसो नासि न भवसि महावंशजत्वात् । यतस्त्वं ब्रह्मणो वंशजस्तत्रापि पौलस्त्यस्य विश्रवसोर्महामुनेः पुत्रः कुबेरस्य भ्राता अत आत्मबुद्ध्या आत्माऽहमिति दृष्ट्या किमु राक्षसः ? नैव, आत्मनो जात्यादिहीनत्वात् । अयम्भावः—मूढामूढभेदेन आत्मज्ञानं द्विधा भवति ; मूढानां देह एव आत्मा इति बुद्धिः, ज्ञानिनान्तु देहे अनास्था शुद्धचिदात्मैव अहमिति बुद्धिः । उभयत एव तव न राक्षसत्वमिति अधर्माचरणं न युक्तम् । गो० ]

१७ । एवं सर्वथा राक्षसत्वाभावं प्रसाध्याऽऽह—शरीरेति । शरीरं स्थूलं बुद्धिः सूक्ष्मशरीरम् इन्द्रियाणि चक्षुरादीनि तज्जन्या दुःखसन्ततिराधिव्याधिजा । दुःखेत्युपलक्षणं

---

1. च 'ब्रह्मणोऽस्युत्तम-' । 2. ङ 'नास्या-' । 3. ख '-रसन्मनुष्यानुगतो हि दृश्यते' ।

इदन्तु सत्यं तव नास्ति विक्रिया विकारहेतुर्न च [1]तेऽद्वयत्वतः ।
यथा नभः सर्वगतं न लिप्यते तथा भवान् देहगतोऽपि सूक्ष्म[2]तः ॥ १८ ॥

---

१८ । नरो० । ननु बुद्ध्यादिमतो मम किं निर्विकारत्वमित्यत आह—इदन्तु सत्यमित्यादि । इदं वक्ष्यमाणम् । विक्रिया विकारहेतुश्च ते तव नास्ति यतस्तव ततो ब्रह्मणोऽद्वयत्वमिति सम्बन्धः । विक्रिया जन्मजन्मान्तरास्तित्वादिप्रकारा । सर्वगतेनासङ्गेन ब्रह्मणा सह कथं देहगतस्य ममाभेद इत्यत आह—यथेत्यादि । आकाशं यथा सूक्ष्मतः सूक्ष्मत्वात् असङ्गत्वात् सर्वगतं जलपङ्कादीनपि प्राप्त' तैर्न लिप्यते न युज्यते [ तद्वत् ] इत्यभिप्रायः ।

---

कामादेरपि । सा ते तव न, तेषां चित्तधर्मत्वात् त्वञ्च तदाश्रयश्चित्तं नेति शेषपूरणेन व्याख्येयम्, तस्याचेतनत्वादिति भावः । नन्वात्मन एव दुःखाद्यस्तु इति, न चैव तदत आह—तव निर्विकारतः । विकाराभावो निर्विकारं ततः, तव विकाराभावाद् दुःखादिसत्त्वे च विकारप्रसङ्गः, एवञ्चाऽऽत्मनोऽविक्रियत्वप्रतिपादकश्रुतिविरोधः, ताश्च श्रुतयः पूर्वं बहुशो लिखिताः । नन्वेवमहं दुःखीत्यादिप्रतीतेः का गतिस्तत्राऽऽह—अज्ञानहेतोरिति । स्वपतः पुरुषस्य प्रतिभासमानस्यापि दृश्यस्य यथाऽसत्त्वं तथा आत्मस्वरूपाज्ञानरूपाद्धेतोर्भासमानाया अस्याः सन्ततेर्वस्तुतोऽसत्त्वमेव, एवं चाहं दुःखीत्यादिप्रतीतिः स्वप्नकालिकतत्तत्प्रतीतिवद् भ्रम एवेति भावः । रा० ।

[ ननु यद्यहं न देहः, देहभिन्नश्च आत्मा नामास्ति तर्हि कथमहं कृशः, अहं स्थूलः, अहं सुखी अहं दुःखीति प्रतीतिरित्यत आह—शरीरेत्यादि । शरीरञ्च बुद्धिश्च इन्द्रियाणि च दुःखसन्ततिर्दुःखधाराश्च ते तव न, एतेन ममत्वबुद्धिर्निराकृता । न च त्वमिति देहोऽपि त्वं न भवसि, अनेनाहंबुद्धिर्निरस्ता । उभयत्र हेतुः—तव निर्विकारत इति । न ह्यविकारिणो विकारभूतदेहादिसम्बन्धोऽस्ति न वा द्रष्टा नित्य आत्मा दृश्यो जन्यो देहो भवति । अतोऽज्ञानं हेतुर्यस्याः एवम्भूतायाः सन्ततेर्देहादिधाराया अस्या अनुभूयमानाया असत्त्वं मिथ्यात्वमेव । तत्र दृष्टान्तः—स्वपत इति । स्वपतो दृश्यं स्वप्नोपस्थितं शरीरभयप्रत्ययादि इव । गो० ]

१८ । नन्वेवं सत्यं वस्तु किमपि नास्त्येव किम्? अस्तीत्याह—इदन्तु सत्यमिति । त्वत्स्वरूपं त्वित्यर्थः । एतत्तव विक्रिया नास्ति, अविकारी चेतन एवैकः सत्यः । ननु विकारहेत्वज्ञानमपि सत्यमेव, नेत्याह—ते विकारहेतुर्न च, सत्य इति शेषः । तत्र हेतुमाह—अद्वयत्वतः, 'एकमेवाद्वितीयं ब्रह्म' ( छान्दो० ६।२।१ ) इत्यद्वैतप्रतिपादकश्रुतिविरोधात् । तथाऽपि सतो द्वितीयस्य निषेध इति भावः । ननु चित्तसम्बन्धाद् मम दुःखमस्त्येवेति चेन्नेत्याह—यथा

---

1. ड 'तेऽद्वयात्मनः', च 'तेऽपि तत्त्वतः' । 2. क-ख घ-च '-कः' ।

देहेन्द्रियप्राणशरीर[1]सङ्ग[2]तः स्वात्मेति बुद्ध्याऽखिलबन्धभाग् भवेत्।
चिन्मात्रमेवाह[3]मजोऽहमक्षरो ह्यानन्दभावोऽहमिति प्रमुच्यते ॥ १९ ॥

---

१९। नरो०। ननु तर्ह्यात्मा कथं बन्धभागित्यत आह—देहेन्द्रियेत्यादि। देहेन्द्रियप्राणशरीरसङ्गत इति। देहः स्थूलशरीरम्, शरीरं लिङ्गशरीरम्। स्वात्मेति बुद्ध्या देहादिष्विति शेषः। कया बुद्ध्या मुच्यते इत्यपेक्षायामाह—चिन्मात्रेत्यादि। अक्षरोऽचलः स्थिरस्वभाव इति यावत्। यद्वा अक्षरोऽव्ययः अपक्षयशून्य इति यावत्। आनन्दभावः आनन्दस्वभावः, 'स एष पुरुषोऽन्नरसमयः' इत्यादिश्रुतेः।

---

सर्वगतमपि नभः पृथिव्यादिरूपगन्धादिभिर्न लिप्यते सूक्ष्मत्वात्तथा देहगतोऽपि चित्तसमान्नाधिकरणोऽपि, यतः सूक्ष्मकोऽतिसूक्ष्मः, अतस्तद्गतदुःखादिभिर्वस्तुतो न लिप्यते। एवञ्च नीलं नभ इत्यादि प्रतीतिवदहं दुःखीत्यादिप्रतीतिर्भ्रम एवेति भावः। रा०।

[ ननु यदि देहादिकमसत् तर्हि किं नाम सदित्याह—इदं त्वित्यादि। इदन्तु इदमेव सत्यम्, किन्तु तव विक्रिया विकारो नास्ति, यतः कारणात् तव विकारस्य वैरभयादेर्हेतुर्द्वयं द्वैतं नास्ति। नन्वहंप्रत्ययवेद्यः प्रतिशरीरं भिन्न आत्मेति वचनाद् अनुभूयमानत्वाच्च कथं द्वैतं नास्तीत्युक्तम्, तत एवाऽऽह—भवान् देहगतोऽपि न लिप्यते क्वापि न सज्जते। तत्र हेतुः—सूक्ष्मतः सूक्ष्मत्वात्। अनासक्तौ दृष्टान्तः—यथा नभ इति। यथा नभः नानाघटादिगतमपि क्वापि न लिप्यते, न वा पृथग् भवति, किन्त्वेकमेव। औपाधिक एव भेद इति भावः। गो० ]

१९। ननु तर्हि मुक्तसंसारिव्यवस्था किं नास्त्येव? अस्तीत्याह—देहेत्यादि। देहोऽत्र सूक्ष्मः, शरीरं स्थूलम्, तत्सङ्गतस्तद्विवेकाग्रहात्। तेष्वेव या बुद्धिस्तयाऽखिलबन्धभाग् भवेत्। अविवेक एव मुख्यं संसारकारणमिति भावः। ननु तर्हि मुक्तिर्दुर्लभेति शङ्कायां तत्कारणमाह—चिन्मात्रेति। विवेको ज्ञात एव मोक्षकारणमिति तमाह। तत्राऽऽद्यार्धेनाऽऽत्मनि जडवैधर्म्यमुक्तम्। अजत्वेनोत्पत्तिराहित्यम्। अक्षरत्वेनाविनाशित्वम्। आनन्दभावस्तद्रूपः। रा०।

[ ननु यदि आत्मा निर्लेपः कथं तर्हि बन्धमोक्षश्रुतिरित्याह—देहेत्यादि। स्वात्मबुद्ध्या देहगतानाम् इन्द्रियप्राणानां शरीरस्य च सङ्गतः आसक्तेर्हेतोरखिलबन्धभाग् भवेत्। यद्वा अखिलं मृषाऽपि बन्धभाग् भवेत्। एवमसङ्गस्यापि अहङ्काराद् बन्धमुक्त्वा स्वरूपज्ञानान्मुक्तिमाह—चिदित्यादि। अहं चिन्मात्रं चैतन्यमेव। अजो जन्महीनः। अक्षरोऽविनाशी। आनन्दश्चासौ भावः सत्तारूपश्चेति ज्ञात्वा प्रमुच्यते। गो० ]

---

1. ङ '-सन्ततः'। 2. क-ख-ग-घ '-तस्त्वात्मेति,' च '-त आत्मेति'। 3. ग-छ '-मतोऽह-'।

देहोऽप्यनात्मा पृथिवीविका[1]रजो न प्राण आत्माऽनिल [2]एष एव सः ।
मनोऽप्यहङ्कारविकार एव नो न चापि बुद्धिः प्रकृतेर्विकारजा ॥ २० ॥

२० । नरो० । प्रदीप्तगेहात् स्वपुत्रं परित्यज्यापि स्वस्य निर्गमनदर्शनात्, स्थूलोऽहं कृशोऽहमित्यनुभवाच्च देह आत्मेति वक्तुं युज्यते इति चेत्तत्राऽऽह—देहोऽपीत्यादि । चतुर्विधं भोज्यं पार्थिवत्वात् पृथिवी, तद्विकारो रेतस्तच्च योनिरक्तेन संयुक्तं देहो भवतीति युक्तमुक्तं पृथिवीविकारज इति । 'अन्योऽन्तरात्मा प्राणमयः' (तैत्ति० २।२।१) इति श्रुतेः, प्राणाभावे इन्द्रियादिचलनाभावात्, अहमलसः अहमशनायावान् अहं पिपासावान् इत्यनुभवाच्च प्राण आत्मेति वक्तुं युज्यते इति चेत्तत्राऽऽह—न प्राण इत्यादि । 'अन्योऽन्तरात्मा मनोमयः' इति श्रुतेः, मनसि सुप्ते प्राणादेरभावात्, अहं सङ्कल्पविकल्पवान् इत्याद्यनुभवाच्च मन आत्मेति वक्तुं युज्यते इति चेत्तत्राऽऽह—मनोऽपीत्यादि । अहङ्कारविकारः अन्तःकरणपरिणामः । नो इति निषेधे । अहं कर्त्ता भोक्ता इत्याद्यनुभवादन्तःकरणमात्मेति वक्तुं युज्यते इति चेत्तत्राऽऽह—न चापीत्यादि । बुद्धिरन्तःकरणम्, प्रकृतेर्विकारजेति, मायापरिणामोऽत्रापञ्चीकृतभूतपञ्चकम्, तज्जन्येत्यर्थः । आसां श्रुतीनां बाधिका श्रुतिर्यथा—'प्रत्यक् स्थूलोऽचक्षुरप्राणोऽमनोऽकर्त्ता चैतन्यं चिन्मात्रं सदि'त्यादि ।

२० । देहादौ तद्वैधर्म्यमाह—देहोऽपीति । पृथिवीविकारैस्तत्परमाणुभिर्जनित इति अनात्मा, अनेनाचेतनत्वजन्यत्वादिवैधर्म्यमुक्तम् । प्राणोऽप्यात्मा न, यत एषोऽबहिर्दृश्यमानो जडोऽनिल एव सः प्राणः, 'यः प्राणः स वायुः' इति श्रुतेः । मनोऽपि नाऽऽत्मेत्याह—मनोऽपीति । नो इत्यस्याऽऽत्मेति शेषः । नातस्तत् अहङ्कारस्य विकारः । न चापि बुद्धिरिति । बुद्धिरहङ्कारोऽपि नाऽऽत्मा, यतः प्रकृतेर्विकारान्महतो जायत इति प्रकृतेर्विकारजा । रा० ।

[ ननु 'पुरुषत्वेनाऽऽविष्काराय नाऽऽत्मे'ति श्रुतेः, अहं कृशोऽहं स्थूल इति प्रतीतेर्देह एवाऽऽत्मा, कथमुच्यते देहादिसङ्गत इति ? तत्राऽऽह—देहोऽपीत्यादि । अपि निश्चितं देहो न आत्मा । तत्र हेतुः पृथिवीविकारज इति । पृथ्वीपरिणामजन्यः, न ह्यात्मा तथा । ननु "अन्योऽन्तरात्मा प्राणमयः" ( तैत्ति० २।२।११ ) इति श्रुतेः, प्राणाभावे इन्द्रियादीनां चलनायोगाच्च प्राण आत्मेति चेन्नेत्याह—न प्राण आत्मेति । प्राण आत्मा न, यतः सः अनिलः पवन एव, 'तस्मिन् आत्मा मातरिश्वा दधाती'ति श्रुतौ पार्थक्यस्य उक्तत्वात् महाभूतत्वाच्च । ननु 'अन्योऽयमन्तरात्मा मनोमयः' इति श्रुतेः, मनसि सुप्ते इन्द्रियादेरभावादहं सङ्कल्पविकल्पवानित्यभिमानाच्च मन आत्मा कथं नोच्यते ? तत्र सोपपत्तिकमाह—मनोऽपि आत्मा न । तत्र हेतुः अहङ्कारविकारवान् इति । अहङ्कारस्य विकाराः सात्त्विकाः । ननु 'अन्योऽन्तरात्मा विज्ञानमयः' ( तैत्ति० २।४।१ ) इत्यादिश्रुतेः, अहं कर्त्ता भोक्तेत्याद्यनुभवाच्च बुद्धिरात्मा ;

1. ग-छ '-रतो' । 2. ङ 'एव एष सः', च 'एक' ।

आत्मा चिदानन्दमयोऽविकारवान् देहादि[1]सङ्घव्यतिरिक्त ईश्वरः ।
निरञ्जनो मुक्त उपाधितः सदा ज्ञात्वैवमात्मानमितो विमु[2]च्यते ॥ २१ ॥

अतोऽहमात्यन्तिकमोक्षसाधनं वक्ष्ये शृणुष्वावहितो महामते ।
विष्णोर्हि भक्तिः सुविशोधनं धियस्ततो भवेज् ज्ञानमतीव निर्मलम् ॥ २२ ॥

---

२१ । नरो० । तर्हि क आत्मा इत्यपेक्षायामाह—आत्मेत्यादि । चिदानन्दमयश्चिदानन्दस्वरूपः । अविकारवान् जन्ममरणादिविकाराभाववान् । अत एव देहादिसंघव्यतिरिक्तः देहादिसमूहभिन्नः, यतः सदा उपाधितो मुक्तः अतो निरञ्जनो निर्मलः, रागादिदोषरहित इति यावत् । ईश्वरो नियन्ता, करणप्रवर्त्तक इति यावत् । उपसंहरति—ज्ञात्वैवमिति । इतः संसारात् ।

२२ । नरो० । सुविशोधनमिति करणे ल्युट् । ततः शोधनानन्तरम् ।

---

नेत्याह—न चापीति । बुद्धिपदेन चित्तमुच्यते, तस्यैव प्रकृतिविकारत्वात्, ज्ञानशक्तिमत्तत्त्वं चित्तम् । हेतुमाह प्रकृतेर्विकारजेति । न ह्यात्मा प्राकृतः । गो० ]

२१ । निरञ्जन इत्यस्यैव व्याख्या सदा उपाधितो मुक्तः उपाधिभूतचित्तधर्मैर्दुःखादिभिरलिप्त इत्यर्थः । एवमात्मानं ज्ञात्वा इतः संसाराद्विमुच्यते । रा० ।

[ ननु तर्हि क आत्मा इत्यत आह—आत्मा चिदानन्देति । चिच्चासावानन्दमय आनन्दघनश्चेति । देहादिसङ्घातः आदिना पृथिव्यादिप्रधानान्तादतिरिक्तो भिन्न ईश्वरः परमकारणञ्च बुद्ध्यादेः प्रेरयिता वा । ननु तर्हि विकारित्वं किं न स्यादत आह—निरञ्जनो निर्लेपः । तत्र हेतुः मुक्तः उपाधितः सदेति । उपाधिर्माया ततः सदैव मुक्तः, 'माया परेत्यभिमुखे च विलज्जमाना' इत्यादिस्मृतेः । एवमात्मानं ज्ञात्वा इतः संसाराद्विमुच्यसे । गो० ]

२२ । नन्वीदृशज्ञानमेव कथं स्यात्तत्राऽऽह—अतोऽहमिति । मोक्षस्याऽऽत्यन्तिकं साधनं नियतं साधनमित्यर्थः । प्रतिज्ञातमाह—विष्णोर्हीति । धियश्चित्तस्य नित्यानित्यविवेकद्वारा ज्ञानम्, आत्मा चिदानन्दमय इत्यादिनोक्तम् । ततस्तद्विषयनिदिध्यासनतः । रा० ।

[ आत्यन्तिकमोक्षसाधनम्; आत्यन्तिकमोक्षः सायुज्यम्, तस्य साधनमुपायम् । हे महामते बोद्धुं समर्थ । नन्वेवंभूतात्मज्ञानाद् यदि मुच्यते तर्हि सर्वे कथं न जानन्ति बुद्धेरशुद्धत्वेन तज्ज्ञानस्याभावात् । बुद्धिशोधनहेतुमाह—विष्णोरित्यादिना । विष्णोर्भक्तिर्धियः सुविशोधनम् अत्यन्तशोधिका । हिशब्देन उपायान्तरं निरस्यति । ततो बुद्धिशोधनादतीव निर्मलं ज्ञानं भवति । 'दृश्यते त्वग्र्यया बुद्ध्या' ( का०।३।१२ ) इति श्रुतेः । गो० ]

---

1. क-ख-ग-घ '-सङ्घाद्य-', ङ '-सङ्घाद्य-', क '-सङ्घाद्य-' । 2. ग-ङ '-च्यसे' ।

विशुद्धतत्त्वानुभवो भवेत् ततः सम्यग् विदित्वा परमं पदं व्रजेत् ।
[1]अतो भजस्वाद्य हरिं रमापतिं रामं पुराणं प्रकृतेः परं विभुम् ॥ २३ ॥
विसृज्य मौर्ख्यं हृदि शत्रुभावनां भजस्व रामं शरणागतप्रियम् ।
सीतां पुरस्कृत्य सपुत्रबान्धवो रामं नमस्कृत्य [2]विमु[3]च्यसे भयात् ॥ २४ ॥

---

२३ । नरो० । विशुद्धञ्च तत् तत्त्वञ्चेति विशुद्धतत्त्वं तस्यानुभवो विशुद्धतत्त्वानुभवः । विशुद्धं रागादिदोषरहितम् । 'वेदस्तत्त्वं तपो ब्रह्म'त्यमरः । ततो विशुद्धतत्त्वानुभवानन्तरं परमं पदं मोक्षं व्रजेत् प्राप्नुयात् । नारायण एव राम इति सूचनाय हरिमित्युक्तम्, राम एव नारायण इति सूचनाय वा । लक्ष्मीरेव सीतेति सूचनाय रमापतिमित्युक्तम्, सीतैव लक्ष्मीरिति सूचनाय वा । सृष्टेः प्रागपि विद्यमानत्वसूचनाय पुराणमित्युक्तम् । अत एव प्रकृतेः परं भिन्नमित्यर्थः । विभुं सर्वरूपसंयोगिनम् ।

२४ । नरो० । मौर्ख्यं विवेकाभावम् । दारापहारिणि मयि कथं प्रीतिः स्यादिति चेत्तत्राऽऽह—शरणागतप्रियमिति । शरणागतः प्रियो यस्येति बहुव्रीहिः ।

---

२३ । विशुद्धतत्त्वानुभवो भवेत् ततः परं पदं ब्रह्मसायुज्यम् । उपसंहरति—अत इति । यस्य भक्तिर्ज्ञानसाधनं स विष्णुरयमेव, तद्बोधकविशेषणे हरिं रमापतिमिति । ननु दशरथपुत्रोऽयं न स इत्यत्राऽऽह—प्रकृतेः परमित्यादि । दशरथपुत्रत्वादि तु कल्पितमित्याशयः । रा० ।

[ ततो निर्मलज्ञानाद् विशुद्धतत्त्वस्य शुद्धत्वंपदार्थस्यानुभवो भवेत्, ततः सम्यक् तत्त्वंपदार्थयोरैक्यं ज्ञात्वा परमं पदं ब्रह्म व्रजेत् । यद्वा विशुद्धतत्त्वं परमात्मा तदनुभवस्तज्ज्ञानम् । तथाच भागवतम्—

वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् ।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥ इति १।२।११ ।

अन्यत्तुल्यम् । विशुद्धतत्त्वं श्रीराम एव इत्याह—अत इति । यतो भक्त्यैव धियः शुद्धिस्ततो हेतोरित्यर्थः । ननु रामो मम रिपुर्मानुषः कथं भजनीय इत्याह—रमापतिमिति, लक्ष्मीकान्तम् ; हरिं जगत्संहारकम् । ननु कौशल्यागर्भजातस्य कथं रमापतित्वं तत्राऽऽह—प्रकृतेः परमिति । प्रकृतेरपि कारणम् । पुराणं पुराऽपि नवं 'वासुदेवो वा इदमग्रमासीत्' ( छान्दो० ३।१९।१ ) इति श्रुतेः । विभुं सर्वमयं विविधो भवतीति विभुः, अनेन उपादानत्वमुक्तम् । गो० ]

२४ । मौर्ख्यम् अयं मनुष्य इतिबुद्धिरूपं तत्कृतां शत्रुत्वेन भावनां च विसृज्य भजस्व । संप्रति युक्तं भजनप्रकारमाह—सीतामिति । रा० ।

---

1. ङ 'ततो' । 2. क 'विमोक्ष्यसे' । 3. ङ '-च्यते' ।

रामं परात्मान[1]मभावयन् जनो भक्त्या हृदिस्थं सुखरूप[2]मद्वयम् ।
[3]कथं परं तीरमवाप्नुया[4]ज्जडो भवाम्बुधेर्दुःखतरङ्गमालिनः ॥ २५ ॥
[5]नो चेत्[6]तदज्ञानमयेन वह्निना ज्वलन्तमात्मानमरक्षिताऽरिवत् ।
[7]न यस्य बोधः [8]सुकृतैश्च पातकैर्विमोक्षशङ्का न च ते भविष्यति ॥ २६ ॥

---

२५ । नरो० । अप्रस्तुतप्रशंसामाह—राममिति । सुखरूपमद्वयं हृदिस्थं परात्मानं रामं भक्त्या अभावयन् जडः अविवेकी जनः दुःखतरङ्गमालिनः भवाम्बुधेः पारं तीरं कथमाप्नुयादित्यन्वयः । ध्यातृध्येययोर्भेदसूचनाय परेत्युक्तम् । परमत्वञ्च अपरिच्छिन्नत्वादिना । अन्वेषणार्हत्वसूचनाय हृदिस्थमित्युक्तम् । भावनाया न केवलं समुद्रतरणं प्रयोजनम्, किन्तु तत्स्वरूपानन्दावाप्तिश्चेति सूचनाय सुखरूपमित्युक्तम् । अन्यो ध्येयो नास्तीति सूचनाय अद्वयमित्युक्तम् । दुःखमेव तरङ्गमाला तरङ्गपरम्परा सा यस्यास्ति तस्य दुःखतरङ्गमालिनः ।

२६ । नरो० । नो चेदित्यादि । तत् मया पूर्वोक्तं वाक्यजातं यदि न मन्यसे, तदा अज्ञानमयेन वह्निना ज्वलन्तमात्मानमरिवत् अरक्षितेति सम्बन्धः । बहूनि पुण्यान्यर्जितानि किं ज्ञानेनेति चेत्तत्राऽऽह—न यस्येत्यादि । पुण्यैः पापैश्चोपलक्षितस्य यस्य तव न बोधस्तस्य ते तव विमोक्षशङ्का न च भविष्यतीति सम्बन्धः ।

---

[ मौर्ख्यादज्ञानात् हृदि शत्रुरयमिति भावनां विसृज्य त्यक्त्वा । शरणागताः प्रिया यस्य तम् । विमुच्यसे भयादिति । भयात् ऐहिकात् संसाराच्च । गो० ]

२५ । अथ व्यतिरेकमुखेण तत्तद्भावनाप्रकारमाह—राममिति । हृदिस्थमित्यनेनान्तर्यामितया प्रेरकत्वमुक्तम् । सुखरूपोऽद्वितीयो मत्प्रेरक इत्येवमभावयन्निति यावत् । दुःखरूपास्तरङ्गमाला यस्य तस्य । रा० ।

[ ननु मानुषमात्रस्य रिपोश्च नमस्कारात् कथं संसारभयमोचनं भवत्विति चेत् "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" ( श्वेताश्व० ३।८ ) इति श्रुत्यनुसारेणाऽऽह—राममिति । परात्मानं परामात्मानं हृदिस्थं सुखरूपमानन्दघनम् अद्वयं स्वजातीयविजातीयद्वैतरहितं जनो जीवो भक्त्या अभावयन् सततमचिन्तयन्, दुःखान्येव तरङ्गमाला ऊर्मिश्रेणी यस्मिन्नस्ति तस्य भवाम्बुधेः संसारसागरस्य परं तीरं परमं पदं कथम् आप्नुयादित्यर्थः । गो० ]

२६ । नो चेत् मदुक्ताकरणे तेन ज्वलन्तमात्मानमरक्षिता । लुटि रूपम् । किञ्च स्वकृतैः पातकैः सीताहरणादिभिः अरिवदात्मानमधोऽधो नयसि । नयिष्यसीत्यर्थे आर्षम् । विमोक्षशङ्का तत्सम्भावनाऽपि न भविष्यतीत्यर्थः । रा० ।

[ विशेषदोषमाह—नो चेदिति । एवं न चेत् रामं चेन्न चिन्तयेत्तदा अज्ञानमयेनाज्ञानरूपेण

---

1. ङ '-मवेत्य यो' । 2. ङ '-मव्ययम्' । 3. ङ 'सुखं' । 4. क-ख-घ-च-छ '-ज्जनो' । 5. ग 'न चेत्तदज्ञान-' । 6. क-ख-घ 'लम-', ङ-छ 'तदाऽज्ञान-' । 7 क-ख घ-च 'नयस्यधोऽधः' । 8. क-ख-ग-घ-ङ-च-छ 'स्वकृ-' ।

श्रुत्वाऽमृतास्वादसमानभाषितं तद्वायुसूनोर्दशकन्ध[1]रोऽसुरः ।
अमृष्यमा[2]णोऽतिरुषा कपीश्वरं जगाद रक्तान्तविलोचनो ज्वलन् ॥ २७ ॥
कथं ममाग्रे विलपस्यभीतवत् प्लवङ्गमानामध[3]मोऽसि [4]दुष्टधीः ।
क एष रामः कतमो वनेचरो निहन्मि सुग्रीवयुतं नराधमम् ॥ २८ ॥
त्वाञ्चाद्य हत्वा जनकात्मजां ततो निहन्मि रामं सहलक्ष्मणं ततः ।
सुग्रीवमग्रे बलिनं कपीश्वरं [5]सवानरैर्हन्म्यचिरेण वानर ॥ २९ ॥
श्रुत्वा दशग्रीववचः स मारुतिर्विवृद्धको[6]पेन [7]दहन्निवासुरम् ।
न मे समा रावणकोटयोऽधमा रामस्य दासोऽहमपारविक्रमः ॥ ३० ॥
श्रुत्वाऽतिकोपेन हनूमतो वचो दशाननो राक्षसमेकमब्रवीत् ।
पार्श्वे स्थितं मारय [8]खण्डशः कपिं पश्यन्तु सर्वेऽसुरमित्रबान्धवाः ॥ ३१ ॥

---

२७। नरो०। अमृतास्वादसमानभाषितमिति 'कृदभिहितो भावो द्रव्यवत् प्रकाशते' इति आस्वाद्यमानामृततुल्यवचनमित्यर्थः ।

---

वह्निना ज्वलन्तं दह्यमानमात्मानम् अरक्षिता अरक्षणशीलो भवतीति, अरिवत् शत्रुर्यथा दह्यमानं रिपुं दृष्ट्वाऽपि न रक्षति तथा ।

अनात्मनस्तु शत्रुत्वे वर्त्तेताऽऽत्मैव शत्रुवत् । ( ६।६ )

इति गीतासु । यस्य ते तव बोधस्तत्त्वज्ञानं न अतः स्वकृतैर्विमोक्षणं वा नैव भविष्यति । आक्षेपे वाशब्दो वा । गो० ]

२७। अमृतास्वादेति, तदास्वादेन समान आस्वादो यस्य तादृशं भाषितमित्यर्थः । रा० ।

[ अमृतम् अमृतवन्माधुर्ययुक्तम्, एतत्तु रावणस्यापि अन्तरभिहितम्, क्रोधस्तु बाह्यः । गो० ]

२८। वनेचरः सुग्रीवः केषां मध्येऽतिशयितः न केषामपीत्यर्थः । रा० ।

[ क एष राम इति आक्षेपे किम्शब्दः । एष रामः कः अतितुच्छः । कतमो वा को वा गणनीयः, यतो वनेचरश्चतुरङ्गसैन्यादिहीनः । गो० ]

३०। विवृद्धकोपेन करणेनेत्यर्थः, असुरं दहन्निवाऽऽहेति शेषः । अधमा इत्यत्र क्रोधातिशयेन दूरात् सम्बोधने प्लुतः । रा० ।

[ आस्तां तव एकस्य कथेत्यर्थः, तत्तुल्यरावणकोटयोऽपि मे समास्तुल्या न । यतोऽहं रामस्य दासः । एवम्भूतेन रामेण सह तव कत्थनं वृथैवेति भावः । गो० ]

३१। पार्श्वे स्थितं राक्षसमित्यन्वयः । खण्डशः कुर्विति शेषः । असुरस्य मम मित्राणि बान्धवाश्च पश्यन्तु । रा० ।

---

1. ग '-रासुरः', च '-रीश्वरः' । 2. च-छ '-णोऽपि' । 3. छ '-मौऽपि' । 4. च 'नष्टधीः' । 5. घ-छ 'सवानर हन्म्यचि-' । 6. ग '-पश्च' । 7. च 'ग्रसन्नि-' । 8. च 'चासिना' ।

निवारयामास ततो विभीषणो महासुरं सायुधमुद्यतं [1]वधे ।
राजन् वधार्हो न भवेत् [2]कथञ्चन प्रताप[3]युक्तैः परराजवानरः ॥ ३२ ॥
हतेऽस्मिन् वानरे दूते वार्त्तां को वा निवेदयेत् ।
रामाय त्वं यमुद्दिश्य वधाय समुपस्थितः ।
अतो वधसमं किञ्चिदन्यच्चिन्तय वानरे[4] ॥ ३३ ॥

---

हनूमद्वधनिदेशो वाल्मीकीये—

एवमुक्तस्तु कपिना पौलस्त्यो राक्षसाधिपः ।
आज्ञापयद्वधं तस्य रावणः क्रोधमूर्च्छितः ॥ इति ५।४७।३६ ।

३२ । हे राजन्, अयं परराजस्योत्कृष्टराजस्य शत्रुराजस्य वा वानरो वधयोग्यो न भवेत् । प्रतापयुक्तै राजभिर्वधयोग्यतासंभावनमप्यनुचितं दूतत्वात् किं पुनर्वध इति भावः । अयं प्रताप-युक्तैरिन्द्रजिदादिभिरपि वधयोग्यो नेति वृथा प्रयास इति व्यङ्ग्यम् । रा० ।

[ हे परराज सर्वेश्वर, यद्वा परराजस्य वानरः । दूतहननमनुचितमिति भावः । गो० ]

विभीषणवाक्यं वाल्मीकीये—

असंशयं शत्रुरयं प्रवृद्धः कृतं ह्यनेनाप्रियमप्रमेयम् ।
दूता न वध्या हि वदन्ति सन्तो दूतस्य दण्डा बहवो विसृष्टाः ॥
वैरूप्यमङ्गेषु कशानिपातो मौण्ड्यं तथा लक्षणसन्निपातः ।
एवंविधानर्हति रूक्षवादी दण्डेषु दूतस्य वधो न दृष्टः ॥
कथञ्च धर्मादनपेतबुद्धिः परापरप्रत्ययनिश्चितार्थः ।
भवद्विधः क्रोधवशं हि गच्छेत् क्रोधं न गच्छन्ति हि सत्त्ववन्तः ॥
न धर्मवादे न च लोकतत्त्वे न शास्त्रबुद्धौ स्वमते न वाऽपि ।
बलेन तुल्यस्तव कश्चिदन्यस्त्वमुत्तमः सर्वसुरासुरेभ्यः ॥ इत्यादि ५।४८।५-८
अपि चास्मिन् हते राजन् नान्यं पश्यामि वानरम् ।
इह यः पुनरागच्छेत् परं पारं महोदधेः ॥
तस्मादस्य वधे यत्नो न कार्यः शत्रुतापन ।
भवान् सेन्द्रेषु देवेषु यत्नमास्थातुमर्हति ॥
अस्मिन् विनष्टे न हि दूतमन्यं पश्यामि यस्तौ नरदेवपुत्रौ ।
युद्धाय युद्धर्षभ दुर्विनीतावुद्योजयेद्दै भवता विरुद्धौ ॥ इत्यादि च ५।४८।११-१३।

३३ । वधे बाधकान्तरमप्याह—हत इति । वार्त्तां सीतावार्त्तां निवेदयेत् । यं राम-मुद्दिश्य त्वं वधाय समुपस्थितः यं राममुद्दिश्य त्वम् आत्मवधाय समुपस्थितः आत्मवधार्थं तदागमनेच्छावान् स स्वच्छन्दतः कथमत्राऽऽगच्छेदिति गूढोऽर्थः । रा० ।

---

1. छ 'मृधे' । 2. ङ-च 'कदाचन' । 3 ग-ङ-च '-युक्तः' । 4. क-ख '-रैः' ।

सचिह्नो गच्छतु हरि[1]र्यं दृष्ट्वायास्यति द्रुतम् ।
रामः सुग्रीवसहितस्ततो युद्धं भवेत् तव ।
विभीषणवचः श्रुत्वा राव[2]णोऽप्येतदब्रवीत् ॥ ३४॥
वानराणां हि लाङ्गूले [3]महामानो भवेत् किल ।
[4]अतो वस्त्रादिभिः पुच्छं वेष्टयित्वा प्रयत्नतः ॥ ३५ ॥
वह्निना योजयित्वैनं भ्रामयित्वा [5]पुरेऽभितः ।
विसर्जयत पश्यन्तु सर्वे [6]वानरयूथपाः ॥ ३६ ॥
तथेति [7]शणपट्टैश्च वस्त्रै[8]रन्यैरनेकशः ।
तैलाक्तैर्वेष्टयामासुर्लाङ्गूलं मारुतेर्दृढम् ॥ ३७ ॥

---

३४ । आयास्यतीति च्छेदः । रा० ।

३५ । महामानः प्रीतिपूर्वको ममेदमत्युपादेयमित्यभिमानः । रा० ।

[ वानराणामिति । लाङ्गूले महिमा माहात्म्यम् । वालिलाङ्गूलताडनेनाभिज्ञानात् । गो०] महामान इत्यत्र भूषणत्वेन इष्टत्वं लाङ्गूलस्य इत्यभिहितं वाल्मीकिना । तथाच—

कपीनां किल लाङ्गूलमिष्टं भूषणसंज्ञितम् ।
तदस्य दीप्यतामाशु तेन दग्धेन गच्छतु ॥ इति ५।४९।३ ।

३६ । सर्वे वानरयूथपाः सुग्रीवादयो ज्ञातयो बान्धवाश्चेत्यर्थः, पश्यन्तु द्रक्ष्यन्तीत्यर्थः। प्रत्यावृत्य वानराणां सविधे गते इति शेषः । अत्र 'राक्षसयूथपा' इति ङ पुस्तकधृतः पाठोऽध्याहारादिविरहितत्वेन सुग्रहः, तत्र च अत्रस्था राक्षसयूथपाः पश्यन्तु इति रुचिरार्थः स्वत एव सङ्गच्छते । एवमपि स नास्माभिर्गृहीतः, बहुलादर्शासम्मतत्वेन वाल्मीकीयासम्मतत्वेन च । तथाच वाल्मीकीये रावणवाक्यम्—

पश्यन्तु ज्ञातयश्चैनमङ्गवैरूप्यकर्षितम् ।
समित्रबान्धवाः सर्वे सुहृदः सकपीश्वराः । इति ५।४९।४ ।

पाश्चात्त्येऽपि—

ततः पश्यन्त्वमुं दीनमङ्गवैरूप्यकर्षितम् ।
सुमित्रज्ञातयः सर्वे बान्धवाः ससुहृज्जनाः ॥ इति ५।५३।४ ।

शणपट्टैरिति वाल्मीकीये न दृश्यते । तत्र केवलेन कार्पासवस्त्रेण । तथाच—

तस्य तद्वचनं श्रुत्वा राक्षसाः कोपकर्कशाः ।
अवेष्टयन्त लाङ्गूलं जीर्णैः कार्पासिकैः पटः ॥ इति ५।४९।५ ।

---

1. ग-च '-र्यदृष्ट्वा-' । 2. ग '-णोऽपि तम-' । 3. च 'महान् मानो' । 4. च 'ततो' । 5. ग 'पुरोऽभित.' । 6. ङ 'राचस-' । 7. च 'चैल-', च-टि 'शोण-' । 8. ग-ङ-च-छ '-स्वान्ये-' ।

पुच्छाग्रे किञ्चिदनलं दीपयित्वाऽथ राक्षसाः ।
रज्जु[1]भिः सुदृढं बद्ध्वा [2]धृत्वा तं बलिनोऽसुराः ॥ ३८ ॥
समन्ताद् भ्रामयामासु[3]श्चौरोऽयमितिवादिनः ।
[4]तूर्यघोषैर्घोषयन्तस्ताडयन्तो मुहुर्मुहुः ।
हनूमताऽपि तत् सर्वं सोढं किञ्चिच्चिकीर्षुणा ॥ ३९ ॥
गत्वा तु पश्चिमद्वारसमीपं तत्र मारुतिः ।
सूक्ष्मो बभूव बन्धेभ्यो निःसृतः पुनरप्यसौ ।
बभूव पर्वताकारस्तत उत्प्लुत्य गोपुरम् ॥ ४० ॥
[5]तत्रैकं स्तम्भमादाय हत्वा तान् रक्षिणः क्षणात् ।
विचार्य कार्यशेषं स प्रासा[6]दाग्राद् गृहाद् गृहम् ॥ ४१ ॥

---

३९ । किञ्चिच्चिकीर्षुणेति । किञ्चित् निशावसाने विशेषेण लङ्कादर्शनमित्यर्थः । सर्वं राक्षसकृतमवमाननादि सोढं चक्षमे । व्यक्तञ्च वाल्मीकीये—

संवेष्ट्यमाने लाङ्गूले व्यवर्द्धत महाकपिः ।
शुष्कमिन्धनमासाद्य वनेष्विव हुताशनः ॥
चिन्तयामास मतिमान् देशकालक्षमं बहु ।
कामं खलु न शक्ता मे बद्धस्यापि निशाचराः ॥
छित्त्वा पाशान् समुत्पत्य गच्छतः प्रतिवारणे ।
अवश्यं चैव मे लङ्का द्रष्टव्या रजनीक्षये ॥
रात्रौ न हि सुदृष्टा मे दुर्गमार्गाः समन्ततः ।
कामं बन्धैश्च मे भूयो लाङ्गूलादीपनेन च ॥
पीडां कुर्वन्तु रक्षांसि न च मे मनसि क्लमः ।
एवं निश्चित्य हनुमान् कार्यं रामहिते रतः ॥
तत् सर्वं क्षमयामास शक्तोऽपि हरिपुङ्गवः ॥ इति ५।४९।६-११ ।

४१ । स्तम्भमित्यत्र परिघं वाल्मीकीये । तथाच—

ददर्श वीक्षमाणश्च परिघं तोरणाश्रयम् ।
समादाय महाबाहुः कालायसमयं दृढम् ॥
स्वरक्षिणस्ततः सर्वांश्चूर्णयामास वानरः । इति ५।४९।३२-३३ ।

---

1. ग-क्ष '-भिश्च दृ-' च '-भिस्तं दृ-' । 2. च 'धृत्वाऽतिब-' । 3. ख-घ '-श्चोरो-' । 4. क्ष 'तूर्णं घो-' । 5. ङ 'तत्रस्थ'', च 'तत्रैकस्तम्भ-' । 6. ग '-दाग्रान् ददाह च', ङ '-दाग्रं समारुहत्', च '-दाग्रं ददर्श ह'।

उत्प्लुत्योत्प्लुत्य सन्दीप्तपुच्छेन [1]महता कपिः।
ददाह लङ्कामखिलां साट्टप्रासादतोरणाम् ॥ ४२ ॥
हा तात पुत्र नाथेति क्रन्दमानाः समन्ततः ।
व्याप्ताः प्रासादशिखरेऽप्यारूढा दैत्ययोषितः ॥
देवता इव दृश्यन्ते पतन्त्यः पावकेऽखिलाः ॥ ४३ ॥
विभीषणगृहं त्यक्त्वा सर्वं भस्मीकृतं पुरम् ।
तत उत्प्लुत्य जलधौ हनमान् मारुतात्मजः ।
लाङ्गूलं मज्जयि[2]त्वाऽन्तः [3]स्वस्थचित्तो बभूव [4]सः ॥ ४४ ॥

---

४२। नरो०। अट्टाश्च प्रासादाश्च राजसदनानि देवसदनानि वा तोरणाश्च तैः सह वर्त्तमाना तां तथा। 'स्यादट्टः क्षौममस्त्रियामि'त्यमरः।

४४। नरो०। विभीषणगृहं त्यक्त्वेति। वधोद्यतरावणस्य निवारकत्वाद् विभीषणस्य गृहत्यागः।

---

तत्र प्रासादस्तम्भग्रहणमग्रे, तेन च स्वस्मिन् प्रहरतां राक्षसानां विनाशो न रक्षिणाम्। तथाच—

ततो वातात्मजः क्रुद्धो भीमरूपं समास्थितः ॥
प्रासादस्य समुत्पाट्य स्तम्भं हेमविभूषितम् ।
भ्रामयित्वा शतगुणं नाम विश्राव्य चाऽऽत्मनः ।
जघान राक्षसान् घोरान् वज्रेणेन्द्र इवासुरान् ॥ इति ५।५०।१८-१९।

४३। हा तातेति क्रन्दमानाः प्रासादशिखरे आरूढा अपि व्याप्ता वह्निनेति शेषः। रा०।

दैत्ययोषित इति। अत्र दैत्यपदेन राक्षसपरिग्रहः, तेन राक्षसयोषित इत्यर्थः। एतच्च वृत्तं प्राच्ये वाल्मीकीये न दृश्यते। पाश्चात्त्ये तु—

क्रन्दन्त्यः सहसा पेतुस्तनन्धयधराः स्त्रियः ।
काश्चिदग्निपरीताङ्ग्यो हर्म्येभ्यो मुक्तमूर्धजाः ॥
पतन्त्यो रेजिरेऽभ्रेभ्यः सौदामन्य इवाम्बरात् । ५।५४।२६-२७।

इत्यादि दृश्यते।

४४। जलधौ तत्समीपे उत्प्लुत्य अन्तः समुद्रमध्ये लाङ्गूलं मज्जयित्वा स्वस्थचित्तो बभूव। रा०।

विभीषणगृहं त्यक्त्वेति। प्राच्ये वाल्मीकीये—

रावणान्तःपुरञ्चैव सर्वतोऽदह्यताग्निना ।
नायं तु दह्यते देशो यत्रासि त्वं पतिव्रते ॥ ५।५२।१६

---

1. ग 'च महाकपिः'। 2. ग-ङ '-त्वा तु'। 3. ग-ङ-छ 'सुस्थ-'। 4. ग-च-छ 'ह'।

वायोः प्रियसखित्वाच्च [1]सीतया प्रार्थितोऽनलः ।
न ददाह हरेः पुच्छं बभूवात्यन्तशीतलः ॥ ४५ ॥

---

सरमावाक्येनानेन विभीषणगृहं त्यक्तमत्यक्तं वेति न स्पष्टं प्रतीयते । पाश्चात्ये पुनः—

वर्जयित्वा महातेजो विभीषणगृहं प्रति । ५।४६।१६

इत्यादिना विभीषणगृहत्याग इति तत्संवादित्वमस्य दृश्यते ।

जलधाविति ।

स राक्षसांस्तान् सुबहून् निहत्य वनञ्च भङ्क्त्वा सहचैत्यवन्तम् ।
विसृज्य रक्षोभवनेषु चाग्निं जगाम सीतां मनसा महात्मा ॥ ५।५०।२१

इत्यादिप्राच्यवाल्मीकीयवचनेन भस्मीभूतेषु रक्षःप्रासादेष्वेव लाङ्गूलाग्निनिक्षेपः । पाश्चात्ये—

लङ्कां समस्तां संपीड्य लाङ्गूलाग्निं महाकपिः ।
निर्वापयामास तदा समुद्रे हरिपुङ्गवः ॥५।५४।४९।

इत्यादिना जलधावेव तस्य निक्षेप इति इदमपि वृत्तं पाश्चात्यरामायणाघ्रातम् ।

४५ । वायोः प्रियमित्रत्वात् सीताप्रार्थनेन चानलोऽग्निर्वायुपुत्रस्य हरेः पुच्छं न ददाह । तावन्मात्रमेव न किन्तु अत्यन्तं शीतलश्च बभूव । रा० ।

वायोः प्रियसखित्वाच्चेति । वाल्मीकीयेऽपि हनूमद्वाक्यम्—

सीतायाश्चाऽऽनृशंस्येन तेजसा राघवस्य च ॥
पितुश्च मम सख्येन न मां दहति पावकः । इति ५।४९।२८-२९ ।

सीतया प्रार्थित इति । हनूमल्लाङ्गूलदीपनवार्त्तां राक्षसीनां मुखादधिगत्य सीतया अनलः प्रार्थितः । तत्स्वरूपञ्च वाल्मीकीये—

सा श्रुत्वा वचनं क्रूरमात्मनो मरणोपमम् ॥
जानकी शोकसन्तप्ता हुताशनमुदीरयत् ।
मङ्गलाभिमुखी तस्य भूत्वा सीता महाकपेः ॥
उपतस्थे विशालाक्षी नियता हव्यवाहनम् ।
यद्यस्ति गुरुशुश्रूषा यद्यस्ति चरितं तपः ॥
यदि वाऽप्येकपत्नीत्वं शिवो भव हनूमतः ।
यदि कश्चिदनुक्रोशस्तस्यापि मयि धीमतः ॥
यदि वा भाग्यशेषं मे शिवो भव हनूमतः ।
यदि मां वृत्तसम्पन्नां सद्भावगतमानसाम् ॥
स विजानाति धर्मात्मा शिवो भव हनूमतः । इति ५।४९।१८-२३ ।

---

1. च 'सीतायाः' ।

यन्नाम[1]संस्मरण[2]धूतसमस्तपापास्तापत्रयानलमपीह [3]तरन्ति सद्यः।
तस्यैव किं रघुवरस्य विशिष्टदूतः सन्तप्यते कथमसौ प्रकृतानलेन ॥ ४६ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे सुन्दरकाण्डे
चतुर्थोऽध्यायः ॥ ४ ॥

---

४६। नरो०। यस्य नामसंस्मरणेन धूतं नाशितं समस्तपापं यैस्ते तथा।

[ सुन्दरकाण्डे चतुर्थाध्यायव्याख्या समाप्ता ॥ ४ ॥ ]

---

४६। यन्नामसंस्मरणेन धूतानि दूरीकृतानि समस्तपापानि यैस्ते। तापत्रयमाध्यात्मिकाधिभौतिकाधिदैविकादिभेदात् तज्जन्यं वह्निमपि तरन्ति तेन न पीड्यन्त इत्यर्थः। रा०।

[ रामदूते दाहकत्वाभावो वह्नेर्न चित्रमित्याह—यन्नामेत्यादि। रामस्य सम्यक् स्मृत्या विधूतं खण्डितं समस्तं पापं येषां ते। तापत्रयम् आध्यात्मिकाधिभौतिकाधिदैविकरूपम् एव अनलोऽत्यन्तदाहकत्वात्। गो० ]

---

1. ङ '-संस्मृतिविधौत-'। 2. छ '-पूत-'। 3. च 'हरन्ति'।

# पञ्चमोऽध्यायः

[1]श्रीमहादेव उवाच—

ततः सीतां नमस्कृत्य हनूमानब्रवीद्वचः ।
आज्ञापयतु मां देवि भवती रामसन्निधिम् ।
गच्छामि रामस्त्वां द्रष्टुमागमिष्यति [2]सानुजः[3] ॥ १ ॥

इत्युक्त्वा त्रिः परिक्रम्य जानकीं मारुतात्मजः ।
प्रणम्य प्रस्थितो गन्तुमिदं वचनमब्रवीत् ॥ २ ॥

देवि गच्छामि भद्रं ते तूर्णं द्रक्ष्यसि राघवम् ।
लक्ष्मणञ्च ससुग्रीवं वानरायुतकोटिभिः ॥ ३ ॥

ततः प्राह हनूमन्तं जानकी दुःखकर्षिता ।
त्वां दृष्ट्वा विस्मृतं दुःखमिदानीं त्वं गमिष्यसि ।
इतः परं कथं [4]वर्त्ते रामवार्त्ताश्रुतिं विना ॥ ४ ॥

[5]मारुतिरुवाच—

यद्येवं देवि मे स्कन्धमारोह क्षणमात्रतः ।
रामेण योजयिष्यामि मन्यसे यदि जानकि ॥ ५ ॥

---

१। अथ लङ्कादाहे अशोकवनस्थानदाहेऽपि सीताया दाहसन्देहनिवृत्तये पुनः सीतां दृष्ट्वा तामापृच्छ्य गत इत्याह—तत इति। हे देवि, रामसन्निधिं गच्छामि, भवती मामाज्ञापयत्विचत्यन्वयः। सानुजो रामस्त्वां द्रष्टुमागमिष्यति। रा०।

२। इत्युक्त्वा जानकीं परिक्रम्य प्रदक्षिणं कृत्वा। पुनः प्रणम्य गन्तुं प्रस्थित इदं वक्ष्यमाणमब्रवीत्। रा०।

३। ते भद्रमिति विनयोक्तिः। रा०।

४। यद्येवं रामवार्त्ताश्रवणं विना स्थातुमशक्यं त्वं यदि मन्यसे यद्येवं तव चित्ते आयाति तर्हि। आचरेति शेषः। रा०।

---

1. क-ख-ग-ङ-छ-पुस्तकेषु 'श्रीमहादेव उवाच' इति नास्ति। 2. ङ-छ 'सत्वरः', च 'सत्वरम्'। 3. अतः परं च-पुस्तके 'श्रीमहादेव उवाच' इत्यधिकम्। 4. ग-ङ-च-छ 'जीवे'। 5. ङ 'हनूमानुवाच'।

[1]तं श्रुत्वा वानराः सर्वे ज्ञात्वा मारुतिमागतम् ।
हर्षेण महताविष्टाः शब्दं चक्रुर्महास्वनम् ॥ १० ॥
शब्दे[2]नैव विजानीमः कृतकार्यः समागतः ।
हनूमा[3]नेष [4]पश्यध्वं वानरा वानरर्षभम् ॥ ११ ॥
एवं [5]ब्रुवत्सु वीरेषु [6]वानरेषु स मारुतिः ।
अवतीर्य गिरेर्मूर्ध्नि[7] वानरानिदमब्रवीत् ॥ १२ ॥
दृष्टा सीता मया लङ्का धर्षिता च सकानना ।
सम्भाषितो दशग्रीवस्ततोऽहं [8]पुनरागतः ।
इदानीमेव गच्छा[9]मो रामसुग्रीवसन्निधिम् ॥ १३ ॥
इत्युक्ता वानराः सर्वे हर्षेणाऽऽलिङ्ग्य मारुतिम् ।
केचिच्चुचुम्बुर्लाङ्गूलं ननृतुः केचिदुत्सुकाः ।
हनूमता समेतास्ते जग्मुः प्रस्रवणं गिरिम् ॥ १४ ॥
गच्छन्तो ददृशुर्वीरा वनं सुग्रीवरक्षितम् ।
मधुसंज्ञं तदा प्राहुरङ्गदं वानरर्षभाः ।
क्षुधिताः स्मो वयं वीर देह्यनुज्ञां महामते ॥ १५ ॥

---

महीसमानत्वं जगाम इत्यन्वयः । हनूमतः पदभरेण तादृशोन्नतोऽपि पर्वतो निम्नदेशं गच्छन् पृथिवीसमानतां भेजे इत्यर्थः । इममर्थमवलम्ब्य वाल्मीकीयेऽपि—

स तु भूमिधरः श्रीमान् बलिना तेन पीडितः ।
सवृक्षशिखरोदग्रः प्रविवेश रसातलम् ॥ इति । ५।५४।१९ ।

१० । तं महान्तं शब्दम् । महान् स्वनः प्रतिध्वनिर्यस्य तं शब्दं चक्रुः ।

११ । हनूमानेवायं कृतकार्यः समागत इति शब्देनैव जानीमः । केचिद्वानरा दृष्ट्वा वानरर्षभं पश्यध्वमित्याहुः । रा० ।

१३ । पूर्वं सीतापदोक्तौ पदान्तरोच्चारणपर्यन्तं क्रियापदसन्देहः स्यादिति पूर्वं दृष्टेत्युक्तिः । रा० ।

---

1. ग च-छ 'तच्'। 2. च '-नैव'। 3. क-ख-घ '-नेव'। 4. छ 'गच्छध्व''। 5. च 'वदत्सु'। 6. ङ 'तारियादिषु मा-'। 7. अतः परं ङ-च-पुस्तकयोः 'विश्रम्य च क्षणान्तथा। आनन्द्य वानरान् सर्वानालिङ्ग्य स कपीश्वरः ('आनन्दाद्वानरवरः सर्वानालिङ्ग्य सत्कपिः' च)। आनन्दाश्रुपरिक्लिन्नो' इत्यधिकम्। 8. छ 'पारमा-'। 9. च '-मि'।

भक्षयामः फलान्यद्य पिबामोऽमृतवन्मधु ।
सन्तुष्टा राघवं द्रष्टुं गच्छामोऽद्यैव [1]सानुजम् ॥ १६ ॥

अङ्गद उवाच —

हनूमान् कृतकार्योऽयं [2]पिबतैतत्प्रसादतः ।
[3]जक्षध्वं फलमूलानि त्वरितं हरि[4]सत्तमाः ॥ १७ ॥

ततः प्रविश्य हरयः पातुमारेभिरे मधु ।
रक्षिणस्ताननादृत्य दधिवक्त्रेण [5]नोदितान् ॥ १८ ॥

पिबतस्ताडयामासुर्वानरान् वानरर्षभाः ।
ततस्तान् मु[6]ष्टिभिः पादैश्चूर्णयित्वा पपुर्मधु ॥ १९ ॥

ततो दधिमुखः क्रुद्धः[7] सुग्रीवस्य [8]स मातुलः ।
जगाम रक्षिभिः सार्द्धं [9]यत्र राजा कपीश्वरः ॥ २० ॥

गत्वा तमब्रवीद्देव चिरकालाभिरक्षितम् ।
नष्टं मधुवनं तेऽद्य कुमारेण हनूमता[10] ॥ २१ ॥

---

१७। एतत्प्रसादतो हनूमतः प्रसादत इत्यर्थः। पिबत मधु इति शेषः।

१९। वानरर्षभा दधिवक्त्रप्रेरिताः पिबतो वानरांस्तांस्ताडयामासुरित्यन्वयः। रा०।

२१। कुमारेणाङ्गदेन हनूमता च नष्टं नाशितमित्यर्थः। रा०।

अत्राऽऽह वाल्मीकीये—

यन्नर्क्षपतिना तात न त्वया नापि वालिना ।
वनं प्रधृष्टपूर्वं हि वानरैस्तद्द विनाशितम् ॥
अङ्गदैः सहितैः सर्वैर्हनूमत्प्रमुखैः कपिः ।
दृष्ट्वा मधून्यपास्यैव सर्वानस्मानभक्षयत् ॥ इति । ५।६३।५-६ ।

---

1. च 'सत्वरम्'। 2. छ 'पिबन्तु तत्-'। 3. घ 'भक्षयध्वं फलं सर्वे'। 4. छ '-पुङ्गवाः'। 5. ग-ड 'चोदितान्', च 'चोदिताः'। 6. ङ '-ष्टिपादैश्च चू-'। 7. अतः परं ङ च-पुस्तकयोः 'समन्तात् कपयो द्रुतम् (कपिकुञ्जराः च)। वानरान् रुरुधुः सर्वान् निजघ्नुश्चापि (-श्चैव च) भूरुहैः॥ ततः सर्वे महौजस्का (महाक्रुद्धाः च) धृत्वा दधिमुखं कपिम्। व्यापोथयद्धरण्यां वै दधिवक्त्रस्य चाऽऽननम्॥ चपेटैर्मुष्टिभिश्चापि भृशं जघ्नुः कपीश्वराः। ततः कृच्छ्रात् समुत्थाय कपिः प्रोथितवक्त्रकः। दधिवक्त्रो भृशं क्रुद्धः' इत्यधिकम्। 8. छ 'च'। 9 ङ 'तत्र'। 10. अतः परं ङ-च-पुस्तकयोः 'ततो निवारिताः सर्वे मया ते द्रव्यरक्षिणा। ततः सर्वे कपिश्रेष्ठा धृत्वा मां भूतलेऽपिषन्।' इत्यधिकम्।

श्रुत्वा दधिमुखेनोक्तं सुग्रीवो हृष्टमानसः ।
दृष्ट्वागतो न सन्देहः सीतां पवननन्दनः ॥ २२ ॥
नो चेन्मधुवनं द्रष्टुं समर्थः को भवेन्मम ।
तत्रापि वायुपुत्रेण कृतं कार्यं न संशयः ॥ २३ ॥
श्रुत्वा सुग्रीववचनं हृष्टो रामस्तमब्रवीत् ।
किमुच्यते त्वया राजन् वचः सीताकथा[1]न्वितम् ॥ २४ ॥
सुग्रीवस्त्वब्रवीद्वाक्यं [2]देव [3]दृष्ट्वाऽवनीसुताम् ।
हनूमत्प्रमुखाः सर्वे प्रविष्टा [4]मधुकाननम् ।
भक्षयन्ति स्म सकलं ताडयन्ति [5]स्म रक्षिणः ॥ २५ ॥
अकृत्वा देव कार्यं ते द्रष्टुं मधुवनं मम ।
न समर्थास्ततो देवी दृष्टा सीतेति निश्चितम् ॥ २६ ॥
रक्षिणो वो भयं माऽस्तु गत्वा ब्रूत ममाऽऽज्ञया ।
वानरानङ्गदमुखानानयध्वं ममान्तिकम् ॥ २७ ॥
श्रुत्वा सुग्रीववचनं [6]गत्वा ते वायुवेगतः ।
हनूमत्प्रमुखानूचुर्गच्छतेश्वरशासनात् ॥ २८ ॥
द्रष्टुमिच्छति सुग्रीवः सरामो लक्ष्मणान्वितः ।
युष्मानतीव हृष्टास्ते त्वरयन्ति महाबलाः ॥ २९ ॥
तथेत्यम्बरमासाद्य ययुस्ते वानरोत्तमाः ।
हनूमन्तं पुरस्कृत्य युवराजं तथाऽङ्गदम् ।
रामसुग्रीवयोरग्रे [7]निपेतुर्भुवि सत्वरम् ॥ ३० ॥

---

२२। दृष्ट्वा आगत इति च्छेदः । रा० ।

२४। अतिहर्षाद् बहुमानेन सुग्रीवं प्रति राजन्निति वचः । रा० ।

२७। भो रक्षिणः वो युष्माकं भयं वानरेभ्यस्ताडनजं माऽस्तु । अतो ममाऽऽज्ञया गत्वा अङ्गदमुखान् वानरान् ब्रूत युष्मान् रामसुग्रीवावाकारयत इति शेषः । इत्युक्त्वा ममान्तिकं मत्-समीपं तानानयध्वम् । रा० ।

२९। अतीव हृष्टास्ते रामसुग्रीवलक्ष्मणा युष्मान् स्वसमीपगमनाय त्वरयन्ति । रा० ।

---

1. च '-श्रितम्' । 2. छ 'देवी' । 3. क-ख ग-व-ड-छ 'दृष्टाऽवनीसुता' । 4. ड-छ 'मम का-' । 5. छ 'च' । 6. छ 'गतास्ते' । 7. ङ 'पेतुस्ते भुवि' ।

[1]साष्टाङ्गं प्रणिपत्याग्रे रामं पश्चाद्धरीश्वरम् ।
हनूमान् राघवं प्राह दृष्टा सीता निरामया ॥ ३१ ॥
कुशलं प्राह राजेन्द्र जानकी त्वां शुचाऽन्विता ।
अशोकवनिकामध्ये शिंशपामूलमाश्रिता ॥ ३२ ॥
राक्षसीभिः परिवृता निराहारा कृशा प्रभो ।
हा राम राम रामेति शोचन्ती मलिनाम्बरा ॥ ३३ ॥
एकवेणी मया दृष्टा शनैराश्वासिता शुभा ।
वृक्षशाखान्तरे स्थित्वा सूक्ष्मरूपेण ते कथाम् ॥ ३४ ॥
जन्माऽऽरभ्य तवात्यर्थं दण्डकागमनं तथा ।
दशाननेन हरणं जानक्या रहिते त्वयि ॥ ३५ ॥
सुग्रीवेण [2]यथा [3]मैत्री कृत्वा वालिनिबर्हणम् ।
मार्गणार्थञ्च [4]वैदेह्याः सुग्रीवेण विसर्जिताः ।
महाबला महा[5]सत्त्वा हरयो जितकाशिनः ॥ ३६ ॥
गताः सर्वत्र सर्वे वै तत्रैकोऽहमिहाऽऽगतः ।
अहं सुग्रीवसचिवो दासोऽहं राघवस्य हि ।
दृष्टा [6]यज्जानकी [7]भाग्यात् प्रयासः फलितोऽद्य मे ॥ ३७ ॥
इत्युदीरितमाकर्ण्य सीता विस्फारितेक्षणा ।
केन वा कर्णपीयूषं श्रावितं मे शुभाक्षरम् ।
यदि सत्यं [8]तदायातु मद्दर्शन[9]पथन्तु सः ॥ ३८ ॥

---

३६ । नरो० । महाबला महासत्त्वा इति । बलं शरीरशक्तिः, सत्त्वमिन्द्रियशक्तिः ।

---

३१ । भूसम्बन्धोत्तरं राघवाश्वासनाय पूर्वं दृष्टा सीतेत्याह, ततः क्रमेण रामसुग्रीवौ प्रणिपत्य । रा० ।

३४-३५ । जन्माऽऽरभ्य तव कथां ब्रुवता मया सूक्ष्मरूपेण वृक्षशाखान्तरे स्थित्वा शनैराश्वासितेत्यन्वयः । अत्यर्थं विस्तारेण, दण्डकागमनादिकथा उक्तेति शेषः । त्वयि रहिते देशान्तरं गते सति जानक्या दशाननेन हरणम् इत्यन्वयः । रा० ।

३६ । वालिनिबर्हणं तद्वधं कृत्वा यथा सुग्रीवेण मैत्री सफला कृता इति शेषः । रा० ।

---

1. क-ख-घ-पुस्तकेष्वयं श्लोक 'हनुमान् राघव प्राह दृष्टा सीता निरामया । साष्टाङ्ग प्रणिपत्याग्रे रामं पश्चाद्धरीश्वरम् ॥' इति वैपरीत्येन पठितो दृश्यते । 2 छ 'तथा' । 3. ङ-छ 'मैत्री' । 4. ङ 'जानक्या.' । 5. च '-काया' । 6. छ 'मे जानकी' । 7. ग-ङ 'भार्या' । 8. ख 'तदा यातु' । 9. ङ '-पथ सुखम्' ।

ततोऽहं वानराकारः सूक्ष्मरूपेण जानकीम् ।
प्रणम्य प्राञ्ज[1]लिर्भूत्वा दूरादेव स्थितः प्रभो ॥ ३९ ॥
पृष्टोऽहं सीतया कस्त्वमित्यादि बहुविस्तरम् ।
मया सर्वं क्रमेणैव विज्ञापितमरिन्दम ॥ ४० ॥
पश्चान्मयाऽर्पितं देव्यै भवद्दत्ता[2]ङ्गुरीयकम् ।
तेन मामतिविश्वस्ता वचनञ्चेदमब्रवीत् ॥ ४१ ॥
यथा दृष्टाऽस्मि हनुमन् [3]पीड्यमाना दिवानिशम् ।
राक्षसीनां तर्जनैस्तत् सर्वं कथय राघवे ॥ ४२ ॥
मयोक्तं देवि रामोऽपि त्वच्चिन्तापरिनिष्ठितः ।
परिशोचत्यहोरात्रं [4]त्वद्वार्त्तां नाधिगम्य सः ॥ ४३ ॥
इदानीमेव गत्वाऽहं [5]स्थितिं रामाय ते ब्रुवे ।
रामः श्रवणमात्रेण सुग्रीवेण सलक्ष्मणः ।
वानरानीकपैः सार्द्धमागमिष्यति तेऽन्तिकम् ॥ ४४ ॥
रावणं सकुलं हत्वा नेष्यति त्वां स्वकं पुरम् ।
अभिज्ञां देहि मे देवि यथा मां विश्वसेद्विभुः ॥ ४५ ॥
इत्यु[6]क्ता सा शिरोरत्नं चूडा[7]पाशे स्थितं प्रियम् ।
दत्त्वा काकेन यद्वृत्तं चित्रकूटगिरौ पुरा ।
तदप्याहाश्रुपूर्णाक्षी कुशलं ब्रूहि राघवम् ॥ ४६ ॥
लक्ष्मणं ब्रूहि मे किञ्चिद् दुरुक्तं भाषितं पुरा ।
तत् क्षमस्वाज्ञभावेन [8]भाषितं कुलनन्दन ।
तारयेन्मां यथा रामस्तथा कुरु कृपान्वितः ॥ ४७ ॥

---

३८ । स येनोक्तं स इत्यर्थः । रा० ।

४१–४२ । तेन अङ्गुलीयकलाभेन राघवस्याप्तः सेवक इत्यतिविश्वस्ता । राक्षसीनां तर्जनैः पीड्यमाना यथा दृष्टाऽस्मि तत् सर्वं पीडनं राघवे कथय । रा० ।

४६-४७ । ततः सन्देशमाहेति शेषः । तमाह अश्रुपूर्णाक्षीति । यन्मे यत् किञ्चिद्

---

1 ङ '-लिः स्थित्वा' । 2. ख-ग-घ '-ङ्गुलीय-' । 3. ङ 'मथ्यमाना', ग-च 'भर्त्स्यमाना' । 4. च 'वार्त्ता नाधिगतो हि सः' । 5. क-ङ 'स्थितं' । 6. ग-ङ '-क्ताऽसौ' । 7. ग '-पार्श्वे' । 8. च 'योषितः' ।

इत्युक्त्वा रुदती सीता दुःखेन महतावृता।
मयाऽप्याश्वासिता राम वदता सर्वमेव ते।
ततः प्रस्थापितो राम त्वत्समीपमिहाऽऽगतः॥ ४८॥

तदागमनवेलायामशोकवनिकां प्रियाम्।
उत्पाट्य राक्षसांस्तत्र बहून् हत्वा क्षणादहम्॥ ४९॥

रावणस्य सुतं हत्वा रावणेनाभिभाष्य च।
लङ्कामशेषतो दग्ध्वा पुनरप्यागमं क्षणात्॥ ५०॥

श्रुत्वा हनूमतो वाक्यं रामोऽत्यन्तप्रहृष्टधीः[1]।
[2]हनूमंस्ते कृतं कार्यं देवैरपि सुदुष्करम्॥ ५१॥

उपकारं न पश्यामि तव प्रत्युपकारिणः।
इदानीं ते प्रयच्छामि सर्वस्वं मम मारुते॥ ५२॥

इत्यालिङ्ग्य [3]समाकृष्य गाढं वानरपुङ्गवम्।
[4]सार्द्रनेत्रो रघुश्रेष्ठः परां प्रीतिमवाप सः॥ ५३॥

हनूमन्त[5]मुवाचेदं राघवो भक्तवत्सलः।
परिरम्भो हि मे लोके दुर्लभः परमात्मनः।
अतस्त्वं मम भक्तोऽसि प्रियोऽसि हरिपुङ्गव[6]॥ ५४॥

---

५४। नरो०। परिरम्भ आलिङ्गनम्।

---

दुरुक्तं दुर्वचो भाषितं तत् क्षमस्व, तदज्ञभावेन अज्ञतया मया भाषितम्। अतो यथा मां रामोऽस्मा-दुःखात् तारयेत् तथा कृपान्वितः कुरु इति लक्ष्मणं ब्रूहीत्यन्वयः। रा०।

४८। महता दुःखेन आवृता आसीदिति शेषः। सर्वमेव वृत्तान्तं वदता मयाऽपि सा आश्वासिता। रा०।

४९। प्रियां रावणस्येति शेषः। उत्पाट्य उत्पाटितवृक्षां कृत्वा। रा०।

५२। सर्वस्वमालिङ्गनम्। रा०।

५३। स जगत्कर्तृत्वादिपरमैश्वर्यवान्। रा०।

५४। आलिङ्गनस्य सर्वस्वत्वमुपपादयन्नाह—परिरम्भ इति। यतस्त्वं मम भक्तोऽसि अतस्त्वयाऽयं लब्ध इति शेषः। रा०।

---

1. अतः परं ग-पुस्तके 'श्रीमहादेव उवाच' इत्यधिकम्। 2. ग-घ-च-छ 'हनूमता कृत'। 3. च 'मुदा-'। 4. च 'साश्रु-'। 5 ग '-मथोवाच'। 6. अतः परं ग-पुस्तके 'श्रीमहादेव उवाच' इत्यधिकम्।

यत्पादपद्मयुगलं तुलसीदलाद्यैः सम्पूज्य विष्णुपदवीमतुलां प्रयान्ति ।
तेनैव किं पुनरसौ परिरब्धमूर्त्ती रामेण वायुतनयः कृतपुण्यपुञ्जः ॥ ५५ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे सुन्दरकाण्डे
पञ्चमोऽध्यायः ॥ ५ ॥

---

५५ । नरो० । परिरब्धा आलिङ्गिता मूर्त्तिर्यस्य स तथा । कृतः पुण्यपुञ्जः सुकृतराशिर्येन स तथा ।

[ सुन्दरकाण्डे पञ्चमाध्यायव्याख्या समाप्ता ॥ ५ ॥ ]

---

वाल्मीकीयेऽपि—

एष सर्वस्वभूतो मे परिष्वङ्गोऽनिलात्मज ।
अवस्थाकालसदृशं गृहाण त्वमिमं मम ॥
इत्युक्त्वा बाष्पपूर्णाक्षो राघवः परवीरहा ।
हनूमन्तं परिष्वज्य पुनश्चिन्तापरोऽभवत् ॥ इति ६।७०।१३-१४ ।

५५ । कृतपुण्यपुञ्जो वायुतनयस्तेनैव रामेण परिरब्धमूर्त्तिरतुलां पदवीं प्रयातीति किं पुनर्वक्तव्यमिति शेषः । रा० ।

[ तेनैव रामेण परिरब्धमूर्त्तिरालिङ्गितदेहोऽसौ वायुतनयः विष्णुपदवीं प्रयास्यतीति किं पुनर्वाच्यम् । कृतानां पुण्यानां पुञ्जा राशयो यस्य तादृशः, अक्षयपुण्यराशिरित्यर्थः । गो० ]

सुन्दरकाण्डं समाप्तम् ॥ ५ ॥*

---

* ङ-नामकहस्तलिखितादर्शपुस्तकं सुन्दरकाण्डान्तमिति अतः परं तत्पाठयोजना न सम्भविष्यतीति ज्ञेयम् ।

# अध्यात्मरामायणम्

—:०:—

## लङ्काकाण्डम्

—०—

### प्रथमोऽध्यायः

—:०:—

श्रीमहादेव उवाच—

यथावद्भाषितं [1]वाक्यं श्रुत्वा रामो हनूमतः ।
उवाचानन्तरं वाक्यं हर्षेण मह[2]तावृतः ॥ १ ॥
[3]कार्यं कृतं हनुमता देवैरपि सुदुष्करम् ।
मनसाऽपि यदन्येन स्मर्तुं शक्यं न भूतले ॥ २ ॥
शतयोजनविस्तीर्णं लङ्घयेत् कः पयोनिधिम् ।
लङ्काञ्च राक्षसैर्गुप्तां को वा धर्षयितुं क्षमः ॥ ३ ॥

---

३ । नरो० । गुप्तां रक्षिताम् ।

---

१ । यथावत् आनुपूर्व्येण अनुक्रमेण वा । अनन्तरं हर्षलाभानन्तरमित्यर्थः । हनूमत्-कार्यनैपुण्यदर्शनेन सीतावार्त्ताधिगमेन चायं महान् हर्षः । अत्र वाल्मीकिरपि—

श्रुत्वा हनूमतो वाक्यं यथावदभिभाषितम् ।
रामः प्रीतिसमायुक्तमुत्तरं वाक्यमब्रवीत् ॥ इति ६।७०।१ ।

२ । यदन्येन मनसाऽपि स्मर्तुं न शक्यमित्यन्वयः ।

३ । कः हनूमदन्य इत्यर्थः । राक्षसै रावणकुम्भकर्णादिभिर्गुप्तां रक्षितां लङ्कां तादृश-परिखादिभिर्दृढीकृतामपीत्यर्थः, हनूमदन्यः को धर्षयितुं क्षमः समर्थः, न कोऽपीत्यर्थः । वाल्मीकिरप्यस्मिन्नर्थे—

कृतं हनूमता कृत्यं सुमहद् भुवि विश्रुतम् ।
मनसाऽपि यदन्येन दुष्करं स्याद् धरातले ॥
न हि तं संप्रपश्यामि यः प्लवेत महार्णवम् ।
अन्यत्र गरुडाद् वायोरन्यत्र च हनूमतः ॥

---

1. क 'श्रुत्वा रामो हनुमतस्तदा' । 2. क '-ता तत.' । 3. च 'हनूमता कृतं कार्यं' ।

भृत्यकार्यं हनुमता कृतं सर्वमशेषतः ।
सुग्रीवस्येदृशो [1]लोके न भूतो न भविष्यति ॥ ४ ॥
अहञ्च रघु[2]वंशश्च लक्ष्मणश्च कपीश्वरः ।
जानक्या दर्शनेनाद्य रक्षिताः स्मो हनूमता ॥ ५ ॥
सर्वथा [3]सुकृतं कार्यं जानक्याः परिमार्गणम् ।
समुद्रं मनसा स्मृत्वा सीदतीव मनो मम ॥ ६ ॥

---

६ । नरो० । सर्वथा सर्वप्रकारेण । सुकृतम् अकष्टेन कृतमित्यर्थः । सीदतीव क्षुभ्यतीव ।

---

देवदानवयक्षाणां पतगोरगरक्षसाम् ।
अप्रधृष्या पुरी सा हि रावणेन च पालिता ॥
गुप्ता दुर्गा गिरेर्मूर्ध्नि वीरेणैकेन धर्षिता ।
एवं वीर्यबलोपेतो न समः स्याद्धनूमतः ॥ इति । ६।७०।२-६ ।

४ । ईदृशः हनूमत्सदृशः अन्यो भृत्यो न भविष्यतीत्यर्थः । भृत्यकार्यमुद्दिश्य वाल्मीकिः—

भृत्यकार्यं हनुमता सुग्रीवस्य कृतं महत् ।
सुसंविधाय स्वबलं सदृशं विक्रमस्य च ॥
यो हि भृत्यो नियुक्तः सन् भर्त्रा कर्मणि दुष्करे ।
कुर्यात्तदनुरूपं हि तमाहुः पुरुषोत्तमम् ।
यो भृत्यः परमं कार्यं न कुर्यान्नृपतेः प्रियम् ॥
सर्वोद्युक्तः समर्थो हि तमाहुः पुरुषाधमम् ॥ इति ६।७०।६-८ ।

५ । अहञ्चेति । कपीश्वरः सुग्रीवः । रा० ।

[ अहञ्चेति । रघुवंश्यो भरतादिः । सीतावार्त्तामप्राप्य मन्मरणे सर्वेषां नाशयोगात् । गो०]

तादृशप्राणप्रियायाः सर्वथाऽसदृशावस्थापन्नायाः सीतायाः प्रवृत्तिमन्तरेण कथमपि न स्थास्यन्ति मे प्राणाश्चिरम्, मद्वियोगेन मदेकपरायणो लक्ष्मणोऽपि जीवनं त्यजेत्, एवं वृत्तान्तं समुपलभ्य मद्वियोगकर्षिता भरतादयो रघुवंशोत्पन्नाः सर्व एवाचिरं प्राणान् हास्यन्ति, सर्वेषामस्माकं नाशे कपीश्वरः सुग्रीवोऽप्यात्मानं धिक् कृत्य जह्यादिति वार्त्तानयनेन सर्वानेवायं हनूमान् रक्षितवानिति भावः ।

अहञ्च रघुवंशश्च लक्ष्मणश्च महाबलः ।
वैदेह्या दर्शनेनाद्य धर्मतः परिरक्षिताः ॥ ६।७०।१०

इत्यादिना वाल्मीकीये परिरक्षितत्वपक्षे सुग्रीवस्य ग्रहणं न दृश्यते ।

६ । जानक्याः परिमार्गणरूपं कार्यमनेन सुकृतं सम्यक् कृतम् । एवं हनूमन्तं स्तुत्वा प्रकृतमाह—समुद्रमित्यादि । रा० ।

---

1. च 'लोको' । 2. च '-वंशश्च' । 3. च 'नः कृतं' ।

[1]कथं नक्रझषाकीर्णं समुद्रं शतयोजनम् ।
लङ्घयित्वा रिपुं हन्यां कथं द्रक्ष्यामि जानकीम् ॥ ७ ॥
श्रुत्वा तु रामवचनं सुग्रीवः प्राह राघवम् ।
समुद्रं लङ्घयिष्यामो महानक्र[2]झषाकुलम् ।
लङ्काञ्च विधमिष्यामो हनिष्यामोऽद्य रावणम् ॥ ८ ॥
चिन्तां त्यज रघुश्रेष्ठ चिन्ता कार्यविनाशिनी ।
एतान् पश्य महासत्त्वाञ् [3]शूरान् वानरपुङ्गवान् ।
त्वत्प्रियार्थं समुद्युक्तान् प्रवेष्टुमपि पावकम् ॥ ९ ॥
समुद्रतरणे बुद्धिं कुरुष्व प्रथमं ततः ।
दृष्ट्वा लङ्कां दश[4]ग्रीवं हत इत्येव मन्महे ॥ १० ॥

---

७ । नरो० । नक्राः कुम्भीराः झषा मत्स्यास्तैराकीर्णो व्याप्तस्तं तथा । शतं योजनानि मानमस्य शतयोजनस्तम् ।

९ । नरो० । महत् सत्त्वं वीर्यं येषां तान् वानरपुङ्गवान् वानरश्रेष्ठान् । पावकं वह्निम् ।

१० । नरो० । हतोऽर्थाद्रावणः ।

---

७ । यतः सीदतीव अतः कथमित्यादि । रा० ।

८ । अद्य अद्यैव समुद्रं लङ्घयिष्यामः लङ्घनार्थं तत्समीपं यास्याम इत्यर्थः । ततो लङ्कां विधमिष्यामो धक्ष्यामः ।

९ । वाल्मीकीये प्रायः समानार्था वाचः । तथाच—

तदलं शोकमालम्ब्य क्रोधमालम्ब्य राघव ।
इमे समर्थाः शूराश्च सर्वे वै हरियूथपाः ॥
त्वत्प्रियार्थं कृतोत्साहाः प्रवेष्टुमपि पावकम् ।
एषां हर्षेण जानामि तर्कश्चापि दृढो मम ॥ इति । ६।७१।११-१२ ।

१० । प्रथमं समुद्रतरणविषयं निश्चयमातिष्ठेत्यर्थः । लङ्कादर्शनोत्तरकालमस्माभी रावणो हत इत्येव मन्महे एष एवास्माकं निश्चय इत्यर्थः । रा० ।

अत्र वाल्मीकिः—

तस्य राक्षसराजस्य तथा त्वमुपपादय ।
दृष्ट्वा तां हि पुरीं लङ्कां त्रिकूटशिखरे स्थिताम् ॥

---

1. च 'कूर्मनक्र-' । 2. छ '-मत्स्य-' । 3. क-पुस्तके इतः पादद्वयं नास्ति । 4. क-ख-घ-ङ-च '-ग्रीवो' ।

न हि पश्याम्यहं [1]कश्चित् त्रिषु लोकेषु राघव ।
गृहीतधनुषो यस्ते तिष्ठेदभिमुखो रणे ॥ ११ ॥
सर्वथा नो जयो राम भविष्यति न संशयः ।
निमित्तानि च [2]पश्यामि तथाभूतानि सर्वशः ॥ १२ ॥
सुग्रीववचनं श्रुत्वा भक्तिवीर्यसमन्वितम् ।
अङ्गीकृत्याब्रवीद्रामो हनूमन्तं पुरः स्थितम् ॥ १३ ॥
येन [3]केन प्रकारेण लङ्घयामो महार्णवम् ।
लङ्कास्वरूपं मे ब्रूहि दुःसाध्यं देवदानवैः ।
ज्ञात्वा तस्य प्रतीकारं करिष्यामि कपीश्वर ॥ १४ ॥
श्रुत्वा रामस्य वचनं हनूमान् विनयान्वितः ।
उवाच प्राञ्जलिर्देव यथा दृष्टं ब्रवीमि ते ॥ १५ ॥

---

१२ । नरो० । तथाभूतानि निमित्तानि इष्टसूचकानि चिह्नानीत्यर्थः ।

१४ । नरो० । प्रतीकारं वैरशुद्धिम् ।

---

समरे च हतं शत्रुं दर्शनादवधारय ।
सेतुर्बद्धः समुद्रे च लङ्का च वशमागता ॥ इति ६।७१।१४-१६ ।

११ । समानार्थः प्रायः समशब्दश्च श्लोको वाल्मीकीये—

न हि पश्यामि तं कञ्चित् त्रिषु लोकेषु राघव ।
गृहीतधनुषो यस्ते तिष्ठेदभिमुखो रणे ॥ इति ६।७१।९ ।

१३ । रामः सुग्रीववचनं श्रुत्वा अङ्गीकृत्य च, तद्वच इति शेषः, ततः पुरतः स्थितं भक्तिवीर्यसमन्वितं हनूमन्तम् अब्रवीदित्यन्वयः ।

१४ । येन केनेति, व्यक्तमाह वाल्मीकीये—

तरसा सेतुबन्धेन सागरोच्छोषणेन च ।
सर्वथाऽहं समर्थोऽस्मि सागरस्यापि लङ्घने ॥ इति ६।७२।२ ।

देवदानवैर्दुःसाध्यम् अप्रतिकार्यम् अनभिभवनीयमित्यर्थः, वर्णितुमशक्यं लङ्कास्वरूपं ब्रूहि ।

बलञ्च परिमाणञ्च द्वारदुर्गक्रियामपि ।
गुप्तिकर्म च लङ्कायां रक्षसां साधनानि च ॥ ६।७२।३

इत्यादिनाऽयमेवार्थः प्रकटीकृतो वाल्मीकीये ।

---

1. ग-च-छ 'किंचित्' । 2. च-छ 'पश्यामसथा-' । 3. छ 'तेन' ।

लङ्का [1]दिव्यपुरी देव त्रिकूटशिखरे स्थिता ।
स्वर्णप्राकारसहिता [2]स्वर्णाट्टालकसंयुता ॥ १६ ॥
परिखाभिः परिवृता पूर्णाभिर्निर्मलोदकैः ।
नानोपवनशोभाढ्या दिव्यवापीभिरावृता ।
गृहैर्विचित्रशोभाढ्यैर्मणिस्तम्भमयैः शुभैः ॥ १७ ॥
पश्चिमद्वारमासाद्य गजवाहाः [3]सहस्रशः ।
[4]उत्तरे द्वारि तिष्ठन्ति साश्व[5]वाहाः सपत्तयः ।
तिष्ठन्त्यर्बुदसंख्याकाः प्राच्यामपि तथैव च ॥ १८ ॥
[6]रक्षिणो राक्षसा वीरा द्वारं दक्षिण[7]माश्रिताः ।
मध्यकक्षेऽप्यसंख्याता गजाश्वरथपत्तयः ॥ १९ ॥
[8]रक्षयन्ति सदा लङ्कां नानास्त्र[9]कुशलाः प्रभो ।
[10]संक्रमैर्विविधैर्लङ्का शतघ्नीभिश्च संयुता ॥ २० ॥
एवं स्थितेऽपि देवेश शृणु मे तत्र चेष्टितम् ।
दशाननबलौघस्य चतुर्थांशो [11]मया हतः ॥ २१ ॥

---

१८ । नरो० । गजा वाहा वाहनानि येषां ते तथा ।

२० । नरो० । संक्रमैरस्त्रविशेषैः । शतघ्नीभिः शक्तिविशेषैः ।

---

१६ । दिव्यत्वेन त्रिकूटशिखरस्थत्वेन चेतरासाध्यत्वम् । प्राकारो नगरवेष्टनभित्तिः । रा० ।

हनूमतो लङ्कानिवेशनप्रकारवर्णनं वाल्मीकीये सुन्दरकाण्डे द्विसप्ततितमसर्गे षष्ठश्लोकतः पञ्चदशश्लोकान्ते भागे त्रिसप्ततितमसर्गे तृतीयश्लोकतो द्वादशश्लोकान्ते भागे च ।

१७ । परिखाः प्राकारसंलग्नाः प्राकाराद्बहिर्देशस्थाः खाताः । वाप्यः स्वल्पजलाशयाः अवतरणसोपानसहिताः कूपविशेषाः । रा० ।

निर्मलोदकैः पूर्णाभिरित्यनेन परिखाणां गभीरत्वं विस्तृतत्वञ्च ध्वनितम् । नानोपवनशोभाढ्या दिव्यवापीभिरावृता लङ्केति शेषः ।

२० । संक्रमाः परिबद्धाः सर्वप्रवेशायोग्या मार्गाः । रा० ।

[ संक्रमाः सेतवः 'साँक' इति प्रसिद्धाः । गो० ]

२१ । मे चेष्टितं मत्कृतो व्यवहारः । रा० ।

दशाननबलौघस्य चतुर्थांशो मया हत इति वृत्तं वाल्मीकीये न दृश्यते । तत्रैवं दृश्यते—

---

1. क-ख घ 'दिव्या पुरी' । 2. ग-छ 'नानायत्नोपशोभिता', च 'नानारत्नोपशोभिता' । 3. क 'सपत्तय.' । 4. क-पुस्तके इदमर्द्धं नास्ति, ग-छ 'उत्तरद्वारि' । 5. च 'वाहस-' । 6. ग-च-छ 'रथिनो' । 7. ग-च-छ '-माश्रिताः' । 8. छ 'रक्षन्ति च' । 9. छ 'विविधैर्युताम्' । 10. छ-पुस्तके एतदर्द्धं नास्ति । 11. च 'हतो मया' ।

दग्धा [1]लङ्कापुरी स्वर्ण[2]प्रासादो धर्षितो मया ।
शतघ्न्यः संक्रमाश्चैव नाशिता मे रघूत्तम ॥ २२ ॥

देव त्वद्दर्शनादेव लङ्का भस्मीकृता भवेत् ।
प्रस्थानं कुरु देवेश गच्छामो लवणाम्बुधेः ।
तीरं सह महा[3]वीरैर्वानरौघैः समन्ततः ॥ २३ ॥

श्रुत्वा हनूमतो वाक्यमुवाच रघुनन्दनः ।
सुग्रीव सैनिकान् सर्वान् प्रस्थानायाभि[4]नोदय ॥ २४ ॥

इदानीमेव विजयो मुहूर्त्तः परिवर्त्तते ।
अस्मिन् मुहूर्त्ते गत्वाऽहं लङ्कां राक्षससङ्कुलाम् ॥ २५ ॥

सप्राकारां सुदुर्द्धर्षां नाशयामि सरावणाम् ।
आनेष्यामि च सीतां मे दक्षिणाक्षि स्फुरत्यधः ॥ २६ ॥

---

ते मया संक्रमा भग्नाः परिखाश्चैव पूरिताः ।
दग्धा च नगरी सर्वा प्राकाराश्चैव दारिताः ॥ इति ६।७२।१६ ।

२२ । संक्रमा नाशिताः, मे मयेत्यर्थः । प्राकारपातनेन पूरयित्वा सर्वप्रवेशयोग्याः कृताः । रा० ।

२३ । त्वद्दर्शनादेवेत्यनेन रामस्यामितवीर्यत्वं सूचितम् । प्रस्थानं लङ्कागमनार्थं यात्रामित्यर्थः । लवणाम्बुधेस्तीरं समन्ततस्तीरस्य सर्वत इत्यर्थः ।

२५ । विजयोऽन्वर्थनामा । रा० ।

विजयमुहूर्त्तमधिकृत्य वाल्मीकीये—

अस्मिन् मुहूर्त्ते सुग्रीव प्रयाणमभिरोचये ।
मुहूर्त्तो विजये युक्तः प्राप्तो मध्यं दिवाकरः ॥
उत्तरा फल्गुनी ह्यद्य श्वस्तु हस्तेन योक्ष्यते ।
अभिप्रयाहि सुग्रीव सर्वानीकसमावृतः ॥ इति ६।७३।१४-१५ ।

२६ । दक्षिणाक्षि अधः स्फुरति दक्षिणनेत्रस्याधोदेशः स्फुरतीत्यर्थः । दक्षिणाक्षिस्फुरणं पुंसामिष्टदायकम्, तच्चोक्तम् । अत्रार्थे वाल्मीकिः—

उपरिष्टाद्धि नयनं स्फुरमाणमिदं मम ।
विजयं समनुप्राप्तं शंसतीव महामते ॥ इति ६।७३।१७ ।

---

1. क-ख 'लङ्का पु-' । 2. ग-ङ '-प्राकारो', च '-प्राकारा धर्षिता' । 3. ङ '-वीर्यै-' । 4. ग-च-छ '-चोदय' ।

प्रयातु वाहिनी सर्वा वानराणां तरस्विनाम् ।
रक्षन्तु यूथपाः सेनामग्रे पृष्ठे च पार्श्वयोः ॥ २७ ॥

हनूमन्त[1]मथाऽऽरुह्य गच्छाम्यग्रेऽङ्गदं ततः ।
आरुह्य लक्ष्मणो यातु सुग्रीव त्वं मया सह ॥ २८ ॥

[2]गयो गवाक्षो गवयो मैन्दो द्विविद एव च ।
नलो नीलः सुषेणश्च जाम्बवांश्च तथाऽपरे ।
सर्वे गच्छन्तु सर्वत्र [3]सेनापाः शत्रुघातिनः ॥ २९ ॥

इत्याज्ञाप्य हरीन् रामः प्रतस्थे सहलक्ष्मणः ।
सुग्रीवसहितो हर्षात् सेनामध्यगतो विभुः ॥ ३० ॥

वारणेन्द्रनिभाः सर्वे वानराः कामरूपिणः ।
[4]क्ष्वेलन्तः परिगर्जन्तो जग्मुस्ते दक्षिणां दिशम् ॥ ३१ ॥

---

२७। तरस्विनामतिवेगवताम्, सर्वा वाहिनी प्रयातु गन्तुं प्रवृत्ता भवतु इत्यर्थः। यूथपाः नलनीलाङ्गदगयगवाक्षादयः प्रधानभूता वानराः पुरतः पृष्ठतः पार्श्वद्वये च सावधानाः सन्तः सेनां वानरानीकं रक्षन्तु। प्रयाणप्रकारमुद्दिश्य वाल्मीकिः—

गयश्च गिरिसङ्काशो गवयश्च महाबलः ।
गवाक्षश्चाग्रतो यान्तु गवां दृप्ता इवर्षभाः ॥
यातु वानरवाहिन्या वानरौघपतिः कपिः ।
पालयन् दक्षिणं पार्श्वमृषभो वानरर्षभः ॥
गन्धहस्तीव दुर्द्धर्षस्तरस्वी गन्धमादनः ।
यातु वानरवाहिन्याः सव्यं पार्श्वमवस्थितः ॥
यास्यामि बलमध्येऽहं बलौघमभिपालयन् ।
अधिरुह्य हनूमन्तमैरावतमिवेश्वरः ॥
अङ्गदं चाधिरूढस्तु लक्ष्मणोऽनन्तरं मम ।
सार्वभौमेण भूतेशो द्रविणाधिपतिर्यथा ॥
जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः ।
ऋक्षराजो महात्मा च पृष्ठं रक्षन्तु नस्त्रयः ॥ इति ६।७३।२४-२९ ।

२८। हे सुग्रीव, त्वं मया सह गमिष्यसीति शेषः।

---

1. छ '-सुपा-'। 2. घ 'गजो'। 3. ग 'सैनेधाः', च 'सेनया', छ 'सेनायाः'। 4. ग-च-छ 'खेलन्त.', का-ङ 'क्ष्वेडन्तः'।

भक्षयन्तो ययुः सर्वे फलानि च मधूनि च ।
ब्रुवन्तो राघवस्याग्रे हनिष्यामोऽद्य रावणम् ।
एवं ते [1]वानरश्रेष्ठा गच्छन्त्यतुलविक्रमाः ॥ ३२ ॥
हरिभ्यामुह्यमानौ तौ शुशुभाते रघूत्तमौ ।
नक्षत्रैः [2]सेवितौ यद्वच्चन्द्रसूर्याविवाम्बरे ॥ ३३ ॥
आवृत्य पृथिवीं कृत्स्नां जगाम महती चमूः ।
प्रस्फोटयन्तः पुच्छाग्रानुद्वहन्तश्च पादपान् ।
शैलानारोहयन्तश्च जग्मुर्मारुतवेगतः ॥ ३४ ॥
असंख्याताश्च सर्वत्र वानराः परिपूरिताः ।
हृष्टास्ते [3]जग्मुरत्यर्थं रामेण परिपालिताः ॥ ३५ ॥
गता चमूर्दिवारात्रं क्वचिन्ना[4]सज्जत क्षणम् ।
काननानि विचित्राणि पश्यन् मलयसह्ययोः ॥ ३६ ॥
ते सह्यं समतिक्रम्य मलयञ्च तथा गिरिम् ।
[5]आययुश्चाऽऽनुपूर्व्येण समुद्रं भीमनिस्वनम् ॥ ३७ ॥

---

३३ । नरो० । हरिभ्यां हनूमदङ्गदाभ्याम् । नक्षत्रैरिति, अत्राद्भुतोपमा । इवोऽत्र वाक्यालङ्कारे । अम्बरे आकाशे ।

३७ । नरो० । सह्यं गिरिविशेषम् । भीमा निस्वना यस्य तम् ।

---

३१ । क्ष्वेलन्तः क्ष्वेला युद्धार्थं गच्छतां शूराणां गतिविशेषाः । रा० ।

३३ । हरिभ्यां हनूमदङ्गदाभ्याम् । नक्षत्रसदृशा अन्ये हरयः । हनूमदङ्गदयोरत्युच्चत्वात् अम्बरस्थचन्द्रसूर्योपमा । रा० ।

अत्र वाल्मीकिः—

कपिभ्यामुह्यमानौ तौ शुशुभाते नरर्षभौ ।
महद्भ्यामिव संश्लिष्टौ ग्रहाभ्यां चन्द्रभास्करौ ॥ इति ६।७३।४८ ।

३४ । आवृत्य आच्छाद्य, प्रस्फोटयन्तः शौर्यावेशकृतभूम्याघातेन, पादपानुद्वहन्तः हस्तैर्युद्धार्थमिति शेषः । रा० ।

३६ । न असज्जत नाऽऽसक्ताऽभूत्, अविश्रमं जगामेति यावत् । रा० ।

पश्यन् पश्यन्ती पुंस्त्वमार्षम् ।

३७ । आनुपूर्व्येण क्रमेण आययुः प्राप्ताः । रा० ।

---

1. ग 'वानराः श्रेष्ठा' । 2. च 'सहितौ' । 3. च 'चेरुर-' । 4. ग-च-छ '-सज्जते' । 5. ग 'आजग्म-' ।

अवतीर्य हनू[1]मन्तं रामः सुग्रीवसंयुतः ।
सलिलाभ्यासमासाद्य रामो वचनमब्रवीत् ॥ ३८ ॥
आगताः स्मो वयं सर्वे समुद्रं मकरालयम् ।
इतो [2]गन्तुमशक्यं [3]नो निरुपायेन वानराः ।
अत्र सेनानिवेशोऽस्तु मन्त्रयामोऽस्य तारणे ॥ ३९ ॥

---

३८ । नरो० । सलिलाभ्यासं जलसमीपम् ।

---

आययुः प्राप्ताः, भीमनिस्वनं समुद्रं समुद्रतीरमित्यर्थः । भागवतेऽपि—

बुद्ध्वाऽथ वालिनि हते प्लवगेन्द्रसैन्यै-
र्वेलामगात् स मनुजोऽजभवार्चिताङ्घ्रिः ॥ इति ९।१०।१२ ।

पाद्मे उत्तरखण्डेऽपि—

सुग्रीवसहितो रामो वानरैर्बहुभिर्वृतः ।
महोदधेस्तटं गत्वा तत्रानीकं न्यवेशयत् ॥ इति २४२।२९१ ।

३८ । हनूमन्तं हनूमतः, पञ्चम्यर्थे आर्षी द्वितीया । सुग्रीवयुतो रामः । रा० ।

सुग्रीवयुतो रामः हनूमन्तं हनूमतः अवतीर्य । एतेन ससुग्रीवो रामो हनूमत्-स्कन्धमारूढवानिति स्पष्टम् । 'सुग्रीव त्वं मया सह' (६।१।२८) इत्यनेनाप्ययमेवार्थः प्रतिभाति । तथात्वे च—

हरिभ्यामुह्यमानौ तौ शुशुभाते रघूत्तमौ । ६।१।३३

इति स्वोक्तेन,

जाम्बवांश्च सुषेणश्च दीर्घदर्शी च वानरः ।
सुग्रीवं पुरतः कृत्वा ररक्षुः पृष्ठमावृताः ॥ ६।७३।४३

इति वाल्मीकीयेन च विरोधः स्यात् । तेन 'रामो हनूमतोऽवतीर्य सुग्रीवयुतः सन्' इत्यर्थः 'सुग्रीवयुतो रामोऽवतीर्य महेन्द्रपर्वतादिति शेषः, हनूमन्तमब्रवीदित्यर्थो वा करणीयः । द्वितीयार्थपक्षे च—

अवरुह्य जगामाऽऽशु वेलावनमनुत्तमम् ।
रामो रमयतां श्रेष्ठः ससुग्रीवः सलक्ष्मणः ॥ ६।४।९९

इत्यत्र "अवरुह्य महेन्द्रादित्यर्थः" इति एतट्टीकायां यदुक्तं तत् समञ्जसं स्यात् । एवं कृतेऽर्थे 'सुग्रीव त्वं मया सह' इत्यत्र मया सह गमिष्यसि पद्भ्यामित्यर्थ एव करणीयः ।

३९ । आगताः प्राप्ताः स्म । निरुपायेन उपायं विना । अस्य तारणे अस्य समुद्रस्य तरणे । स्वार्थे णिच् । मन्त्रयाम उपायमिति शेषः । रा० ।

---

1. ग-च '-मतो' । 2. च 'गन्तुं न शक्यं' । 3. छ 'मे' ।

श्रुत्वा रामस्य वचनं सुग्रीवः सागरान्तिके ।
[1]सेनां न्यवेशयत् [2]क्षिप्रं [3]रक्षितां कपिकुञ्जरैः ॥ ४० ॥
ते पश्यन्तो [4]विषे[5]दुस्तं सागरं भीमदर्शनम् ।
महोन्नततरङ्गाढ्यं भीमनक्रभयङ्करम् ॥ ४१ ॥
अगाधं गगनाकारं सागरं वीक्ष्य दुःखिताः ।
तरिष्यामः कथं घोरं सागरं वरुणालयम् ॥ ४२ ॥

---

४१। नरो०। किं चिन्तयेति चेत्तत्राऽऽहुः—महोन्नततरङ्गाढ्यमिति भीमनक्रभयङ्करमिति च। महोन्नततरङ्गाढ्यमिति महान्तः पृथुला उन्नतास्तुङ्गा ये तरङ्गास्तैराढ्यं सम्पन्नमित्यर्थः। भीमनक्रभयङ्करमिति भयङ्करकुम्भीरभयानकमित्यर्थः।

४२। नरो०। बद्ध्वा तरिष्यथ इति चेत् तत्राऽऽहुः—अगाधमिति गगनाकारमिति च। कथमिति परवाक्ये योजनीयम्।

---

३९। मकरालयं समुद्रं समुद्रतीरमित्यर्थः। हे वानराः, निरुपायेन उपायं विना नः अस्माकमितो गन्तुमशक्यम्। एवञ्चेत् किं करणीयम् इत्याह—अत्र सेनानिवेशोऽस्तु इति। तेन किमिष्टं स्यादित्याह—मन्त्रयाम इत्यादि।

४०। रामस्य तद्वचः श्रुत्वा सुग्रीवः सहलक्ष्मणः।
न्यवेशयद्बलं तीरे सागरस्य द्रुमायुते ॥ ६।७४।२३

इत्यादिना लक्ष्मणसुग्रीवयोः सेनानिवेशो वाल्मीकीये।

४१। विषेदुर्दुःखिता बभूवुः। महोन्नतैस्तरङ्गैराढ्यं सम्पन्नम्। रा०।

४२। गगनाकारं विपुलत्वेन तत्साम्यम्। दुःखिता वानराः कथं तरिष्याम इत्यादेः इति चिन्ताकुला इत्यनेनान्वयः। रा०।

गगनाकारमिति। अत्राऽऽह वाल्मीकिः—

सुरारिविषयं घोरं पातालविषयं सदा।
सागरं ह्यम्बरप्रख्यमम्बरं सागरोपमम् ॥
अम्बरं सागरञ्चोभौ निर्विशेषमपश्यत।
संपृक्तं नभसा ह्यम्भः संपृक्तञ्च नभोऽम्भसा ॥
तादृग्रूपे स्म दृश्येते नानारत्नसमाकुले।
समुत्पतितमेघस्य वीचिमालाकुलस्य च ॥

---

1. च 'सेना'। 2. ग-छ 'शीघ्रं'। 3. च 'रक्षिताः'। 4. ग-छ 'निषे-'। 5. क '-दुस्तु'।

हन्तव्योऽस्माभिरद्यैव रावणो राक्षसाधमः ।
इति चिन्ताकुलाः सर्वे रामपार्श्वे व्यवस्थिताः ॥ ४३ ॥
रामः सीतामनुस्मृत्य दुःखेन महतावृतः ।
[1]व्यलपज्जानकीं सीतां बहुधा कार्यमानुषः ।
अद्वितीय[2]श्चिदात्मैकः परमात्मा सनातनः[3] ॥ ४४ ॥

---

४४ । नरो० । ततः श्रीरामः किं कृतवानित्यपेक्षायामाह—राम इत्यादि । अद्वितीयश्चिदात्मैकः सनातनः परमात्मा रामः सीतामनुस्मृत्य महता दुःखेन आवृतः व्याप्तः, जानकीं सीतां बहुधा व्यलपत्, यतः कार्यमानुष इति योजना । कार्याय मानुषः कार्यमानुषः । श्रीरामेण महता दुःखेनाऽऽवृतेन सता प्राकृतलोकवद् यदि देवनं न कृतं स्यात् तदा रावणवधादिरूपं कार्यं सिद्धं न स्यादिति भावः । तर्हि कोऽसौ राम इत्यपेक्षायामाह—अद्वितीय इत्यादि । नास्ति द्वितीयो यस्मात् स तथा । तदुक्तं वार्त्तिके—

अव्यावृत्त्याननुगतं वस्तु ब्रह्मेति भण्यते ।
ब्रह्मार्थो दुर्लभस्तस्माद् द्वितीये सति वस्तुनि ॥

इति । एकः केवलः, निर्धर्मिक इति यावत् । सनातनो नित्यः ।

---

विशेषो न द्वयोरासीत् सागरस्याम्बरस्य च ।
अन्योन्यैराहताः सन्तः सस्वनुर्भीमनिस्वनाः ॥ इति ६।७४।३३-३६ ।

४४ । दुःखेन महतावृतः आसीदिति शेषः । तत्र हेतुः कार्यमानुषः, कार्यार्थं मानुषः घाटितमनुष्यत्वः । एवञ्चेदं दुःखादि तस्य नटनमेवेति भावः । वस्तुतो न तस्य दुःखादि इत्याह—अद्वितीय इति । 'द्वितीयाद्वै भयं भवति' ( बृहदा० १।४।२ ) इति श्रुतेः तस्य न दुःखादीति भावः । तदुपपादकं चिदात्मैक इति, अनेकचेतनकल्पने गौरवात् सोऽद्वितीय एक इति भावः । रा० ।

[ राम इत्यादि । सीतामनुस्मृत्य जानकीं जनकात्मजां सीतां विलप्य महता दुःखेन वृतोऽभूत् । ननु रामस्य कथं दुःखादि ? वस्तुतो न, किन्तु माययेत्याह—अद्वितीय इत्यादि । यो रामोऽद्वितीयः सजातीयभेदरहितः, एको विजातीयभेदरहितः । तत्र हेतुः—चिदात्मा चित्स्वरूपः । यतः परमात्मा अतः सनातनो नित्यः । अयम्भावः—सति द्वैते दारादिनिबन्धनः शोकदुःखादिर्भवति, अद्वितीयत्वात्तदभावः । अज्ञानसम्बन्धेऽपि शोकदुःखादिर्विज्ञानरूपत्वात् तदसम्भवः, अतो माययैव । गो० ]

---

1. क-ख-ग-घ-च-छ 'विलप्य' । 2. छ '-श्चिदाकारः' । 3. अतः परं च-छ-पुस्तकयोः 'श्रीमहादेव उवाच' इत्यधिकम् ।

यस्तु जानाति रामस्य स्वरूपं तत्त्वतो जनः ।
[1]तं न स्पृश[2]ति [3]दुःखादि किमुताऽऽनन्दमव्ययम् ॥ ४५ ॥
दुःखहर्षभयक्रोधलोभमोहमदादयः ।
अज्ञानलिङ्गान्येतानि कुतः सन्ति चिदात्मनि ॥ ४६ ॥
देहाभिमानिनो दुःखं [4]न देहस्य [5]परात्मनः ।
सम्प्रसादे द्वयाभावात् सुखमात्रं हि दृश्यते ॥ ४७ ॥

---

४५ । नरो० । श्रीरामस्य दुःखात्यन्तासम्भवं दर्शयन्नाह—यस्त्वित्यादि । तत्त्वतो यथार्थतः । अव्ययं नित्यम् ।

४६ । नरो० । तदेव द्रढयति दुःखेति पद्येन । अज्ञानं त्रिगुणात्मकं ज्ञानविरोधि-भावरूपं तस्य लिङ्गानि अज्ञानलिङ्गानि । चिदात्मनि चित्स्वरूपे । त्रिगुणात्मकस्य ज्ञानविरोधि-भावरूपस्य कार्याणां ज्ञानात्मके स्थितेः कारणमेव नास्तीति भावः ।

४७ । नरो० । ननु तर्हि अहं दुःखीत्यनुभवः कथमात्मन इत्यत आह—देहाभिमानिन इत्यादि । देहाभिमानिनो दुःखमिति अविवेकिनोऽन्तःकरणसङ्गतस्य दुःखमिव दुःखमिति भावः । देहस्य परात्मनश्च न दुःखमित्यन्वयः । परात्मनः परमात्मनः । संप्रसादे इति । संप्रसादे आवरणशक्तिविशिष्टाविद्यानिवृत्तौ सम्यक्प्रकाशे ।

---

४५ । किञ्च यो रामस्य स्वरूपं तत्त्वतस्तत्त्वमस्यादिवाक्यतो जानाति सोऽपि दुःखादि-भयतो मुच्यते । स्वयमानन्दस्वरूपस्य भगवतो न दुःखादि इति किं वक्तव्यमिति भावः । रा० ।

[ आस्तां रामस्य शोकादिवार्त्ता, रामं जानतोऽपि न शोकादिरिति कैमुतिकन्यायमाह—यस्त्वित्यादि । यः पुनस्तत्त्वतो याथार्थ्येन रामस्य स्वरूपं परं ब्रह्मेति जानाति, तमपि दुःखादि न स्पृशति । आनन्दम् आनन्दघनम् । अव्ययं विकारहीनम् । गो० ]

४६ । दुःखादि इत्यादिशब्दग्राह्यमाह—दुःखेति । तत्त्वज्ञमपि तानि कुतो न स्पृशन्तीत्यत्र हेतुमाह—अज्ञानलिङ्गानीति । तस्य तत्त्वज्ञानेन नाशादिति भावः । चिदात्मनि सर्वथा अज्ञानरहिते तानि कुतः सन्ति कथं भवन्तीत्यर्थः । रा० ।

[ एतदेव विवृणोति दुःखेत्यादि । दुःखादयोऽज्ञानलिङ्गान्यज्ञानगमकानि तानि चिदात्मनि ज्ञानघने श्रीरामे कुतः सन्ति । गो० ]

४७ । तदेव दार्ढ्याय पुनराह—देहेति । तस्य सुखरूपत्वे हेतुमाह—संप्रसादे इति । सुषुप्तावित्यर्थः । द्वयाभावाद् द्वितीयाभावात् । रा० ।

[ देहिनोऽपि यद्दुःखं दृश्यते तदपि देहस्यैव न जीवस्य वस्तुत इत्याह—देहाभिमानिन

---

1. ग-च-छ 'न तं' । 2. ग-ङ-च-छ '-न्ति' । 3. ग-ङ-च-छ 'दुःखानि' । 4. क-ख-ग-घ-ङ-च-छ 'नादे-' । 5. क-ख-घ 'चिदात्मनः' ।

बुद्ध्याद्यभावात् [1]संसुप्तौ दुःखं तत्र न [2]दृश्यते ।
अतो दुःखादिकं सर्वं बुद्धेरेव न संशयः ॥ ४८ ॥

रामः परात्मा पुरुषः पुराणो नित्योदितो नित्यसुखो निरीहः ।
तथाऽपि मायागुण[3]सङ्गतोऽसौ सुखीव दुःखीव विभाव्यतेऽबुधैः ॥ ४९ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे लङ्काकाण्डे
प्रथमोऽध्यायः ॥ १ ॥

---

४८। नरो०। संसुप्तौ सुषुप्तौ सत्यां बुद्ध्याद्यभावात् तत्र आत्मनि दुःखं न दृश्यते इत्यन्वयः। बुद्धिरत्र ज्ञानशक्त्यवच्छिन्नसवासनान्तःकरणम्, अन्यथा सुषुप्तौ श्वासादिर्न स्यात्। आदिपदेन शरीरस्य ग्रहणम्। आत्मनो दुःखाभावमुपसंहरति—अत इत्यर्द्धेन। अतः सुषुप्तौ तत्र दुःखदर्शनाभावात्। बुद्धेरेवान्तःकरणस्यैव।

४९। नरो०। यद्येवं तर्ह्यसौ सुखित्वेन दुःखित्वेन च लोकैः कथं विभाव्यते इत्यत आह—राम इत्यादि। पुराणोऽनादिः, अत्र हेतुः पुरुष इति। तथाच श्रुतिः—'पूर्वमेवाहमिहासमि'ति

---

इति। देहाभिमानिनः आत्मानं देहमिति मन्यते यस्तस्यैव दुःखम्, देहदुःखस्याऽऽत्मन्यारोपात्; परात्मनो देहादेः परस्य आत्मनो जीवस्य अतोऽदेहस्य देहभिन्नस्य दुःखसम्बन्धो न, कुतः परमात्मनो रामस्येत्यर्थः। अनुभूतमेतदित्याह—संप्रसाद इति, चित्तनैर्मल्ये। द्वयं सुखदुःखादि-द्वन्द्वम्, तदभावात् सुखमात्रं केवलं हि यतो दृश्यते अनुभूयते। गो० ]

४८। ननु शुद्धेऽपि दुःखं कुतो न तत्राऽऽह—बुद्ध्याद्यभावादिति। यतो बुद्धिरहिते तत्र न दृश्यते अतो बुद्धेरेव तत् सर्वमित्यर्थः। रा०

[ किञ्च सुखदुःखादिमतिर्बुद्धेरेव नाऽऽत्मन इति सोपपत्तिकमाह—बुद्ध्याद्यभावादिति। संसुप्तौ सुषुप्तिकाले बुद्धेर्लीनत्वेनाभावात् तत्र तदा दुःखं न दृश्यते, दृशिर्ज्ञानार्थः, न ज्ञायते; जागरणे सुखमहमस्वाप्सं न किञ्चिदवेदिषमित्यनुभवात्। अतः कारणाद् दुःखादिकं सर्वं बुद्धेरेव अत्र न संशयः। यद्यात्मनो दुःखादिकं स्यात्तर्हि आत्मनः सर्वदा अलीनत्वाद् दुःखादिसंवेदनं किं न स्यात्, अतस्तस्य न इत्यर्थः। गो० ]

४९। नित्योदितत्वेन नाशराहित्यम्। अबुधैर्मायागुणैः सङ्गतः तत्सङ्गतत्वेन कल्पितः सुखीव दुःखीव च विभाव्यते। रा०।

---

1. क-ख-घ-ङ 'संशुद्धे'। 2. क 'विद्यते'। 3. छ '-सङ्गतोऽसौ'।

तत् पुरुषस्य पुरुषत्वमिति । यतः परात्मा अतो नित्यम् उदितम् उदयः प्रकाशो यस्य सः, एतेन प्रकाशान्तरानपेक्षत्वं सूचितम् । जीवाद् वैलक्षण्यसूचनाय परेत्युक्तम् । नित्यं सुखं यस्य स नित्यसुखः । अत्र राहोः शिर इतिवद् भेदोपचारः, एतेन सुखित्वदुःखित्वधर्मात्यन्तासंभवः सूचितः, निरीहो निष्क्रियः, एतेन कर्मबन्धाभावः सूचितः । मायागुणसङ्गतो मायागुणकार्यशरीरेन्द्रियादि-सङ्गतः, एतत्सङ्गः स्वेच्छाधीनो न तु प्राक्तनकर्माधीनः । अबुधैरज्ञैः ।

[ लङ्काकाण्डे प्रथमाध्यायव्याख्या समाप्ता ॥ १ ॥ ]

---

[ ननु जीववत् सुखदुःखसम्बन्धदर्शनाद् रामस्य कुतः परमात्मत्वं तत्राऽऽह—रामः परात्मेति । परो देहभिन्नश्चासावात्मा चेति । तत् कुतः पुराणः पुरा सृष्टेः पूर्वमपि नवः । तत् कुतः ? यतः पुरुषः, पूर्वमपि सन् । तथाच श्रुतिः—'तत् पुरुषस्य पुरुषत्वं यदहं पूर्वमास' इति नैरुक्तं साधनम् । जन्मान्तरसत्तां वारयति—नित्योदित इति, नित्यसिद्धः । वैषयिकसुखसम्बन्धं वारयितुमाह—नित्यसुख इति । क्रियासम्बन्धं वारयति—निरीह इति । एवमपि मायागुणाः सत्त्वादयः, तत्सङ्गतस्तदधिष्ठातृत्वेन असौ सुखीव दुःखीव अबुधैर्मूढैर्विभाव्यते बुध्यते । गो० ]

# द्वितीयोऽध्यायः

—: * :—

[1]श्रीमहादेव उवाच—

लङ्कायां रावणो दृष्ट्वा कृतं [2]कार्यं हनूमता ।
[3]दैवतैरपि दुःसाध्यं ह्रिया किञ्चिदवाङ्मुखः ।
आहूय मन्त्रिणः सर्वानिदं वचनमब्रवीत् ॥ १ ॥
हनूमता कृतं कर्म भवद्भिर्दृष्टमेव [4]तत् ।
प्रविश्य लङ्कां दुर्द्धर्षां दृष्ट्वा सीतां दुरासदाम् ।
हत्वा च राक्षसान् वीरानक्षं मन्दोदरीसुतम् ॥ २ ॥
दग्ध्वा लङ्कामशेषेण लङ्घयित्वा च सागरम् ।
युष्मान् सर्वानतिक्रम्य [5]स्वस्थोऽगात् पुनरेव सः ॥ ३ ॥
किं कर्त्तव्य[6]मितोऽस्माभिर्यूयं [7]मन्त्रविशारदाः ।
मन्त्रयध्वं प्रयत्नेन यत् कृतं मे हितं भवेत् ॥ ४ ॥
रावणस्य वचः श्रुत्वा राक्षसास्तमथाब्रुवन् ।
देव शङ्का कुतो रामात् तव लोकजितो रणे ॥ ५ ॥

---

५ । नरो० । लोकान् जितवान् लोकजित्, तस्य लोकजितः ।

---

१ । दैवतैर्वाऽपि दैवतैरपि । वा पादपूरणे । रा० ।

लङ्कायां हनूमता दैवतैरपि दुःसाध्यं कार्यं कृतं दृष्ट्वा ह्रिया किञ्चिदवाङ्मुखो रावणः सर्वान् मन्त्रिण आहूय इदं वचनमब्रवीदित्यन्वयः ।

३ । स्वस्थ इत्यनेन भवत्कृताङ्गवैकृतराहित्यं सूचितम् । रा० ।

४ । यत् कृतं सत् मे हितं भवेत् तन्मन्त्रयध्वमित्यन्वयः । रा० ।

५ । लोकजित इन्द्रादिलोकजयिनः । रा० ।

---

1. क-ख-घ-पुस्तकेषु 'श्रीमहादेव उवाच' इति नास्ति । 2. क-ख-घ 'कर्म' । 3. क-ख-घ 'दुष्करं दैवतैर्वाऽपि' । 4. च 'च' । 5. च-ङ 'सुस्थो-' । 6. ग '-मतोऽ-' । 7. च 'मन्त्रिवि-' ।

इन्द्रस्तु[1] बद्ध्वा निक्षिप्तः पुत्रेण तव पत्तने ।
जित्वा कुबेरमानीय पुष्पकं भुज्यते त्वया ॥ ६ ॥
यमो जितः कालदण्डाद्भयं नाभूत् तव प्रभो ।
वरुणो हुङ्कृतेनैव जितः [2]सर्वेऽपि राक्षसाः ॥ ७ ॥
मयो महासुरो भीत्या कन्यां दत्त्वा स्वयं तव ।
त्वद्वशे वर्त्ततेऽद्यापि किमुतान्ये महासुराः ॥ ८ ॥
हनूम[3]द्दर्शनं यत्तु तदवज्ञा[4]कृतञ्च नः ।
वानरोऽयं किमस्माकमस्मिन् पौरुषदर्शने ।
इत्युपेक्षितमस्माभिर्धर्षणं तेन किं भवेत् ॥ ९ ॥

---

९ । नरो० । प्रविश्य लङ्कामिति यदुक्तं तत्राऽऽहुः—हनूमद्दर्शनमित्यादि । हनूमता दर्शनमर्थात् सीताया हनूमद्दर्शनम् । किं किं फलमित्यर्थः । पौरुषदर्शन इति 'पुंभावे तत्-क्रियायाञ्च पौरुषमि'त्यमरः । अत्र णिङन्तात् ङनट् बोद्धव्यः । तेन दर्शनेन ।

---

६ । तदेवाऽऽहुः—इन्द्रस्त्विवति । पत्तने पुरे कुबेरं जित्वा पुष्पकमानीय भुज्यत इत्यन्वयः । रा० ।

पुष्पकं तन्नामकविमानमित्यर्थः । तच्च यक्षान् विनिहत्य आनीतमिति वाल्मीकीया कथा । तथाच—

विनिहत्य च यक्षौघान् विक्षोभ्य च निगृह्य च ।
त्वया कैलाशशिखराद्विमानमिदमाहृतम् ॥ इति ५।७८।६।

७ । यदा यमो जितस्तदा कालदण्डादपि भयं नाभूत् कुतो मानुषाद् भयमिति भावः । सर्वेऽपि राक्षसा इत्यस्य त्वदधीना इति शेषः । रा० ।

सर्वेऽपि राक्षसा जिताः स्नेहादिना स्ववशीकृता इत्यर्थः । 'सर्वेण रक्षसा' इति पाठे सर्वेण रक्षसा सह त्वया वरुणो जित इत्यर्थः ।

८ । मय इत्यादि । भीत्या सख्यमिच्छन्निति शेषः । तव तुभ्यमित्यर्थः, अत्रेयं चतुर्थ्यर्थे आर्षी षष्ठी । अत्रार्थे वाल्मीकिरपि—

मयेन दानवेन्द्रेण त्वद्भयात् सख्यमिच्छता ।
दुहिता तव भार्यार्थं दत्ता राक्षसपुङ्गव ॥ इति ५।७८।३।

९ । नोऽस्माकं या तदवज्ञा तस्मिन् अवज्ञा तत्कृतमित्यर्थः । अवज्ञाकारणमाहुः—अयं वानरः किमस्माकं करिष्यतीति शेषः । अस्मिन् वानरे पौरुषस्य दर्शने किं फलं तत् । इतीत्यादि । धर्षणं तेन किं भवेदिति । तस्योपेक्षाभावे इत्यादि । रा० ।

---

1. क '-न्तु' । 2. च 'सर्वेण रक्षसा' । 3. क-ख-ग-घ-च-छ 'द्धर्षणं' । 4. ग 'कृतः पुन.' ।

वयं प्रमत्ताः किं तेन वञ्चिताः स्मो हनूमता ।
जानीमो यदि [1]तं सर्वे कथं जीवन् गमिष्यति ॥ १० ॥
आज्ञापय जगत् कृत्स्नमवानरममानुषम् ।
कृत्वायास्यामहे सर्वे प्रत्येकं वा नियोजय ॥ ११ ॥
कुम्भकर्णस्तदा प्राह रावणं राक्ष[2]सेश्वरम् ।
आरब्धं यत् त्वया कर्म स्वात्मनाशाय केवलम् ॥ १२ ॥
न दृष्टोऽसि तदा भाग्यात् त्वं रामेण महात्मना ।
यदि पश्यति रामस्त्वां जीवन्नाऽऽयासि रावण ॥ १३ ॥

---

१० । नरो० । युष्मानित्यादि यदुक्तं तत्राऽऽहुः—वयमित्यादि । प्रमत्ताः प्रमादाश्रयाः ।

११ । नरो० । अस्मासु विद्यमानेषु वानरान्मनुष्याच्च बिभेषीत्यभिप्रेत्याऽऽहुः—आज्ञापयेत्यादि ।

१२ । नरो० । स्वात्मनाशाय स्वशरीरनाशाय ।

१३ । नरो० । ननु तर्हि तस्य भार्या मया कथमानीता इत्यत आह—न दृष्टोऽसीत्यादि । तदा हरणसमये । तेन दर्शने किं स्यादिति चेत्तत्राऽऽह—यदीत्यादि ।

---

१० । अर्थं किं कः पदार्थ इति वयं प्रमत्तास्तेन प्रमादेन हनूमता वञ्चिताः । यदि तं जानीमः अयमेवंरूप इति यदि जानीम इत्यर्थः । गमिष्यति गतः स्यादित्यर्थे आर्षम् । रा० ।

११ । अवानरममानुषं तेषां तेषां विनाशेन जगद् वानरहीनं मानुषहीनञ्च कृत्वा आयास्यामहे भवत्सकाशमिति शेषः । अथवा किमस्माकं सर्वेषां विनियोजनेन, स्वल्पजीविनो वानरा मनुष्याश्चेति तेषां समूलमुत्पाटने यः कश्चिदेवास्मासु समर्थ इति मत्वाहुः—प्रत्येकमिति । यदि भवान् मन्यते तदा एकम् एकं कृत्वा वा नियोजय तेषां नाशायेत्यर्थः, यद्येकस्तत् कर्त्तुं न प्रभवेत् तदैवान्यो नियोज्यो नेतरथेति भावः ।

१२ । यत् कर्म त्वयारब्धं तत् केवलं स्वात्मनाशाय । आरम्भकाल एव नाशः प्रसक्तः । रा० ।

१३ । परन्तु भाग्याज्जीवितोऽसि, यत्तदा रामेण न दृष्टोऽसि । रा० ।

---

1. ख 'ते' । 2. ख '-साधिपम्' ।

रामो न मानुषो देवः साक्षान्नारायणोऽव्ययः ।
सीता भगवती लक्ष्मी रामपत्नी यशस्विनी ।
राक्षसानां विनाशाय त्वयानीता सुमध्यमा ॥ १४ ॥
विषपिण्डमिवाऽऽगीर्य महामीनो यथा तथा ।
आनीता जानकी पश्चात् त्वया किं वा भविष्यति ॥ १५ ॥
यद्यप्यनुचितं कर्म त्वया कृतमजानता ।
सर्वं समं करिष्यामि [1]स्वस्थचित्तो भव प्रभो ॥ १६ ॥

---

१४ । नरो० । मानुषान्मम कुतो भयमिति चेत्तत्राऽऽह—रामो न मानुष इत्यादि । अंशत्ववारणाय साक्षादिति । अव्ययोऽविनाशी । यदि तदानीं सुस्थ आगतोऽहं तर्हि इदानीं तव का चिन्तेति चेत्तत्राऽऽह—सीतेत्यादि ।

१५ । नरो० । अवश्यं नङ्क्ष्यतीति सूचयन्नाह—विषपिण्डमिव । बडिशम् आगीर्य यथा महामीनो नश्यति तथा त्वमपि नङ्क्ष्यसीति योजना । बडिशमित्याद्यूह्यम् । महानहं मत्स्यः क्षुद्र इति चेत्तत्राऽऽह—महामीन इति । विषभक्षितः पिण्डो विषपिण्डस्तं तथा । निश्चेतुमशक्तत्वात् पश्चात् किं वा भविष्यतीत्युक्तम् । पश्चात्तव नाशानन्तरम् ।

---

दृष्टोऽसि दृष्टोऽभूः, पश्यति आयासीत्युभयत्रापि लिङा ल्यूटा वा भाव्यम् । सर्वत्र ऋषिवचनानुरोधाद् विभक्तिव्यत्ययः ।

१४ । जीवन्नाऽऽयासीत्यत्र हेतुभूतं रामस्वरूपमाह—रामो नेति । रा० ।

१५ । विषपिण्डमिव तत्सदृशम् आगीर्य निगीर्य महामीनो यथा पश्चात्तप्यति तथा त्वया जानकी आनीता । अथ किं वा भविष्यतीति पश्चात् तप्स्यसे इति शेषः । रा० ।

१६ । [यद्यप्यनुचितमित्यादि । सर्वं समम् उचितानुचितयोस्तुल्यत्वं करिष्यामि, एतेन श्रीरामेण सह सन्धिं कृत्वा सीतां समर्प्य सर्वं रक्षिष्यामीति भावः । गो० ]

सर्वं समं करिष्यामि पराक्रमेणेति भावः । रा० ।

कुम्भकर्णवाक्यात्मकः कश्चित् प्रबन्धोऽत्र पाश्चात्त्ये वाल्मीकीये दृश्यते न प्राच्ये । सोऽपि प्रबन्धबन्ध आधिक्येनास्माद् भिन्नार्थः । तत्र श्रीरामस्य परब्रह्मत्वं सीताया भगवतीत्वञ्च न तावता प्रबन्धेन व्यक्तीभवतः । सर्वं समं करिष्यामीति श्लोकस्य 'उचितानुचितयोस्तुल्यत्वं करिष्यामि, एतेन श्रीरामेण सह सन्धिं कृत्वा सीतां समर्प्य सर्वं रक्षिष्यामी'ति स्वटीकायां योऽर्थो विहितो गोपालचक्रवर्त्तिना सोऽप्यनादेयः, पाश्चात्त्यवाल्मीकीयविरोधात् ।

तथाच— तस्मात्त्वया समारब्धं कर्म ह्यप्रतिमं परैः ।
अहं समीकरिष्यामि हत्वा शत्रूंस्तवानघ ॥ इति ६।१२।३९ ।

---

1. ग 'सुख-' ।

कुम्भकर्णवचः श्रुत्वा वाक्यमिन्द्रजिदब्रवीत् ।
देहि देव ममानुज्ञां हत्वा रामं सलक्ष्मणम् ।
सुग्रीवं वानरांश्चैव पुन'र्यास्यामि तेऽन्तिकम् ॥ १७ ॥

तत्राऽऽगतो भागवत²प्रधानो विभीषणो बुद्धिमतां वरिष्ठः ।
श्रीरामपादद्वय एकतानः प्रणम्य देवारिमुपोपविष्टः ॥ १८ ॥

---

१८। नरो०। भागवतप्रधानः वैष्णवोत्तमः। 'उक्तलिङ्गं क्वचिद् व्यभिचरती'ति प्रधानशब्दस्य पुंलिङ्गत्वम्। एकतान एकाग्रः।

---

अग्रेऽपि—

वधेन वै दाशरथेः सुखावहं जयं तवाऽऽहर्त्तुमहं यतिष्ये ।
हत्वा च रामं सह लक्ष्मणेन खादामि सर्वान् हरियूथमुख्यान् ॥
रमस्व कामं पिब चाग्र्यवारुणीं कुरुष्व कार्याणि हितानि विज्वरः ।
मया तु रामे गमिते यमक्षयं चिराय सीता वशगा भविष्यति ॥ इति ६।१२।३९-४० ।

१७। इन्द्रजिदब्रवीद् रावणमिति शेषः। मम मह्यम् अनुज्ञां देहि रामलक्ष्मणादीनां नाशायेत्यर्थः।

१८। एकतानस्तन्मात्रविषयध्यानवान्। देवारिं रावणं प्रणम्योप तत्समीपे भ्रातृत्वादुपविष्टः। रा०।

[ देवारिमुखोपविष्ट इति। देवारी रावणः, तस्य मुखोपविष्टः मुखं विलोक्य उपविष्ट इत्यर्थः। गो० ]

रावणेनाप्रणोदितस्य विभीषणस्याऽऽगमनम् उपदेशप्रदानञ्चात्र स्वतः, वाल्मीकीये तु त्रिजटोपदेशेन। तथाच तत्र—

श्रुत्वा परमदुःखार्त्ता जननी रक्षसां पतेः ।
सुतं परमतत्त्वार्थमित्युवाच विभीषणम् ॥ इति ५।७६।२

... ... ... ...

तद्यथा प्राप्तकालस्तु वीर न व्यतिवर्त्तते ।
तथाचर विशालाक्ष बुद्ध्या परमसूक्ष्मया ॥
हितं वचनमायत्यां तदा त्वं मधुरोदयम् ।
श्रावयाद्यैव वाक्यञ्च रावणं यदि मन्यसे ॥ इति च ५।७६।१५-१६ ।

---

1. ग-च-छ '-रायास्यते वशात्'। 2. च '-तः प्र-'।

विलोक्य कुम्भश्रवणादिदैत्यान् मत्तप्रमत्तानतिविस्मयेन ।
विलोक्य कामातुरमप्रमत्तो दशाननं प्राह विशुद्धबुद्धिः ॥ १९ ॥
[1]न कुम्भकर्णेन्द्रजितौ [2]च राजंस्तथा महापार्श्वमहोदरौ तौ ।
निकुम्भकुम्भौ च तथाऽतिकायः स्थातुं न शक्ता युधि राघवस्य ॥ २० ॥
सीताभिधानेन महाग्रहेण ग्रस्तोऽसि राजन् न च ते विमोक्षः ।
तामेव सत्कृत्य महाधनेन दत्त्वाऽभिरामाय सुखी भव त्वम् ॥ २१ ॥
यावन्न रामस्य [3]सिताः शिलीमुखा लङ्कामभिव्याप्य शिरांसि रक्षसाम् ।
छिन्दन्ति तावद्रघुनायकस्य भो[4]स्तां जानकीं त्वं प्रतिदातुमर्हसि ॥ २२ ॥

---

१९ । नरो० । कुम्भश्रवणादिदैत्यान् कुम्भकर्णादिदैत्यान् । अत्र उत्तरपदस्य पर्यायपरिवृत्तिसहत्वम् । कामातुरत्वकीर्त्तनेन प्रमत्तत्वं सूचितम् । अप्रमत्तः अप्रमादाश्रयः । विशुद्धबुद्धिः रागादिदोषरहितान्तःकरण इत्यर्थः ।

२१ । नरो० । सीता अभिधानं नाम यस्य तेन तथा । महाग्रहेणेति ह्रस्वोऽत्र छान्दसः ।

२२ । नरो० । सिताः शाणादिना तीक्ष्णीकृताः । शिलीमुखा बाणाः ।

---

१९ । कुम्भश्रवणः कुम्भकर्णः, आदिनेन्द्रजित् । मत्तप्रमत्तान् अतिशयेन मत्तानित्यर्थः । कामातुरं दशाननं विलोक्य प्राह ।

[ कुम्भश्रवणनामा कश्चिद्राक्षसः, स च समानधर्मत्वाद् दैत्य इत्युच्यते । एवमन्येऽपि । यद्वा दैत्या एव रावणमाश्रित्य स्थिताः । तांश्च मत्तप्रमत्तान् अतिप्रमत्तान् विलोक्य अतिविस्मयेन दशाननं प्राह । एतावति पराभवेऽपि एते मूढा एवं प्रमत्ताश्च प्रलपन्तीति विस्मयः । यद्वा लङ्कादाहाक्षादिवधवनादिभङ्गेष्वपि दशाननं कामातुरं विलोक्यातिविस्मयेन प्राह इत्यन्वयः । गो० ]

२० । कुम्भकर्णेन्द्रजितौ यस्य युधि स्थातुं न शक्तौ तौ प्रसिद्धौ महापार्श्वमहोदरावपि न शक्तौ तथा निकुम्भकुम्भातिकाया अपि न शक्ताः । अन्येषां का गणनेति भावः । रा० ।

२१ । न चेति । विमोक्षस्ततो महाग्रहादिति शेषः । महाधनेन रत्नादिना । रा० ।

२२ । अभिव्याप्येत्यनेन युगपत् सर्वदेशावच्छेदेन शिरश्छेदसूचनम् । तेन पराक्रमातिशयवर्णनम् । तां रक्षःकुलस्य कालरात्रिरूपाम् । रा० ।

---

1. च 'लं कु.-' । 2. च 'हि' । 3. क 'श्रिताः' । 4. क 'भो ता', छ-पुस्तके 'भोः' नास्ति ।

याव[1]न्नभोगाः कपयो महाबला हरीन्द्रतुल्या नखदंष्ट्रयोधिनः ।
लङ्कां समाक्रम्य विनाशयन्ति [2]ते तावद् द्रुतं देहि रघूत्तमाय ताम् ॥ २३ ॥

जीवन् [3]नो रामेण विमोक्ष्यसे त्वं [4]गुप्तः सुरेन्द्रैरपि शङ्करेण ।
न देवराजाङ्कगतो न मृत्योः पाताललोकानपि संप्रविष्टः ॥ २४ ॥

शुभं हितं पवित्रञ्च विभीषणवचः खलः ।
प्रतिजग्राह नैवासौ म्रियमाण इवौषधम् ।
कालेन [5]चोदितो दैत्यो विभीषणमथाब्रवीत् ॥ २५ ॥

मद्दत्तभोगैः पुष्टाङ्गो मत्समीपे वसन्नपि ।
प्रतीपमाचर[6]त्येष ममैव हितकारिणः ।
मित्रभावेन शत्रुर्मे जातो नास्त्यत्र संशयः ॥ २६ ॥

अनार्येण कृतघ्नेन सङ्गतिर्मे न युज्यते ।
विनाशमभिकाङ्क्षन्ति ज्ञातीनां ज्ञातयः सदा ॥ २७ ॥

---

२३ । नरो० । नभोगा आकाशगताः । हरीन्द्रतुल्याः सिंहश्रेष्ठतुल्याः । विनाशयन्ति राक्षसानिति शेषः ।

२४ । नरो० । नो निषेधे । सुरेन्द्रैः शङ्करेणापि गुप्तः सन् जीवन् मृत्योः सकाशाद् रामेण न विमोक्ष्यसे इत्यन्वयः, इति दिक् । देवराजाङ्कगत इन्द्रक्रोडगतः, इन्द्रशरणागत इत्यर्थः ।

२५ । नरो० । यतः शुभमतो हितं पथ्यम्, पवित्रम् अप्रयुक्तत्वादिदोषरहितम् । दृष्टान्तमाह—म्रियमाण इवौषधमिति । चोदितः प्रेरितः ।

२६ । नरो० । हितकारिणो ममैव एष प्रतीपमहितमाचरतीति सम्बन्धः ।

२७ । नरो० । यतः कृतघ्नेनातोऽनार्येण निन्द्येन, सङ्गतिः सङ्गः ।

---

२३ । हरीन्द्रतुल्या महासिंहसदृशा यावन्न विनाशयन्ति तावत्ततः प्राक् देहीत्यन्वयः । रा० ।

[ हरीन्द्रतुल्याः सुग्रीवतुल्याः । यद्वा हरीन्द्रो देवीसिंहस्ततुल्याः । गो० ]

२४ । देवराजस्य अङ्कगतः मृत्योरङ्कगतो वेति सम्बन्धः ।

२७ । श्लोकोऽयं वाल्मीकीयसंवादी । तथाच—

---

1. क-ख-ग-घ-च-छ '-न्नगाभाः' । 2. च-छ 'नस-' । 3. क-ख ग-घ-च-छ 'न' । 4. ग 'युक्तः' । 5. क-ख घ-छ 'नोदितो' । 6. छ '-त्येव' ।

योऽन्यस्त्वेवंविधं ब्रूयाद्वाक्य[1]मेतं निशाचरः ।
हन्मि तस्मिन् क्षणे [2]नैव धिक् त्वां रक्षःकुलाधमम् ॥ २८ ॥
रावणेनैवमुक्तः[3] सन् परुषं स विभीषणः ।
उत्पपात सभामध्याद् गदापाणि[4]र्महाबलः ॥ २९ ॥
चतुर्भिर्मन्त्रिभिः सार्द्धं गगनस्थोऽब्रवीद् वचः ।
क्रोधेन महताविष्टो [5]रावणं दशकन्धरम् ॥ ३० ॥

२८ । नरो० । एतं न हन्मि हन्म्येव ।
३० । नरो० । आविष्टो व्याप्तः ।

जानामि शीलं ज्ञातीनां सर्वलोकेषु राक्षस ।
हृष्यन्ति व्यसनेष्वेते ज्ञातीनां ज्ञातयः सदा ॥ इति ५।८८।३ ।

२८ । योऽन्यो निशाचर एवंविधं वाक्यं ब्रूयात्तं तस्मिन् क्षणे एव वचनकथनकाल एव हन्मि । त्वन्तु भ्रातृत्वाद्धननायोग्य इति तव धिक्कार एव वध इत्याह—धिगित्यादि । रा० ।

२९ । अत्र रावणस्य वाक्प्रयोगमात्रेणैव विभीषणस्य तत्परित्याग ऊर्द्धोत्पतनञ्च । वाल्मीकीये न तावतैव अपि तु पादप्रहारजनिताभ्यां रोषापमानाभ्याम् । तथाच—

एवं ब्रुवति राजेन्द्रो भ्रातरि तु विभीषणे ।
उत्पपात सनिस्त्रिंशस्ततः क्रोधात् स रावणः ॥
महाविद्युद्गुणः कृष्णः सनाद इव तोयदः ।
आसनात् तूर्णमुत्पत्य पद्मा चाभिजघान तम् ॥
रावणः क्रोधसंरागादासनस्थं विभीषणम् ।
अभवत् पतितो भूमावासनात् स विभीषणः ॥ इति ५।८७।१-३ ।

पाश्चात्त्ये पुनः—

योऽन्यस्त्वेवंविधं ब्रूयाद्वाक्यमेतन्निशाचर ।
अस्मिन् मुहूर्त्ते न भवेत् त्वान्तु धिक् कुलपांशन ॥
इत्युक्तः परुषं वाक्यं न्यायवादी विभीषणः ।
उत्पपात गदापाणिश्चतुर्भिः सह राक्षसैः ॥ ६।१६।१६-१७ ।

इत्यादिना वचनमात्रेणैव परित्याग इति अयमंशः पाश्चात्त्यरामायणसंवादी ।

गदापाणिरिति, पाश्चात्त्ये वाल्मीकीयेऽपि । प्राच्ये पुनरत्र निस्त्रिंश इति दृश्यते । तथाच—

उत्पपात सनिस्त्रिंशश्चतुर्भिः सचिवैः सह ॥ इति ५।८७।१४ ।

1. क-ख घ '-मिकं', ग-च-छ '-मेतद' । 2. क-ख-ग-घ-च 'एव' । 3. ग-च '-क्तास्तु' । 4. छ '-र्विभीषण' । 5. ग-छ 'राचसं' ।

मा विनाश[1]मुपैहीतिप्रियवादिनमेव माम् ।
धिक्करोषि तथाऽपि त्वं ज्येष्ठो भ्राता पितुः समः ॥ ३१ ॥
कालो राघवरूपेण जातो दशरथालये ।
[2]काली सीताभिधानेन जाता जनक[3]नन्दिनी ॥ ३२ ॥
तावु[4]भावागतावत्र भूमेर्भारापनुत्तये ।
तेनैव [5]प्रेरितस्त्वन्तु न शृणोषि हितं मम ॥ ३३ ॥
श्रीरामः प्रकृतेः साक्षात् [6]परस्तात् सर्वदा स्थितः ।
[7]बहिरन्तश्च भूतानां [8]समं सर्वत्र संस्थितः ॥ ३४ ॥

---

३३ । नरो० । तर्हि किमर्थमत्राऽऽगतौ स्यातामिति चेत्तत्राऽऽह—तावुभावित्यादि । हितमपि वचो यत् त्वं न शृणोषि, तस्यापि कारणं तत्प्रेरणैवेत्याशयेनाऽऽह—तेनैवेत्यादि । तेनैव राघवरूपिणा कालेनैव ।

३४ । नरो० । ननु यस्य सृष्टेः प्रागपि वर्त्तमानत्वं वियद्व्यापकत्वञ्च तस्यैव सर्वशक्तिमत्त्वात् कालरूपित्वमिति कुतो मानुषस्य रामस्य कालरूपित्वमित्यत आह—श्रीराम इत्यादि । अत्र प्रकृतिपदं त्रिगुणात्मकमायापरम्, जगदाकारेण परिणममानमायापरं वा । अन्यथा प्रकृतेर्लयाभावात परस्तादित्यसङ्गतं स्यात् । यद्वा केषां मते प्रकृतेरपि लयो विद्यते तत्र मानं विष्णुपुराणम्, यथा—

जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते ।
तेजस्यापः प्रलीयन्ते तेजो वायौ प्रलीयते ॥
वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते ।
अव्यक्तं पुरुषे ब्रह्मन्निष्कले संप्रलीयते ॥ इति ।

---

३१ । यदब्रवीत्तदाह—मेति । यद्यपि प्रियवादिनमेव मां त्वं धिक् करोषि तथाऽपि पितुः समो ज्येष्ठो भ्राता त्वमिति तव हितं ब्रवीमीति शेषः । रा० ।

३२ । काल इति सर्वसंहर्त्तेत्यर्थः । काली सर्वसंहारे सहायभूता शक्तिः । रा० ।

३३ । तेनैव रामेण, अन्तर्यामित्वादिति भावः । स्वकर्त्तव्यनिर्वाहार्थं तव तथा प्रेरणेति तात्पर्यम् । रा० ।

[ तेनैवेति । तेन कालरूपेण रामेण प्रेषितः । मम मत्त इत्यर्थः । गो० । ]

३४ । अन्तर्यामित्वमेव तस्य व्युत्पादयति—श्रीराम इति । प्रकृतेः साक्षाद् द्रष्टेत्यर्थः ।

---

1. क-ख-व '-मुपैहि त्व' । 2. ङ-पुस्तके इदमर्द्धं नास्ति । 3. ग-च '-मन्दिरे' । 4. ग-च '-भौ चाऽऽग-' । 5. ङ 'प्रेषित-' । 6. च-ङ 'पुरस्तात्' । 7. ङ-पुस्तके इदमर्द्धं नास्ति । 8. क-ख-घ 'सम.' ।

नामरूपादिभेदेन तत्तन्मय इवामलः ।
यथा नानाप्रकारेषु वृक्षेष्वेको महानलः ॥ ३५ ॥
तत्तदाकृतिभेदेन भिद्य[1]तेऽज्ञानचक्षुषा ।
पञ्चकोशादिभेदेन [2]तत्तन्मय इवाऽऽबभौ ॥ ३६ ॥

दानीमपि विद्यते इति सूचनाय साक्षादित्युक्तम् । कादाचित्कस्थितिवारणाय सर्वदेत्युक्तम् । ोराम इत्यादिना सृष्टेः प्रागपि वर्त्तते इत्युक्तम् । समं न्यूनाधिकभावरहितं यथा स्यात् । हिरित्यादिना वियद्व्यापकत्वमुक्तम् । तथाच श्रुतिः—'आकाशवत् सर्वगतो हि नित्य' इति ।

३५-३६ । नरो० । ननु तर्हि कथं भेदप्रतीतिरिति चेत्तत्राऽऽह—नामरूपादिदेनेत्यादि । नामरूपादिभेदेनेति आदिपदेनान्तःकरणस्य ग्रहणम् । परमार्थतस्तत्तन्मयत्वं स्तीति सूचनाय इवशब्दः प्रयुक्तः । दृष्टान्तमाह—यथेति । नानाप्रकारेषु वृक्षेषु एको हानलो यथा तत्तदाकृतिभेदेन अज्ञानचक्षुषा भिद्यते इत्यन्वयः । ताश्चामूस्ताश्चेति ताः तत्ताश्चामूराकृतयश्चेति तासां भेदस्तेन तथा । ननु आत्मनस्तावत् पञ्चकोषादिभेदेन नानाधत्वमुक्तम्, त्वया कथमेकविधत्वमुच्यते इति चेत्तत्राऽऽह—पञ्चकोषादिभेदेनेत्यादि । पञ्च कोषा

ञ्च प्रकृतिकार्यद्रष्टृत्वमर्थात् सिद्धम् । तत् किं प्रकृतिसम्बद्धस्तथा सति तद्धर्मलोपापत्तिर्हरिदिसम्बन्धाद् वस्त्रस्येवेत्यत आह—परस्तात् सर्वदेति । पङ्कपद्मन्यायेन तद्धर्मसंबन्धः । प्रकृतिष्टत्वमेवाऽऽह—बहिरिति । समो न तु न्यूनाधिकभावेनापि वैषम्येण ; यथाकर्मफलप्रदत्वाइति भावः । रा० ।

[ नन्विदङ्कारास्पदतया परिच्छिन्नेन दूरस्थेन कथं प्रेरितोऽस्मीति चेदाह—श्रीराम इत्यादि । र्वदा प्रकृतेः परस्तात् स्थितः, यतः साक्षाद् ब्रह्म इत्यर्थः । भूतानां भूतभौतिकानां बहिरन्तश्च मं यथा स्यात्तथा सर्वत्र संस्थितः । एतेनान्तर्यामित्वं सर्वव्यापकत्वञ्चोक्तम् । गो० ]

३५ । वस्तुतस्तद्व्यतिरिक्तं नैव किञ्चित् सदस्तीत्याह—नामेति । यत् किञ्चित् सत्त्वेन ामादि प्रतीयते तत् सर्वं तन्मयत्वादेव तथा प्रतीतिविषय इति भावः । एकस्यानेकरूपत्वं दृष्टान्तेन ाधयति—यथेति । रा० ।

[ नामेत्यादि । नाम देवमनुष्यादिरूपम्, अपदद्विपदबहुपदादि, आदिना जात्यादि ; षां भेदेन तत्तन्मय इव, स्वरूपेण तत्तन्मयत्वाभावद्योतनाय इवशब्दः, मायिकत्वात् । यतोऽमलः कारादिरहित इत्यर्थः । दार्ढ्याय विशेषणम् । एकस्यापि बहुधा भाने दृष्टान्तः यथेत्यादि । था एकोऽपि महानलः नानाप्रकारेषु ऋजुकुटिलादिषु कक्षेषु शुष्कतृणकाष्ठेषु । गो० ]

३६ । दार्ष्टान्तिके योजयति—पञ्चेति । अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयाः पञ्च ोषाः । आदिना भूतादीनि । तत्रान्नमयः स्थूलशरीरम्, ततः क्रमेण सूक्ष्मा अन्ये । रा० ।

1. क-ख-घ-च-छ '-ते ज्ञानचक्षुषाम्' । 2. ग-च-छ 'तत्तद्रूप' ।

नीलपीतादियोगेन निर्मलः स्फटिको यथा ।
स एव नित्यमुक्तोऽपि स्वमायागुणबिम्बितः ॥ ३७ ॥
कालः प्र[1]धानं पुरु[2]षोव्यक्तश्चेति चतुर्विधः ।
प्रधानपुरुषाभ्यां [3]स जगत् कृत्स्नं सृजत्यजः ।
कालरूपेण कलनां जगतः कुरुतेऽव्ययः ॥ ३८ ॥

---

यथा—एतद्व्यष्ट्युपहितचैतन्यं विश्व उच्यते, सूक्ष्मशरीरं परित्यज्य स्थूलशरीरप्रवेष्टृत्वात् । अस्यैवा-स्थूलशरीरव्यष्टिरन्नादिविकारित्वादिहेतोरन्नमयकोषः । प्राणादिपञ्चकं कर्मेन्द्रियैः सहितं तत् प्राणमय-कोषो भवति । मनस्तु कर्मेन्द्रियैः सहितं सद् मनोमयकोषो भवति । बुद्धिर्ज्ञानेन्द्रियैः सहिता सती विज्ञानमयकोषो भवति । आनन्दत्वात् कोषवदाच्छादकत्वाच्च आनन्दमयकोषः । अन्नमयादिकोषाणां प्रत्येकमात्मत्वप्रतिपादिका एकैका श्रुतिर्यथा—'स वा एष पुरुषोऽन्नरसमयः' (तैत्ति० २।१।१ ।) इत्यादि । 'अन्योऽन्तरात्मा प्राणमयः' (तैत्ति० २।२।१) इत्यादि । 'अन्योऽन्तरात्मा मनोमयः' (तैत्ति० २।३।१) इत्यादि । 'अन्योऽन्तरात्मा विज्ञानमयः' (तैत्ति० २।४।१) इत्यादि । 'अन्योऽन्तरात्मा आनन्दमयः' (तैत्ति० २।५।१) इत्यादि । अन्या च श्रुतिर्यथा—'स वा एष पुरुषोऽन्नरसमयः' (तैत्ति० २।१।११) । 'तस्माद्वा एतस्मादन्नरसमयात्' (तैत्ति० २।२।११) । 'अन्योऽन्तरात्मा मनोमयस्तस्मादन्योऽन्तरात्मा विज्ञानमयः' (तैत्ति० २।४।१) इति । आसां बाधिका प्रबला श्रुतिर्यथा—'प्रत्यगस्थूलोऽचक्षुरप्राणोऽमनोऽकर्त्ता चैतन्यं चिन्मात्रं सदि'त्यादिका ।

३७ । नरो० । नीलपीतादियोगेनेति, ननु यदि तस्याद्वितीयत्वं तर्हि कथं कालादयो दृश्यन्ते इति चेत्तत्राऽऽह—स एवेत्यादि । नित्यमुक्तः सदा शून्य इत्यर्थः । स्वमायागुणबिम्बितः स्वमायागुणयुक्त इत्यर्थः ।

३८ । नरो० । व्यक्तं महत्तत्त्वम् । सर्वशक्तिमत्त्वात्तस्य कालाद्यात्मकत्वं बोध्यम् । नन्वेवमपि यस्य सृष्टिसंहारकारित्वं तस्यैव परमेश्वरत्वं रामस्य तदभावात् कथं तदित्यत आह—प्रधानपुरुषाभ्यामित्यादि । कृत्स्नं सकलम् । कलनां नाशम् । अव्ययः अपक्षयशून्यः ।

---

[ तत्तदाकृतिभेदेन ऋजुकुटिलादिरूपभेदेन तन्मयो भवति । ज्ञानचक्षुषा तु भिद्यते, एकरूपो भेदेन बुध्यते, तथैव सर्वत्र स्थित एकरूप एव ज्ञानचक्षुषा बुध्यते इत्यर्थः । उपाधिसन्निधाने तत्तद्रूपत्वं सदृष्टान्तं पुनराह—पञ्चकोषेत्यादि । पञ्च कोषाः—अन्नमयः, प्राणमयः, मनोमयः, ज्ञानमयः, आनन्दमयः । गो० ]

३७-३८ । दृष्टान्तान्तरमाह—नीलेति । स एष रामः स्वमायागुणाः सत्त्वादयस्ते बिम्बिता यस्मिन् इति विग्रहः, तैर्बिम्बित इति वा । तत्र रजोगुणप्रतिबिम्बे प्रधानपुरुषावित्याह—

---

1. क '-धानः', ग '-धानपु-' । 2. क '-षोऽव्य-' । 3. ख 'च' ।

कालरूपी स भगवान् रामरूपेण मायया ।
ब्रह्मणा प्रार्थितो देवस्त्वद्वधार्थमिहाऽऽगतः ॥ ३९ ॥
तदन्यथा कथं कुर्यात् [1]सत्यसङ्कल्प ईश्वरः ।
हनिष्यति त्वां रामस्तु सपुत्रबलवाहनम् ॥ ४० ॥
हन्यमानं न शक्नोमि द्रष्टुं रामेण रावण ।
त्वां राक्ष[2]सकुलं [3]कृत्स्नं ततो गच्छामि राघवम् ।
मयि याते सुखी भूत्वा [4]रमस्व [5]भवने चिरम् ॥ ४१ ॥

---

३९ । नरो० । तर्हि मानुषरूपेण किमर्थमत्राऽऽगत इत्यपेक्षायामाह—कालरूपी स भगवानित्यादि ।

---

प्रधानेति । प्रधानं परिणामि, पुरुषः स्वभोगार्थं तत्प्रवर्त्तक इत्युभाभ्यां सृष्टिः । तमोगुणप्रतिबिम्बं काल इत्याह—कालरूपेणेति । कलनां संहारम् । अर्थात् सत्त्वगुणप्रतिबिम्बितो व्यक्तमित्युच्यते । स चान्तर्यामितया सर्वपालको दुर्ज्ञेयतया चाव्यक्तमिति भावः । रा० ।

[ यथा स्वरूपेण निर्मलः स्फटिकः नीलपीतादिवर्णविशिष्टवस्तुयोगेन सान्निध्येन नीलादिरूपो भवति तद्वत् । नन्वस्य जगतः कालः परिणामहेतुः, प्रधानमुपादानम् , पुरुषो निमित्तं वैपरीत्यं वा अनयोः । व्यक्तं महत्तत्त्वं नानारूपं भवति कथं रामस्य नानात्वं तदाह—स एवेति । नित्यमुक्तोऽपि स राम एव स्वमायागुणेषु बिम्बितः प्रतिफलितः सन् कालः प्रधानं पुरुषो व्यक्तं चेति चतुःप्रकारो भवति, स रामः स्वयमजः स्वरूपाभ्यां प्रधानपुरुषाभ्यां कृत्स्नं समग्रं जगत् सृजति । गो० ]

३९ । तत्र कालरूपी संहारप्रधान इदानीं राम इत्याह—कालेति । ननु सर्वसमस्य भगवतो मद्वधे कथं प्रवृत्तिरित्यत आह—ब्रह्मणेति । परिपालनानुगुण्येन दुष्टनिग्रहेऽपि न समत्वहानिः । कर्मानुरूपफलदातृत्वमेव तस्य समत्वम् । तदननुरूपफलदाने हि तस्य वैषम्यमापद्येत, न च तदस्ति । यथाऽनेकेषु कर्मानुरूपफलदो राजा सर्वेषु सम इत्येव व्यवह्रियते न तु विषम इति भावः । रा० ।

४० । अन्यथाकरणाभावे हेतुः सत्यसङ्कल्पत्वम् । हनिष्यतीति, सत्यसङ्कल्पत्वादेवेति भावः । रा० ।

४१ । नन्वेवमवश्यम्भाविनि मद्वधे तव गमनेन किम् ? तत्राऽऽह—हन्यमानमिति । हे रावण, त्वां स्वामिबुद्धिविषयं स्वीयबुद्धिविषयञ्च राक्षसकुलं हन्यमानं द्रष्टुं न शक्नोमि, अतस्त्वयि

---

1. ग-च 'ससङ्कल्प' रघूत्तमः', छ 'ससङ्कल्पो रघूत्तमः' । 2. ग-घ '-स कु-' । 3. च 'सर्वं' 4. छ 'वसख' । 5. छ 'भवनं' ।

विभीषणो रावणवाक्यतः क्षणाद् विसृज्य सर्वं सपरिच्छदं गृहम् ।
जगाम रामस्य पदारविन्दयोः सेवाभिकाङ्क्षी परिपूर्णमानसः ॥ ४२ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे लङ्काकाण्डे
द्वितीयोऽध्यायः ॥ २ ॥

---

४२ । नरो० । सपरिच्छदं पर्णकुट्यादिसहितम् । परिपूर्णं सुखदुःखनाशेच्छारहितं मानसं यस्य सः ।

[ लङ्काकाण्डे द्वितीयाध्यायव्याख्या समाप्ता ॥ २ ॥ ]

---

राक्षसकुले च तां बुद्धिं विहाय रामे वानरेषु चोक्तबुद्धिं कृत्वा राघवं गच्छामि । तथाबुद्धिकृतमेव च दुःखमिति भावः । रा० ।

हन्यमानमिति । अत्र वाल्मीकीये—

न त्वामिच्छाम्यहं द्रष्टुं रामेण निहतं रणे । इत्यादि ६।८८।२३ ।

४२ । विसृज्य सर्वमित्यनेन वैराग्यमुक्तम् । भगवद्भजने तस्य मुख्याङ्गत्वात् । परिपूर्णो मनसि भवो मानसो मनोरथो यस्य सः । भगवद्भजनं कार्यमिति तस्य सार्वदिको मनोरथः । रा० ।

---

# तृतीयोऽध्यायः।

[1]श्रीमहादेव उवाच—

विभीषणो महाभाग[2]श्चतुर्भिर्मन्त्रिभिः सह।
आगत्य गगने रामसम्मुखे समवस्थितः॥ १॥
उच्चैरुवाच [3]भोः स्वामिन् राम राजीवलोचन।
रावणस्यानुजोऽहं ते दारहर्त्तुर्विभीषणः।
नाम्ना भ्रात्रा निरस्तोऽहं त्वामेव शरणं गतः॥ २॥
हितमुक्तं मया देव [4]तस्य चाविहितात्मनः।
सीतां रामाय [5]वैदेहीं प्रेषयेति पुनः पुनः॥ ३॥

२। नरो०। शरणमिति। 'शरणं गृहरक्षित्रोरि'त्यमरः।

३। नरो०। अविहितोऽकृतोऽर्थाद् हिते आत्मा मनो येन तस्य तथा। यद्वा

१। गगने रामसम्मुखे आगत्य गगनस्थ एव रामस्य सम्मुखीभूय समवस्थितः तत्रान्तिको बभूवेत्यर्थः।

पाश्चात्त्ये वाल्मीकीये अत्र काचिद्रुचिरा आख्यायिका दृश्यते। सा च विभीषणः सचिवैः भ्रातरं रावणमभिवाद्य मातरं दृष्ट्वा सर्वं तस्यै विनिवेद्य कैलासं जगाम इत्येवंरूपा। तथाच—

अभिवाद्य ततो भूयः क्रोधपर्याकुलेक्षणः।
चतुर्भिः सचिवैः सार्द्धं निश्चक्राम विभीषणः॥
स मातरं पुनर्दृष्ट्वा सर्वमेव निवेद्य तत्।
जगामाऽऽकाशमाविश्य कैलासं पर्वतोत्तमम्॥ इत्यादि ६।८९।३-४।

शिववैश्रवणाभ्यामनुज्ञातो रामसकाशं जगाम। तथाच—

श्रुत्वैतद्वचनं तत्र नीलकण्ठेन भाषितम्।
उदतिष्ठन्महाबाहुस्तैरेव सचिवैः सह॥
नमस्कृत्वा शिवं देवं तथा वैश्रवणं प्रभुम्।
रामाभ्यासं ययौ क्षिप्रं धर्मात्मा स विभीषणः॥ इति ६।८९।४१-४२।

२। ते दारहर्त्तुः रावणस्याहमनुजो नाम्ना विभीषण इत्यन्वयः। भ्रात्रा रावणेनाहं निरस्तः धिक्कृतः। रा०।

३। अविदितात्मनोऽविदितस्वस्वरूपस्य। प्रेषय सत्कृत्य प्रेषयेत्यर्थः। रा०।
[ अविहितात्मनोऽजितेन्द्रियस्य। गो० ]

1. क-ख-घ-पुस्तकेषु 'श्रीमहादेव उवाच' इति नास्ति। 2. क-ख-घ '-भागश्च-'। 3. क 'हे'। 4. क 'तस्य चाविदिता-', ग-ङ 'तस्यैवावि-', च 'तस्यैवावहिता-'। 5. ङ 'देहीति'।

उक्तोऽपि न शृणोत्येष कालपाशवशं गतः ।
हन्तुं मां खड्गमादाय प्राद्रवद्राक्षसाधमः ॥ ४ ॥
ततोऽचिरेण सचिवैश्चतुर्भिः सहितो भयात् ।
त्वामेव भवमोक्षाय मुमुक्षुः शरणं गतः ॥ ५ ॥
विभीषणवचः श्रुत्वा सुग्रीवो वाक्यमब्रवीत् ।
विश्वासार्हो न ते राम मायावी राक्षसाधमः ॥ ६ ॥
सीताहर्त्तर्विशेषेण रावणस्यानुजो बली ।
मन्त्रिभिः सायुधैरस्मान् [1]विवरे निहनिष्यति ॥ ७ ॥

---

विहिते कृते आत्मा मनो मतिर्यस्य तद्भिन्नस्य कृतघ्नस्य इत्यर्थः । किं हितमुक्तमित्यपेक्षायामाह—सीतामित्यादि ।

४ । नरो० । श्रवणाभावे हेतुः—कालपाशवशं गत इति ।

५ । नरो० । अचिरेण झटिति । सचिवैर्मन्त्रिभिः । भवः संसारस्तस्मान्मोक्षस्तस्मै तथा । यावत् संसारस्तावदेव भयं संसारनिवृत्तौ भयमेव न स्थास्यतीति भावः ।

६-७ । नरो० । हे राम, अमुष्मिन् ते तव न विश्वास उचितः, हि यतोऽसौ राक्षसाधमः । विशेषेण सीताहर्त्तू रावणस्य अनुज इति, भ्रातृकार्यं विहाय तव कार्यं न करिष्यतीति सूचनाय विशेषेणेत्याद्युक्तम् । मायावित्वसूचनार्थं सीताहर्त्तुरित्युक्तम्, कोपोद्रेकार्थं वा । तथाऽपि दुर्बलोऽसहायः किं करिष्यतीति चेत्तत्राऽऽह—बलीत्यादि । विवरे छिद्रे सति ।

---

४ । कालरूपस्य तव पाशः अन्तर्यामितया प्रेरणा, तदधीनतां प्राप्तः । अश्रवणमात्रमेव न किन्त्वधिकमपीत्याह—हन्तुमिति । रा० ।

खड्गमादायेति, अमूलोऽयमतीतवृत्तान्तानुवादः, आकरस्थले वाल्मीकीये चादर्शनात् ।

५ । भयात् तद्भयात्, संसारे एव वैराग्येण तस्मादेव मोक्षाय तदिच्छावान् त्वां शरणं गत इत्यन्वयः । रा० ।

६-७ । अविश्वासे कारणकूटं दर्शयति—मायावी, राक्षसाधमः, विशेषेण सीताहर्त्तू रावणस्य अनुज इत्यादि । नन्वेवं सर्वं भवतु, तथाऽप्यस्य विश्वासे का नो हानिरित्याह—बलीति । यतो बली अतः सायुधैर्मन्त्रिभिरस्मान् निहनिष्यति । ननु वयमपि बलवन्तः, कथमस्मान् हन्तुं समर्थः स्यादित्याह—विवरे इति । 'विश्वासार्ह' इत्याद्यर्धश्लोकस्य नरोत्तमसम्मतः पाठोऽनुसन्धेयः ।

---

1, क 'विचरन्' ।

तदाज्ञापय मे देव वानरैर्हन्यतामयम् ।
ममैवं भाति ते राम बुद्ध्या किं निश्चितं वद ॥ ८ ॥
श्रुत्वा सुग्रीववचनं रामः सस्मितमब्रवीत् ।
यदीच्छामि कपिश्रेष्ठ लोकान् सर्वान् सहेश्वरान् ।
निमिषार्द्धेन संहन्यां सृजामि [1]निमिषार्द्धतः ॥ ९ ॥
अतो मयाऽभयं [2]दत्तं शीघ्रमानय राक्षसम्
सकृ[3]देवं प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम ॥ १० ॥

---

९ । नरो० । सहेश्वरान् सहेन्द्रादीन् ।

१० । नरो० सहसा कथमभयं दत्तमिति चेत्तत्राऽऽह—सकृदेवमित्यादि । याचते याचमानाय ।

---

सीताहर्त्तुरनुज इति विशेषणेन विश्वासार्हो नेत्यन्वयः । विवरे अन्येन युद्धासक्त्यादिरूपे छिद्रे । रा० ।

८ । ममैवं बुद्धिः, तव बुद्ध्याऽन्तःकरणेन किं निश्चितं तद् वदेत्यर्थः । रा० ।

९ । यदीच्छामीति । अनेन सत्यसङ्कल्प ईश्वरोऽहमिति सूचितम् । सहेश्वरान् अत्रेश्वरा इन्द्राद्याः । रा० ।

अत्र वाल्मीकीये—

सदुष्टो वाऽप्यदुष्टो वा किमेष रजनीचरः ।
सूक्ष्ममप्यहितं कर्त्तुं मम शक्तः प्लवङ्गम ॥
पृथिव्यां राक्षसान् सर्वान् पिशाचांश्च सदानवान् ।
शक्तोऽहं सहसा हन्तुं दिव्येनास्त्रबलेन च ॥ इति ६।१८।१-२ ।

१० । नन्वेवंविधेभ्योऽभयदानं नोचितमिति चेत्तत्राऽऽह—सकृदेवेति । तवास्मीति प्रपन्नाय अङ्गीकृतवते । याचते, शत्रन्तम् अभयमिति शेषः । सर्वभूतेभ्यः सर्वप्राणिभ्यः, निकृष्टायापीति शेषः । तादृशायाप्यभयं ददामीति मे व्रतम् । तत्रास्मै अभयादाने व्रतभङ्गः स्यादिति न किञ्चिद् वाच्यमिति भावः । रा० ।

तवास्मीतीति । वाल्मीकीयेऽपि—

अभयं सर्वभूतेभ्यो ददामीति हि मे व्रतम् ।
संग्रामेऽभिप्रपन्नानां तवास्मीति च वादिनाम् ॥ इति ६।१८।१४ ।

---

1. ग-च-छ 'च निमेषतः' । 2. छ 'दत्त्वा' । 3. क-ख-ग-घ-छ '-द्दैव' ।

त्वमादिर्जगतां राम त्वमेव स्थितिकारणम् ।
त्वमन्ते निधनस्थानं स्वेच्छाचारस्त्वमेव हि ॥ १७ ॥
चराचराणां भूतानां बहिरन्तश्च राघव ।
व्याप्यव्यापकरूपेण भवान् भाति जगन्मयः ॥ १८ ॥

---

१७। नरो०। ननु जगतां कर्त्ता ब्रह्मा, पालको विष्णुः, संहर्त्ता रुद्रः ; कथं मम उत्पत्तिनाशहेतुत्वमित्यत आह—त्वमादिरित्यादि। आदिः कारणम्, अन्ते युगान्ते निधनस्थानं लयस्थानम्। तर्हि किं दैवादिचोदितो यथा लोकः शुभाशुभं कर्म करोति तथाऽहं सृष्ट्यादिकं करोमीति चेत्तत्राऽऽह—स्वेच्छाचारस्त्वमेव हीति। स्वेच्छया आचरतीति स्वेच्छाचारः, स्वतन्त्र इत्यर्थः।

१८। नरो०। भूतानि सृष्ट्वैव न त्यजसि, किन्तु तानि प्रविशसि व्याप्नोसि चेत्याह—चराचराणामिति पद्येन। चराचराणां जङ्गमस्थावराणाम्। व्याप्यञ्च तद् व्यापकञ्चेति व्याप्यव्यापकम्, तच्च तद् रूपञ्चेति तेन तथा। बहिर्व्यापकरूपेण अन्तर्व्याप्यरूपेण भातीत्यर्थः। अत्र मानं शृणु 'रूपं रूपं प्रतिरूपो बभूव, ( बृहदा० २।५।१९ ) 'तदस्य रूपं प्रतिचक्षणाय' ( बृहदा० २।५।१९ ) इत्यादिश्रुतिः। 'मायाभासेन जीवोऽसौ करोति' ( पञ्चदशी ) 'एकधा बहुधा चैव दृश्यते जलचन्द्रवदि'त्यादिस्मृतिः। 'स एष इह संप्रविष्टः' ( बृहदा० १।४।७ ) 'तत् सृष्ट्वा तदेवानुप्राविशत्' ( तैत्ति० २।६।१ ) इत्यादिश्रुत्यर्थापत्तिश्च।

---

प्रयन्त्यभिसंविशन्ति' ( तैत्ति० ३।१।१ ) इति श्रुतिबोधितजगत्स्थित्युत्पत्तिनाशकारणायेत्यर्थः। त्रैलोक्यगुरवे अन्तर्यामितयेति भावः। अनादिगृहस्थाय सदा मायागृहिण्या स्वशक्तिरूपया युतायेत्यर्थः। रा०।

[ अनादिगृहं हृत्पद्मम्, शरीरधाराया अविच्छिन्नत्वात् ; तत्स्थाय अन्तर्यामिणे इत्यर्थः। यद्वा अनादि नित्यं यद् गृहं महावैकुण्ठं तत्स्थाय। गो० ]

१७। तदेव स्पष्टमाह—त्वमादिरिति, उत्पत्तिकारणस्थानमित्यर्थः। निधनस्थानं लयस्थानम्। एवञ्चोत्पत्त्यादयोऽपि त्वद्विवर्तभूता एव नातिरिक्ता इति सूचितम्। स्वेच्छाचारत्वेन परानधीनत्वं सूचितम्। रा०।

[ आदिः कारणम्। स्थितिः पालनं तस्याः कारणं हेतुः। निधनस्थानं लयाधारः। दशरथात्मजस्य मम कथमेतावत्त्वम्, तत्राऽऽह—स्वेच्छाचार इति। स्वेच्छया आचरति तथा भवतीति स्वेच्छाचारः। ब्रह्मादीनां स्वेच्छया मानुषरूपो न तु स्वरूपेण। यद्वा स्वतन्त्रः न जीववद् अदृष्टाकृष्ट इत्यर्थः। गो० ]

१८। व्याप्यव्यापकरूपेणेति, यथा महामत्स्यस्याल्पमत्स्यो व्याप्यः। रा०।

[ चराचराणामिति, बहिर्व्यापकरूपेण अन्तश्च व्याप्यरूपेण, अतो जगन्मयः सर्वस्वरूपः। एतेनोपादानत्वञ्चोक्तम्। गो० ]

त्वन्मायया हृतज्ञाना नष्टात्मानो विचेतसः ।
गतागतं प्रपद्यन्ते पापपुण्यवशात् सदा ॥ १९ ॥

तावत् सत्यं जगद्भाति शुक्तिकारजतं [1]यथा ।
यावन्न [2]ज्ञास्यसे ज्ञानचेत[3]सा नान्यगामिना ॥ २० ॥

---

१९ । नरो० । तर्हि कथं लोका गतागतं कुर्वन्तीति चेत्तत्राऽऽह—त्वन्माययेत्यादि । यतो हृतज्ञाना अतो नष्टात्मानो मलिनचित्ताः अत एव विचेतसो विरुद्धचित्तवृत्तयः । गतागतं गमनागमनसमाहारमित्यर्थः ।

२० । नरो० । हे प्रभो, त्वमेव सत्योऽन्यत् सर्वमसत्यमित्याशयेनाऽऽह—तावदित्यादि । यथा शुक्तित्वरूपेण शुक्तिर्यावन्न ज्ञास्यते तावत्तस्यामारोपितं रजतं सत्यं सत्यवद् भाति, तथा नान्यगामिना ज्ञानचेतसा यावत्त्वं न ज्ञास्यसे तावत्त्वयि आरोपितं जगत् सत्यं सत्यवद् भातीति वाक्यार्थः । ज्ञानचेतसा ज्ञानशक्तिविशिष्टान्तःकरणेन ।

---

१९ । हृतज्ञानास्त्वद्रूपं जगदिति ज्ञानहीनाः, अत एव नष्टात्मानः अत एव नष्टं कण्ठचामीकरवत् अज्ञातं स्वस्वरूपं येषां ते, अत एव विचेतसः विरुद्धे प्रवृत्तिमार्गे चेतो येषां ते। गतागतं जन्ममरणरूपं संसारम् । रा० ।

[ नन्वहञ्चेत् सर्वं तर्हि संसारः कस्य, मम नित्यमुक्तत्वादित्याह—त्वन्माययेत्यादि । त्वन्मायया हृतं ज्ञानं येषाम्, अतो नष्टात्मानो नष्टबुद्धयः विचेतसो मूढाः पापपुण्यवशात् सदा गतागतं प्रपञ्चजन्ममरणं लभन्ते । एतेन तव सर्वस्वरूपत्वेऽपि स्वमायाबलाद् जीवस्य संसार इत्यर्थः । गो० ] ।

२० । यावदन्यविषयरहितेन ज्ञानस्वरूपभवद्विषयचित्तेन भवान् न ज्ञायते तावज्जगत् सत्यं भाति, त्वत्स्वरूपज्ञाने तु त्वमेव सर्वरूपेणैव भासीति ज्ञाने तु भासमानस्य जगतो मिथ्यात्वं भाति । यथा यावच्छुक्तिकास्वरूपेण न ज्ञायते तावत्तत्र भातरजतं सत्यमिति भाति, शुक्तिकाज्ञाने तु तन्मिथ्येति ज्ञायते तद्वत् । रा० ।

[ ननु भवतु गतागतम्, प्रपञ्चस्य मिथ्यात्वात् कथं तत्राऽऽसक्ता भवन्तीत्याह पद्यद्वयेन । तावदित्यादि । जगत्तावदसत्यं सत्यवद् भाति यावदनन्यगामिना अन्यत्रानासक्तेन ज्ञानचेतसा ज्ञाननिर्मलचित्तेन त्वं न ज्ञास्यसे इत्यर्थः । एतेन त्वदज्ञानादसत्येऽपि जगति सत्यवद् भ्रान्त आसक्तो भवति, ततश्च नानाकर्म करोति ततश्च कर्मवशात् संसारे गतागतं लभते इति समुदायार्थः । असत्ये सत्यभाने दृष्टान्तः—शुक्तिकारजतं यथेति । अविद्यावृतबुद्ध्या यथा शुक्तिकायां रजतं मन्यते तथेति । गो० ]

---

1. च 'तथा' । 2. क-ख-घ-च 'ज्ञायते' । 3. गं-च-छ '-साऽनन्यगा-' ।

त्वदज्ञानात् [1]सदा युक्ताः पुत्रदारगृहादिषु ।
रमन्ते विषयान् सर्वानन्ते दुःखप्रदान् विभो ॥ २१ ॥
त्वमिन्द्रोऽग्निर्यमो रक्षो वरुणश्च तथाऽनिलः ।
कुबेरश्च तथा रुद्रस्त्वमेव पुरुषोत्तमः ॥ २२ ॥
त्वमणोरप्यणीयांश्च स्थूलात् स्थूलतरः प्रभो ।
त्वं पिता सर्वलोकानां माता धाता त्वमेव हि ॥ २३ ॥

---

२१। नरो०। त्वदज्ञानात् न केवलं जगतः सत्यत्वेन प्रतीतिः किन्तु अनर्थहेतुस्तत्राऽऽसक्तिरपीत्याह—त्वदज्ञानादित्यादिना। रमन्ते प्राप्य प्रीणन्तीत्यर्थः। विषयान् कामान्, अन्ते विषयभोगजनककर्मक्षये दुःखप्रदान्।

२२। नरो०। श्रेष्ठत्वात् सर्वात्मकत्वात् सर्ववाञ्छितदातृत्वाच्च त्वमेव सर्वेषां सेव्यो नान्य इत्याशयेनाऽऽह—त्वमिन्द्रोऽग्निरित्यादि। वरुणश्चेति चकारश्चन्द्रादीन् समुच्चिनोति। राक्षसादीनामपि केषाञ्चित् सेव्यत्वं विद्यते। तथाच भगवद्गीता—

यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः।
प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः॥ १७।४ इति।

२३। नरो०। अतिसूक्ष्ममतिस्थूलञ्च यद् यद् वस्तु विद्यते तदपि त्वमेव, त्वद्व्यतिरिक्तं किमपि नास्तीत्याह—त्वमित्यादिना। अणोरपि अणीयान् अतिसूक्ष्म इत्यर्थः, तथाच श्रुतिः—'य एष अणिमा' ( छान्दोग्य० ६।९।४ ) 'अणोरणीयान्' इति ( कठ० २।२० )। एषोऽणुत्वव्यपदेशः सूक्ष्मत्वाभिप्रायेण। स्वमायाप्रधानतया उपादानत्वाभिप्रायेण स्थूलतरत्वव्यपदेशः। अपि च त्वं पिता सर्वलोकानां माता धातेति, धाता सकलकर्मफलविधाता।

---

२१। तदेव दार्ढ्याय पुनराह—त्वदज्ञानादिति। युक्तास्तत्रैव स्वत्वाभिमानेन लीनचित्ताः। रमन्ते प्रीत्या भुञ्जते। अन्ते वियोगे दुःखप्रदान्। रा०।

[ त्वदज्ञानात् सदा आसक्ता भवन्ति, अतः सर्वान् विषयान् रमन्ते तान् प्रति आसक्ता भवन्ति। गो० ]

२२। त्वमेव सर्वरूप इत्याह—त्वमिति। रा०।

[ इदानीं सर्वदेवतारूपेण स्तौति—त्वमिन्द्र इत्यादि। त्वमेव पुरुषोत्तमः क्षराक्षराभ्यामित्यर्थः। तदुक्तं गीतासु—

यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥ १५।१८ इति। गो० ]

२३। अणीयान् सर्वथा दुर्ज्ञेयत्वात्। स्थूलतरो विभुत्वात्। मातापितृवत् सर्वत्र समः पालने इत्याह—त्वं पितेत्यादि। रा०।

---

1. ग-च-छ 'सदासक्ताः'।

आदिमध्यान्तरहितः परिपूर्णोऽच्युतोऽव्ययः ।
त्वं पाणिपादरहितश्चक्षुःश्रोत्रविवर्जितः ॥ २४ ॥
श्रोता द्रष्टा ग्रहीता च जवनस्त्वं खरान्तकः ।
कोषेभ्यो व्यतिरिक्तस्त्वं निर्गुणो [1]निरपाश्रयः ॥ २५ ॥
निर्विकल्पो [2]निराकारो निरीहो निरुपाधिकः ।
[3]सद्भावरहितोऽ[4]नादिपुरुषः प्रकृतेः परः ॥ २६ ॥

---

२४ । नरो० । ननु यद् यदुक्तं तद्ब्रह्मण एव सम्भवति न तु दशरथपुत्रस्य मानुषस्य ममेति चेत्तत्राऽऽह—आदिमध्यान्तरहित इत्यादि । आदिर्जन्म, मध्यः स्थितिः, अन्तो नाशः । परिपूर्णो वृद्धिरहितः । अच्युतोऽक्षरः, अपक्षयशून्य इति यावत् । एतेषु हेतुरव्यय इति, नित्य इत्यर्थः ।

२५ । नरो० । ग्रहीतृत्वपाणिरहितत्वयोर्विरोधः, जवनत्वपादरहितत्वयोर्विरोधः, द्रष्टृत्व-चक्षूरहितत्वयोर्विरोधः, श्रोतृत्वश्रोत्ररहितत्वयोर्विरोधः । विरोधभञ्जकतत्तच्छक्तिमत्त्वप्रति-पादिका श्रुतिर्यथा—'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' (श्वेताश्व० ३।१९) इति । खरान्तक इति, खरो राक्षसविशेषः । कोषेभ्यः अन्नमयादिभ्यः । कोषव्यतिरिक्तसाधकानि विशेषणान्याह—निर्गुण इत्यादि । निर्गुणः शब्दादिगुणरहितः । यस्तु सगुणः पदार्थस्तस्य गुणनाशे नाशो दृश्यते, तव तु तथाविधत्वाभावान्न नाश इति भावः । यद्वा निर्गुणः सत्त्वादि-गुणशून्यः । निरपाश्रय आश्रयरहित इत्यर्थः । त्वमेव सर्वाश्रयः न तव कोऽप्याश्रय इति भावः ।

२६ । नरो० । निर्विकल्पो विकल्पासहिष्णुरद्वैत इत्यर्थः । सर्वद्वैतबाधेऽपि तव

---

२४ । अच्युतः कयाऽपि शक्त्या च्युतो हीनो न, अनेन सर्वशक्तिमत्त्वम् । अव्ययः व्ययोऽत्र वृद्ध्यपक्षयस्तद्रहितः । त्वं पाणीति 'अपाणिपादो जवनो ग्रहीता' इति श्रुतेः । रा० ।

[ आदिमध्यान्तरहित इति । नित्यमेव सत्त्वात् अच्युतोऽप्रच्युतस्वरूपः, अव्ययोऽ-क्षरः । त्वमित्यादि, पाणिरहितोऽपि ग्रहीता, पादरहितोऽपि जवनो वेगवान्, चक्षुर्विवर्जितोऽपि द्रष्टा, श्रोत्रवर्जितोऽपि श्रोता । तथाच श्रुतिः—

'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' (श्वेताश्व० ३।१९) इति । गो०]

२५ । विपरीतक्रमेण श्रोतेत्याद्युक्तिः । कोषेभ्यः अन्नमयप्राणमयमनोमयविज्ञानमया-नन्दमयेभ्यः पञ्चकोषेभ्यो व्यतिरिक्तस्तद्दोषास्पृष्टः, निर्गुणः स्वतो निर्गुण इत्यर्थः । माया-सम्बन्धात्तु गुणवानिव । निरुपाश्रय आधारान्तररहितः । रा० ।

[कोषेभ्यः अन्नमयादिभ्यः पञ्चभ्यः व्यतिरिक्तो भिन्नः, यतो निर्गुणोऽतो निरपाश्रयः । गो०]

२६ । निर्विकल्पः वस्तुतो निर्धर्मकत्वान्निर्विकल्पकज्ञानस्यैव विषयो न सविकल्पक-

---

1. क-ख-ग-घ-च-छ 'निरुपाश्रय.' । 2. क-ख-घ-छ 'निर्विकारो निराकारो निरीश्वरः' । 3. क-ख-ग-घ-च-छ 'षड्भाव-' । 4. क-ख-ग-घ-च-छ '-नादिः पु-' ।

मायया [1]गृह्यमाणस्त्वं [2]मनुष्य [3]इव [4]भाव्यसे ।
ज्ञात्वा त्वां निर्गुणमजं वैष्णवा मोक्षगामिनः ॥ २७ ॥
अहं त्वत्पादसद्भक्तिनिःश्रेणीं प्राप्य राघव ।
इच्छामि ज्ञानयोगाख्यं सौधमारोढुमी[5]श्वरम् ॥ २८ ॥

---

अबाधितत्वमिति भावः। निराकार आकारशून्यः। एतेन इयत्ताशून्यत्वं सूचितम्। निरीहो निष्क्रियः। एतेन कर्मबन्धाभावः सूचितः। निरुपाधिक उपाधिरहितः। एतेनापरिच्छिन्नत्वं सूचितम्। प्रकृतिभिन्नत्वे हेतुः—सद्भावरहित इति। सद् वाक्तं द्रव्यं तस्य भावस्तेन रहितः सद्भावरहितः। एतेन द्वकृत्वं सूचितम्। अनादिपुरुषः पुराणपुरुषः।

२८। नरो०। त्वत्पादयोर्या सती निष्कम्पा भक्तिः, सैव निःश्रेणी तां तथा। 'निःश्रेणी त्वधिरोहणी'त्यमरः। ज्ञानं योग उपायो यस्य मोक्षस्य स आख्या यस्य तं तथा। परमानन्दरूपत्वादीश्वरम्, यद्वा ईश्वरं त्वामुपागम्येति शेषः।

---

स्येति भावः। अत एव निराकारः, त्वत्पूज्यस्य स्वेश्वरान्तरस्याभावान्निरीश्वरः। उक्तं निर्विकारत्वं विवृणोति—षड्भावरहित इति। जायतेऽस्ति विपरिणमते वर्द्धतेऽपक्षीयते नश्यतीति निरुक्तौ षड्भावविकारहीनः, अत एवानादिः, जगत्तु त्वद्विवर्त्त एवेति भावः। प्रकृतिसम्बन्धादपि ते न विकार इत्याह—प्रकृतेः परः, तद्दोषगुणासंस्पृष्ट इत्यर्थः। रा०।

[ निर्गुणत्वान्निर्विकल्पो भेदरहितः, निराकारोऽमूर्त्तो ज्योतिर्मयत्वात्, कर्तृत्वभोक्तृत्वाद्युपाधिरहितः। गो० ]

२७। नन्वीदृशस्य मम ग्रहणं कुतस्तत्राऽऽह—माययेति। इदं त्वद्दर्शनं मायैव। तदेवाऽऽह—मनुष्य इवेति। एवं मायिकस्यास्य तव रूपस्य ज्ञानान्न मुक्तिः किन्तु पूर्वोक्तरूपज्ञानादेवेत्याह—ज्ञात्वेति। तज्ज्ञानकारणं चात्र मायिके तव रूपे भक्तिरित्येतज्ज्ञानमपि परंपरया तदुपयोगीति भावः। रा०।

[ ननु मानुषमात्रस्य मम कथं तथात्वम्, तत्राऽऽह—माययेति। गुह्यमान आच्छाद्यमानः सन् त्वं मनुष्य इव भाससे दीप्यसे। अत्र सदाचारं प्रमाणयति—निर्गुणमजं त्वां ज्ञात्वा वैष्णवाः प्रह्लादादयो मोक्षगामिनो यतः। गो० ]

२८। तदेवाऽऽह—अहमिति। भक्तिरूपां निःश्रेणीं प्राप्य ज्ञानयोगाख्यं सौधं पूर्वोक्तज्ञानयोगाख्यं सौधम्। रा०।

---

1. ग 'गुह्यमान-'। 2. क 'मनुज'। 3. च 'इति'। 4. ग 'भाससे'। 5. क '-श्वर'।

नमः सीतापते राम नमः कारुणिकोत्तम ।
रावणारे नमस्तुभ्यं त्राहि मां भवसागरात् ॥ २९ ॥
ततः प्रसन्नः प्रोवाच श्रीरामो भक्तवत्सलः ।
वरं वृणीष्व भद्रं ते वाञ्छितं वरदोऽस्म्यहम् ॥ ३० ॥

विभीषण उवाच—

धन्योऽस्मि कृतकृत्योऽस्मि कृतकार्योऽस्मि राघव ।
त्वत्पाद[1]दर्शनादेव विमुक्तोऽस्मि न संशयः ॥ ३१ ॥
नास्ति मत्सदृशो धन्यो नास्ति मत्सदृशः शुचिः ।
नास्ति मत्सदृशो लोके राम त्वन्मूर्त्तिदर्शनात् ॥ ३२ ॥
कर्मबन्धविनाशाय त्वज्ज्ञानं [2]भक्तिलक्षणम् ।
त्वद्ध्यानं परमार्थञ्च देहि मे रघुनन्दन ॥ ३३ ॥
न याचे राम राजेन्द्र सुखं विषयसम्भवम् ।
त्वत्पादकमले सक्ता भक्तिरेव सदाऽस्तु मे ॥ ३४ ॥
ओमित्युक्त्वा पुनः प्रीतो रामः प्रोवाच राक्षसम् ।
शृणु वक्ष्यामि ते [3]भद्र रहस्यं मम निश्चितम् ॥ ३५ ॥
मद्भक्तानां प्रशान्तानां योगिनां वीतरागिणाम् ।
हृदये सीतया नित्यं वसाम्यत्र न संशयः ॥ ३६ ॥

---

३१ । नरो० । कृता कृत्या क्रिया स्नानसन्ध्यादिका येन सः । अतः परं स्नानादिका नित्यक्रियाऽपि न कार्येति भावः । कृतं कार्यं कर्तव्यतया विहितं यज्ञादिकं येन सः । अतः परं पुण्यार्थं यज्ञादिकमपि न कार्यमिति भावः ।

---

२९ । सर्वविधभक्त्यपेक्षया नतिरूपा भक्तिरेव मुख्येति ध्वनयन्नाह—नम इति । रा० ।

३१ । कृतकृत्यत्वं सर्वधर्मजनककर्मकृतत्वम् अत एव धन्यत्वम् । भगवद्दर्शनस्य सर्वधर्मत्वमिति भावः । कृतकार्यत्वं च धातूनामनेकार्थत्वात् प्राप्तसकलप्राप्यत्वम्, प्राप्यञ्च सकलधर्मफलम् । तदेवाऽऽह—त्वत्पादेति । मुक्तिर्हि सर्वपुण्यफलम् । रा० ।

३३ । कर्मकृतो बन्धः संसारस्तन्नाशफलं भक्तिर्लक्षणं करणं यस्य तादृशं त्वद्विषयज्ञानं देहि । एवं फलं संप्रार्थ्य तस्य कारणं विना असम्भवात् तत्कारणीभूतां भक्तिं प्रार्थयते—त्वद्ध्यानमिति । एतदेव मुख्या भक्तिरित्यर्थः । परमार्थं परम उत्कृष्टो मोक्षोऽर्थः प्रयोजनं परंपरया यस्य । रा० ।

---

1, क '-स्पर्शना-' । 2. च 'मुक्ति-' । 3 ग-च 'भद्र'', छ 'भद्रं यद्व युक्तं' ।

तस्मात् त्वं सर्वदा शान्तः सर्व[1]कल्मषवर्जितः ।
मां ध्यात्वा मोक्ष्यसे नित्यं घोरसंसारसागरात् ॥ ३७ ॥
स्तोत्रमेतत् पठेद् यस्तु [2]लिखेद् यः शृणुयादपि ।
मत्प्रीतये ममाभीष्टं [3]सारूप्यं समवाप्नुयात् ॥ ३८ ॥
इत्युक्त्वा लक्ष्मणं प्राह श्रीरामो भक्तभक्तिमान् ।
पश्यत्विदानीमेवैष मम सन्दर्शने[4] फलम् ।
लङ्काराज्येऽभिषेक्ष्यामि जलमानय सागरात् ॥ ३९ ॥
यावच्चन्द्रश्च सूर्यश्च यावत् तिष्ठति मेदिनी ।
यावन्मम कथा लोके तावद्राज्यं करोत्वसौ ॥ ४० ॥
इत्युक्त्वा लक्ष्मणेनाम्बु ह्यानाय्य कलशेन तम् ।
लङ्काराज्याधिपत्यार्थमभिषेकं रमापतिः ।
कारयामास सचिवैर्लक्ष्मणेन [5]विशेषतः ॥ ४१ ॥
साधु साध्विति ते सर्वे वानरास्तुष्टुवुर्भृशम् ।
सुग्रीवोऽपि परिष्वज्य विभीषणमथाब्रवीत् ॥ ४२ ॥

---

३८ । मम एतत् स्तोत्रं यः पठेत् लिखेत् शृणुयाद्वा स मत्प्रीतये भवेदिति शेषः, तथाऽभीष्टं सारूप्यं च समवाप्नुयादित्यर्थः ।

३९ । मम संदर्शने फलं तज्जन्यं फलं मोक्षरूपं कालान्तरभवं तिष्ठतु । इदानीं साम्प्रतम् ऐहिकं पश्यतु । रा० ।

भक्तभक्तिमान् भक्तेषु अनुरागिषु भक्तिमान् अनुरागवान् , पूज्येष्वनुरागो भक्तिरित्याद्युक्तेः ।

विभीषणस्याभिषेचनं वाल्मीकीयानुमतम् । 'यावच्चन्द्रश्च' इत्यादिश्लोकार्थस्तु तत्र न दृश्यते ।

४१ । सचिवैः सुग्रीवाङ्गदादिभिर्वानरैरित्यर्थः । लक्ष्मणेन विशेषत इति तत्राभिषेककार्ये लक्ष्मण एव अग्रगण्य आसीदिति भावः ।

४२ । ते वानरास्तुष्टुवुः राममिति शेषः । रामशरणागतस्य सद्य एव तादृशं सुमहत् फलमवलोक्य रामे बद्धानुरागास्ते स्तुत्वा तं प्रसन्नीकर्तुं यतमाना आसन्नित्याशयः । अपिशब्दात् सुग्रीवश्च तुष्टाव इत्यर्थः । अथ रामस्तवानन्तरमित्यर्थः ।

---

1. क '-सङ्कल्प-' । 2. ग 'लिखेद्वा', क 'लिखित्वा' । 3. ग-च-क 'मम सायुज्यमाप्नुयात्' । 4. च 'नं' । 5. ग-च 'महात्मना' ।

विभीषण वयं सर्वे रामस्य परमात्मनः।
किङ्करा[1]स्तत्र मुख्यस्त्वं भक्त्या रामपरिग्रहात्।
रावणस्य विनाशे त्वं साहाय्यं कर्त्तुमर्हसि॥ ४३॥

विभीषण उवाच—

अहं कियान् सहा[2]यत्वे रामस्य [3]परमात्मनः।
किन्तु दास्यं करिष्येऽहं [4]भक्त्या शक्त्या [5]त्वमायया॥ ४४॥
दशग्रीवेण सन्दिष्टः शुको नाम महासुरः।
संस्थितो [6]ह्यम्बरे वाक्यं सुग्रीवमिदमब्रवीत्॥ ४५॥

---

४४। नरो०। कियान् तुच्छ इत्यर्थः।

४५। नरो०। अम्बरे आकाशे।

---

४३। मुख्यत्वे हेतुर्भक्त्या रामपरिग्रहात्। रा०।

मुख्योऽप्यहं किं करिष्यामीत्याह—रावणस्येत्यादि। एतेन भक्तमुख्यानां सुहृन्मित्रादि-निरपेक्षत्वेन प्रभुसाहाय्यं कर्त्तव्यमिति ध्वनितम्।

४४। परमात्मत्वेन सहायानपेक्षा सूचिता। अमायया अच्छलेन। रा०।

४५। शुकसारणप्रेरणात्मकश्चारविधिर्नाम कश्चित् सुमहान् प्रबन्धः प्राच्ये वाल्मीकीये रामादीनां सागरोत्तरणात् परं दृश्यते। तत्र प्रथमं शुकसारणयोः प्रेरणम्, ततः शार्दूलादीनाम्। पाश्चात्त्ये वाल्मीकीये रामे सागरस्योपासनार्थमुपविष्टे शार्दूलनाम्नः कस्य चिद्राक्षसस्य राम-बलावलोकनार्थमागमनम्। तथाच—

ततो निविष्टां ध्वजिनीं सुग्रीवेणाभिपालिताम्।
ददर्श राक्षसोऽभ्येत्य शार्दूलो नाम वीर्यवान्॥ इति ६।२०।१।

अतःपरं शार्दूलमुखेन ज्ञातवृत्तान्तोऽपि रावणः शुकं प्रेषयामास। तथाच—

शार्दूलस्य वचः श्रुत्वा रावणो राक्षसेश्वरः।
उवाच सहसा व्यग्रः संप्रधार्यार्थमात्मनः।
शुकं नाम तदा रक्षो वाक्यमर्थविदां वरः॥
सुग्रीवं ब्रूहि गत्वाशु राजानं वचनान्मम।
यथा सन्देशमक्लीबं श्लक्ष्णया परया गिरा॥ इति ६।२०।८-९।

पाश्चात्त्ये सत्यपीह एवमेव चारविधौ सागरोत्तरणात् परमपि एतेषां शुकसारणशार्दूलादीनां चारचर्य्यादिकं दृश्यते। अम्बरे स्थित्वेति। पाश्चात्त्ये वाल्मीकीयेऽपि—

---

1. क '-स्तस्य'। 2. च '-यत्न'। 3. ग-च क 'जगतीपतेः'। 4. च 'परं भक्त्या'। 5. ग-च-क 'त्वया सह'। 6. क 'ह्यम्बराद्'

त्वामाह रावणो राजा भ्रातरं राक्षसाधिपः ।
महाकुलप्रसूतस्त्वं राजाऽसि वनचारिणाम् ॥ ४६ ॥
मम भ्रातृसमानस्त्वं तव ना[1]स्त्यर्थविप्लवः ।
अहं [2]यद्हरं भार्यां राजपुत्रस्य किं तव ॥ ४७ ॥
किष्किन्ध्यां याहि हरिभिर्लङ्का शक्या न दैवतैः ।
प्राप्तुं किं मानवैरल्प[3]सारैर्वानरयूथपैः ॥ ४८ ॥
तं प्रापयन्तं वचनं तूर्णमुत्प्लुत्य वानराः ।
[4]प्रापद्यन्त [5]तदा क्षिप्रं निहन्तुं दृढमुष्टिभिः ॥ ४९ ॥
वानरैर्हन्यमानस्तु शुको राममथाब्रवीत् ।
न दूतान् [6]घ्नन्ति राजेन्द्र वानरान् वारय प्रभो ॥ ५० ॥
रामः श्रुत्वा तदा वाक्यं शुकस्य परिदेवितम् ।
मा वधिष्टेति रामस्तान् वारयामास वानरान् ॥ ५१ ॥

---

४७ । नरो० । अर्थविप्लवोऽर्थनाशः ।
४८ । नरो० । अल्पसारैरल्पबलैः ।

---

स तदा राक्षसेन्द्रेण सन्दिष्टो रजनीचरः ।
शुको विहङ्गमो भूत्वा तूर्णमाप्लुत्य चाम्बरम् ॥ इति ६।२०।१३ ।

४६ । भ्रातरं वालिना भ्रातृत्वव्यवहारस्य मैत्रीकरणोत्तरं कृतत्वेन तद्भ्रातृत्वाद्भ्रातृसदृशं त्वामित्यन्वयः । वनचारिणां वानराणाम् । रा० ।

त्वं वै महाराजकुलप्रसूतो महाबलश्चर्क्षरजः सुतश्च । ६।२०।१०

इत्यादिना पाश्चात्त्ये वाल्मीकीये महाकुलप्रसूतत्वं स्पष्टम् ।

४७ । अर्थविप्लवो मत्कृतोऽर्थनाशः, अहं यद्राजपुत्रस्य भार्यामहरं तत्र तव किं दुःखमिति शेषः । रा० ।

मम भ्रातृसमानस्त्वमिति । तथाच पाश्चात्त्ये रामायणे—

न कश्चनार्थस्तव नास्त्यनर्थस्तथाऽपि मे भ्रातृसमो हरीश । इति ६।२०।१०।

४८ । दैवतैः दैवतैरपि । रा० ।
४९ । निहन्तुं प्रापद्यन्त प्रपन्नाः कृतारम्भा इत्यर्थः । रा० ।
५१ । रामः सर्वजनरञ्जको रामस्तान् वारयामासेत्यर्थः ।

---

1. ग-च '-स्त्यव वि-', क '-स्त्यव स-' । 2. ग-च-क 'यद-' । 3. क-व-घ '-सत्त्वै-' । 4 क 'प्रापयन्त' । 5. क 'ततः' । 6. ग-च 'हन्ति' ।

पुनरम्बरमासाद्य शुकः सुग्रीवमब्रवीत् ।
ब्रूहि राजन् दशग्रीवं किं वक्ष्यामि व्रजाम्यहम् ॥ ५२ ॥

सुग्रीव उवाच—

यथा वाली मम भ्राता तथा त्वं राक्षसा[1]धम ।
हन्त[2]व्यस्त्वं मया यत्नात् सपुत्रबलवाहनः ॥ ५३ ॥
ब्रूहि मे रामचन्द्रस्य [3]भार्यां हृत्वा क्व यास्यसि ।
ततो रामाज्ञया धृत्वा शुकं बद्ध्वाऽन्वरक्षयत् ॥ ५४ ॥
[4]शार्दूलोऽपि ततः [5]पूर्वं दृष्ट्वा कपिबलं महत् ।
यथावत् कथयामास रावणाय स [6]राक्षसः ।
दीर्घचिन्तापरो भूत्वा निश्वसन्नास मन्दिरे ॥ ५५ ॥
ततः समुद्रमावेक्ष्य रामो रक्तान्तलोचनः ।
पश्य लक्ष्मण दुष्टोऽसौ वारिधिर्मामुपागतम् ॥ ५६ ॥

---

५६ । नरो० । दुष्टोऽसूयादिदोषाश्रयः । उपागतं समीपागतम् ।

---

५३ । यथा वालीति व्यङ्ग्योक्तिः । यथा जायापहारित्वात् स मे वध्यस्तथा स्वामिभार्यापहारित्वात् त्वमपि वध्य इति भावः । रा० ।

५४ । मे स्वामिनः श्रीरामचन्द्रस्य भार्यां हृत्वा क्व यास्यसीति ब्रूहीत्यन्वयः । शुकमन्वरक्षयद् वानरैः सुग्रीव इति शेषः । अयमत्राऽऽशयः—शुकवचनात् सुग्रीवस्य भेदायोग्यत्वं निर्णीय विशकलितं स्थितेषु वानरेषु स्वनगरघातस्यैतैरशक्यत्वं समुद्रव्यवधानान्निर्णीय घातादि मा करोत्विति । रा० ।

५५ । शार्दूलो दर्शनमात्रे नियुक्तो न तु सुग्रीवभेदने इति तस्याग्रहणम् । कपिबलस्यातिमहत्त्वश्रवणमात्रेण दीर्घचिन्तापरत्वं रावणस्येति अनेन शौर्यहानिः सूचिता । ततः शुकात् पूर्वमित्यर्थः । रा० ।

५६ । अत्रापि वाल्मीकीयः कश्चित् प्रबन्धो ग्रन्थेनानेनानाघ्रातो दृश्यते । स च विभीषणानुमतेन मन्त्रेण सागरस्यानुग्रहलाभार्थं रामस्य तत्तीरे उपवेशनरूपः ।

एतद्विभीषणेनोक्तं राक्षसेन विपश्चिता ।
प्रकृत्या धर्मशीलस्य राघवस्य व्यरोचत ॥ ६।१९।११

इत्यादिना रामस्य विभीषणोपदेशग्रहणम् ।

---

1. ग-च '-धमः' । 2. च '-व्यस्तु' । 3. च 'हृत्वा भार्यां' । 4. ग-च-छ 'सारणोऽपि' । 5. छ 'सर्वं' । 6. ग-छ 'सारणः' ।

नाभिनन्दति [1]दुष्टात्मा दर्शनार्थं ममानघ ।
जानाति मानुषोऽयं [2]मे किं करिष्यति वानरैः ॥ ५७ ॥

अद्य पश्य महाबाहो शोषयिष्यामि [3]वारिधिम् ।
पादेनैव गमिष्यन्ति वानरा विगतज्वराः ॥ ५८ ॥

इत्युक्त्वा क्रोधताम्राक्ष आरोपितधनुर्धरः ।
तूणीराद्बाणमादाय [4]कालाग्निसदृश[5]प्रभम् ।
सन्धाय चाप[6]माकृष्य रामो वाक्यमथाब्रवीत् ॥ ५९ ॥

---

५७ । नरो० । नाभिनन्दति न प्राप्नोतीत्यर्थः ।

५८ । नरो० । विगतज्वरा विगतसन्तापाः ।

५९ । नरो० । अर्थात् स्कन्धे आरोपितधनुः करेण धरतीति आरोपितधनुर्धरः । कालाग्निसदृशाः प्रलयकालाग्नितुल्याः प्रभा यस्य तं तथा ।

---

इत्यास्तीर्य कुशान् नक्तं तीरे नदनदीपतेः ।
संविवेश तदा रामो वेद्यामिव हुताशनः ॥

परेण युक्तस्तपसा नरेश्वरः परेण वीर्येण च शत्रुकर्षणः ।
कृत्वा मतिं सागरदर्शने तदा बभूव तूष्णीं नियतः स पार्थिवः ॥ ५।९२।१९-२०

इत्यादिना चोपवेशनम् । पाश्चात्त्येऽप्येवम् ( ९।१९ ) । एवं रजनीत्रयमुपास्यापि सागरमदृष्ट्वा रामस्य कोपातिशयः । तथाच पाश्चात्त्ये—

स त्रिरात्रोषितस्तत्र नयज्ञो धर्मवत्सलः ।
उपासत तदा रामः सागरं सरितां पतिम् ॥

न च दर्शयते रूपं मन्दो रामस्य सागरः ।
प्रयतेनापि रामेण यथार्हमपि पूजितः ॥

समुद्रस्य ततः क्रुद्धो रामो रक्तान्तलोचनः ।
समीपस्थमुवाचेदं लक्ष्मणं शुभलक्षणम् ॥ इत्यादि ।६।२१।११-१३ ।

ततः शुकमुक्तेः परमित्यर्थः ।

---

1. छ 'मूढात्मा' । 2. ग 'मां' । 3. च 'मानवः' । 4. च 'कालान्त-' । 5. ग-च छ '-प्रभः' । 6. क '-मारोप्य' ।

पश्यन्तु सर्वभूतानि रामस्य शरविक्रमम् ।
इदानीं भस्मसात् कुर्यां समुद्रं सरिताम्पतिम् ॥ ६० ॥
एवं ब्रुवति [1]रामे तु सशैलवनकानना ।
चचाल वसुधा द्यौश्च दिशश्च तमसावृताः ॥ ६१ ॥
चुक्षुभे सागरो वेलां भयाद् योजन[2]मत्यगात् ।
तिमिनक्रझषामीनाः प्रतप्ताः परितत्रसुः ॥ ६२ ॥
एतस्मिन्नन्तरे साक्षात् सागरो दिव्यरूपधृक् ।
दिव्याभरणसम्पन्नः स्वभासा भासयन् दिशः ॥ ६३ ॥

---

६० । नरो० । शरविक्रमं शरप्रभावम् । जलबाहुल्यसूचनाय सरितां पतिमित्युक्तम् ।

६२ । नरो० । वेलां तीरम् अत्यगात् लङ्घितवती । तिमयश्च नक्राश्च झषाश्च अमीनाश्च ते तथा । अमीना मीनसदृशा जलजन्तवः । प्रतप्ताः प्राप्ततापाः ।

---

६३ । अत्र रामस्य वाक्यमात्रेणैव सागरस्य भीतिरागमनञ्च, वाल्मीकीये शरत्यागानन्तरं शरपीडितानां प्राणिनां प्रार्थनया । तत्र—

नामयित्वा महच्चापं कम्पयन्निव मेदिनीम् ।
मुमोच निशितान् बाणान् वज्राणीव शतक्रतुः ॥ ५।९३।१६

इत्यादिना शरत्यागः,

व्यथिताः पन्नगाश्चाऽऽसन् दीप्तास्या दीप्तलोचनाः ।
दानवाश्च महाकायाः पातालतलवासिनः ॥ ५।९३।२१

इत्यादिना तेषां तेषां प्राणिनां पीडातिशयः,

पीड्यमानास्तु ते सर्वे समुद्रं शरणं ययुः ।
स तानाश्वासयामास सर्वानेव सरित्पतिः ॥ ५।९३।२२

इत्यादिना समुद्रस्य आश्वासप्रदानम्,

पराक्रमं तस्य ततोऽन्ववेक्ष्य सरित्पतिर्लोकपतेः क्षतस्य ।
महच्च कार्यं समुपस्थितं महान् प्रदर्शयामास तदात्मनस्तनुः ॥ ५।९३।२३

इत्यादिना दर्शनम् ।

रामरोषपरीतचित्तस्य सागरस्य रामसमागममवलम्ब्य भागवते—

यद्रोषविभ्रमविवृत्तकटाक्षपातसम्भ्रान्तनक्रमकरो भयगीर्णघोषः ।
सिन्धुः शिरस्यर्हणं परिगृह्य रूपी पादारविन्दमुपगम्य बभाष एतत् ॥
इति ९।१०।१३ ।

---

1. छ 'रामेऽपि' । 2. ग-च-छ '-मभ्यगात्' ।

स्वान्तःस्थदिव्यरत्नानि [1]कराभ्यां परिगृह्य सः ।
पादयोः पुरतः क्षिप्त्वा रामस्योपायनं बहु ॥ ६४ ॥
दण्डवत् प्रणिपत्याऽऽह रामं रक्तान्तलोचनम् ।
त्राहि त्राहि जगन्नाथ राम त्रैलोक्यरक्षक ॥ ६५ ॥
जडोऽहं राम ते सृष्टः [2]सृजता निखिलं जगत् ।
स्वभावमन्यथा कर्त्तुं कः शक्तो देवनिर्मि[3]तम् ॥ ६६ ॥

---

पाद्मे उत्तरखण्डे वृत्तान्तानां किञ्चिद् वैपरीत्यं दृश्यते । तच्च—

सुप्रसन्नजलं तन्तु दृष्ट्वा रामो महाबलः ।
शार्ङ्गमादाय बाणौघैः शोषयामास वारिधिम् ॥
ततस्तु सरितामीशः काकुत्स्थं करुणानिधिम् ।
प्रपद्य शरणं देवमर्चयामास वारिधिः ॥
पुनरापूर्य जलधिं वरुणास्त्रेण राघवः ।
उदधेर्वचनात् सेतुं सागरे मकरालये ।
गिरिभिर्वानरानीतैर्नलः सेतुमकारयत् ॥ इति २४२।२९५-२९८ ।

६२ । सागरक्षोभमाह—योजनं वेलामत्यगात् अतिक्रान्तः । वेलामारभ्य योजनपर्यन्तं सजलो देशः शुष्को जात इत्यर्थः । प्रतप्ता जलौष्ण्यवशात् । रा०

६३ । सागरं विशिनष्टि वाल्मीकिः—

स्निग्धवैदूर्यसङ्काशो जाम्बूनदविभूषितः ॥
रक्तमाल्याम्बरधरः पद्मपत्रनिभेक्षणः ॥ इति ६।९४।२ ।

६४ । उपायनप्रदानं वाल्मीकीयान्नवीनम् । पाश्चात्ये आत्मजरत्नानां समवायेन भूषित इति दृश्यते । तथाच—

आत्मजानाञ्च रत्नानां भूषितो भूषणोत्तमैः । इति ६।२२।२० ।

६६ । स्वस्य शीघ्रमनागमने हेतुमाह—जड इति । जडः समाच्छादितज्ञानः । एवञ्च त्वत्सृष्टस्वभावेन जडत्वेन मदनागमनमिति न मे दोष इति भावः । रा० ।

---

1. ग-च-छ 'पाणिभ्या' । 2. छ 'सृजंघ' । 3. छ '-तः' ।

स्थूलानि पञ्च भूतानि जडान्येव स्वभावतः ।
सृष्टानि भवतैतानि [1]त्वदाज्ञां लङ्घयन्ति न ॥ ६७ ॥
तामसादहमो राम भूतानि प्रभवन्ति [2]हि ।
कारणानुगमात् तेषां जडत्वं तामसं स्वतः ॥ ६८ ॥
निर्गुणस्त्वं निराकारो यदा मायागुणान् प्रभो ।
लीलयाऽङ्गीकरोषि त्वं तदा वैराजनामवान् ॥ ६९ ॥
गुणात्मनो विराजश्च सत्त्वाद्देवा बभूविरे ।
रजोगुणात् प्रजेशाद्या मन्योर्भूतप[3]तिस्तव ॥ ७० ॥
त्वामहं माययाच्छन्नं लीलया मानुषाकृतिम् ।
जडबुद्धिर्जडो मूर्खः कथं जानामि निर्गुणम् ॥ ७१ ॥

---

६८ । नरो० । अहमोऽहङ्कारात् । कारणानुगमात् कारणानुसारात् ।

६९ । नरो० । निर्गुणो गुणातीतः, वैराजनामवान् हिरण्यगर्भसंज्ञक इत्यर्थः ।

७० । नरो० । विराजश्चेति । विराजः स्थूलशरीरात् । सत्त्वात् सत्त्वगुणात् । रजोगुणादिति गुणात्मनो विराजश्चेत्यनुपज्यते । प्रजेशाद्या ब्रह्माद्याः । मन्योः क्रोधात्मकात् तमसः भूतपती रुद्रः ।

७१ । नरो० । आच्छन्नम् आवरणशक्त्येति शेषः । जडा परमार्थग्रहणासमर्था बुद्धिर्यस्य स तथा । जडोऽचेतनः । मूर्खोऽज्ञः ।

---

६७ । ननु तव जडत्वं कुत इति चेत्तत्राऽऽह—स्थूलानीति । स्वभावतो जडान्येव भवता सृष्टानि । तामसाहंकारतस्त्वया तत्सृष्टेरिति भावः । अतस्त्वदाज्ञारूपं जडत्वं न लङ्घयन्ति न त्यजन्ति इति तेष्वापोरूपं भूतमहमिति भावः । रा० ।

६८ । तदेवाऽऽह—तामसादिति । अहमोऽहङ्कारात् । कारणगुणा हि कार्यगुणानारभन्त इति भावः । रा० ।

६९ । ननु निर्गुणस्य मम कथं भूतस्रष्टृत्वमत आह—निर्गुण इति । निर्गुणो निराकारोऽपि लीलया यदा मायागुणानङ्गीकरोषि तदा स्रष्टृत्वाद्वैराजनामा । स्वार्थेऽण् । रा० ।

७० । तत्र कस्माद् गुणात्मकस्य सृष्टिस्तत्राऽऽह—गुणात्मनो विराज इति । देवा अत्र सनकादयः, प्रजेशा मन्वाद्या इन्द्राद्याश्च, मन्योस्तमसः, भूतपतिः संहर्त्ता रुद्रः । रा० ।

७१ । मायया छन्नं छन्नात्मस्वरूपम् । तदेवाऽऽह—लीलयेति । जडबुद्धिस्तमोवृतत्वात्, जडः स्वरूपेणापि जडरूपत्वात् । अत एव मूर्खस्त्वां निर्गुणं सर्वनियन्तृपरमेश्वरत्वेन कथं जानामीत्यर्थः । रा० ।

---

1. च 'तदाज्ञा' । 2. छ 'ह' । 3. च-छ '-तेस्त-' ।

दण्ड एव हि मूर्खाणां सन्मार्गप्रापकः प्रभो ।
[1]भूतानाममरश्रेष्ठ पशूनां लगुडो यथा ॥ ७२ ॥
शरणं [2]ते व्रजामीश शरण्यं भक्तवत्सल ।
अभयं देहि मे राम लङ्कामार्गं ददामि ते ॥ ७३ ॥

श्रीराम उवाच—

अमोघोऽयं महाबाणः कस्मिन् देशे निपा[3]त्यताम् ।
लक्ष्यं दर्शय मे शीघ्रं बाणस्यामोघपातिनः ॥ ७४ ॥
रामस्य वचनं श्रुत्वा करे दृष्ट्वा महाशरम् ।
महोदधिर्महातेजा राघवं वाक्यमब्रवीत् ॥ ७५ ॥
रामोत्तरप्रदेशे तु द्रुमकुल्य इति श्रुतः ।
प्रदेशस्तत्र बहवः पापात्मानो दिवानिशम् ।
बाधन्ते मां रघुश्रेष्ठ तत्र ते पात्यतां शरः ॥ ७६ ॥
रामेण [4]सृष्टो बाणस्तु क्षणादाभीरमण्डलम् ।
हत्वा पुनः समागत्य तूणीरे पूर्ववत् स्थितः ॥ ७७ ॥
ततोऽब्रवीद्रघुश्रेष्ठं सागरो विनयान्वितः ।
नलः सेतुं करोत्वस्मिन् जले मे विश्वकर्मणः ।
सुतो धीमान् समर्थोऽस्मिन् कार्ये लब्धवरो हरिः ॥ ७८ ॥

---

७२ । नरो० । दृष्टान्तमाह—पशूनां लगुडो यथेति ।

७३ । नरो० । शरणं रक्षणम् ।

---

७२ । इदानीन्तु त्वत्कृतदण्डात् त्वत्स्वरूपं ज्ञातमिति वदन् अर्थान्तरन्यासमाह—दण्ड एवेति । भूतानां प्राणिनाम् । रा० ।

७४ । अमोघमनिष्फलं यथा भवति तथा पातिनः । रा० ।

बाणनिक्षेपस्थानप्रश्नो बाणनिक्षेपादिकञ्च प्राच्ये वाल्मीकीये नास्ति, अस्ति पुनः पाश्चात्त्ये ।

७७ । बाणप्रत्यावर्त्तनादिकं पाश्चात्त्येऽपि नास्तीति व्यासस्यैव कल्पनाप्रसूतमिदम् ।

७८ । विश्वकर्मणः सुतः सेतुं करोतु इत्यन्वयः । वाल्मीकिरपि—

अयं राम नलो नाम तनयो विश्वकर्मणः ।
पित्रा दत्तवरः श्रीमांस्तव चापि हिते रतः ॥

---

1. ग-छ 'प्रभूणा-' । 2. ग 'तेऽव यामीश' । 3. ग-च '-त्यतं' । 4. च 'त्यक्तो' ।

कीर्त्तिं [1]जानन्तु ते लोकाः सर्वलोकमलापहाम् ।
इत्युक्त्वा राघवं नत्वा ययौ सिन्धुरदृश्यताम् ॥ ७९ ॥
ततो रामस्तु सुग्रीवलक्ष्मणाभ्यां समन्वितः ।
नलमाज्ञापयच्छीघ्रं वानरैः सेतुबन्धने ॥ ८० ॥
ततोऽतिहृष्टः प्लवगेन्द्रयूथपैर्महानगेन्द्रप्रतिमैर्युतो नलः ।
बबन्ध सेतुं शतयोजनायतं सुविस्तृतं पर्वतपादपैर्दृढम् ॥ ८१ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे लङ्काकाण्डे
तृतीयोऽध्यायः ॥ ३ ॥

---

वानरोऽयं नरश्रेष्ठ युज्यतां सेतुकर्मणि ।
एष सेतुं महोत्साहः करोतु मयि वानरः ॥ इत्यादि ६।९४।१४-१९ ।

७९ । कीर्त्तिं सेतुबन्धनकृताम् । या कीर्त्तिः सेवात्मिका दृष्टा सती सर्वलोकपापहर्त्री । रा० ।

---

1. ग-च 'गायन्तु' ।

# चतुर्थोऽध्यायः

[1]श्रीमहादेव उवाच—

सेतु[2]मारभमाणस्तु तत्र रामेश्वरं शिवम् ।
संस्थाप्य पूजयित्वाह रामो लोकहिताय च ॥ १ ॥
प्रणमेत् सेतुबन्धं यो दृष्ट्वा रामेश्वरं शिवम् ।
ब्रह्महत्या[3]दिपापेभ्यो मुच्यते [4]मदनुग्रहात् ॥ २ ॥

---

१। सेतुमिति निर्विघ्नत्वार्थं द्रष्टृणां पुण्यार्थञ्च । तदेवाऽऽह—लोकहिताय चेति । रा० ।

सेतुमारभमाणो रामस्तत्र सेत्वारम्भस्थाने समुद्रतीरे इत्यर्थः, शिवं संस्थाप्य पूजयित्वा चाऽऽह वक्ष्यमाणमिति शेषः ।

रामेश्वरशिवसंस्थापनवृत्तं वाल्मीकीये पुराणान्तरेषु च केषुचित् न दृश्यते। दृश्यते पुनः कूर्मपुराणे विंशाध्याये । तथाच तत्र—

सेतुमध्ये महादेवमीशानं कृत्तिवाससम् ।
स्थापयामास लिङ्गस्थं पूजयामास राघवः ॥ इति ४८ ।

अनेन च कौर्मसंवादेन सेतोर्मध्यदेशे शिवः स्थापित इत्यायाति, अत्र च तीर इत्यनयोर्विसंवादोऽपि द्रष्टव्यः ।

२। 'प्रणमेत् सेतुबन्धं य' इत्यादिफलश्रुतिरत्र रामोदितत्वेनोपलभ्यते, कौर्मे पुनः समुपागतस्य हरस्य वरप्रदानव्याजेन । तथाच—

तस्य देवो महादेवः पार्वत्या सह शङ्करः ।
प्रत्यक्षमेव भगवान् दत्तवान् वरमुत्तमम् ॥ इति २०।४९ ।

वरश्च—

ये त्वया स्थापितं लिङ्गं द्रक्ष्यन्तीदं द्विजातयः ।
महापातकसंयुक्तास्तेषां पापं विनङ्क्ष्यति ॥
अन्यानि चैव पापानि स्नातस्यात्र महोदधौ ।
दर्शनादेव लिङ्गस्य नाशं यान्ति न संशयः ॥

---

1. क-ख-घ-पुस्तकेषु 'श्रीमहादेव उवाच' इति नास्ति। 2. ग '-मारभ्य-'। 3. क '-दिभिः पापैर्मु-'। 4. ग 'तदनु-'।

सेतुबन्धे नरः स्नात्वा दृष्ट्वा रामेश्वरं [1]हरम् ।
सङ्क[2]ल्पनियतो भूत्वा गत्वा वाराणसीं नरः ॥ ३ ॥
आनीय गङ्गासलिलं रामेशमभिषिच्य[3] च ।
[4]समुद्रे क्षिप्ततद्भारो ब्रह्म प्राप्नोत्यसंशयम्[5] ॥ ४ ॥
[6]कृतानि प्रथमेनाह्ना योज[7]नानि चतुर्दश ।
द्वितीयेन तथा चाह्ना योज[8]नानि तु विंशतिः ॥ ५ ॥
तृतीयेन तथा चाह्ना [9]योजनान्येकविंशतिः ।
चतुर्थेन तथा चाह्ना द्वाविंशतिरिति श्रुतम् ॥ ६ ॥
पञ्चमेन त्रयोविंशद्योज[10]नानि समन्ततः ।
बबन्ध सागरे[11] सेतुं [12]नलो वानरसत्तमः ॥ ७ ॥

---

५ । नरो० । कति दिनानि शतयोजनानि सेतुसम्बद्धानि कृतानि, कस्मिन् कस्मिन् दिने वा कति कति योजनानि सेतुसम्बद्धानि कृतानीत्यपेक्षायामाह—कृतानीत्यादि । प्रथमेनाह्ना शतस्य योजनानां चतुर्दश योजनानि सेतुसम्बद्धानि कृतानीत्यन्वय इति दिक् ।

७ । नरो० । शतस्येत्यादीनि पूरणीयानि । प्रस्तारः कियानित्यपेक्षायामाह—समन्तत इति । पूर्ववाक्यैरपि योज्यम् ।

---

यावत् स्थास्यन्ति गिरयो यावदेषा च मेदिनी ।
यावत् सेतुश्च तावच्च स्थास्याम्यत्र तिरोहितः ॥
स्नानं दानं तपः श्राद्धं सर्वं भवतु चाक्षयम् ।
स्मरणादेव लिङ्गस्य दिनपापं प्रणश्यति ॥ इति २०।५०-५३ ।

३ । सङ्कल्पनियतः सङ्कल्पपूर्वमित्यर्थः, मध्ये कार्यान्तरमकुर्वन्निति यावत् । रा० ।

४ । क्षिप्ततद्भारः जलानयनपात्रादिभारः । रा० ।

गङ्गासलिलमानीय तेन रामेशं शिवमित्यर्थः । समुद्रे समुद्रावगाहनेनेत्यर्थः, क्षिप्तो दूरीकृतस्तस्य अभिषेककर्तुः भारः पापभार इत्यर्थः, तेन च पापभारक्षेपणेन विगतपापः सः असंशयं ब्रह्म प्राप्नोतीत्याशयः । 'क्षिप्त्वा समुद्रे तद्वारि' इति पाठे अभिषेकजलमित्यर्थः । सेतुबन्धस्नानहरदर्शनवाराणसीगमनरामेश्वराभिषेचनरूपं कारणकूटमत्र ब्रह्मप्रापकम् ।

७ । त्रयोविंशदिति त्रयोविंशतिरित्यर्थे आर्षम् । बबन्ध एवं क्रमेण बबन्धेत्यर्थः । रा० ।

---

1. क 'शिवम्' । 2. क '-ल्पा नि-' । 3. क '-चते' । 4. ग-च 'क्षिप्त्वा समुद्रे तद्वारि' । 5. अतः परं च-पुस्तके 'दशयोजनविस्तीर्णं शतयोजनमायतम् । नलश्चक्रे महासेतुं मध्ये नदनदीपतेः ॥' इत्यधिकम् । 6. च 'क्रतो हि' । 7. ग-च '-नाना' । 8. ग-च '-नानाच' । 9. च 'एकविंशतियोजनम्' । 10. ग-च '-नाना' । 11. क '-रं युक्तो' । 12. क 'नानावानरस-' ।

तेनैव जग्मुः कपयो योजनानां शतं द्रुतम् ।
असंख्याताः सुवेलाद्रिं [1]रुरुहुः प्लवगोत्तमाः ॥ ८ ॥
आरुह्य मारुतिं रामो लक्ष्मणोऽप्यङ्गदं तथा ।
दिदृक्षू राघवो लङ्कामारुरोहाचलं महत् ॥ ९ ॥
दृष्ट्वा लङ्कां सुविस्तीर्णां नानाचित्रध्वजाकुलाम् ।
चित्रप्रासादसम्बाधां स्वर्णप्राकारतोरणाम् ।
परिखाभिः शतघ्नीभिः संक्रमैश्च विराजिताम् ॥ १० ॥

---

९। नरो०। महदिति आरोहणक्रियाविशेषणम्। अचलशब्दस्य लिङ्गव्यत्ययं कृत्वा वा महदित्युक्तम् ।

१०। नरो०। नानाचित्रध्वजाकुलाम् अनेककर्बुरपताकाव्याप्तामित्यर्थः। चित्रप्रासाद-संबाधां विचित्रराजगृहदेवगृहसंव्याप्तामित्यर्थः। स्वर्णरचिताः प्राकारतोरणा यत्र ताम् ।

---

सेतोर्विस्तारादिविवरणं वाल्मीकीये—

दशयोजनविस्तीर्णमायतं शतयोजनम् ।
नलश्चक्रे महासेतुं मध्ये नदनदीपतेः ॥
दशयोजनविस्तारा सा वीथी तत्र सागरे ।
विससारोष्णगे काले महाभ्र इव वायुना ॥ इति ५।९५।१२-१३ ।

सेतोरारम्भादिस्थानं तत्रैव—

कूले तूत्तर आरब्धो लङ्काकूले प्रतिष्ठितः ।
सागरस्यैष सीमन्तश्चित्ररूपो व्यदृश्यत ॥ इति ५।९५।४१ ।

८। तेनैव सेतुपथेनेत्यर्थः। असंख्याताः कपयः शतयोजनं लङ्कापर्यन्तमित्यर्थः, गत्वा सुवेलाद्रिं रुरुहुरित्यन्वयः। वाल्मीकीये प्रथमं रामलक्ष्मणयोः सुवेलाद्रिरोहणं ततश्च वानराणाम्। तथाच—

ततः कपिगणाः सर्वे समावृत्य त्रियोजनम् ।
आरोहन्त सुवेलन्तु प्लवन्तो दक्षिणामुखाः ॥
ते वायुवेगाः प्लवगास्तं गिरिं गिरिचारिणः ।
अध्यारोहन्त शतशः सुवेलं यत्र राघवः ॥ इति ६।१४।१६-१७ ।

९। महदिति क्लीबत्वमार्षम्। रा०।

राघवो रामः मारुतिमारुह्य राघवो लक्ष्मणोऽपि अङ्गदमारुह्येति द्वयोरेव एकेन

---

1. क-ख-घ-ङ 'रुरुधुः' ।

प्रासादोपरि विस्ती[1]र्णप्रदेशे दशकन्धरः ।
मन्त्रिभिः सहितो वीरैः किरीटदशकोज्ज्वलः ॥ ११ ॥
[2]नीलाद्रिशिखराकारः कालमेघसमप्रभः ।
रत्नदण्डैः सितच्छत्रैर[3]नेकैः परिशोभितः ॥ १२ ॥
एतस्मिन्नन्तरे बद्धो मुक्तो रामेण वै शुकः ।
वानरैस्ताडितः सम्यग् दशाननमुपागतः ॥ १३ ॥
[4]प्रहसन् रावणः प्राह पीडितः किं परैः शुक ।
[5]रावणस्य वचः श्रुत्वा शुको वचनमब्रवीत्[6] ॥ १४ ॥

---

११ । नरो० । किरीटानां मुकुटानां दशकं तेन उज्ज्वलो दीप्तः ।

१२ । नरो० । रत्नखचिता दण्डा येषां तैस्तथा ।

१४ । नरो० । परैः शत्रुभिः ।

---

राघवशब्देन संग्रहः । रामलक्ष्मणयोर्हनूमदङ्गदारोहणरूपं वृत्तमत्र वाल्मीकीये न दृश्यते । तथाच सुवेलारोहणमवलम्ब्य वाल्मीकिः—

रामः सुवेलं वासाय चित्रसानुमुपागमत् ।
पृष्ठतो लक्ष्मणश्चैवमन्वगच्छत् समाहितः ॥
सशरं चापमुद्यम्य सुमहद्भीमविक्रमः ।
अन्वारोहच्च सुग्रीवः सामात्यः सविभीषणः ॥
हनूमानङ्गदो मैन्दो नीलो द्विविद एव च ।
गयो गवाक्षो गवयः शरभो गन्धमादनः ॥ इत्यादि ६।१४।१०-१२ ।

अस्याग्रेऽपि—

ततः सुवेलमारुह्य रामस्तैर्हरिभिः सह ।
निषसाद गिरेस्तस्य शृङ्गे समशिलातले ॥ इति ६।१४।१९ ।

११ । तादृशतादृशविशेषणवतीं लङ्कां दृष्ट्वा रामेण वक्ष्यमाणविशेषणविशिष्टो रावणोऽपि दृष्ट इत्यर्थः । प्राच्ये वाल्मीकीये वर्त्तते सुवेलारोहणानन्तरमेव लङ्कादर्शनरूपं वृत्तं न पुना रावणदर्शनरूपम् ।

१३ । एतस्मिन्नन्तरे रामादीनां लङ्कादशाननदर्शनावकाशे । बद्धः वानरादिभिरिति शेषः ।

---

1. क '-र्णे प्रासादे' । 2. क-पुस्तके इदमर्द्धं नास्ति । 3. च-क '-नेकैरुप-' 4 क 'तमाह रावणः स्मिला प्रहृतः' । 5. ग-पुस्तके इदमर्द्धं नास्ति, च 'इति श्रुत्वा वचस्तस्य', क-पुस्तके अस्यार्द्धस्य स्थाने 'शुक उवाच' इति पाठः । 6. अतः परं च-पुस्तके 'शुक उवाच । देव त्वदाज्ञया तावद् विलङ्घ्य सागरं ततः इत्यधिकम् ।

सागरस्योत्तरे तीरे[1]ऽब्रुवं ते वचनं [2]यथा ।
[3]तत उत्प्लुत्य कपयो गृहीत्वा मां क्षणात् ततः ।
मुष्टिभिर्नख[4]दन्तैश्च हन्तुं [5]लोतुं प्रचक्रमुः ॥ १५ ॥
ततो मां राम रक्षेति क्रोशन्तं रघुपुङ्गवः ।
विसृज्यतामिति प्राह विसृष्टोऽहं कपीश्वरैः ।
ततोऽहमागतो भीत्या दृष्ट्वा तद्वानरं बलम् ॥ १६ ॥
[6]राक्षसानां बलौघस्य [7]वानरेन्द्रबलस्य च ।
नैतयोर्विद्यते सन्धिर्देवदानवयोरिव ॥ १७ ॥
[8]पुरप्राकारमायान्ति क्षिप्रमेकतरं कुरु ।
[9]सीतां [10]वाऽस्मै प्रयच्छाऽऽशु युद्धं वा दीयतां प्रभो ॥ १८ ॥
मामाह रामस्त्वं[11] ब्रूहि रावणं मद्वचः शुक ।
यद्बलञ्च समाश्रित्य सीतां मे हृतवानसि ।
तद्दर्शय यथाकामं [12]ससैन्यः सहबान्धवः ॥ १९ ॥

---

१७। नरो०। सन्धिर्मेलनम्।

---

१५। मुष्टिभिर्हन्तुं नखैर्दन्तैर्लोप्तुं छेत्तुं। रा०।

[ मुष्टिभिर्नखदंष्ट्रैर्हन्तुं लेढुमित्यादि। लेढुं कवलयित्वा स्वादयितुम्। गो० ]

१६। हे राम मां रक्षेति क्रोशन्तं मां दृष्ट्वा अयं विसृज्यतामिति वानरान् प्राह। रा०।

ततः हे राम मां रक्ष इति क्रोशन्तं मां दृष्ट्वेति शेषः। रघुपुङ्गवः अयं विसृज्यतामिति वानरान् प्राह। ततश्च इति शेषः। कपीश्वरैरहं विसृष्ट इत्यन्वयः। ततस्त्यागानन्तरमित्यर्थः। भीत्या भयेन तद्बलं दृष्ट्वा। एतेन तद्बलं सम्यग् द्रष्टुं न समर्थ इति ध्वनितम्।

१७। त्वदुक्तसन्धिभेदादि असम्भावितमित्याह—राक्षसानामिति। रा०।

१८। आयान्ति वानरा इति शेषः। रा०।

एकतरं युद्धसीताप्रतिप्रदानयोरन्यतरमित्यर्थः।

१९। मामाहेति शुकोक्तिरियम्। आह राम इति शेषः। किमाहेत्याह—शुक इति।

---

1. ग-च-छ 'ब्रुवन्त'। 2. ग-च-छ 'तथा'। 3. च 'उत्प्लुत्य कपयस्तत'। 4. ग-च-छ '-दंष्ट्रैश्च'। 5. ग 'लेढुं', च-छ 'नेतु''। 6. च 'वानराणां'। 7. च 'राक्षसेन्द्र-', छ 'वानराणा बलैः सह'। 8. च 'पुरः प्रा-'। 9. क 'सीता'। 10. ग 'वा संप्र-'। 11. क-च-छ '-स्तं'। 12. छ 'सपुत्रबलवाहनः'।

श्वः काले नगरीं लङ्कां सप्राकारां सतोरणाम् ।
राक्षसञ्च बलं पश्य [1]शरैर्विध्वंसितं मया ॥ २० ॥
[2]घोररोषमहं मोक्ष्ये बलं [3]धारय रावण ।
इत्युक्तोपरराामाथ रामः [4]कमललोचनः ॥ २१ ॥
एकस्थानग[5]ता यत्र चत्वारः पुरुषर्षभाः ।
श्रीरामो लक्ष्मणश्चैव सुग्रीवश्च विभीषणः ॥ २२ ॥
[6]एत एव समर्था[7]स्ते लङ्कां नाशयितुं प्रभो ।
[8]उत्पाट्य भस्मीकरणे सर्वे तिष्ठन्तु[9] वानराः ॥ २३ ॥
तस्य यादृग् बलं [10]रूपं तेजः प्रहरणानि च ।
वधिष्यति पुरं सर्वमेकस्तिष्ठन्तु ते त्रयः ॥ २४ ॥

---

२३। नरो०। नाशानुकूलव्यापारो नानाविधो भवति, अत्र किंविध इत्यत आह—उत्पाट्य भस्मीकरणे इति, दाहे इत्यर्थः। एवकारव्यवच्छेद्यमाह सर्वे तिष्ठन्तु वानरा इति।

२४। नरो०। किञ्च किं लक्षणाद्यैः, राम एव सर्वं पुरं नाशयितुं समर्थ इत्याह—तस्येति

---

२०। श्वः काले श्वः प्रातःकाल इत्यर्थः। नगरीं लङ्कामित्यत्र शरैर्विध्वंसितामिति विभक्तिविपरिणामेनान्वयः। रा०।

२२। यत्र श्रीरामो लक्ष्मणश्चैव सुग्रीवश्च विभीषण एते चत्वारः पुरुषर्षभाः, तत्र किं भवादृशस्य युद्धोद्योगविडम्बनेनेति शेषः। वाल्मीकीयेऽपि इममेवार्थमवलम्ब्य—

एकस्थानगता यत्र चत्वारस्ते महाबलाः ।
लोकपालसमा वीराः कृतास्त्रा दृढविक्रमाः ॥
रामो दाशरथिः श्रीमॉल्लक्ष्मणश्च महाबलः ।
सुग्रीवश्च महातेजास्तव भ्राता विभीषणः ॥ इति ६।१।३९-४० ।

२३। 'अत एव' 'एक एव' 'एत एव' इत्यस्मिन् पाठत्रये 'एत एव' इति पाठ एवास्माभिः समीचीनतया वाल्मीकीयसंवादित्वेन गृहीतः। तथाच तत्र—

एते शक्ताः पुरीं लङ्कां सप्राकारां सतोरणाम् ।
उत्पाट्य संक्रामयितुं सर्वे तिष्ठन्तु वानराः ॥ इति ६।१।४१ ।

२३। लङ्कानाशस्य प्रकारविशेषमाह—उत्पाट्य भस्मीकरणे इति। रा०।

---

1. क 'शनै-'। 2. ग-च-छ 'घोरं रो-'। 3. छ 'रचय'। 4. ग-च 'कञ्जवि-'। 5. च '-तास्तव'। 6. ग 'अत एव', च-छ 'एक एव'। 7. च '-र्थस्ते', छ '-र्थस्तु-'। 8. क 'उत्पत्य'। 9. च '-न्ति'। 10. क-ख-घ-छ 'दृष्टं रूपं'।

पश्य [1]वानरसेनां [2]तामसंख्यातां प्रपूरिताम् ।
गर्जन्ति वानरास्तत्र पश्य पर्वतसन्निभाः ।
न [3]शक्तास्ते गणयितुं प्राधान्येन ब्रवीमि ते ॥ २५ ॥
एष योऽभिमुखो लङ्कां नदंस्तिष्ठति वानरः ।
यूथपानां सहस्राणां शतेन परिवारितः ।
सुग्रीवसेनाधिपतिर्नीलो नामाग्निनन्दनः ॥ २६ ॥
एष पर्वतशृङ्गाभः पद्मकिञ्जल्कसन्निभः ।
स्फोटय[4]त्यभिसंरब्धो लाङ्गूलञ्च पुनः पुनः ।
युवराजोऽङ्गदो नाम वालिपुत्रोऽतिवीर्यवान् ॥ २७ ॥
येन दृष्टा जनकजा रामस्यातीव वल्लभा[5] ।
हनुमानेष विख्यातो हतो येन तवाऽऽत्मजः ॥ २८ ॥
श्वेतो रजतसङ्काशो महाबुद्धिपराक्रमः ।
तूर्णं सुग्रीवमा[6]गम्य पुनर्गच्छति वानरः ॥ २९ ॥
यस्त्वेष सिंहसङ्काशः पश्यत्यतुलविक्रमः ।
रम्भो नाम महासत्त्वो लङ्कां नाशयितुं क्षमः ॥ ३० ॥
एष पश्यति वै लङ्कां दिधक्षन्निव वानरः ।
शरभो नाम राजेन्द्र कोटीयूथपनायकः ॥ ३१ ॥

---

पद्येन । तस्य रामस्य । बलं शक्तिः, रूपं शरीरं लावण्यं वा । तेजः प्रभावः, प्रहरणानि आयुधानि एतानि तस्य किंकर्त्तव्यानि अनिर्वचनीयानीत्यर्थः । एकः सहायनिरपेक्षः । तदेवाऽऽह—तिष्ठन्तु ते त्रय इति ।

२५ । नरो० । न शक्ता न पारिताः ।

२६ । नरो० । परिवारितः परिवेष्टितः ।

---

२४ । पुनर्विचार्य एको राम एव तन्नाशेऽलमित्याह—तस्येति । रा० ।

तस्य रामस्य । एकः स राम इति शेषः । तथाच वाल्मीकीये—

रामस्य यादृशं रूपं वीर्यं प्रहरणानि च ।
हनिष्यति पुरीं लङ्कामेकस्तिष्ठन्तु ते त्रयः ॥ इति ६।१।४२ ।

२५ । प्रपूरितां प्रकर्षेण पूरिता लङ्का यया ताम् । यद्वा रामतेजसा पूरिताम् । रा० ।

---

1. ग 'रावण से-' । 2. ग-च-छ 'तम-' । 3. क-ख-ग-घ 'शक्या-', च 'शक्तास्तान्' । 4. ग-च 'त्यति-' । 5. ग-छ '-भः' । 6. छ '-गत्य' ।

[1]पनसश्च महावीर्यो मैन्द[2]श्च द्विविदस्तथा ।
नलश्च सेतुकर्त्ताऽसौ विश्वकर्मसुतो बली ॥ ३२ ॥

वानराणां वर्णने वा सङ्ख्याने वा क ईश्वरः ।
शूराः सर्वे महाकायाः सर्वे युद्धाभिकाङ्क्षिणः ॥ ३३ ॥

शक्ताः सर्वे चूर्णयितुं लङ्कां रक्षोगणैः सह ।
एतेषां बलसङ्ख्यानं प्रत्येकं वच्मि [3]ते शृणु ॥ ३४ ॥

[4]एषां कोटिसहस्राणि नव पञ्च च सप्त च ।
तथा [5]शङ्खसहस्राणि [6]तथाऽर्बुदशतानि च ॥ ३५ ॥

सुग्रीवसचिवानां ते बलमेतत् प्रकीर्त्तितम् ।
अन्येषां तु [7]बलं नाहं वक्तुं [8]शक्तोऽस्मि रावण ॥ ३६ ॥

रामो न मानुषः साक्षादादि[9]नारायणः [10]परः ।
सीता साक्षाज्ज[11]गद्धात्री चिच्छक्तिर्जग[12]दात्मिका ।
ताभ्यामेव समुत्पन्नं जगत् स्थावरजङ्गमम् ॥ ३७ ॥

---

३३ । नरो० । ईश्वरः समर्थः ।

३७ । नरो० । इदानीं श्रीरामसीतयोर्मानुषबुद्धिं निराकुर्वन् तयोर्जगदुत्पत्तित्वे हेतुं दर्शयन् जगतस्तयोः पितृत्वं दर्शयन् तयोर्वैरस्यानुचितत्वं दर्शयति—राम इति त्रिभिः । तर्हि कोऽसौ ? साक्षान्नारायणः, यस्तु नारायणः स आदिः परमात्मा कथमसौ स इति चेत्तत्राऽऽह—आदिरिति पर इति च । आदिः कारणम्, परः परमात्मा । जगद्धात्री जगद्विधात्री

---

३५ । एषां नीलाङ्गदहनूमच्छ्वेतरम्भशरभपनसमैन्दद्विविदानां दशानां नवपञ्चकसप्त एकविंशदित्यर्थः । रा० ।

३६ । ननु बलसङ्ख्याने समर्थोऽसमर्थो वा भव, भक्ष्यभूतेन नरवानरबलेन अमेयराक्षसबलानां न किमपि विधातुं समर्थ्यते एवेति चेत्तत्राऽऽह—रामो न मानुष इति । सीतारामौ प्रकृतिपुरुषौ जन्मनाशकारणाविति ताभ्यां विरोधे समूलं विनाश एव स्यादित्याशयः ।

३७ । जगदात्मिका जगत्स्वरूपा माया, स्वरूपं दृश्यं जगदेव सूक्ष्मरूपेणेत्याशयः । समुत्पन्नं स्थूलरूपेणेत्यर्थः । जगतस्तत्स्थुषश्च स्थावरजङ्गमात्मकस्य संसारस्य । रा० ।

---

1 क 'पवनश्च' । 2 क '-स्तु' । 3. च क 'तच्छृणु' । 4. ग-च-क 'येषां' । 5. क 'दश-' । 6. ग-च-क 'तथा ह्यन्द-' । 7. क 'बलान्नाहं' । 8. ग-च 'शक्नोमि' । 9. च '-नारा-' । 10. क 'प्रभुः' । 11. क-ख-ग-घ-क '-गद्धेतुश्चि-', च '-गद्धातुश्चि-' । 12. क '-दम्बिका' ।

तस्माद्रामश्च सीता च जगतस्तस्थुषश्च तौ ।
पितरौ पृथिवीपाल तयो[1]र्वैरी कथं भवेत् ।
अज्ञानता त्वयानीता जगन्मा[2]तैव जानकी ॥ ३८ ॥
क्षणनाशिनि संसारे शरीरे क्षणभङ्गुरे ।
पञ्चभूतात्मके राजन् [3]पञ्चविंशतितत्त्वके ॥ ३९ ॥
मलमांसास्थिदुर्ग[4]न्धभूयिष्ठेऽहंकृतालये ।
कैवाऽऽस्था व्यतिरिक्तस्य काये तव जडात्मके ॥ ४० ॥

---

अत एव जगदात्मिका । स्थावरश्च तद् जङ्गमश्चेति स्थावरजङ्गमम्, यद्वा स्थावरश्च जङ्गमश्च तयोः समाहारः स्थावरजङ्गमम् ।

३८ । नरो० । जगतो जङ्गमस्य, तस्थुषः स्थावरस्य ।

३९ । नरो० । संसारस्यासत्त्वज्ञानं विना तत्त्वज्ञानबोधो न भवतीति संसारस्यासत्यत्वप्रतिपादनपूर्वकं तत्त्वज्ञानं बोधयति—क्षणनाशिनीति सार्द्धदशभिः । संसारे नामरूपात्मकप्रपञ्चे, शरीरे पुत्रादीनामिति शेषः, पञ्चभूतात्मके पञ्चीकृताकाशादिपञ्चभूतात्मके । पञ्चविंशतितत्त्वके इति । पञ्चविंशतितत्त्वानि यथा—अपञ्चीकृतभूतपञ्चकम्, तत्कारणीभूतोऽहङ्कारः, बुद्धिरिन्द्रियाणि दश, तद्विषयाः शब्दादयः पञ्च, मूलप्रकृतिः, मनश्चिदाभासश्चेति । बुद्धिर्विज्ञानात्मकं महत्तत्त्वम् ।

४० । नरो० । मलञ्च मांसञ्च अस्थि च दुर्गन्धश्च एते भूयिष्ठाः प्रचुरा यत्र तस्मिन्

---

३८ । तौ सीतारामौ पितरौ मातापितरौ तयोर्वैरी तद्वैरवान् कथं भवेत् कथं जीवेदित्यर्थः । जगन्मातैवेत्यनेन अर्थात्तवापि मातेति व्यङ्ग्यम् । रा० ।

३९ । क्षणनाशित्वेनात्यन्तस्थिरत्वबोधनम् । तत्र हेतुः—पञ्चभूतात्मके इति । पञ्चविंशतितत्त्वके बुद्ध्यहङ्कारैकादशेन्द्रियपञ्चभूततद्गुणरूपादिपञ्चकात्मकत्वात् । विकारद्वारा च प्रकृतेरप्यत्रानुगम इति चतुर्विंशतितत्त्वात्मकत्वम् । रा० ।

[ पञ्चभूतात्मके राजन् पञ्चविंशतितत्त्वके इति । पञ्च महाभूतानि, पञ्चतन्मात्रम्, एकादशेन्द्रियाणि, प्रकृतिमहदहङ्कारा इति चतुर्विंशतिः । सूत्रस्य पृथग्विषयाः (?) पञ्चविंशतिस्तत्त्वानि यत्र तस्मिन् तन्मये इत्यर्थः । गो० ]

४० । अहंकृतालये अहङ्कारस्याऽऽलये स्थानभूते । तेभ्यश्चतुर्विंशतिभ्यो भिन्नस्य चेतनस्य जडात्मके देहे कैवाऽऽस्था । रा० ।

---

1. ग-च-छ '-र्वैरं' । 2. छ '-तेव' । 3. क-ख-ग-घ 'चतुर्विं-' । 4. छ '-न्धे भू-' ।

यत्कृते ब्रह्महत्यादिपातकानि कृतानि ते ।
भोगभोक्ता [1]तु यो देहः स देहोऽत्र पतिष्यति ॥ ४१ ॥
पुण्यपापे समा[2]याते जीवेन सुखदुःखयोः ।
कारणे देहयोगादिनात्मनः [3]कुरुतेऽनिशम् ॥ ४२ ॥

---

एतेन वीभत्सरसालम्बनत्वं सूचितम् । कैवाऽऽस्थेत्यस्य सर्वत्रान्वयः । अत्र सामान्यविशेष-न्यायाङ्गीकारान्न दोषः । व्यतिरिक्तस्य पञ्चविंशतितत्त्वेभ्य इति शेषः । एतेनाविकारित्वं सूचितम् ।

४१ । नरो० । ननु किं कर्म ममाऽऽस्थासूचकं दृष्टमित्यत आह—यत्कृते इत्यादि । परलोकयात्रानिर्वाहकोऽयं देहः कथमस्य रक्षायै न यतेयेति चेत्तत्राऽऽह—भोगभोक्तेति । लिङ्गदेह एव परलोकयात्रानिर्वाहको न त्वयं देह इति भावः । यद्वा अत्र भोगभोक्तुर्देहस्य रक्षायै कथं न यतेयेति चेत्तत्राऽऽह—भोगभोक्तेति । पतिष्यति यत्नं कृते इति शेषः । भोगभोक्तेति अत्रान्त भाविण्यर्थत्वं बोध्यम् ।

४२ । नरो० । किञ्च अनेन देहेन आत्मनः कार्यं न क्रियते प्रत्युत अकार्यमेव क्रियते इत्याह—पुण्यपापे इति पद्येन । जीवेन समायाते (?) सति सुखदुःखयोः कारणे पुण्यपापे आत्मनो देहयोगादिना हेतुना देहोऽनिशं कुरुते इत्यन्वयः । देहयोगादिनेति आदिपदेन इन्द्रियान्तः-करणयोगस्य ग्रहणम् । पुण्यपापे आत्मनो बन्धकारणे भवत इति भावः ।

---

[ अहङ्कृतालये अहंकाराश्रये जडे शरीरे व्यतिरिक्तस्य देहादिव्यतिरिक्तस्य तव कैवाऽऽस्था अहमिति नित्य इति च विश्वासः क्षणभङ्गुरत्वात् काये च परमभोग इति कैवाऽऽस्था । गो० ]

४१ । [ यस्य देहस्य कामस्य च कृते निमित्तं ब्रह्महत्यादिपातकानि त्वया कृतानि । किञ्च यदि देहो नित्यः स्यात्तदा तद्भोगार्थं दुष्कृतमपि कुर्यात् तत्तु न, अवश्यं विनाशित्वा-दित्याह—भोगेत्यादि । यो देहो भोगस्य भोक्ता स देहोऽत्र पतिष्यति । गो० ]

४२ । सुखदुःखयोः कारणे पुण्यपापे जीवेन सह समायातः, समायास्यत इत्यर्थं आर्षं तत् । ते च पुण्यपापे देहयोगादिना आत्मनः सुखदुःखे कुरुतः, न तु स्वतस्ते आत्मन इत्यर्थः । रा० ।

[ ननु यदि देहः पतिष्यति, तर्हि पापपुण्ययोः कर्तुर्देहस्य नाशे फलभोक्तुरभावे किं गुण-दोषविचारेण इत्याह—पुण्यपापे इति । सुखदुःखयोः कारणे पुण्यपापे जीवेन सह समायाते संसारस्य देहाहंमानेनाऽऽत्मनिष्ठत्वात् । ते पुनरनिशं सर्वदा आत्मनो जीवस्य देहयोगादिना अर्थात् सुखदुःखे कुरुते कुर्वाते इत्यर्थः । छान्दसमेकवचनम् । गो० ]

---

1. ख 'च' । 2. क-ख-च '-याती' । 3. क-ख-ग-घ-च 'कुरुतोऽ-' ।

यावद्देहोऽस्मि कर्त्ताऽस्मीत्यात्माऽहंकुरुतेऽवशः ।
अध्यासात् तावदेव स्याज्जन्मनाशादिसम्भवः ॥ ४३ ॥
तस्मात् त्वं [1]त्यज देहादावभिमानं महामते ।
[2]आत्मा हि निर्मलः शुद्धो विज्ञानात्माऽचलोऽव्ययः ।
स्वाज्ञानवशतो बन्धं प्रतिपद्य विमुह्यति ॥ ४४ ॥
तस्मात् त्वं शुद्धभावेन [3]ज्ञात्वात्मानं सदा स्मर ।
विरतिं भज सर्वत्र पुत्रदारगृहादिषु ।
निरयेष्वपि भोगः स्याच्छ्वशूकरतनावपि ॥ ४५ ॥

---

४३ । नरो० । न केवलं पापपुण्यं बन्धकारणम्, किन्तु अहं देहोऽस्मि अहं कर्त्ताऽस्मीति ज्ञानमपीत्याह—यावदिति पद्येन । आत्मा अवशः सन् अध्यासाद्देहेन्द्रियेषु आत्मनोऽध्यारोपात् यावद् अहं देहोऽस्मि अहं कर्त्ताऽस्मीति ज्ञानं कुरुते तावत् जन्मनाशादिसम्भवः स्यादित्यन्वयः । आदिपदेन जीवनस्य ग्रहणम् ।

४४ । नरो० । उपसंहरति—तस्मादिति । अभिमानम् आत्मबुद्धिम् । तर्हि क आत्मा इत्यपेक्षायामाह—आत्मा हीत्यादि । शुद्धः परमार्थतोऽन्तःकरणाद्युपाधिरहितः, अत एव निर्मलो रागादिरहितः, विज्ञानात्मा विज्ञानस्वरूपः, अचलः सर्वशरीरपरित्यागरहितः, अव्ययोऽविनाशी ।

४५ । नरो० । उपसंहरति—तस्मादिति । विरतिमप्रीतिम् । अत्र एतादृशशरीरं लब्ध्वा

---

४३ । देहयोगः कीदृशस्तत्राऽऽह—यावदिति । अध्यासादहङ्कारतादात्म्याध्यासात् । उक्तरीत्या यावदवशोऽहं कुरुत इत्यर्थः । एतेन ज्ञानिनो देहसम्बन्धेऽपि दुःखाद्यभावाद्देहयोगेनैव दुःखमित्युक्तमित्यपास्तम् , उक्ताध्यासरूपस्यैव योगस्य विवक्षितत्वात् । रा० ।

[ ननु देहस्यैव सुखदुःखभोगो युज्यते कथमकर्त्तुरात्मन इत्याह—यावदित्यादि । देहेऽस्मिन् देहोऽहं कर्त्ताऽस्मि इत्यात्मा अवशोऽविद्यापरतन्त्रः अहंकुरुते अहंमानं करोति । अध्यासाद्देहे आत्मत्वारोपात् । तावदेव जन्मनाशयोः आदिना सुखदुःखयोश्च सम्भवो योगो भवति । गो० ]

४४ । [ ननु नित्यचैतन्यस्याऽऽत्मनः कथमेवं मोहो भवति ? स्वाविद्यावशादित्याह—आत्माऽतीति । स प्रसिद्धः निर्मलः रागादिरहितः स्वतः शुद्धः । तत्र हेतुः—विज्ञानात्मा विज्ञानरूप आत्मा । स्वाज्ञानवशतः स्वाविद्यावशाद् बन्धं देहादिरूपं बन्धनं प्राप्य मुह्यति कर्तृत्वभोक्तृत्वाद्यभिनिवेशं प्राप्नोतीत्यर्थः । गो० ]

स्वाज्ञानं स्वस्वरूपस्य शुद्धत्वादेर्यदज्ञानं तद्वशतो बन्धशरीरादिसम्बन्धं प्राप्य मुह्यति । पुनः पुनः कर्मसु प्रवर्त्तते ।

४५ । आत्मानं शुद्धमुक्तस्वभावं ज्ञात्वा सदा स्मरेत्यनेनाविच्छेदेन तत्स्मरणाभ्यासो

---

1. क 'जन्मदे-' । 2. क-ख-ग 'आत्माऽतिनि-' । 3. क 'ज्ञात्वा ज्ञानं' ।

देहं लब्ध्वा[1] विवेकाढ्यं द्विजत्वञ्च विशेषतः।
तत्रापि भारते वर्षे कर्मभूमौ सुदुर्लभम्।
को विद्वानात्मसात् कृत्वा देहं भोगानुगो भवेत्॥ ४६॥
अतस्त्वं ब्राह्मणो भूत्वा पौलस्त्यतन[2]यश्च सन्।
अज्ञानीव सदा भोगाननुधावसि किं मुधा॥ ४७॥

---

एतादृशः सन् यत् सदा भोगाननुसरसि तदत्यन्तमनुचितमित्याह—निरयेष्वपीति त्रिभिः। अत्र भोगः सुखसाक्षात्कारः।

४६। नरो०। विवेकाढ्यं विवेकसम्पन्नम्। विशेषतो विशेषेण। असक्तेन विहितं कर्म चित्तशुद्धिज्ञानद्वारा मोक्षजनकमिति सूचनाय तत्रापि भारते वर्षे कर्मभूमौ सुदुर्लभमित्युक्तम्। तथा च गीता—

तस्मादसक्तः सततं कार्यं कर्म समाचर।
असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः॥ इति। ३।१९।

४७। नरो०। अतः [ इति ] कस्यापि विदुषो भोगानुगत्वाभावात् सर्वत्र भोगस्य सुलभत्वाद्वा।

---

मोक्षद इत्युक्तम्। अथ तादृशज्ञानसाधनं वैराग्यमाह—विरतिमिति। ननु सर्वत्र विरतौ भोगसुखं हीयेतेति तत्राऽऽह—निरयेष्वपीति। एवञ्चेदृशभोगोऽपि हेय एवेति भावः। रा०।

[ ननु परमभोगं परित्यज्य कथं विरतिं भजिष्यामि ? जात्युचितभोगेनैव सर्वत्र जीवस्य तुष्टेस्तुल्यत्वादित्याह—निरयेष्वपीति। निरयेषु नरकतुल्यप्रेतादियोनिषु। शूकरकुक्कुरदेहेष्वपि तदुचितभोगः स्यादेव तुष्टिरपि तुल्या स्यादेव इति नास्ति विशेषः। तदुक्तं श्रीभागवते—

नरकस्थोऽपि देहं वै न पुमांस्त्यक्तुमिच्छति।
नारक्यां निर्वृतौ सत्यां देवमायाविमोहितः॥ इति। ३।३०।४। गो० ]

४६। सर्वथा दुर्लभं तत्रापि भारते वर्षे कर्मभूमौ सुतरां दुर्लभम्। विवेकाढ्यं तदाढ्यतायोग्यं देहं लब्ध्वा विशेषतश्च द्विजत्वं लब्ध्वा, को विद्वान् देहमात्मसात् आत्माधीनं कृत्वा, अर्थात् स्वयं देहभोगानुगो भवेदित्यन्वयः। रा०।

[ देहं लब्ध्वेति। विवेकाढ्यं विवेकसम्पन्नम्। को विद्वानेवं ज्ञानवान् देहमात्मसात् कृत्वा आत्मानं मत्वा भोगानुगो भोगानुवर्त्ती भवेत्। गो० ]

---

1. छ '-ब्धाऽवि-'। 2. ग च-छ '-योऽपि'।

इतः परं वा [1]त्यक्त्वा त्वं सर्वसङ्गं समाश्रय ।
राममेव परात्मानं भक्तिभावेन सर्वदा ॥ ४८ ॥
सीतां समर्प्य रामाय तत्पादानुचरो भव ।
विमुक्तः सर्वपापेभ्यो विष्णुलोकं प्रयास्यसि ॥ ४९ ॥
नो चेद् गमिष्य[2]सेऽधोधः पुनरावृत्तिवर्जितः ।
अङ्गीकुरुष्व मद्वाक्यं हितमेव वदामि ते ॥ ५० ॥
सत्सङ्गतिं कुरु भजस्व हरिं शरण्यं श्रीराघवं मर[3]कतोपलकान्तिकान्तम् ।
सीतासमेतमनिशं धृतचापबाणं सुग्रीवलक्ष्मणविभीषणसेविताङ्घ्रिम् ॥ ५१ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे लङ्काकाण्डे
चतुर्थोऽध्यायः ॥ ४ ॥

---

४८ । नरो० । यदि निर्विशेषं ब्रह्म साक्षात्कर्त्तुमनीश्वरो भवसि तदा पुत्रदारादिषु रतिं विहाय सगुणं ब्रह्म राममेव भक्तियोगेन समाश्रय इत्याह—इतः परमित्यादिना । भक्तिभावेन भक्तियोगेन ।

४९ । नरो० । किञ्च, रामाय सीतां समर्प्य तत्पादानुचरो भव रामपादयोः पश्चात् सर इत्यर्थः । निष्फलेन तत्समाश्रयणेन किमिति चेत्तत्राऽऽह—विमुक्त इत्यादि । अतत्समाश्रयणे किमिति चेत्तत्राऽऽह—विमुक्त इत्यादि ।

५० । नरो० । अतत्समाश्रयणे का हानिरिति चेत्तत्राऽऽह—नो चेदित्यादि । अधोधः अत्यध इत्यर्थः । अत एव पुनरावृत्तिवर्जितः । अहितत्वात्तव वाक्यं नाङ्गीकरोमीति चेत्तत्राऽऽह—अङ्गीकुरुष्वेत्यादि ।

५१ । नरो० । अतिहितैषितया पुनरप्याह—सत्सङ्गतिमित्यादि । सत्सङ्गतिं साधुसङ्गम् । मरकतश्च उत्पलञ्च तयोरिव कान्ता रुचिरा कान्तिर्यस्य तं तथा । एतेन नयनानन्ददायित्वं सूचितम् । सीताऽपि भजनीयेति सूचनाय सीतासमेतमित्युक्तम् । धृतौ चापबाणौ येन तं तथा । एतेन भूभारहारकत्वं सूचितम् । पादसेवैव उचितेति सूचनाय सुग्रीवेत्याद्युक्तम् ।

[ लङ्काकाण्डे चतुर्थाध्यायव्याख्या समाप्ता ॥ ४ ॥ ]

---

1. ग-च 'त्वं त्यक्त्वा', क 'स त्यक्त्वा' । 2. च '-से चाधः' । 3. ग-च '-कतोत्पल-', क '-कतोपम-' ।

# पञ्चमोऽध्यायः

---

[1]श्रीमहादेव उवाच—

श्रुत्वा शुकमुखोद्गीतं वाक्यमज्ञाननाशनम् ।
रावणः क्रोधताम्रा[2]क्षो दहन्निव तमब्रवीत् ॥ १ ॥
अनु[3]जीव्य सुदुर्बुद्धे गुरुवद्भाषसे कथम् ।
शासिताऽहं त्रिजगतां त्वं मां शिक्षन्न लज्जसे ॥ २ ॥
इदानीमेव हन्मि त्वां किन्तु पूर्वकृतं तव ।
स्मरामि तेन रक्षामि त्वां [4]यद्यपि वधोचितम् ॥ ३ ॥
इतो गच्छ विमूढ त्वमेवं श्रोतुं न मे [5]क्षमम् ।
महाप्रसाद इत्युक्त्वा वेपमानो [6]गृहं ययौ ॥ ४ ॥

---

१ । वाल्मीकीये क्रमेण शुकसारणाभ्यां श्रुतवृत्तान्तो रावणः—
भर्त्सयामास तौ वीरौ कथान्ते शुकसारणौ ॥ ६।९।३ ।
इत्युक्तदिशा तावुभावेवाब्रवीत् ।

२ । सुतरां दुर्मते मामुपजीव्य मम सेवको भूत्वेति यावत् । गुरुवत् कथं भाषसे सर्वशिक्षकं मां शिक्षन् शिक्षयन्नित्यर्थः । रा० ।

३ । पूर्वकृतं पूर्वोपकृतम्, यद्यपि त्वं वधोचितस्तथाऽपि तेन पूर्वोपकारस्मरणेन त्वां रक्षामीत्यन्वयः । रा० ।

इदानीमेव हन्मि त्वामित्यत्रापि वाल्मीकीये शुकसारणयोर्द्वयोरेव ग्रहणम् । तथाच—

राजरोषपरामृष्टा न तिष्ठन्त्यपराधिनः ।
वधेयं खल्विमौ पापौ शत्रुपक्षप्रशंसकौ ॥
यदि पूर्वोपकारैर्मे न क्रोधो मृदुतां व्रजेत् ।
अद्य वैवस्वतं देवं पश्येतां प्रेषितौ मया ॥
गच्छतं लघु दुर्वृत्तौ सन्निकर्षादितो मम ।
उभौ न द्रष्टुमिच्छामि युवामप्रियवादिनौ ॥ इति ६।९।१०—१२ ।

४ । एवंविधं वाक्यम्, गृहं वैखानसाश्रमम् । रा० ।

---

1. क-ख-घ-पुस्तकेषु 'श्रीमहादेव उवाच' इति नास्ति । 2. क '-चक्ष दहन्निदम-' । 3. ग-च-छ '-जीवसि दु-' । 4. च 'यद्यसि' । 5. च 'क्षमः' । 6. ग-च-छ 'ययौ गृहम्' ।

शुकोऽपि ब्राह्मणः पूर्वं ब्रह्मिष्ठो ब्रह्मवित्तमः ।
वानप्रस्थविधानेन वने ति[1]ष्ठन् स्वकर्मकृत् ॥ ५ ॥

देवा[2]नामभिवृद्ध्यर्थं विनाशाय सुरद्विषाम् ।
चकार यज्ञवित[3]तिमविच्छिन्नां महामतिः ॥ ६ ॥

राक्षसानां विरोधोऽभूच्छुको देवहितोद्यतः ।
वज्रदंष्ट्र इति ख्यातस्तत्रैको राक्षसो महान् ॥ ७ ॥

अन्तरं प्रेप्सुरातिष्ठच्छुकापकरणोद्यतः ।
कदाचिदागतोऽगस्त्यस्तस्याऽऽश्रमपदं मुनेः ॥ ८ ॥

तेन सम्पूजितोऽगस्त्यो भोजना[4]र्थं निमन्त्रितः ।
गते [5]स्नातुं मुनौ कुम्भसम्भवे प्राप्य [6]चान्तरम् ॥ ९ ॥

अगस्त्यरूपधृक् सोऽपि राक्षसः शुकमब्रवीत् ।
यदि दास्य[7]सि मे ब्रह्मन् भोजनं देहि सामिषम् ॥ १० ॥

---

८। नरो०। अन्तरं छिद्रम् ।

---

रावणसकाशात् प्रत्यावर्त्तनमपि वाल्मीकीये उभयोरेव, तच्च जयशब्देन रावणमभिनन्द्य । तथाच—

एवमुक्तौ तु सव्रीडावुभौ तौ शुकसारणौ ।
रावणं जयशब्देन प्रतिनन्द्य विनिर्गतौ ॥ इति ।६।५।१४ ।

५। अत्रोक्तमिदं शुकाख्यानं प्राच्ये पाश्चात्त्ये च वाल्मीकीये न दृश्यते ।

६। अविच्छिन्नां यज्ञवितर्ति मध्ये विच्छेदरहितं यज्ञविस्तरम् । रा० ।

७। शुको देवहितोद्यत इति ज्ञात्वा राक्षसानां शुके विरोधो द्वेष्यत्वबुद्धिरभूत् । शुकापकरणे शुकस्यापकारे उद्यतः शुकापकारमातिष्ठत् प्रतिज्ञातवान् । परस्मैपदमार्षम् । रा० ।

८। तस्य शुकस्य ।

९। तेन शुकेन सम्पूजितोऽगस्त्यः भोजनार्थ निमन्त्रितोऽभवत् इति शेषः । अन्तरम् अवकाशं प्राप्य अगस्त्यरूपधृक् सोऽपि वज्रदंष्ट्रनामा राक्षसः एत्य इति शेषः, शुकमब्रवीदित्यन्वयः ।

---

1. ग-च '-ष्ठंश्च क-', छ '-ष्ठति ध-'। 2. ग-च-छ '-नामपि ह-'। 3. छ '-तिं प्रवि-'। 4. छ '-र्थे'। 5. च 'स्नानं'। 6. च 'सत्वरम्'। 7. छ '-ति'।

बहुकालं न भुक्तं मे मांसं छागाङ्गसम्भवम् ।
तथेति कारयामास मांस[1]भोज्यं [2]स विस्तरम् ॥ ११ ॥

उपविष्टे मुनौ भोक्तुं राक्षसोऽतीव सुन्दर[3]म् ।
शुकभार्यावपुर्धृत्वा तां चान्तर्मोहयन् खलः ॥ १२ ॥

नरमांसं [4]ददौ तस्मै सुपक्वं बहुविस्तरम् ।
दत्त्वैवान्तर्दधे रक्षस्ततो दृष्ट्वा चुकोप सः ॥ १३ ॥

[5]अमेध्यं मानुषं मांसमगस्त्यः शुकमब्रवीत् ।
अ[6]भक्ष्यं मानुषं मांसं दत्तवानसि दुर्मते ।
मह्यं [7]त्वं राक्षसो भूत्वा तिष्ठ त्वं मानुषाशनः ॥ १४ ॥

इति शप्तः पुरो भीत्या प्राहागस्त्यं मुने त्वया ।
इदानीं भाषितं [8]मेऽद्य मांसं देहीति विस्तरम् ।
तथैव दत्तं मे देव किं मे शापं प्रदास्यसि ॥ १५ ॥

श्रुत्वा शुकस्य वचनं मुहूर्त्तं ध्यानमास्थितः ।
[9]ज्ञात्वा रक्षःकृतं सर्वं ततः प्राह शुकं सुधीः ॥ १६ ॥

---

११ । स शुकः मांसभोज्यं कारयामास पत्न्येति शेषः ।

१२ । ताञ्च शुकभार्यां चान्तस्तच्छरीरान्तर्मायया प्रविश्य मोहयन् पाकशालातो बहिर्निःसरणाक्षमां कुर्वन् । रा० ।

राक्षसो वज्रदंष्ट्रः सुन्दरं शुकभार्यावपुः धृत्वा सुन्दरे शुकभार्यावपुषि प्रविश्येत्यर्थः । अन्तस्तां मोहयन् कर्त्तव्याकर्त्तव्यविवेकविधुरां कुर्वन् स्वकर्त्तव्ये तत्कर्त्तव्यत्वप्रकारकं ज्ञानं तस्या जनयन् इत्यर्थः, तस्मै अगस्त्याय नरमांसं ददौ दत्त्वा अन्तर्दधे च इति परेणान्वयः ।

१३-१४ । स अगस्त्यः अमेध्यं मानुषं मांसं दृष्ट्वा चुकोप कुपितश्च सन्नगस्त्यः शुकमब्रवीत् । यतस्त्वं मह्यं मानुषं मांसं दत्तवानसि अतस्त्वं मानुषाशनो राक्षसो भूत्वा तिष्ठ । रा० ।

१५ । अद्य मे विस्तरयुतं मांसं देहीति इदानीमुक्तं तथैव मे मया दत्तमतो मे मम शापं किं प्रदास्यसि । आर्षमेतत् । रा० ।

पुरः स्वसम्मुखमेव मुनिना इति शप्तः स भीत्या प्राह ।

---

1. ग-च-छ 'मांसं भो-' । 2. च-छ 'सुवि-' । 3. च '-रः' । 4. च-छ 'तदा' । 5. छ-पुस्तके इदमर्द्धं नास्ति । 6. छ 'मेध्य' । 7. क-ख-च-छ 'तं' । 8. छ 'तेऽद्य' । 9. छ 'ज्ञातं' ।

तवापकारिणा सर्वं राक्षसेन कृतन्त्विदम् ।
अविचार्यैव [1]मे दत्तः शापस्ते मुनिसत्तम ।
तथाऽपि मे वचोऽमो[2]घमेवमेव भविष्यति ॥ १७ ॥
राक्षसं वपुरास्थाय रावणस्य सहायकृत् ।
तिष्ठ तावद् यदा रामो दशाननवधाय हि ।
आगमिष्यति लङ्कायाः समीपं वानरैः सह ॥ १८ ॥
प्रेषितो रावणेन त्वं चारो भूत्वा रघूत्तमम् ।
दृष्ट्वा शापाद्विनिर्मुक्तो बोधयित्वा च रावणम् ।
तत्त्वज्ञानं ततो मुक्तः परं पदमवाप्स्यसि ॥ १९ ॥
इत्युक्तोऽगस्त्यमुनिना शुको ब्राह्मणसत्तमः ।
बभूव राक्षसः सद्यो रावणं प्राप्य संस्थितः ॥ २० ॥
इदानीं [3]चाररूपेण दृष्ट्वा रामं सहानुजम् ।
रावणं तत्त्वविज्ञानं बोधयित्वा पुनर्द्रुतम् ।
पूर्ववद् ब्राह्मणो भूत्वा स्थितो वैखानसैः सह ॥ २१ ॥
ततः समा[4]गमद्वृद्धो माल्यवान् राक्षसो महान् ।
बुद्धिमान् नीतिनिपुणो राज्ञो मातुः [5]प्रियः पिता ॥ २२ ॥

---

१७। यतो मे वचोऽमोघमनिष्फलमत एवमेव मदुक्तं भविष्यति । रा० ।

१८। तदेव वदन् शापान्तमाह—राक्षसं वपुरिति । रा० ।

१९। तदागमनोत्तरं रावणेन प्रेषितश्चारो भूत्वा रघूत्तमं दृष्ट्वा शापाद्विनिर्मुक्तः रक्षःस्वभावाद्विनिर्मुक्तः रावणं तत्त्वज्ञानं बोधयित्वा च ततो मुक्तः मत्समीपाद गच्छेति तेन त्यक्तः, परं पदं स्वं वैखानसं पदम् । रा० ।

२१। शुकस्य ब्राह्मणत्वं वैखानसैः सहावस्थानञ्च वाल्मीकीयविरुद्धम्, तत्राग्रेऽपि तस्य रावणकार्ये नियुक्तिदर्शनात् । तथाच पुररक्षाविधानावसरे—

उत्तरस्यां दिशि तथा व्यादिष्टौ शुकसारणौ । ६।१२।१९

इत्यादिना उत्तरद्वाररक्षायां तस्य नियोगः ।

वेगदर्शी शुकेनाऽऽजौ संप्रहारमथाकरोत् । ६।१८।२०

इत्यादिना च वेगदर्शिना हरिणा तस्य युद्धम् ।

२२। ततः शुकापसरणात् परम् । वाल्मीकीये शुकसारणयोरपसरणात् परं पुनश्चार-

---

1. क 'यद्दत्तः' । 2. च '-घं ब्रह्मन्नेव' । 3. क 'ब्रह्मरूपेण' । 4. च '-गतो ह-' । 5. क 'पितुः' ।

प्राह तं राक्षसं वीरं प्रशान्तेनान्तरात्मना ।
शृणु राजन् वचो मेऽद्य श्रुत्वा कुरु [1]यथेप्सितम् ॥ २३ ॥
यदा प्रविष्टा नगरीं[2] जानकी रामवल्लभा ।
तदादि पुर्यां दृश्यन्ते निमित्तानि दशानन ।
घोराणि नाशहेतूनि तानि मे वदतः शृणु ॥ २४ ॥

२४ । नरो० । तदादि यथा स्यात् । निमित्तानि अनिष्टसूचकानि । नाशहेतूनि नाशसूचकानि ।

कार्यार्थं शार्दूलादीनामाह्वानं तेषामागमनं चारकर्म च । एतानि च युद्धकाण्डस्य पञ्चम-षष्ठयोः सर्गयोः । अतः परं रावणस्य मायाशिरोदर्शनम् ।

स चिन्तयित्वा निपुणं निश्चित्य च बलाबलम् ।
विसृज्य सचिवांश्चैव प्रविवेश स्वमालयम् ॥
ततो राक्षसमाहूय विद्युज्जिह्वं महाबलम् ।
मायाविनं महाकायं प्राविशद् यत्र मैथिली ॥
तमागतं महामायमब्रवीद् राक्षसाधिपः ।
मोहयिष्याम्यहं सीतां मायया जनकात्मजाम् ॥
शिरो मायामयं कृत्वा मुहूर्त्तेन निशाचर ।
मां त्वं समुपतिष्ठेथा महच्च सशरं धनुः ॥ ६।७।४-७

इत्युक्तरीत्या मायामुण्डनिर्माणोपदेशः ।

विद्युज्जिह्वो गृहीत्वाऽथ शिरस्तच्च शरासनम् ।
प्रणामं शिरसा कृत्वा रावणस्याग्रतः स्थितः ॥
तमब्रवीत्ततो राजा रावणो राक्षसं स्थितम् ।
विद्युज्जिह्वं महाघोरं समीपपरिवर्त्तिनम् ॥
अग्रतः कुरु सीतायाः शीघ्रं दाशरथेः शिरः ।
अवस्थां पश्चिमां भर्त्तुः कृपणा साधु पश्यतु ॥
एवमुक्तः स दुष्टात्मा तच्छिरः प्रियदर्शनम् ।
पुरो निक्षिप्य सीतायाः क्षिप्रमन्तरधीयत ॥ ६।७।४२-४६

इत्यादिना च सीतायै दर्शनम् । ततश्च सरमायाः सीताप्रबोधः । ततो माल्यवतो वाक्यम् ।

२४ । तदादि जानकीप्रवेशदिनादारभ्य पुर्यां लङ्कायां घोराणि निमित्तानि उत्पाता दृश्यन्ते इत्यन्वयः । घोरत्वविवरणं नाशहेतूनीति । रा० ।

1. क 'यथोचितम्' । 2. क-ख '-री' ।

[1]खरास्तनितनिर्घोषा मेघा[2] अतिभयङ्कराः ।
शोणि[3]तेनाभिवर्षन्ति लङ्कामुष्णेन सर्वदा ॥ २५ ॥
[4]रुदन्ति देवलिङ्गानि स्विद्यन्ति प्रचलन्ति च ।
कालिका [5]पाण्डरैर्दन्तैः प्रहस[6]न्त्यग्रतः [7]स्थिता ॥ २६ ॥
खरा गोषु प्रजायन्ते [8]मूषका नकुलैः सह ।
मार्जारेण तु [9]युध्यन्ते पन्नगा गरुडेन [10]तु ॥ २७ ॥
करालो विकटो मुण्डः पुरुषः कृष्णपिङ्गलः ।
कालो गृहाणि सर्वेषां काले काले त्ववेक्षते ॥ २८ ॥

---

नरो० । स्तनितमिव निर्घोषः शब्दो येषां ते तथा । स्तनितं मेघगर्जितम् ।
नरो० । गरुडपदञ्चात्र सर्पभक्षकपक्षिपरम् ।
नरो० । विकटत्वे हेतवः करालत्वादयः । करालो दन्तुरः । मुण्डो
कृष्णश्चासौ पिङ्गलश्चेति कृष्णपिङ्गलः । यद्वा कृष्णमिश्रः पिङ्गलः कृष्णपिङ्गलः,

---

नाशहेतूनि घोराणि निमित्तानि दृश्यन्ते । वदतो मे मत्तः तानि शृणु,
।

खरं कठोरं स्तनितं गर्जितं निर्घोषः सवज्रपातः शब्दश्च येषां ते । रा० ।

खरातिस्तनिता मेघा घोराः प्रतिभयङ्कराः ।
शोणितेनाभिवर्षन्ति लङ्कामुष्णेन सर्वतः ॥ इति ६।११।२७ ।

देवलिङ्गानि देवस्थानभूताः प्रतिमाः स्विद्यन्ति स्वेदवन्ति भवन्ति । अग्रतः
स्थिता कालिका पाण्डुरैः दन्तैः प्रकाशितैर्हसति । सर्वान् भक्षयामीत्याशयेन

ाति । वाल्मीकीयेऽपि—

प्रतिमाश्च प्रकम्पन्ते स्विद्यन्ति च हसन्ति च । इति ६।११।२८ ।

नकुलसहिता मूषका मार्जारभक्ष्या मार्जारैर्युध्यन्ति । तेन रक्षोभक्ष्येभ्यो वानर-
रक्षसां भयमिति सूचितम् । रा० ।

---

'खर-' । 2. ग-च '-घा प्रति-' । 3. क '-तान्यपि व' । 4. ग-च-क 'सीदन्ति' ।
6. च '-न्त्यग्रत.' । 7. क 'सदा' । 8. ग-च-क 'मूषिका' । 9 क ख-घ-च

एतान्यन्यानि [1]दृश्यन्ते निमित्तान्युद्भवन्ति च ।
अतः कुलस्य रक्षार्थं शान्तिं कुरु दशानन ।
सीतां सत्कृत्य सधनां रामायाऽऽशु प्रयच्छ भोः ॥ २९ ॥
रामं नारायणं विद्धि विद्वेषं त्यज राघवे ।
यत् पादपोतमाश्रित्य ज्ञानिनो भवसागरम् ।
तरन्ति भक्ति[2]पूतात्मा ततो रामो न मानुषः ॥ ३० ॥

---

३० । नरो० । रामस्य नारायणत्वं कुतो ज्ञातमित्यपेक्षायामाह—यत् पादपोतमित्यादि । यद् यस्मात् पाद एव पोतः 'डिङ्गे'ति ख्यातस्तं तथा । यद्वा यदिति तत इति च पदं साकाङ्क्षम् ।

---

२८ । कालो मृत्युस्वरूपः । काले काले सायं प्रातश्चेत्यर्थः । रा० ।

अत्र वाल्मीकीये—

करालो विकटो मुण्डः पुरुषः कृष्णपिङ्गलः ।
कालो गृहाणि सर्वाणि काले कालेऽन्ववेक्षते ॥ इति । ६।११।४३ ।

२९ । एतान्युक्तानि एवंजातीयकान्यन्यानि च जातानि दृश्यन्ते, अन्यान्युद्भवन्ति जायन्ते । शान्तिमुत्पातसूचितारिष्टनाशकं कर्म, तदेव कर्माऽऽह—सीतामिति । रा० ।

सीतामिति । रामं सत्कृत्य स्तवनादिभिरित्यर्थः, सधनां सोपायनामित्यर्थः, सीतां प्रयच्छ । यद्वा सधनां विभूषणादिभिरलङ्कृतां सीतां सत्कृत्य स्वापराधक्षमापनादिभिः प्रसन्नीकृत्येत्यर्थः ।

३० । रामस्य नारायणत्वे गमकमाह—यत् पादेति । पोतो नौका । ज्ञानिनस्तरन्तीत्यन्वयः । भक्त्या पूतं पवित्रमन्तः अन्तःकरणं येषां ते भक्तिपूतान्ताः । आर्षो रेफलोपः । रा० ।

रामं नारायणमिति ।

विष्णुं राममहं मन्ये मानुषं छद्मरूपिणम् ।
न हि मानुषमात्रोऽसौ राघवो दृढविक्रमः ॥
येन बद्धः समुद्रेऽस्मिन् स सेतुः परमाद्भुतः ॥ ६।११।३३ ।

इत्यादिना वाल्मीकीयेऽपि विष्णोरंशभूतस्य रामस्य मायामानुषत्वमुपपादितम् । अस्तु वा रामो नारायणः, तेन किमस्माकमित्याह—विद्वेषमिति । भगवति विद्वेषः सर्वामङ्गलजनक इत्यवश्यमेव सर्वेषां त्याज्य इत्याशयः । यद् यस्मात् पादपोतं रामपादपोतमाश्रित्य

---

1. छ 'दृष्टानि' । 2. ग-च '-पूतासो', घ '-पूतान्तास-' छ '-संयुक्तास-' ।

भजस्व भक्तिभावेन रामं सर्वहृदालयम् ।
यद्यपि त्वं दुराचारो भक्त्या पूतो भविष्यसि ।
मद्वाक्यं कुरु राजेन्द्र कुलकौशलहेतवे ॥ ३१ ॥
तत्तु माल्यवतो वाक्यं हित[1]मुक्तं दशाननः ।
न मर्षयति दुष्टात्मा कालस्य वशमागतः[2] ॥ ३२ ॥
मानवं कृपणं राममेकं शाखामृगाश्रयम् ।
समर्थं मन्यसे [3]केन हीनं पित्रा मुनिप्रियम् ॥ ३३ ॥

---

३१ । नरो० । कुलकौशलहेतवे कुलकल्याणकारणाय इत्यर्थः ।

३३ । नरो० । मानवं मानुषम् अत एव कृपणं क्षुद्रं तत्रापि एकमसहायम् । बहवो वानरा विद्यन्ते कथमसहायत्वमिति चेत्तत्राऽऽह—शाखामृगाश्रयमिति । शाखामृगपदोपादानेन वानराणां प्लवमात्रनिपुणत्वं सूचितम् । केनेति हेतौ तृतीया । स्वपुरे बहवो युद्धनिपुणाः सहाया

---

ज्ञानिनस्तत्त्वदर्शिनो भवसागरं संसारवारिधिं तरन्ति तत एव रामो मानुषो न । मानुषस्य भवसागरोत्तारणे शक्तिर्न विद्यते इति भावः ।

३१ । सर्वेषां हृदयमालयः स्थानं यस्य तं सर्वान्तर्यामिणमित्यर्थः । भक्त्येत्यस्य तथा-पीत्यादिः । भक्त्या रामभक्त्या । कुलस्य कुशलमेव कौशलं तद्धेतवे तन्निमित्तमित्यर्थः । रा० ।

ननु भवतु रामो नारायणः भवतु वा सर्वहृत्स्थः, तस्य भजनमात्रेणैव किं दुराचारस्य मम इष्टसिद्धिः स्यादित्याह—भक्तिभावेनेति । भक्ताधीनो भगवान्, स च शिष्टदुष्टादिकं न गणयति, ये च तं भक्त्या भजन्ति त एव तदनुग्रहेण पूता भवन्ति, अतो भक्त्या भजने तथा दुराचारोऽपि त्वं पूतो भविष्यसीत्याशयः ।

मद्वाक्यमित्यनेन स्वोपदेशदार्ढ्यं प्रदर्शितम् । कथं तद्वाक्यं करोमीति चेदाह—कुलकौशल-हेतवे इति । एतेन अन्यथा अवश्यमेव ते कुलनाशः स्यादित्यपि ध्वनितम् ।

३२ । न मर्षयति न हितत्वेन गृह्णातीत्यर्थः । रा० ।

समार्थः प्रायः समशब्दश्च श्लोको वाल्मीकीये—

तत्तु माल्यवतो वाक्यं हितयुक्तं दशाननः ।
न मर्षयति दुर्बुद्धिः कालस्य वशमागतः ॥ इति ।६।१२।१ ।

३३ । अमर्षमेव प्रकटयति—मानवमिति । कृपणमस्मदादिदयापात्रम् । शाखामृगा वानराः । मुनिप्रियत्वेनातिनिःसारत्वं सूचितम् । रा० ।

---

1. ग '-युक्तं' । 2. अतः परं ग-च-पुस्तकयोः 'रावण उवाच' इत्यधिकम् । 3. क 'तेन' ।

प्रासादाग्रे समासी[1]नः पश्यन् वानरसैनिकान् ।
युद्धा[2]यायोजयत् [3]सर्वराक्षसान् समुपस्थितान् ॥ ३६ ॥
रामोऽपि धनुरादाय लक्ष्मणेन समा[4]हृतम् ।
दृष्ट्वा रावणमासीनं कोपेन कलुषीकृ[5]तः ॥ ३७ ॥
किरीटिनं समासीनं मन्त्रिभिः परिवेष्टितम् ।
शशाङ्कार्द्धनिभेनैव बाणेनैकेन राघवः ॥ ३८ ॥
श्वेतच्छत्रसहस्राणि किरीटदशकं तथा ।
चिच्छेद निमिषार्द्धेन तदद्भुतमिवाभवत् ॥ ३९ ॥
लज्जितो रावणस्तूर्णं विवेश भवनं स्वकम् ।
आहूय राक्षसान् सर्वान् प्रहस्तप्रमुखान् खलः ।
वानरैः सह युद्धाय [6]नोदयामास सत्वरः[7] ॥ ४० ॥

---

३७ । नरो० । कलुषीकृत आविलीकृतो व्याप्त इत्यर्थः ।

---

पश्चिमायां पुरद्वारि पुत्रमिन्द्रजितं तथा ।
व्यादिदेश महामायं राक्षसैर्बहुभिर्वृतम् ॥
उत्तरस्यां दिशि तथा व्यादिष्टौ शुकसारणौ ।
स्वयञ्चात्र भविष्यामि मन्त्रिणस्तानुवाच सः ॥
राक्षसन्तु विरूपाक्षं महावीर्यपराक्रमम् ।
मध्यमेऽस्थापयद् गुल्मे बहुभिः सह राक्षसैः ॥ इति । ६।१२।१६-२० ।

अतः परं तत्र सुवेलारोहणम्, तत् लङ्काकाण्डीयचतुर्दशसर्गे, ततो रामादीनां लङ्कादर्शनम्, तत् पञ्चदशे, ततश्च दौत्येन अङ्गदप्रेरणम्, तच्च षोडशे । पाश्चात्त्ये पुनरङ्गदप्रवेशात् पूर्वं सुग्रीव-रावणयोः कौतूहलोद्दीपकं किञ्चिद्युद्धं दृश्यते । तच्च पाश्चात्त्ये लङ्काकाण्डे एकचत्वारिंशसर्गे ।

३६ । प्रासादाग्रे समासीनो रावण इत्यर्थः । वाल्मीकीयेऽपि—

ततः क्रोधपरीतात्मा रावणो राक्षसाधिपः ।
निर्याणं सर्वसैन्यानां द्रुतमाज्ञापयत्तदा ॥ इति ।६।१७।२४।

३७ । अत्रोपक्रान्तमिदं रामरावणयोर्युद्धं वाल्मीकीये न दृश्यते ।

३९ । श्वेतच्छत्रसहस्राणि अतिमहत्त्वाद्देहस्यानेकच्छत्रधारणा । रा० ।

४० । राक्षसवानराणामिदं युद्धं द्वन्द्वयुद्धेति नाम्ना वाल्मीकीये लङ्काकाण्डे अष्टादशसर्गे दृश्यते ।

---

1. ग-च-छ '-नोऽपश्यद-' । 2. छ '-य योजयन्' । 3. छ 'सर्वान् रा-' । 4. ग '-हृत-' । 5. च '-तम्' । 6. ग-च-छ 'चोद-' । 7. ग-च 'रम्' ।

ततो भेरीमृदङ्गाद्यैः पणवानकगोमुखैः ।
महिषोष्ट्रैः खरैः सिंहैर्द्वीपिभिः कृतवाहनाः ॥ ४१ ॥
खड्गशूलधनुःपाशयष्टितोमरशक्तिभिः ।
[1]लक्षिताः सर्वतो लङ्कां प्रतिद्वारमुपाययुः ॥ ४२ ॥
तत्पूर्वमेव रामेण [2]नोदिता वानरर्षभाः ।
उद्यम्य [3]गिरिशृङ्गाणि शिखराणि महान्ति च ॥ ४३ ॥
तरूंश्चोत्पाट्य विविधान् युद्धाय हरियूथपाः ।
प्रेक्षमाणा रावणस्य तान्यनीकानि भागशः ।
राघवप्रियकामार्थं लङ्कामारुरुहुस्तदा ॥ ४४ ॥
ते द्रुमैः पर्वताग्रैश्च मुष्टिभिश्च प्लवङ्गमाः ।
ततः सहस्रयू[4]थाश्च कोटियूथाश्च यूथपाः ।
कोटीश[5]तयुताश्चान्ये रुरुधुर्नगरं भृशम् ॥ ४५ ॥
आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः ।
रामो जयत्यतिबलो लक्ष्मणश्च महाबलः ॥ ४६ ॥

---

४२ । नरो० । लक्षिता उपलक्षिताः ।

४३ । नरो० । महान्ति चेति चकारोऽमहान्तीति समुच्चिनोति, तेन महत्त्वामहत्त्वयोर्विशेषणयोर्भेदान्न पौनरुक्त्यम् ।

४५ । नरो० । सहस्रेण उपलक्षितं यूथं येषां ते सहस्रयूथाः । कोट्या उपलक्षितं यूथं येषां ते कोटियूथाः । अन्ये यूथपाः ।

---

४१ । कृतवाहनास्तद्वहनीयरथारूढाः । रा० ।

४२ । खड्गादिभिरायुधैर्लक्षिताः, तादृशायुधधरा इत्यर्थः । रा० ।

४३ । शृङ्गाणि सूक्ष्मोन्नतभागाः, शिखराणि ततो विपुलानि । युद्धाय स्थिता इति शेषः । रा० ।

४४ । रावणस्य भागशः तत्तत्प्रदेशं स्वस्वरक्षणीयांशत्वेन गृहीत्वा स्थितानि इति शेषः । रा० ।

४५ । द्रुमैरित्याद्यैरुपलक्षिता इति शेषः । सहस्रयूथाः सहस्रसंख्येया यूथा येषाम् । रा० ।

४६ । [ आप्लवन्तः प्लवन्तश्चेति । आ सम्यक् प्लवन्त उत्फालयन्त आकाशादौ । प्लवन्तः भूमौ उत्फालयन्तः । गो० ]

---

1. क-पुस्तके अयं श्लोको नास्ति । 2. ग-च 'चोदि-' । 3. ग 'बलिनः सर्वे' । 4. क '-थैश्च' । 5. क '-शतायु-' ।

राजा जयति सुग्रीवो राघवे[1]णानुपालितः ।
इत्येवं घोषयन्तश्च समं युयुधिरेऽरिभिः ॥ ४७ ॥
हनूमानङ्गदश्चैव कुमुदो नील एव च ।
नलश्च शरभश्चैव मैन्दो द्विविद एव च ॥ ४८ ॥
जाम्बवान् दधिवक्त्रश्च केशरी तार एव च ।
अन्ये च बलिनः सर्वे यूथपाश्च प्लवङ्गमाः ।
द्वारा[2]ण्युत्प्लुत्य लङ्कायाः सर्वतो [3]रुरुधुर्भृशम् ॥ ४९ ॥
तदा वृक्षैर्महाकायाः पर्वताग्रैश्च वानराः ।
[4]निजघ्नुस्तानि रक्षांसि नखैर्दन्तैश्च [5]वेगिताः ॥ ५० ॥
राक्षसाश्च [6]तदा भीमा द्वारेभ्यः सर्वतो रुषा ।
निर्गत्य भिन्दिपालैश्च खड्गैः शूलैः परश्वधैः ॥ ५१ ॥
निजघ्नुर्वानरानीकं महाकाया महाबलाः ।
राक्षसांश्च तथा जघ्नुर्वानरा जितकाशिनः ॥ ५२ ॥
तथा बभूव समरो मांस[7]शोणितकर्दमः[8] ।
रक्षसां वानराणाञ्च सम्बभूवाद्भुतोपमः ॥ ५३ ॥
ते हयैश्च गजैश्चैव रथैः काञ्चनसन्निभैः ।
रक्षोव्याघ्रा युयुधिरे नादयन्तो दिशो दश ॥ ५४ ॥
राक्षसाश्च कपीन्द्राश्च परस्परजयैषिणः ।
राक्षसान् वानरा जघ्नुर्वानरांश्चैव राक्षसाः ॥ ५५ ॥

---

५१ । नरो० । भिन्दिपालैः 'पातकाण्ड' इति ख्यातैः । परश्वधैः कुठारैः ।

५३ । नरो० । अद्भुता उपमा यत्र स तथा ।

५४ । नरो० । रक्षोव्याघ्रा राक्षसश्रेष्ठाः ।

---

५१ । निर्गत्य बलेन वानरांस्ततो निःसार्य स्वयञ्च बहिरागत्येत्यर्थः । रा० ।

५३ । अद्भुतोपमः अद्भुतान्युपमीयन्तेऽनेन सः सकलाद्भुतयुद्धोपमानभूतः समरो बभूवेत्यन्वयः । रा० ।

---

1. ग-छ '-णाभि-' । 2. ग-च-छ '-ण्याप्लुत्य' । 3 छ 'युयुधु-' । 4. घ 'विज-' । 5. ग-च 'दंशिताः' । 6. छ 'तथा' । 7. छ '-कर्दमशोणितैः' । 8. ग-च '-मैः' ।

रामेण विष्णुना[1] दृष्टा हरयो द्विविजांश[2]जाः ।
बभूवुर्बलिनो हृष्टास्तदा पीतामृता इव ॥ ५६ ॥
[3]सीताभिमर्षपापेन रावणेनाभिपालितान् ।
हतश्रीकान् [4]हतबलान् राक्षसान् जघ्नुरोजसा ।
चतुर्थांशावशेषेण निहतं राक्षसं बलम् ॥ ५७ ॥
स्वसैन्यं निहतं दृष्ट्वा मेघना[5]दोऽतिरुष्टधीः ।
ब्रह्मदत्तवरः श्रीमानन्तर्धानं गतोऽसुरः ॥ ५८ ॥
सर्वास्त्रकुश[6]लो व्योम्नि ब्रह्मास्त्रेण समन्ततः ।
नानाविधानि शस्त्राणि वानरानीकमर्दयन् ।
ववर्ष शरजालानि तदद्भुतमिवाभवत् ५९ ॥

---

५६। नरो०। द्विविजांशका देवांशकाः ।

५७। नरो०। चतुर्थांशावशेषेणेति, चतुर्थोऽंशोऽवशिष्ट इत्यर्थः ।

५८। नरो०। अतिरुष्टा धीरन्तःकरणं यस्य स तथा। ब्रह्मणा दत्तो वरो यस्मै स तथा ।

५९। नरो०। शरजालानि बाणसमूहान् ।

---

५६। विष्णुदृष्टत्वाद् वानराणां हृष्टत्वं बलित्वञ्च। सीताया दुष्टभावस्पर्शजनितपापवता रावणेन पालितत्वाद्रक्षसां हतश्रीकत्वाद्व्यतिरेकालङ्कारः । रा० ।

५७। चतुर्थांशावशेषेण इत्याद्यत्र वाल्मीकीये न दृश्यते। अत्र वाल्मीकीये रामलक्ष्मणाभ्यां वानरैश्च सह राक्षसानां महदेकं युद्धं वृत्तमिति दृश्यते। तत्र च अङ्गदेन हताश्वो हतसारथिरिन्द्रजित् ततोऽन्तरधीयत। तथाच—

इन्द्रजिच्च रथं त्यक्त्वा हताश्वो हतसारथिः ।
अङ्गदेन महामायस्तत्रैवान्तरधीयत ॥ इति। ६।१९।३९ ।

ततश्च निकुम्भिलायां गत्वा अग्निं हुत्वा तत्प्रसादं लब्ध्वा पुनर्युद्धाय प्रावर्त्तत ।

५९। ब्रह्मास्त्रेण युतानि नानाविधानि शस्त्राणि मुञ्चन्निति शेषः। वानरसेनां पीडयन् रामस्योपरि शरजालानि ववर्ष । रा० ।

---

1. च '-नादिष्टा'। 2. च '-शकाः'। 3. छ 'सीतामर्षाभिपा-'। 4. च 'हत-'। 5. क-ख-घ '-दोऽथ दुष्टधीः', च-छ '-दोऽतिदुष्टधी.', ग '-दोऽतिद्रष्टधीः'। 6. ग-छ '-ली'।

रामोऽपि [1]मानयन् ब्राह्ममस्त्र[2]मस्त्रविदां वरः ।
क्षणं तूष्णीमुवासाथ ददर्श पतितं बलम् ।
वानराणां रघुश्रेष्ठश्च कोपानलसन्निभः ॥ ६० ॥

चापमानय सौमित्रे ब्रह्मास्त्रेणासुरं क्षणात् ।
भस्मीकरोमि मे पश्य बलमद्य रघूत्तम ॥ ६१ ॥

मेघनादोऽपि तच्छ्रुत्वा रामवाक्यमतन्द्रितः ।
तूर्णं जगाम नगरं मायया मायिकोऽसुरः ॥ ६२ ॥

पतितं वानरानीकं दृष्ट्वा रामोऽतिदुःखितः ।
उवाच मारुतिं शीघ्रं गत्वा क्षीरमहोदधिम् ॥ ६३ ॥

---

६१ । नरो० । बलं शक्तिम् ।

६२ । नरो० । अतन्द्रितः अनलसः ।

---

६१ । कुपितश्चाऽऽह—चापमिति । चापहस्तस्यापि क्रोधातिशयेन तद्विस्मरणादिव चाप-मानयेत्युक्तिः । रघूत्तम लक्ष्मण । रा० ।

वाल्मीकीये ब्रह्मास्त्रप्रयोगेच्छा लक्ष्मणस्य न तु रामस्य, तथा च तत्र चक्षुषोरविषये स्थितस्य इन्द्रजितो बाणप्रहारजर्जरितो लक्ष्मणः—

ब्राह्ममस्त्रं प्रयोक्ष्यामि वधार्थं सर्वरक्षसाम् ॥ ६।१९।७१ ।

राममित्युवाच । रामः पुनस्तं

एकस्य रक्षसो हेतोः पृथिव्यां सर्वराक्षसान् ॥
अयुध्यमानान् प्रच्छन्नान् प्राञ्जलीन् समुपस्थितान् ।
पलायमानान् मत्तांश्च न त्वं तान् हन्तुमर्हसि ॥ ६।१९।३८-३९ ।

इत्युक्त्वा प्रत्यषेधत् ।

अत एव ब्रह्मास्त्रभयाद् वक्ष्यमाणस्तस्य लङ्काप्रवेशोऽपि वाल्मीकीये नास्ति । तत्र आकाश-स्थितस्य तस्य रामलक्ष्मणयोर्नागपाशबन्धनम् । (६।२०)

६२ । रामवाक्यं श्रुत्वा भीतः स जगाम मायया‌ऽदृश्यः सन्नेव जगाम । रा० ।

६३ । पतितं वानरानीकमित्याद्यपि वाल्मीकीये न दृश्यते । तत्र शरबन्धेन बद्धौ राम-लक्ष्मणौ मृतौ इति मत्वा इन्द्रजितो लङ्काप्रवेशः, रावणाय रामलक्ष्मणमरणवृत्तान्तनिवेदनम् ।

---

1. क 'मानवान्' । 2. च-छ '-मन्त्र-' ।

तत्र द्रोणगिरिर्नाम दिव्यौषधिसमुद्भवः ।
[1]तमानय[2] द्रुतं गत्वा सञ्जीवय महामते ।
वानरौघान् महासत्त्वान् कीर्त्तिस्ते सुस्थिरा भवेत् ॥ ६४ ॥

आज्ञा प्रमाणमित्युक्त्वा जगामानिलनन्दनः ।
आनीय च गिरिं[3] सर्वान् वानरान् वानरर्षभः ।
जीवयित्वा पुनस्तत्र स्थापयित्वा ययौ द्रुतम् ॥ ६५ ॥

पूर्ववद्भैरवं नादं वानराणां बलौघतः ।
श्रुत्वा विस्मयमापन्नो रावणो वाक्यमब्रवीत् ॥ ६६ ॥

राघवो मे महा[4]न् शत्रुः प्राप्तो देवविनिर्मितः ।
हन्तुं तं समरे शीघ्रं गच्छन्तु मम यूथपाः ॥ ६७ ॥

---

(६।२१), ततश्च रावणेन त्रिजटामन्त्रणं पुष्पकविमानस्थायाः सीताया विसंज्ञयो रामलक्ष्मणयोर्दर्शनम्, त्रिजटया सीताश्वासनञ्च (६।२२-२३), ततश्चैतन्यमधिगच्छतो रामस्य लक्ष्मणार्थे विलापः (६-२४), ततः सुग्रीवगर्जनम् (६।२५), अतः परञ्च द्रोणाचले चन्द्राचले च ओषधिरस्तीति वदतो सुषेणस्य तदानयनपरामर्शः, अन्तरा च वायुरागम्य रामकर्णे—

राम राम महाबाहो आत्मानं स्मर वै हृदा ॥
नारायणस्त्वं भगवान् राक्षसार्थेऽवतारितः ।
स्मर सर्पभुजं देवं वैनेतेयं महाबलम् ॥
स सर्पबन्धाद् घोरात्तु युवां संमोचयिष्यति । ६।२६।८-१० ।

इत्याद्युक्तवान् । ततश्च—

स तस्य वचनं श्रुत्वा राघवो रघुनन्दनः ।
सस्मार गरुडं देवं भुजगानां भयावहम् ॥ ६।२६।१० ।

इति रामस्य वैनतेयस्मरणम् । ततश्च गरुडागमनेन नागपाशविमुक्तिः । तथाच—

समागतमभिप्रेक्ष्य नागास्ते विप्रदुद्रुवुः ।
शररूपास्तदा सर्वे नागा जग्मुर्महीतलम् ॥
यैस्तौ सत्पुरुषौ बद्धौ शरीरस्थैर्महाबलौ ॥ इति ॥ ६।२६।१७ ।

६४ । दिव्यौषधिसमुद्भवः दिव्यौषधीनां समुद्भवो यस्मिन्नित्यर्थः ।

---

1. घ 'समानय' । 2. ग-च '-याद्य त्वं' । 3 ग-च '-रीन्' । 4. ग-च '-ह्यशत्रू रामो' ।

मन्त्रिणो [1]बान्धवाः शूरा ये च मत्प्रिय[2]काङ्क्षिणः ।
सर्वे गच्छन्तु युद्धाय त्वरितं मम शासनात् ॥ ६८ ॥
ये न गच्छन्ति युद्धाय भीरवः प्राणविप्लवात् ।
तान् हनिष्याम्यहं सर्वान् मच्छासनपराङ्मुखान् ॥ ६९ ॥
तच्छ्रुत्वा भयसन्त्रस्ता [3]निर्जग्मू रणकोविदाः ।
अतिकायः प्रहस्तश्च [4]महानादमहोदरौ ॥ ७० ॥
देवशत्रुर्निकुम्भश्च देवान्तकनरान्तकौ ।
अपरे बलिनः सर्वे ययुर्युद्धाय वानरैः ॥ ७१ ॥
एते चान्ये च बहवः शूराः शतसहस्रशः ।
प्रविश्य वानरं सैन्यं ममन्थुर्बलदर्पिताः ॥ ७२ ॥
[5]भूषुण्डैर्भिन्दिपालैश्च बाणैः खड्गैः परश्वधैः ।
अन्यैश्च विविधैरस्त्रैर्निजघ्नुर्हरियूथपान् ॥ ७३ ॥
ते पादपैः पर्वताग्रै[6]र्नख[7]दंष्ट्रैश्च मुष्टिभिः ।
प्राणैर्विमोचयामासुः सर्वराक्षसयूथपान् ॥ ७४ ॥
रामेण निहताः केचित् सुग्रीवेण तथाऽपरे ।
हनूमता चाङ्गदेन लक्ष्मणेन महात्मना ।
यूथपैर्वानराणां ते निहताः सर्वराक्षसाः ॥ ७५ ॥
रामतेजः समा[8]विश्य वानरा बलिनोऽभवन् ।
रामशक्तिविहीनानामेवं शक्तिः कुतो भवेत् ॥ ७६ ॥

---

६८ । मन्त्रिणो ये च बान्धवास्ते सर्वे गच्छन्तु यतस्ते मत्प्रियकाङ्क्षिणः । रा० ।

६९ । प्राणविप्लवात् प्राणनाशभयात् । एवञ्च प्राणनाशे सर्वथा प्राप्ते यशोरक्षणाय युद्धार्थं गमनमेव न्याय्यमिति भावः । रा० ।

७२ । वानराणामिदं वानरम् । तत्सैन्यं प्रविश्य ममन्थुरर्थात् तत्सैन्यमेव । रा० ।

७३ । [ भूषुण्डैर्भिन्दिपालैश्चेति । भूषुण्डा लौहलगुडविशेषाः । यदुक्तम्—

शतघ्नी च चतुर्हस्ता लौहकण्टकमण्डिता ।
भूषुण्डी सर्वतोलौहकण्टकाऽनुक्रमोन्नता ॥ इति ।

भूशण्डेति पाठेऽपि 'शडि रुजायामि'त्यस्य रूपम् । गो० ]

---

1. ग-च 'राक्षसाः' । 2. क '-कारिणः' । 3. 'निजघ्नु-' । 4. क 'महापार्श्व-' । 5. ख-क 'भुशुण्डैभिं-', घ 'भुशुण्डिभि-' । 6. च '-र्नखैर्द-' । 7. घ '-दन्तै-' । 8. ग-च '-वेश्य' ।

सर्वेश्वरः सर्वमयो विधाता मायामनुष्यत्वविडम्बनेन ।
सदा चिदानन्दमयोऽपि रामो युद्धादिलीलां वितनोति मायाम् ॥७७॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे लङ्काकाण्डे
पञ्चमोऽध्यायः ॥ ५ ॥

---

७७। नरो०। सर्वेषामीश्वरो नियन्ता सर्वेश्वरः। मायामनुष्यत्वविडम्बनेन मायया मनुष्यत्वविडम्बनेन, मायया कपटेन मनुष्यानुकरणेनेत्यर्थः। अत्र स्वरूपे त्वप्रत्ययः। संज्ञाशब्दादेरतात्व प्र...विति न नियमः। अन्यथा—

उपाधौ यथा भेदता सन्मणीनां तथा भेदता बुद्धिभेदेषु तेऽपि ।
यथा चन्द्रकाणां जले चञ्चलत्वं तथा चञ्चलत्वं तवापीह विष्णो ॥ १४ ।

इति हस्तामलकभाष्ये भेदतेत्यत्रापि स्वरूपे ताप्रत्ययो न स्यात्।

[ लङ्काकाण्डे पञ्चमाध्यायव्याख्या समाप्ता ॥ ५ ॥ ]

# षष्ठोऽध्यायः

—:*:—

[1]श्रीमहादेव उवाच—

श्रुत्वा युद्धे बलं नष्टमतिकाय[2]मुखं महत् ।
रावणो दुःखसन्तप्तः क्रोधेन महता वृतः ॥ १ ॥

---

१। लङ्काकाण्डेऽस्मिन् ग्रन्थगौरवं परिजिहीर्षुणा ग्रन्थकृता ग्रन्थगतोदान्तानां पौर्वापर्यविधौ तथा स्वातन्त्र्यमवालम्बि यथा वाल्मीकीयेन सहास्य समालोचनमार्गो निरुद्ध इव व्यधायि, कष्टमतः परं यथायथं वृत्तान्तानां साम्यवैषम्ये विनिर्देष्टुम् । इदञ्च रावणनिर्याणं वाल्मीकीयानुसारेणातिकायादिनिधनात् पूर्वमिति विभावयामः । तत्र धूम्राक्षाकम्पनप्रहस्तवधानन्तरमेवेयं युद्धयात्रा सर्वलोकविद्रावकस्य रावणस्य । तथाच प्रहस्तवधानन्तरम्—

प्रहस्तस्य वधं श्रुत्वा रावणो भ्रान्तमानसः ।
राक्षसानादिदेशाऽऽशु राक्षसेन्द्रो महाबलः ॥
कार्या शत्रुषु नावज्ञा यैरिन्द्रबलसूदनः ।
सूदितः सैन्यपालो मे सानुयात्रः सकुञ्जरः ॥
रथैर्हयैर्गजैश्चैव यातुधानैश्च सर्वशः ।
सोऽहं रिपुविनाशाय विजयस्य च वृद्धये ॥
रामलक्ष्मणयोर्वैरं स्वयं निर्यातयामि वै ।
स्वयमेव गमिष्यामि रणशीर्षमतित्वरन् ॥ ६।३३।१-४ ।

इत्याद्युक्त्या स्वयं रावणस्य युद्धगमनम् ।

यश्चैष विन्यस्त इवेन्द्रकल्पो धन्वी रथस्थोऽतिरथोऽतिवीरः ।
विदारयन् वै धनुरुग्रनादम् एषोऽतिकायोऽतिविवृद्धकायः ॥
योऽसौ रथस्थो मृगराजकेतुर्धुन्वन् धनुः शक्रधनुःप्रकाशम् ।
करीव भात्युग्रविवृत्तदंष्ट्रः स इन्द्रजिद्राक्षसराजपुत्रः ॥ ६।३५।९-३० ।

इत्यादिविभीषणसंवादेन इन्द्रजिदतिकाययोरपि रावणेन सहागमनं सुव्यक्तमिति 'निधायेन्द्रजितमि'ति सन्दर्भोऽपि नाऽऽदरणीयः । दृश्यते च तत्रैतन्निर्याणावसरे—

संग्राममभिकाङ्क्षन्तं रावणं श्रुत्य भाविनी ।
तदोत्थाय ययौ देवी नाम्ना मन्दोदरी शुभा ॥

---

1. क-ख-घ-पुस्तकेषु 'श्रीमहादेव उवाच' इति नास्ति । 2. ग-क '-बलं' ।

निधायेन्द्रजितं लङ्कारक्षणार्थं महा[1]द्युतिः ।
स्वयं जगाम युद्धाय रामेण सह [2]राक्षसैः ॥ २ ॥
[3]दिव्यं स्यन्दनमारुह्य सर्वशस्त्रास्त्रसंयुतम्[4] ।
राममेवाभिदुद्राव राक्षसेन्द्रो महाबलः ॥ ३ ॥
वानरान् बहुशो हत्वा बाणैराशीविषोपमैः ।
पातयामास सुग्रीवप्रमुखान् [5]हरियूथपान् ॥ ४ ॥
गदापाणिं महासत्त्वं तत्र दृष्ट्वा विभीषणम् ।
उत्ससर्ज महाशक्तिं [6]मयदत्तां विभीषणे ॥ ५ ॥

---

३ । नरो० । सर्वशस्त्रास्त्रसंयुतमिति । अस्त्रं क्षेपणयोग्यमायुधम्, शस्त्रं तदितरत् ।

---

माल्यवन्तं करे गृह्य यूपाक्षसहितं तदा ।
मन्त्रिभिर्मन्त्रतत्त्वज्ञैस्तथाऽन्यैर्मन्त्रिसत्तमैः ॥ ६।३३।८-९

इत्युक्तरूपोऽत्रागृहीतः कश्चित् प्रबन्धो वाल्मीकीये ।

४ । आशीः सर्पाणां तालुगता जिह्वा, दन्त इत्यन्ये । रा० ।

५ । महासत्त्वं महाबलम् । मयदत्तां मन्दोदरीपित्रा दत्ताम् । रा० ।

उत्ससर्ज रावण इति शेषः । एतदाख्यानमिन्द्रजित्प्रभृतीनां वधात् परं वाल्मीकीये उपनिबद्धम्, तत्प्रकारश्च—

ततस्तु स महाशक्तिं दीप्तामग्निशिखामिव ।
विभीषणाय चिक्षेप राक्षसेन्द्रः प्रतापवान् ॥
अप्राप्तामेव तां बाणैस्त्रिभिश्चिच्छेद राघवः ।
सा पपात त्रिधा भिन्ना शक्तिः काञ्चनमालिनी ॥ इति । ६।८१।२०-२२ ।

ततश्च—

मोक्षितं भ्रातरं दृष्ट्वा लक्ष्मणेन स रावणः ।
लक्ष्मणाभिमुखस्तिष्ठन्निदं वचनमब्रवीत् ॥
मोक्षितस्ते बलश्लाघी यस्मादेव विभीषणः ।
विमुच्य राक्षसं तस्मात्त्वयि शक्तिः पतिष्यति ॥
एषा ते हृदयं भित्त्वा शक्तिर्वर्हिणलक्षणा ।
मद्बाहुपरिघोत्सृष्टा प्राणानादास्यते तव ॥

* * * *

---

1. च '-मतिम्'। 2. क-ख-च 'राक्षसः'। 3. ख 'दिव्यस्यन्द-'। 4. ग '-युतः'। 5. क 'यूथनायकान्'। 6. ग 'यम-'।

तामापतन्तीमालोक्य विभीषणविघातिनीम् ।
दत्ताभयोऽयं रामेण वधार्हो [1]नायमासुरः ॥ ६ ॥
इत्युक्त्वा लक्ष्मणो भीमं चापमादाय वीर्यवान् ।
विभीषणस्य पुरतः स्थितोऽकम्प इवाचलः ।
सा शक्तिर्लक्ष्मणतनुं विवेशामोघशक्तितः ॥ ७ ॥
[2]यावत्यः शक्तयो लोके [3]मायायाः सम्भवन्ति हि ।
तासामाधारभूतस्य लक्ष्मणस्य महात्मनः ।
[4]मायाशक्त्या भवेत् किं वा शेषांशस्य हरेस्तनोः ॥ ८ ॥

---

६ । नरो० । दत्तमभयं यस्मै स तथा । असुर एव आसुरः, असुरस्यायमासुरो वा । यद्वा आः कोपे, सन्धिरत्र आर्षः । तथाचामरः 'आस्तु स्यात् कोपपीडयोरि'ति ।

७ । नरो० । स्थितोऽकम्प इवाचल इत्यनेन अकातरत्वमुक्तम् । अमोघशक्तितोऽव्यर्थसामर्थ्यात् ।

८ । नरो० । अंशांशिनोरभेदमङ्गीकृत्याऽऽह—यावत्य इत्यादि ।

---

इत्येवमुक्त्वा तां शक्तिमष्टघण्टां महास्वनाम् ।
मयेन मायाविहिताममोघां शत्रुनाशिनीम् ॥

* * * *

इत्येवं ध्यायतस्तस्य राघवस्य महात्मनः ।
न्यपतत् सा महावेगा लक्ष्मणस्य महोरसि ॥ इत्यादि । ६।८०।२८-३६ ।

अनेन च वृत्तेनेयं शक्तिर्विभीषणे निक्षिप्तायाः शक्तेर्भिन्नेति प्रतिभाति ।

६ । विभीषणविघातिनीं तत्प्राणहराम् । रामदत्ताभयत्वादयमसुर एवाऽऽसुरः वधार्हो न, शक्तिश्च मादृशातिरिक्तेष्वमोघैवेति । रा० ।

[ असुर एव आसुरः, वायसचाण्डालवत् । गो० ]

अयं विभीषणो रामेण दत्ताभय इति न वधार्हः, अतोऽयं मया रक्ष्य इति भावः ।

७ । उक्त्वा विचार्य । विभीषणपुरतस्तं पृष्ठतः कृत्वा शक्तिसम्मुखे स्थितः । अमोघशक्तितः अमोघसामर्थ्यवत्त्वात् । रा० ।

अत्र वाल्मीकीयेऽप्यस्ति कश्चित् शक्तिक्षेपः, सा च शक्तिर्लक्ष्मणस्य भुजान्तरं विवेश । तथाच—

तां दीप्यमानां रघुनन्दनस्तदा जघान बाणैरनलप्रकाशैः ।
तथाऽपि सा तस्य विवेश शक्तिर्भुजान्तरं दाशरथेर्विशाला ॥ इति । ६।३६-८९ ।

---

1. च 'नासुरोऽपि च', क 'नाव सोऽसुर.' । 2. घ-क 'यावन्त:' । 3. च 'मायया' । 4. ग 'यमशक्त्या', च 'मयशक्त्या' ।

तथाऽपि मानुषं भावमापन्नस्तदनुव्रतः ।
मूर्च्छितः पतितो भूमौ तमादातुं दशाननः ।
हस्तैस्तोलयितुं शक्तो न बभू[1]वातिविस्मितः ॥ ९ ॥

सर्वस्य जगतः सारं विराजं परमेश्वरम् ।
कथं लोकाश्रयं विष्णुं तोलयेल्लघुराक्षसः ॥ १० ॥

---

१० । नरो० । सर्वस्य जगतः सारमिति । सारं स्थिरांशं सर्वद्वैतबाधेऽपि अबाधितमित्यर्थः, विष्णुं सर्वव्यापकम् ।

---

८ । नन्वेवं कथं लक्ष्मणजीवनम्, तत्राऽऽह—यावन्त्य इति । सम्भवन्ति प्रकटिता भवन्ति । ईश्वरचैतन्यसम्बन्धादेव जडायां मायायां सर्वशक्तिप्रादुर्भाव इति तासामाधारभूतो लक्ष्मणः, अतः सर्वशक्तिचालकस्य मायाशक्त्या मायानिर्मितया शक्त्या न मृतिरिति भावः । रा० ।

९ । नन्वेवं मूर्च्छाऽपि कुतस्तत्राऽऽह—तथाऽपीति । तदनुव्रतः नटवत् । अन्यथा रावणस्यामनुष्यत्वज्ञाने तन्मृतिर्दुर्लभेत्याशयेन मूर्च्छादिनाटनमिति भावः । तोलयितुं चालयितुमपि न शक्तो बभूव छुतरामुत्थापयितुम् । तेन चातिविस्मित आसीत् । रा० ।

अत्र वाल्मीकिः—

विसंज्ञं पतितं दृष्ट्वा सौमित्रिं राक्षसेश्वरः ।
अवतीर्य रथात्तूर्णमभिदुद्राव लक्ष्मणम् ॥ ३।३६।८३ ।
*   *   *   *
संपीडयित्वा बाहुभ्यां न प्रभुर्लङ्घनेऽभवत् ।
तं गृहीत्वा स बाहुभ्यां चिन्तयामास रावणः ॥
हिमवान् मन्दरो मेरुः कैलासो वा महागिरिः ।
शक्यो भुजाभ्यामुद्वोढुं न त्वयं राघवानुजः ॥ इति । ६।३६।८९-९० ।

एतदपि वृत्तं तत्र इन्द्रजिद्वधानन्तरम् ।

१० । तत्र हेतुमाह—सर्वस्येति । विराजं सर्वजगद्रूपेण भासमानमत एव जगतः सारम् । रा० ।

[ विराजं विराड्रूपम् । लोकाश्रयं लोकानामाधारम् । गो० ]

---

1. च '-बाय वि-' ।

ग्रहीतुकामं सौमित्रिं रावणं वीक्ष्य मारुतिः ।
आजघानोरसि क्रुद्धो वज्रकल्पेन मुष्टिना ।
तेन मुष्टिप्रहारेण जानुभ्यामपतद् भुवि ॥ ११ ॥
आस्यैश्च [1]नेत्रश्रवणै[2]रुद्वमन् रुधिरं बहु ।
विघूर्णमाननयनो रथोपस्थ उपाविशत् ॥ १२ ॥
अथ लक्ष्मणमादाय हनूमान् रावणार्दितम् ।
आनयद्रामसामीप्यं बाहुभ्यां परिगृह्य तम् ॥ १३ ॥
हनूमतः सुहृत्त्वेन भक्त्या च परमेश्वरः ।
लघुत्वमगमद्देवो गुरूणां गुरुरप्यजः ॥ १४ ॥

---

१२ । नरो० । रथोपस्थं रथोपरि ।

१४ । नरो० । ननु महासत्त्वो रावणो विंशत्या बाहुभिर्यं तोलयितुमशक्तस्तं बाहुभ्यां हनूमान् कथं रामसामीप्यमानयदित्यत आह—हनूमत इत्यादि । गुरूणां गुरुरपि गुरुभ्योऽपि गुरुरित्यर्थः ।

---

११ । अत्रापि वाल्मीकिः—

लक्ष्मणन्तु ततः श्रीमाञ् जिघृक्षन्तं स मारुतिः ।
आजघानोरसि व्यूढे वज्रकल्पेन मुष्टिना ॥ इति । ६।३६।९१ ।

१२ । आस्यैर्दशभिर्मुखैः । दशवदनत्वाद् बहुत्वम् । नेत्रश्रवणैः नेत्रैः श्रवणैश्च । विघूर्णमाननयनो विघूर्णमानानि नयनानि यस्य सः । भुवि अपतत् ततश्च रथोपरि उपाविशत् । वाल्मीकीयेऽपि—

तेन मुष्टिप्रहारेण रावणो भीमविक्रमः ।
जानुभ्यामगमद् भूमिं मुमोह च चचाल च ॥ इति । ६।३३।९२ ।

इत्याद्युक्त्या प्रायः समार्थ एव स्फुटीकृतः ।

१४ । भक्त्या तस्य भक्तत्वादिति भावः । गुरूणां गरिष्ठानाम् । रा० ।

अथ रावणोपवेशनानन्तरम् ।

हनूमानपि तेजस्वी लक्ष्मणं शुभलक्षणम् ।
आनयद्राघवाभ्यासे बाहुभ्यां परिगृह्य वै ॥
वायुसूनोः सुहृत्त्वेन भक्त्या परमया च सः ।
शत्रूणामप्रकम्प्योऽपि लघुत्वमगमत् कपेः ॥ ६।३६।९४-९५ ।

इत्यप्येकार्थम् एव वाल्मीकेः ।

---

1. क 'नेत्रैः श्र-' । 2. च '-रुद्वमद्' ।

सा शक्तिरपि तं त्यक्त्वा ज्ञात्वा नारायणांशजम् ।
रावणस्य रथं प्रागाद्रावणोऽपि शनै[1]स्ततः ।
संज्ञामवाप्य जग्राह [2]बाणासनमथो रुषा ॥ १५ ॥
राममेवाभिदुद्राव दृष्ट्वा रामोऽपि तं क्रुधा ।
आरुह्य जगतां नाथो हनूमन्तं महाबलम् ।
रथस्थं रावणं दृष्ट्वा[3] अभिदुद्राव राघवः ॥ १६ ॥
ज्या[4]शब्दमकरोत्तीव्रं वज्रनिष्पेष[5]निस्वनम् ।
रामो गम्भीरया वाचा राक्षसेन्द्रमुवाच ह ॥ १७ ॥
राक्षसाधम तिष्ठाद्य क्व गमिष्यसि मे पुरः ।
कृत्वाऽपराधमेवं मे [6]सर्वत्र समदर्शिनः ॥ १८ ॥
येन बाणेन निहता राक्षसास्ते जनालये ।
तेनैव त्वां हनिष्यामि तिष्ठाद्य मम गोचरे ॥ १९ ॥

---

१५ । नरो० । नारायणांशजमिति, नारायणांशजातमित्यर्थः ।

१७ । नरो० । वज्रनिष्पेष इव निस्वनः शब्दो यत्र तद्यथा स्यात् ।

१८ । नरो० । अपकारिणस्तवापकरणमुचितमिति चेत्तत्राऽऽह—सर्वत्र समदर्शिन इति । समं रागद्वेषरहितं यथा स्यात् तथा द्रष्टुं शीलं यस्य तस्य तथा ।

१९ । नरो० । जनालये जनस्थाने, दण्डकारण्य इति यावत् । गोचरे गोचरप्रदेशे ।

---

१६ । रावणं रथस्थं दृष्ट्वा तत्साम्याय हनूमन्तमारुह्याभिदुद्राव । रा० ।

एवमुक्तस्तथेत्युक्त्वा समारूढः प्लवङ्गमम् ।
राघवः समरामर्षी हन्तुकामो निशाचरम् ॥ ६।३६।१०२

इत्यादिना वाल्मीकीयेऽपि हनूमत्पृष्ठारोहणं रामस्य ।

१८ । मे पुरस्तिष्ठ क्व गमिष्यसि, सर्वत्र समदर्शिनः, तेनेतो गमनेऽपि मद्दृश्य-विषये गमनं न सम्भावितमिति भावः । किञ्च यद्यहं सर्वत्र समदर्शी तथाऽपि अपराधं कृत्वा जीवनं दुर्लभम् । एतावदेव मे समदर्शित्वं यत् कर्मानुरूपफलदत्वम् । अन्यथा वैषम्यनैर्घृण्ये आपद्येते इति भावः । रा० ।

[ सर्वत्र समदर्शिन इति । सर्वस्वरूपत्वात् सर्वत्र तुल्यदृष्टेर्मम । एतेनाऽऽत्मनो निर-पराधत्वमुक्तम् । गो० ]

---

1. ग '-स्तथा' । 2. क 'बाणान् सर्वानथो' । 3. ख '-ष्ट्वाऽप्यभि-' । 4. क '-घोष-' । 5. क-ख-घ '-निष्ठुरम्' । 6. क 'सवतः' ।

श्रीरामस्य वचः श्रुत्वा रावणो मारुतात्मजम् ।
वहन्तं राघवं सङ्ख्ये शरैस्तीक्ष्णैरताडयत् ॥ २० ॥
हतस्यापि शरैस्तीक्ष्णैर्वायुसूनोः [1]स्वतेजसः ।
[2]व्यवर्धत पुनस्तेजो ननर्द च [3]महाकपिः ॥ २१ ॥
ततो दृष्ट्वा हनूमन्तं सव्रणं रघुसत्तमः ।
क्रोधमाहारयामास कालरुद्र इवापरः ॥ २२ ॥
साश्वं रथं ध्वजं सूतं शस्त्रौघं धनु[4]रञ्जसा ।
छत्रं पताकां तरसा चिच्छेद शितसायकैः ॥ २३ ॥
ततो महाशरेणाऽऽशु रावणं रघुसत्तमः ।
विव्याध वज्रकल्पेन पाकारिरिव पर्वतम् ।
रामबाणहतो वीरश्चचाल च मुमोह च ॥ २४ ॥
हस्तान्निपतितश्चापस्तं समीक्ष्य रघूत्तमः ।
अर्द्धचन्द्रेण चिच्छेद तत्किरीटं रविप्रभम् ॥ २५ ॥

---

२० । नरो० । सङ्ख्ये संग्रामे ।

२१ । नरो० । स्वस्य श्रीरामस्य तेज एव तेजो यस्य तस्य तथा । यद्वा अविद्यमानं तेजो यस्मात् तदतेजः, सु अतेजो यस्य तस्य तथा, अत्युत्कृष्टतेजस इत्यर्थः ।

२२ । नरो० । रघुसत्तमो रघुश्रेष्ठः । आहारयामास आहारं (?) कारयामास इत्यर्थः । उत्प्रेक्षते—कालरुद्र इवापर इति । कालरुद्रः प्रलयकालरुद्रः ।

२३ । नरो० । आहारानाह— (?) साश्वमित्यादिना । सूतः सारथिस्तम् । तरसा वेगेन । शितशायकैस्तीक्ष्णबाणैः ।

२४ । नरो० । पाकारिरिव इन्द्र इव ।

२५ । नरो० । हस्तादर्थाद्रावणस्य ।

---

१९ । अन्यदपि समदर्शित्वमाह—येनेति । न तु विषादिलिप्तादिभिरित्याशयः । रा० ।

[ जनालये जनालयाख्यस्थाने जनस्थामापरनाम्नि । गो० ]

२१ । स्वतेजसा स्वीयेन स्मृतरौद्रतेजो व्यवर्धत । यद्वा रामः स्वतेजसा हनूमतस्तेजो व्यवर्धत व्यवर्धयदित्यर्थः । रा० ।

२२ । आहारयामास आयोजयामास, आत्मनीति शेषः ।

२३ । अञ्जसा शीघ्रं युगपदेवेति यावत् । रा० ।

---

1. ग-छ 'सुतेजसः', क-ख-घ-च 'स्वतेजसा' । 2. ग 'अव-' । 3. च 'पुनः कपिः' । 4. क-च '-रोजसा' ।

अनुजानामि गच्छ त्वमिदानीं बाणपीडितः ।
प्रविश्य लङ्कामाश्वास्य श्वः पश्यसि बलं मम ॥ २६ ॥
रामबाणेन संविद्धो हतदर्पोऽथ रावणः ।
महत्या लज्जया युक्तो लङ्कां प्राविशदातुरः ॥ २७ ॥
रामोऽपि लक्ष्मणं दृष्ट्वा मूर्च्छितं पतितं भुवि ।
मानुषत्वमुपाश्रित्य लीलयाऽनुशुशोच [1]ह ॥ २८ ॥
ततः प्राह हनूमन्तं वत्स जीवय लक्ष्मणम् ।
महौ[2]षधीः समानीय पूर्ववद् वानरानपि ॥ २९ ॥

---

२६ । नरो० । अनुजानामि अनुज्ञां करोमि ।

२७ । नरो० । आतुरोऽसमर्थः ।

---

२५ । तादृशावस्थस्य वीरस्य हननानौचित्यं स्मृत्वा कार्यशेषं च विचार्य किरीटमेव चिच्छेद, ततो रावणं प्रति उवाच इति शेषः । रा० ।

२६ । अनुजानामीति । लङ्कां प्रविश्याऽऽश्वास्य बलं पश्यसीत्युक्त इति शेषः । रा० ।

आश्वास्य आत्मानमिति शेषः । यद्वा स्वार्थे णिच् आश्वस्येत्यर्थः । यद्वा 'आश्वस्ये'त्येव पाठः । श्वः पश्यसि द्रक्ष्यसीत्यर्थः । भविष्यत्सामीप्ये वर्त्तमानप्रयोगः आर्षत्वाद्वा ।

पाश्चात्त्ये वाल्मीकीये—

प्रयाहि जानामि रणार्दितस्त्वं प्रविश्य रात्रिञ्चरराज लङ्काम् ।
आश्वास्य निर्याहि रथी सधन्वी तदा बलं प्रेक्ष्यसि मे रथस्थः ॥

इति ६।९९।१४१ ।

२८ । लीलयेत्यनेन वस्तुतः शोकाभाव उक्तः । रा० ।

२९ । ततः प्राहेत्यादि । ओषध्यानयनार्थं हनूमत्प्रेषणं वाल्मीकीये वारद्वयं दृश्यते । तत्र प्रथमम् इन्द्रजिदस्त्रविक्षतानां हतचेतनानां रामलक्ष्मणवानराणां विशल्यीकरणार्थं कथञ्चित् प्रत्यापन्नचेतनेन जाम्बवता कृतम् । तथाच—

ततोऽब्रवीन्महातेजा हनूमन्तं स जाम्बवान् ।
आगच्छ हरिशार्दूल वानरांस्त्रातुमर्हसि ॥

* * * *

गत्वा परममध्वानमुपर्युपरि सागरम् ।
हिमवन्तं नगश्रेष्ठं हनूमन् गन्तुमर्हसि ॥

---

1. च 'तम्' । 2. ग 'षधि' ।

ततः काञ्चनमत्युग्रमृषभं नाम पर्वतम् ।
कैलासशिखरञ्चैव द्रक्ष्यस्यद्भुतविक्रम ॥
तयोः शिखरयोर्मध्ये विचित्रं ह्यतुलप्रभम् ।
सर्वौषधियुतं वीर द्रक्ष्यस्योषधिपर्वतम् ॥
तस्य वानरशार्दूल चतस्रो मूर्ध्नि संस्थिताः ।
त्वं द्रक्ष्यस्योषधीर्दीप्ता दीपयन्तीर्दिशो दश ॥
मृतसञ्जीवनीमेकां विशल्यकरणीं तथा ।
स्ववर्णकरणीञ्चैव सन्धानीञ्च महौषधीम् ॥
सर्वाः संगृह्य हनुमन् शीघ्रमागन्तुमर्हसि ।
योजयाद्य हरीन् सर्वान् प्राणैर्गन्धवहात्मज ॥ ६।९३।३०-३९

इति हनूमतो गमनोपदेशकथनम् ।

स तं समासाद्य महानगेन्द्रम् अतिप्रवृद्धोत्तमघोरशृङ्गम् । ६।९३।९४

इत्यादिना हनूमतो हिमवद्गमनवर्णनम् ।

स तं गृहीत्वा निपपात तस्मिन् शैलशृङ्गं वानरसैन्यमध्ये । ६।९३।६६

इत्यादिना च सशैलस्य हनूमतः प्रत्यागमनकथनम् ।

तावप्युभौ राघवराजपुत्रौ तं गन्धमाघ्राय महौषधीनाम् ।
बभूवतुस्तत्र तदा विशल्यौ सर्वव्रणैश्चापि विमुक्तदेहौ ॥
ते चापि सर्वे हरयस्तदानीं सुप्ता निशान्तादिव संप्रबुद्धाः ।
विनर्दमानाः सहसोदतिष्ठन्नभिष्टुवन्तः पवनात्मजं तम् ॥ ६।९३।६८

इत्यादिना तेषां सर्वेषाम् उज्जीवनवर्णनम् ।

द्वितीयञ्च हनूमत्प्रेषणम् इन्द्रजित्प्रभृतीनां वधात् परं रावणशक्त्या पतितस्य लक्ष्मणस्य प्रत्युज्जीवनार्थम् । तच्च लङ्काकाण्डीयद्व्यशीतितमे सर्गे । तत्र पुनः—

ओषध्यानयने युक्तिः क्रियतां गन्धमादने ।
उत्तरेऽस्मिन् दिशो भागे महत्यध्वनि संस्थिता ॥
पुण्यदेशे महाबाहो यत्रासौ परमौषधी ।
तस्मिन् देशे महाबाहो पर्वते गन्धमादने ॥
जाता महौषधी दिव्या विशल्यकरणी शुभा ।
विभूत्यै प्राणिनां सृष्टा रोगाणाञ्चैव नाशिनी ॥
यस्या दर्शनमात्रेण विशल्यो जायते पुमान् ।
तदर्थं शीघ्रमुत्पत्य गच्छन्तु हरयो द्रुतम् ॥

तथेति राघवेणोक्तो जगामाऽऽशु महाकपिः ।
हनूमान् वायुवेगेन क्षणात्तीर्त्वा महोदधिम् ॥ ३० ॥

---

इत्याद्युक्त्या वैद्यराजेन सुषेणेन व्यादिष्टो राम ओषध्यानयनार्थं हनूमन्तं प्रेषयामास। एवञ्चात्रस्थोऽयं ओषध्यानयनात्मकः प्रबन्धः,

पतितं वानरानीकं दृष्ट्वा रामोऽतिदुःखितः ।
उवाच मारुतिं शीघ्रं गत्वा क्षीरमहोदधिम् ॥
तत्र द्रोणगिरिर्नाम दिव्यौषधिसमुद्भवः ।
तमानय द्रुतं गत्वा सञ्जीवय महामते ॥
वानरौघान् महासत्त्वान् कीर्त्तिस्ते सुस्थिरा भवेत् ।६।५।७१-७३।

इत्याद्यात्मकोऽस्य पूर्ववर्त्ती प्रबन्धोऽपि किं वृत्तमवलम्ब्य उपनिबद्ध इति न स्थिरीकर्त्तुं पारयामः। प्रथमावसरे जाम्बवताऽनुज्ञातेन हनूमता यदोषध्यानयनं वाल्मीकीये निबद्धं तत्र रामादीनामपि अचेतनत्वात् इह तदाज्ञाकरणविरोधः। द्वितीयावसरे रामाज्ञया गन्धमादन-गमनम् इन्द्रजित्प्रभृतीनां विनाशात् परमिति 'इन्द्रजितं निधाये'त्याद्यंशो विरोधार्हः ।

तथा—

तस्मिन् प्रविष्टे रजनीचरेशे महाबले दानवदेवशत्रौ ।
हरीन् विशल्यान् सह लक्ष्मणेन चकार रामः परमाहवाग्रे ॥ ६।३६।१२०।

इत्यनेन वाल्मीकीये ओषधिनिरपेक्षस्य रामस्यैव विशल्यीकरणश्रवणात् लक्ष्मणार्थमोषध्यानयमपि विरुद्धमिति वाल्मीकीयेन सहानयोर्वृत्तयोः सामञ्जस्यं विधातुमसमर्थैरस्माभिः सामञ्जस्यविधानभारः सुधियां हस्ते एव विन्यस्तः ।

वानरानपि, अपिना लक्ष्मणम् । रा० ।

३० । क्षणान्महोदधिं तीर्त्वा गत्वौषधीरानयामीति प्रतिज्ञायेति शेषः, जगामेत्यनेनान्वयः। प्रस्थातुमुद्यत इत्यर्थः । रा० ।

वाल्मीकीये लङ्काया उपरि गच्छन्तं हनूमन्तं दृष्ट्वा तद्विघ्नार्थं कालनेमिं रावणः प्रेरितवान्। कालनेमिगृहागमनादिकम् उपदेशादिकञ्च तत्र स्फुटं नोपलभ्यते। तथाच—

गच्छन्तं मारुतिं दृष्ट्वा रावणो वाक्यमब्रवीत् ।
कालनेमिं दुराधर्षं रक्षः परमदुर्जयम् ॥
चतुर्मुखं महाबाहुमष्टनेत्रं भयावहम् ।
श्रूयतां मम वाक्यञ्च वाक्यमद्य निशाचर ॥ इत्यादि । ६।८२।६४-६५ ।

एतस्मिन्नन्तरे [1]चारा राव[2]णाय न्यवेद[3]यन् ।
रामेण प्रेषितो देव हनूमान् क्षीरसागरम् ।
[4]गतो नेतुं लक्ष्मणस्य जीवनार्थं महौ[5]षधीः ॥ ३१ ॥

श्रुत्वा तच्चारवचनं राजा चिन्तापरोऽभवत् ।
जगाम रात्रावेकाकी कालनेमिगृहं [6]क्षणात् ॥ ३२ ॥

गृहागतं समालोक्य रावणं विस्मयान्वितः ।
कालनेमिरुवाचेदं प्राञ्जलिर्भयविह्वलः ॥ ३३ ॥

अर्घ्यादिकं ततः कृत्वा रावणस्याग्रतः स्थितः ।
किं ते करो[7]मि राजेन्द्र किमागमनकारणम् ।
[8]कालनेमिमुवाचेदं रावणो दुःखपीडितः ॥ ३४ ॥

ममापि कालवशतः कष्टमेतदुपस्थितम् ।
[9]मया शक्त्या हतो वीरो लक्ष्मणः पतितो भुवि ॥ ३५ ॥

तं जीवयितुमानेतुमोषधी[10]र्हनुमान् गतः ।
यथा तस्य भवेद्विघ्न[11]स्तथा कुरु महामते ॥ ३६ ॥

---

वृत्तमिदं गन्धमादनगमनसामयिकश्चेद्विद्यते अत्रापि ग्रन्थकृताऽनेनाघ्रातो भरतहनूमत्संवादरूपः कश्चित् प्रबन्धः । स च—सागरं किष्किन्ध्यां दण्डकं जनस्थानं कोशलाम् अयोध्यां चातीत्य नन्दीग्रामस्योपरि पतन्तं हनुमन्तं दृष्ट्वा भरतस्य तं प्रति शरक्षेपोद्योगः । ततश्च हनूमता प्रतिषिद्धो भरतस्तस्माद्व्यवसायात् प्रतिनिवृत्तो हनुमन्मुखेनैव विदितोदन्तजातो हनूमन्तं गमनाय त्वरयामासेतिरूपः । द्रष्टव्यश्च स वाल्मीकीये लङ्काकाण्डे द्व्यशीतितमे सर्गे ।

३१ । नेतुमानेतुम् । रा० ।

३३-३४ । कालनेमिः रावणं गृहागतं समालोक्य विस्मयान्वितः विह्वलश्च अभवदिति शेषः । ततः अर्घ्यादिकं कृत्वा तस्मै दत्त्वेत्यर्थः, रावणस्य अग्रतः स्थितः सन् इदं वक्ष्यमाणं किन्ते करोमीत्यादिवचनमुवाच इत्यन्वयः ।

३४ । स्थितः कालनेमिरिति शेषः ।

३६ । गतः युद्धभूमेः प्रस्थित इत्यर्थः । रा० ।

---

1. ग च 'चारो' । 2. ख '-णस्य' । 3. ग-च '-यत्' । 4. च 'तीर्त्वा' । 5. च '-षधिम्' । 6. च-छ 'प्रति' । 7. छ -मुवाचेदं प्राञ्जलिर्भयविह्वलः' । 8. छ 'तमुवाच ततो राजा' । 9. ग 'मम शक्त्या', घ-छ 'मयशक्त्या' । 10. च-छ '-धि ह-' । 11. क-ख-घ '-घ्नं तथा' ।

मायया मुनिवेशेन मोहयस्व महाकपिम् ।
कालात्ययो यथा भूयात् तथा कृत्वैहि मन्दिरे[1] ॥ ३७ ॥
रावणस्य वचः श्रुत्वा कालनेमिरुवाच तम् ।
रावणेश वचो मेऽद्य शृणु धारय तत्त्वतः ॥ ३८ ॥
प्रियं ते करवाण्येव न प्राणान् धारयाम्यहम् ।
मारीचस्य यथाऽरण्ये पुराऽभून्मृगरूपिणः ।
तथैव मे[2] न सन्देहो भविष्यति दशानन ॥ ३९ ॥
हताः पुत्राश्च पौत्राश्च बान्धवा राक्षसाश्च ते ।
घातयि[3]त्वाऽसुरकुलं जीवितेनापि किं तव ॥ ४० ॥
राज्येन वा सीतया वा किं देहेन जडात्मना ।
सीतां प्रयच्छ रामाय राज्यं देहि विभीषणे ।
वनं याहि महाबाहो रम्यं मुनिगणा[4]श्रयम् ॥ ४१ ॥
स्नात्वा प्रातः शुभजले कृत्वा सन्ध्यादिकाः क्रियाः ।
तत एकान्तमाश्रित्य सुखासनपरिग्रहः ॥ ४२ ॥

---

४२ । मरो० । एकान्तं विविक्तदेशम् ।

---

३७ । कालात्ययः कालविलम्बो हनूमत इति शेषः । कालं विलम्ब्याऽऽगमने लक्ष्मणस्य पुनर्जीवनमसम्भाव्यमिति तथोपदेशः । मन्दिरे मद्भवने स्वभवने वा एहि आगमिष्यसीत्यर्थः । यथा तस्य कालात्ययो भवेत् तथा कृत्वा एहि आगमिष्य- सीत्यर्थः । सन्धिरार्षः ।

३८ । हे रावण, हे ईश, अस्माकं निग्रहानुग्रहसमर्थ इत्यर्थः, मे वचः शृणु । ननु श्रवण-मात्रेणैव किमिष्टसिद्धिः स्यादिति चेत्तत्राऽऽह—तत्त्वतो धारय, अवधारय गृहाण इति यावत् । प्रेष्यस्य मम वाक्ये अनादरं न दर्शयेत्याशयः ।

४० । असुरकुलमिति च्छेदः । किं किं फलम् । रा० ।

४१ । जडात्मना जडस्वरूपेण । एवं जीवितादौ वैराग्यमुपदिश्य कर्त्तव्यमुपदिशति—सीतामिति । रम्यत्वोपपादकं मुनिगणाश्रयमिति । रा० ।

वनं याहीति । ननु राजभोगानुपभुञ्जानस्य मम कथं वनवासः सम्भवतीत्याह—रम्यमिति । रम्यं प्राकृतशोभादिसमन्वितत्वेन । ननु भवतु रम्यं तत्र एकाकिना मया कथं वस्तव्यमिति चेदाह—मुनिगणाश्रयम् । तत्र बहवो मुनयो निवसन्तीति एककवासस्य चिन्ताऽपि न कर्त्तव्येत्याशयः ।

---

1. ग-च-छ '-रम्' । 2. छ 'च' । 3. ग-च-छ '-त्वा सुत-' । 4. ग-छ'-श्रमम्' ।

विसृज्य सर्वतः सङ्गमितरान् विषयान् बहिः ।
बहिःप्रवृत्ता[1]क्षगणं शनैः प्रत्यक् प्रवाहय ।
प्रकृतेर्भिन्नमात्मानं विचारय सदाऽनघ ॥ ४३ ॥

चराचरं[2] जगत् कृत्स्नं देहबुद्धीन्द्रियादिकम् ।
आब्रह्मस्तम्बपर्यन्तं दृश्यते श्रूयते च यत् ।
सैषा प्रकृतिरित्युक्ता सैव मायेति कीर्त्तिता ॥ ४४ ॥

---

४३ । नरो० । श्रवणादिव्यतिरिक्तबाह्यविषया न सेव्यास्तेषु प्रीतिरपि न कार्येत्याह—विसृज्येत्यादिना । सर्वतः समन्तात् सङ्गमर्थात् श्रवणादिव्यतिरिक्तबाह्यविषयेषु सङ्गमासक्तिम् । बहिरिति आत्मव्यावृत्तिः । इतरान् श्रवणादिव्यतिरिक्तान्, 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' ( बृहदा० २।४।५ ) इति श्रुतेः । विषयश्चक्षुराकर्षति विषयहृतं चक्षुर्मनो हरति हृते च मनसि ध्यानं नोपपद्य......[ ते इति ? ] विषयप्रवृत्ताक्षगणं प्रत्याहर्तुमाह—बहिः प्रवृत्ताक्षगणमित्यादि । शनैरद्रुतम् । प्रत्यक् प्रवाहय प्रत्यक् प्रवाहं कुरु परावर्त्तय इति यावत् । ध्येयज्ञानं विना विषयत्यागोऽनर्थको भवतीति ध्येयप्रदर्शनार्थमाह—प्रकृतेर्भिन्नमित्यादि ।

४४ । नरो० । का प्रकृतिरित्यपेक्षायामाह—चराचरं जगदित्यादि । कृत्स्नं सकलं मायाकार्यम् । मायाकार्यं प्रत्येकं वक्तुमशक्यमित्याशयेनाऽऽह—आब्रह्मस्तम्बपर्यन्तमिति,

---

४२ । यत्रैव पद्मासनादौ स्थित्वा स्थाता सुखं लभते तत् सुखासनम् । रा० ।

वनं गत्वा किं करिष्यामीत्याह—स्नात्वेत्यादि ।

४३ । बहिः कृत्वेति शेषः, दूरे कृत्वा इत्यर्थः । बहिःप्रवृत्तं बाह्यविषयेषु प्रवृत्तमक्षगणमिन्द्रियगणं प्रत्यक् प्रवाहय आत्मविषयं कुरु । सर्वसहायस्य मनस आत्मविषयत्वकरणमेव सर्वेन्द्रियाणामात्मविषयत्वकरणम् । तदेवोपपादयति—प्रकृतेरिति । रा० ।

[ बहिःप्रवृत्याक्षगणमिति । अक्षाणामिन्द्रियाणां गणं बहिर्बाह्यात् प्रवृत्य प्रत्याकृष्य शनैर्मन्दं मन्दम् अभ्यासक्रमेण प्रत्यग् विलोमम् अन्तरिति यावत्, प्रवाहय अवधारय । गो० ]

४४ । प्रकृतिस्वरूपमाह—चराचरमिति । एतदेव प्रकृतिरित्यर्थः । किं विशेषेण दृश्यं सर्वमेव मायेत्याह—आब्रह्मेति । रा० ।

[ प्रकृतेर्भिन्नमात्मानं विचारयेत्युक्ते प्रकृतिज्ञानमपेक्षितम् । तस्याः स्वरूपतो निरूपणासम्भवात् कार्यरूपेण लक्ष्यति—चराचरेत्यादिसार्द्धत्रयेण । आब्रह्मस्तम्बपर्यन्तं ब्रह्मादितृणपर्यन्तं

---

1. ग-च-छ '-च्चिग-' । 2. ग-च '-रजग-' ।

सर्गस्थितिविनाशानां जगद्वृक्षस्य कारणम् ।
लोहितश्वेतकृष्णादिप्रजाः सृजति सर्वदा ॥ ४५ ॥
कामक्रोधादिपुत्राढ्या[1] हिंसातृष्णादिकन्यका[2] ।
मोहयत्य[3]निशं देव[4]मात्मानं [5]स्वगुणैर्विभुम् ॥ ४६ ॥

---

ब्रह्माण्डावधि तृणादिगुच्छपर्यन्तमित्यर्थः । तर्हि अपरा माया केत्यत आह—सैव मायेति कीर्त्तितेति ।

४५ । नरो० । न केवलं मायायाः परिणामित्वरूपमुपादानत्वं किन्तु जगज्जीवविनाशयोरपि कारणत्वमित्याह—सर्गस्थितिविनाशानामित्यादिना । ननु ब्रह्मादेः सृष्ट्यादिकारणत्वं श्रूयते, त्वया मायायास्तत्कारणत्वं कथमुक्तमिति चेत्तत्राऽऽह—लोहितेत्यादि । लोहितश्च कारणीभूतरजउपहितो ब्रह्मा, श्वेतश्च कारणीभूतसत्त्वोपहितो विष्णुः, कृष्णश्च कारणीभूततमउपहितो रुद्रः । एते आदयो यासां ताश्चैताः प्रजाश्चेति तास्तथा । आदिपदेन दक्षादेः परिग्रहः ।

४६ । नरो० । किञ्च कामक्रोधादयो हिंसातृष्णादयश्च ये नरकहेतवो दोषा जीवे दृश्यन्ते तेऽपि मायासम्भवाः, सा च तैस्तं मोहयतीत्याह—कामेति पद्येन । प्रथमादिपदेन लोभमोहमदमत्सरा गृह्यन्ते । द्वितीयादिपदेन असूयानिन्दादेः परिग्रहः । मोहयति मोहसम्बन्धिनं करोतीत्यर्थः । स्वगुणैः स्वगुणपरिणामैः कामक्रोधादिहिंसातृष्णादिभिः । विभुं सर्वसंयोगिनम् ।

---

यद् दृश्यते, यच्च श्रूयते, सा प्रसिद्धा एषा सर्वस्वरूपेण प्रत्यक्षा प्रकृतिः ; सर्वस्योपादानत्वात् कार्यस्य च कारणाभिन्नत्वात् स्वर्णकुण्डलादिवत् । एतेन एतद्भिन्न आत्मा सर्वप्रत्यग्निषेधशेष इत्युक्तम् । ननु जगतो मायिकत्वात् कुतः प्रकृतिमयत्वं तत्राऽऽह—सैव प्रकृतिरेव मायेति कीर्त्तिता न पृथक् । गो० ]

४५ । [ जगद्रूपवृक्षस्य सर्गस्थितिविनाशानाम् उत्पत्तिपालनलयानां कारणम् । तस्याः कर्माऽऽह—लोहितेत्यादि । राजससात्त्विकतामसा आदिना मिश्राः प्रजाः सृजति । सर्वदेति कादाचित्कं वारयति । तथाच श्रुतिः—'अजामेकां लोहितशुक्लकृष्णाम्' (श्वेताश्व० ४५) । गो० ]

४५-४६ । सैव जगद्वृक्षस्य सर्गादिकारणम् । लोहितेत्यादि । स्वस्य त्रिगुणात्मकत्वाद् राजससात्त्विकतामसाः प्रजाः सृजति । तथा कामक्रोधादीन् पुत्रान् हिंसाद्याश्च कन्यकाः सृजति, स्वसृष्टस्य जगतो वृद्ध्यर्थमित्यर्थः । एवं सृष्ट्वा आत्मानमात्मपदवाच्यं विभुं देवं स्वैर्गुणैः पदार्थैर्मोहयति, तेष्वहं ममेति बुद्धिमन्तं करोति । रा० ।

४६ । कामेत्यादि । हिंसा अनिष्टाचरणम्, तृष्णा तदाद्या कन्यका यस्याः सा ।

---

1. क-ख-व-छ '-द्यान्' । 2. क-ख-ग-घ-च-छ '-का,' । 3. छ '-त्यखिलं' । 4. च 'आत्मा-' । 5. क-ख-व-च 'स्वैर्गु-' ।

कर्त्तृत्वभोक्तृत्वमुखान् स्वगुणानात्मनीश्वरे ।
आरोप्य [1]स्ववशं कृत्वा तेन क्रीडति सर्वदा ॥ ४७ ॥
शुद्धोऽप्यात्मा [2]यया युक्तः [3]पश्यतीव सदा बहिः ।
विस्मृत्य च स्वमात्मानं [4]मायागुणविमोहितः ॥ ४८ ॥
यदा सद्गुरुणा युक्तो बोध्यते बोधरूपिणा ।
नि[5]वृत्तिदृष्टिरात्मानं पश्यत्येव सदा स्फुटम् ।
जीवन्मु[6]क्तस्तदा देही मुच्यते प्राकृतैर्गुणैः ॥ ४९ ॥

---

४७ । नरो० । तर्हि कथमहं कर्त्ता भोक्तेत्याद्यनुभव आत्मन इति चेत्तत्राऽऽह—कर्त्तृत्व-भोक्तृत्वमुखानित्यादि । ईश्वरे कर्त्तुमकर्त्तुं समर्थे ।

४८ । नरो० । आत्मनो मायावशत्वमुपपादयति—शुद्धोऽपीति पद्येन ।

४९ । नरो० । कदा देही विमुच्यते इत्यपेक्षायामाह—यदेत्यादि । सद्गुरुणा आचार्येण युक्तः प्राप्तयोगः । तथाच भगवद्गीता—

यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।
निस्पृहं सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ ६।१८ ।

इति । अत एव निवृत्तौ दृष्टिर्यस्य स तथा । प्राकृतैः प्रकृति ... ... ।

---

आत्मानमीश्वरं देवं स्वैर्गुणैः सत्त्वादिभिर्विकृष्य मोहयति कर्त्तृत्वभोक्तृत्वाद्यभिमानं प्रापयति । तथाच श्रीभागवते—(३।२६।५) 'विलोक्य मुमुहे सद्यः स इह ज्ञानगूह्या ।' इति । गो० ]

४७ । स्वनिष्ठान् जगत्कर्त्तृत्वादीन् गुणान् सन्निधानेन तत्राऽऽरोप्य स्ववशं कृत्वा । अहं कर्त्तेत्यादिबुद्धिमत्त्वकरणमेव तस्य वशीकरणम् । रा० ।

[कर्त्तृत्वेत्यादि । स्वगुणान् सुखदुःखादीन् ईश्वरे आत्मनि व्यापके आरोप्य तं विवशं कृत्वा तेनेश्वरेण सह सर्वदा क्रीडति । 'अजो ह्येको जुषमाणोऽनुशेते' (श्वेताश्व० ४।५, महाना० ९।२) इति श्रुतेः । एतेन तद्वश एव जीवभावं प्राप्य ईश्वरः संसारी भवतीत्युक्तम् । गो० ]

४८ । शुद्धोऽप्ययं दर्शनादिविकारहीनोऽपि पश्यतीव बहिर्विषयान् । स्वमात्मानं स्वस्वरूपम् । विस्मरणे हेतुर्मायागुणविमोहितत्वम् । रा० ।

[ आत्मा शुद्धोऽपि मायागुणविमोहितः मायागुणैर्मोहितः सन् स्वमात्मामं स्वरूपं नित्य-मुक्तत्वादिरूपं विस्मृत्य यथा अयुक्तः अविवेकी सर्वदा पश्यत्येव, विषयानेव पुरुषार्थतया मन्यते अतस्तदर्थं कर्माणि कुर्वन् बध्यत इति भावः । गो० ]

४९ । तर्हि किं सर्वथा विस्मृतस्वस्वरूपस्य बन्ध एव ? नेत्याह—यदेति । बोधरूपिणा

---

1. च 'स्वगुणं' । 2. च 'यया' । 3. ग 'पश्यन्नेव हि सर्वदा', च 'पश्यत्येव हि सर्वतः' । 4. च 'मायया गुणमोहितः' । 5. क-ख-ग-घ-च-छ '-वृत्त' । 6. क-ख-ग '-क्तः सदा' ।

तम[1]प्येनं सदात्मानं विचार्य नियतेन्द्रियः ।
प्रकृते[2]रन्यमात्मानं ज्ञात्वा मुक्तो भविष्यसि ॥ ५० ॥
ध्यातुं यद्यसमर्थोऽसि सगुणं देवमाश्रय ।
हृत्पद्मकर्णिके स्वर्णपीठे मणिगणा[3]ञ्चिते ।
मृदु[4]सूक्ष्मतरे तत्र जानक्या सह संस्थितम् ॥ ५१ ॥

---

५० । नरो० । उपसंहरति—तमप्येनमिति । नियतेन्द्रियः संयतेन्द्रियः निरुद्धेन्द्रिय इति यावत् ।

५१ । नरो० । गुणातीतं ब्रह्म कथमयं ध्यातुं शक्नुयादिति हृदि कृत्वाह—ध्यातुं यद्यसमर्थोऽसि सगुणं देवमाश्रय इति । ध्यातुमर्थान्नि······[ विशेषं ब्रह्म । सगुणं देवम् ? ] आश्रय ध्यातुमिति शेषः । हृत्पद्मकर्णिके एवं ध्यात्वेति योजना । हृत्पद्मकर्णिके इति अत्र ह्रस्वश्छान्दसः । ध्यानप्रकारमाह—स्वर्णपीठ इत्यादिना । तत्र मणिगणाञ्चिते स्वर्णपीठे मृदुसूक्ष्मतरे इति योजना । लोमविशेषरचितासनविशेषे ।

---

ज्ञानस्वरूप एवाहमिति जानता जीवन्मुक्तेनेत्यर्थः । निवृत्तदृष्टिः बहिर्विषयेभ्य इति शेषः । आत्मानं शुद्धबुद्धमुक्तस्वभावमात्मस्वरूपम् । रा० ।

[ संसारनिवृत्तिहेतुमाह—यदेत्यादि । यदा सद्गुरुणा ब्रह्मनिष्ठेन गुरुणा युक्तः केनापि भाग्यवशेन सङ्गतो भवति तेन बोधरूपिणा ज्ञानरूपेण गुरुणा च कृपया बोध्यते सदुपदेशेन तत्त्वं ज्ञाप्यते तदा निवृत्तिदृष्टिः निवृत्तौ निवृत्तिमार्गे दृष्टिर्बुद्धिर्यस्य तथाभूतः सन् सदा निरन्तरम् आत्मानमेव पश्यति न तु विषयादीन् । तथाच श्रुतिः—'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् । आचार्यवान् पुरुषो वेद' ( छान्दो० ६।१४।२ ) । 'नैषा बुद्धिस्तर्केणापनेया' । ततः किमत आह—जीवन्मुक्त इति । तदा आत्मनि दृष्टे सति देही जीवः प्राकृतैः प्रकृतिसम्बन्धिभिर्गुणै रागादिभिर्मुच्यते, ततश्च जीवन्मुक्तो भवति ।

तथाच श्रुतिः—

'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥' इति । गो० ]

५० । तादृशसद्गुरूपदेशान्निदिध्यासनसम्पत्त्या जीवन्मुक्तिदशां प्राप्तः प्राकृतैर्गुणैः सुख-दुःखादिभिर्मुच्यते, अतो मदुपदेशात् श्रुतमात्मानमेवं विचार्य मदुक्तात्मस्वरूपं विचारेण दृढीकृत्य । रा० ।

५१ । ध्यातुं मदुक्तप्रकारेण ध्यातुमित्यर्थः । सगुणं ध्येयं रूपमाह—हृत्पद्मेति । तत्कर्णिकास्थे स्वर्णपीठे स्थितमित्यन्वयः । श्लक्ष्णं स्निग्धम् । रा० ।

---

1. क-ख-ग-घ-ङ '-प्येवं' । 2. ङ '-रप्यना-' । 3. क-च-घ '-न्विते', ङ '-चिते' । 4. क-ख-ग-घ-च-ङ '-श्लक्ष्ण-' ।

वीरासनं विशालाक्षं विद्युत्पुञ्जनिभाम्बरम् ।
किरीटहारकेयूरकौस्तुभादिभिरन्वितम् ॥ ५२ ॥
नूपुरैः कटकै[1]र्भातं तथैव वनमा[2]लया ।
लक्ष्मणेन धनु[3]र्द्वन्द्वकरेण परिषेवितम् ॥ ५३ ॥
एवं ध्यात्वा सदात्मानं रामं सर्वहृदि स्थितम् ।
भक्त्या परमया युक्तो [4]मुच्यते नात्र संशयः ॥ ५४ ॥
शृणु वै चरितं तस्य [5]भक्तैर्नित्यमनन्यधीः ।
एवं चेत् कृतपूर्वाणि पापानि [6]च महान्त्यपि ।
क्षणादेव [7]विनश्यन्ति यथाग्नेस्तूलराशयः ॥ ५५ ॥

---

५२ । नरो० । विद्युत्पुञ्जनिभाम्बरं विद्युद्राशितुल्यवस्त्रम् ।

५३ । नरो० । नूपुरैरिति बहुवचनं सीतानूपुराभिप्रायम् । कटकैरिति बहुवचनं चतुर्भुजत्वादविरुद्धम् । कटकैर्वलयैः । धनुर्द्वन्द्वकरेणेति शरक्षेपानन्तरं श्रीरामेण लक्ष्मणहस्ते धनुषोऽर्पणात् लक्ष्मणस्य धनुर्द्वन्द्वधारित्वमविरुद्धम् । अन्यथा 'चापमानय सौमित्रे' इति श्रीरामवचनमनुपपन्नं स्यात् ।

५५ । नरो० । अग्नेरिति यज्गर्भादित्वात् पञ्चमी, अग्निं प्राप्येत्यर्थः ।

---

[ ज्ञानकाण्डमुक्त्वा भक्तियोगं सुकरत्वादुपदिशति—ध्याने इति । सगुणं साकारम् । हृत्पद्मकर्णिके इति ह्रस्वत्वं छान्दसम्, स्वर्णपीठविशेषणत्वाद्वा । गो० ]

५२ । वीरासनं वीरासनस्थम्, विद्युत्पुञ्जनिभाम्बरं पीताम्बरमित्यर्थः । रा० ।

५३ । भान्तं शोभायमानम् । धनुर्द्वन्द्वकरेण एकं स्वस्यैकं रामस्येति द्वयम् । रा० ।

[ लक्ष्मणेनेत्यादि । धनुर्द्वन्द्वमात्मनः श्रीरामस्य च । यद्वा द्वन्द्वपदेन सुखदुःखादिवद् धनुर्बाणौ गृह्येते । गो० ]

५४ । सर्वहृदि स्थितमित्यनेन एवम्भूतः सर्वप्रेरकत्वेन ध्येयः । एवं हि सर्वस्य स्वतन्त्रत्वाभावनिश्चये द्वेषादिहानिर्भवतीत्यर्थः । रा० ।

५५ । भक्तैः कथ्यमानमिति शेषः । कृतपूर्वाणि पूर्वं कृतानि । यथाग्नेः स्पर्शात्तूलराशयो नश्यन्ति तद्वत् । रा० ।

---

1. घ-च छ '-भान्तं' । 2. छ '-लिनम्' । 3. छ '-वीण-' । 4. ग 'मुच्यसे' । 5. च 'भक्त्या नि' । 6. छ 'सुमहा-' । 7. छ 'भविष्यन्ति' ।

भजस्व रामं परिपूर्ण[1]कामं
विहाय वैरं निज[2]भावयुक्तः ।
हृदा सदा भावितभावरूप-
[3]मनामरूपं[4] पुरुषं पुराणम् ॥ ५६ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे लङ्काकाण्डे
षष्ठोऽध्यायः ॥ ६ ॥

---

५६ । नरो० । परिपूर्णः समाप्तोऽप्राप्तविषयः काम इच्छा यस्मात् तं तथा । सदा भावितं भावरूपं यस्य तं तथा । मनसोऽगोचरत्वं यद्बहुश उक्तं तदसंस्कृतमनस इति बोध्यम् । अविद्यमाने नामरूपे यस्य तस्य तं तथा । तथाचोक्तम्—

अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ।
आद्यत्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥ ( वाक्यसुधा २० )

इति । भावरूपत्वेऽनामरूपत्वे च हेतुः—पुराणमिति । अनादिमित्यर्थः ।

[ लङ्काकाण्डे षष्ठाध्यायव्याख्या समाप्ता ॥ ६ ॥ ]

---

५६ । वैरं वैरभावम् । निजभक्तियुक्तोऽनन्यभक्तियुक्तः । हृदा हृदयेन सदा भावितं भावस्य सत्तारूपस्य ब्रह्मणो रूपं शुद्धबुद्धमुक्तस्वभावं येन तम् । वस्तुतः स एव ब्रह्मेत्यादिना । रा० ।

[ भजस्वेत्यादि । अनामरूपमपि हृदा भावितश्चिन्तितो यो भावो यादृङ्मूर्त्तिः, स एवं रूपं यस्य, भक्तेरनुरूपमूर्त्तित्वात् । पुराणं सर्वकारणम् । पुरुषमन्तर्यामिणम् । गो० ]

---

1. क-ख-घ-ङ '-मेकं' । 2. क-ख-घ-ङ '-भक्ति-' । 3. च '-मनादिद्ध-' । 4. च '-प-पुरुषप्रधानम्' ।

# सप्तमोऽध्यायः

[1]श्रीमहादेव उवाच—

कालनेमिवचः श्रुत्वा रावणोऽमृतसन्निभम् ।
जज्वाल [2]क्रोधताम्राक्षः [3]सर्पिरद्भिरिवाग्नि[4]मत् ॥ १ ॥
निहन्मि त्वां दुरात्मानं मच्छासनपराङ्मुखम् ।
परैः किञ्चिद् गृहीत्वा त्वं भाषसे रामकिङ्करः ॥ २ ॥
कालनेमिरुवाचेदं रावणं देव किं क्रुधा ।
न रोचते मे वचनं यदि गत्वा करोमि तत् ॥ ३ ॥
इत्युक्त्वा प्रययौ शीघ्रं कालनेमिर्महासुरः ।
[5]नोदितो रावणेनैव हनूमद्विघ्नकारणात् ॥ ४ ॥

---

१। नरो०। सर्पिरद्भिरिवाग्निमदिति। अग्नितुल्यं सर्पिर्यथा अद्भिर्ज्वलतीत्यर्थः। अयं भावः—अग्नितप्तघृते यथाऽग्निनिर्वापकमपि जलं क्षिप्तं सदग्निवर्द्धकं भवति तथा शोकशान्तिकारकमपि सामवचनं क्रुद्धस्य रावणस्य कोपवर्द्धकमिति।

---

१। अग्निमत् अग्नितप्तं सर्पिर्घृतं जलसंयोगाद् यथा महाज्वालावद्भवति तथा जज्वालेत्यर्थः। रा०।

[कालनेमीत्यादि। अमृतसन्निभममृततुल्यमपि वचः श्रुत्वा जज्वाल। सौहित्यकारिणोऽपि वस्तुनो द्रव्यविशेषसम्पर्के दाहकत्वे दृष्टान्तः—सर्पिरिति। अग्निवदिति तप्तं सर्पिर्घृतं अद्भिर्जलैर्मिश्रितैर्यथा ज्वलति तद्वत्। तप्तघृत-रावणयोः साम्यम्, कालनेमिवाक्य-जलयोः साम्यम्। गो०]

अमृतसन्निभमित्युक्त्या तत्त्वतो रावणस्य रामे पूर्णब्रह्मत्वज्ञानमस्तीति ध्वनितम्, तेन चास्य क्रोधोऽयं तत्पदलाभायेति ज्ञेयम्।

२। परदत्तं किञ्चिद् गृहीत्वा धनलोभाद्रामकिङ्करतां प्राप्त इव भाषसे। रा०।

३। यदि मे वचनं न रोचते तदा गत्वा तत् त्वदाज्ञप्तमेव करोमि। रा०।

४। रावणेनैव स्वयमेव नोदित इत्यर्थः। रा०।

---

1. क-ख-पुस्तकयोः 'श्रीमहादेव उवाच' इति नास्ति। 2. छ 'रोष-'। 3. ग 'सर्पिर्भिरिव हव्यवाट्', छ 'सपिर्भिरिव पावकः'। 4. च '-वत्'। 5. ग-च-छ 'चोदितो'।

स गत्वा हिमवत्पार्श्वं तपोवनमकल्पयत् ।
[1]तत्र शिष्यैः परिवृतो मुनिवेशधरः खलः ।
गच्छतो मार्गमासाद्य वायुसूनोर्महात्मनः ॥ ५ ॥
ततो [2]गत्वा ददर्शाथ हनूमानाश्रमं शुभम् ।
चिन्तयामास मनसा श्रीमान् पवन[3]नन्दनः ॥ ६ ॥
पुरा न दृष्टमेतन्मे मुनिमण्डल[4]मुत्तमम् ।
मार्गो [5]विभ्रंशितो वा मे [6]भ्रमो वा चित्तसम्भवः ॥ ७ ॥
यद्वाविश्याऽऽश्रमपदं दृष्ट्वा मुनिमशेषतः ।
पीत्वा जलं ततो यामि द्रोणाचलमनुत्तमम् ॥ ८ ॥

---

५। नरो०। अकल्पयदित्यनेन परमार्थतो नास्तीति सूचितम् ।

---

५। खलः अन्तर्दुष्टः, अत एव मुनिवेशधरो न मुनिः। गच्छतो वायुसूनोर्मार्गमासाद्य तदीयमार्गमध्ये तपोवनमकल्पयदित्यर्थः । रा०।

अत्र हिमवत्पार्श्वगमनम्, वाल्मीकीये गन्धमादनगमनं तत्राऽऽश्रमनिर्माणञ्च । तथाच—

इत्युक्त्वा प्रययौ रक्षः पर्वतं गन्धमादनम् ।
ततो मायाप्रभावेण निमेषेण महाबलः ॥
चक्रे तत्राऽऽश्रमं रम्यं गत्वाऽसौ रजनीचरः ।
अग्निहोत्रैस्तथा दीप्तैः समिद्भिर्वल्कलैस्तथा ॥
जटाभारेण दिव्येन तत्क्षणाच्चीरसंवृतः ।
दीर्घश्मश्रुनखो भूत्वा सोपवासकृशोदरः ॥
प्रगृह्यीत्वाऽक्षमालान्तु जपंस्तत्रैव संस्थितः ।
छद्मना कृतलिङ्गस्थो हनूमद्गमनं प्रति ॥ इत्यादि । ६।८२।८१-८४ ।

६। ततः कालनेमेराश्रमादिसमाधानानन्तरमित्यर्थः। गत्वा उपस्थाय तदाश्रमदेशमिति शेषः। हनूमान् शुभमाश्रमं ददर्श, दृष्ट्वा चेति शेषः, चिन्तयामास इत्यन्वयः।

७। मार्गो मे विभ्रंशितस्त्यक्तः, मार्गान्तरे आगतमिति यावत्। उतानाश्रमे आश्रमत्वभ्रमः। रा०।

'पुरा न दृष्टमेतन्मे' इत्यादि हनूमच्चिन्तनरूपं वृत्तं न वर्णितं तत्र भवता वाल्मीकिना। तत्राश्रमपदं प्राप्तवन्तं मारुतिं प्रति मुनिवेशधरस्य कालनेमेर्वाक्यजातम्—

स्वागतं कपिशार्दूल स्वागतं हरिपुङ्गव ।
इदमर्घ्यञ्च पाद्यञ्च आसनं चेदमास्यताम् ॥
विश्रम त्वं कपिश्रेष्ठ आश्रमे मे यथासुखम् । इति ६।८२।१४४-१४५ ।

---

1. च 'ततः'। 2. छ 'ददर्श गत्वाऽथ'। 3. ग '-सम्भवः'। 4. च '-मद्भुतम्', छ '-मच्छितम्'। 5. छ 'विभ्रमितो'। 6. च 'न तु वा चित्तविभ्रमः'।

इत्युक्त्वा प्रविवेशाथ सर्वतो योजना[1]यतम् ।
आश्रमं कदलीशालखर्जूरपनसादिभिः ॥ ९ ॥
समावृतं पक्वफलैर्नम्रशाखैश्च पादपैः ।
वैरभावविनिर्मुक्तं शुद्धं निर्मललक्षणम् ॥ १० ॥
तस्मिन् महाश्रमे रम्ये कालनेमिः स राक्षसः ।
इन्द्र[2]योगं समास्थाय चकार शिवपूजनम् ॥ ११ ॥
हनूमानभिवाद्याऽऽह गौरवेण महासुरम् ।
भगवन् रामदूतोऽहं हनूमान्नाम [3]नामतः ।
रामकार्येण महता क्षीराब्धिं गन्तुमुद्यतः ॥ १२ ॥
[4]तृषा मां बाधते ब्रह्मन्नुदकं कुत्र [5]विद्यते ।
[6]यथेच्छं पातुमिच्छामि कथ्यतां मे मुनीश्वर ॥ १३ ॥

---

१० । नरो० । वैरे विरोधे भावः प्रीतिर्येषां जन्तूनां तैर्विनिर्मुक्तम् । यद्वा वैरभावेण विनिर्मुक्ता अर्थात् जन्तवो यत्र तं तथा । यद्वा वैरभावस्य विनिर्मुक्तं त्यागो यत्र तं तथा ।

---

८ । अथवा किमनेन विचारेणेत्याह—यद्वेति । मुनिमिति जातावेकवचनम् । अशेषतो मुनीन् दृष्ट्वेत्यर्थः । रा० ।

'पीत्वा जलमि'त्यादि 'उपदेक्ष्यामि ते मन्त्रं येन द्रक्ष्यसि चौषधीः ।' (१९) इत्यन्तं सर्वमेव वाल्मीकीयाननुमतम् । तत्र पुनर्मुनिना आतिथ्यार्थम् अर्थितो मारुतिः स्वगमनत्वरां विनिवेदितवान् । ततः पुनः—

यद्यप्येवं महाभाग मुहूर्तं तावदास्यताम् ।
अतिथिस्त्वमनुप्राप्तो वीर पूजां गृहाण मे ॥
इदं मम सरो दिव्यं तपसोग्रेण चार्जितम् ।
पीतमात्रे तु पानीये न मां संबाधते क्षुधा ॥ ६।८२।१९४-१९९ ।

इत्यादिना पुनरपि आतिथ्यप्रार्थनमेव ।

१० । उक्तगुणैः पादपैश्च समावृतमाश्रमं प्रविवेश इत्यन्वयः । वैरभावविनिर्मुक्तम्, यस्मिन् आश्रमे अहिनकुलादयोऽपि परस्परवैरभावं त्यक्त्वा तिष्ठन्ति तमित्याश्रमविशेषणम् । रा० ।

११ । इन्द्रयोगः कपटम् । रा० ।

---

1. क '-लयम्' । 2. ग '-यागं', च '-जालं' । 3. च 'मे शृणु' । 4. छ 'तृष्णा' । 5. ग 'वर्तते' । 6. ग-च-छ 'यथेष्टं' ।

तच्छ्रुत्वा मारुतेर्वाक्यं कालनेमिस्तमब्रवीत् ।
कमण्डलुगतं तोयं मम त्वं पातुमर्हसि ॥ १४ ॥
भुङ्क्ष्व चेमानि पक्वानि फलानि [1]तदनन्तरम् ।
निव[2]सस्व सुखेनात्र निद्रामेहि [3]त्वराऽस्तु मा ॥ १५ ॥
भूतं भव्यं भवि[4]ष्यञ्च जानामि तपसा स्वयम् ।
उत्थितो लक्ष्मणः [5]सर्वे वानरा रामवीक्षिताः ॥ १६ ॥
तच्छ्रुत्वा हनुमानाह कमण्डलुजलेन मे ।
न शाम्यत्यधिका तृष्णा ततो दर्शय मे जलम् ॥ १७ ॥
तथेत्याज्ञापयामास वटुं मायाविकल्पितम् ।
वटो दर्शय विस्तीर्णं वायुसूनोर्जलाशयम् ॥ १८ ॥
निमील्य चाक्षिणी तोयं पीत्वागच्छ ममान्तिकम् ।
उपदेक्ष्यामि ते मन्त्रं येन द्रक्ष्यसि चौषधीः ॥ १९ ॥
तथेति दर्शितं शीघ्रं वटुना सलिलाशयम् ।
प्रविश्य हनुमांस्तोयमपिबन्मीलितेक्षणः ॥ २० ॥

---

१६ । नरो० । स्वयम् आत्मना । स्वयमित्यनेन अन्यद्वारा ज्ञानं वारितम् ।

---

१५ । तदनन्तरं जलपानानन्तरम् । गमने त्वरा माऽस्तु । रा० ।

१६ । भूतभविष्यादिकं सर्वमहं जानामीति लक्ष्मणादीनां पुनरुत्थानवृत्तमपि मे विदितम् । अतस्ते त्वरा माऽस्तु । परं स्वत एव कार्यस्य सिद्धत्वात् अत्र विश्रम्य ते प्रत्यावर्त्तनेऽपि न काऽपि हानिरिति भावः ।

१७ । जलं जलाशयम् । रा० ।

१८ । मायाविकल्पितं स्वमायया कल्पितं वटुं शिष्यम् । रा० ।

मायाविकल्पितं, मायाविना तेन कालनेमिना कल्पितं माययैव सृष्टमित्यर्थः ।

वायुसूनोरिति सम्बन्धविवक्षया षष्ठी, वायुसूनुमित्यर्थः । दर्शय इति वटुमुक्त्वा हनूमन्तमाह—निमील्येति । चक्षुषोरुन्मीलने यदि मकरी दृग्विषयिणी भवेत् तदा बलवताऽनेन तस्या जीवनहानिर्वा भवेदिति भिया चक्षुषो निमीलनादेशः, निमीलितचक्षुषोऽस्य वधोऽपि तया सुकरो भविष्यतीति विचिन्त्य वा ।

२० । तस्य तद्वचनं श्रुत्वा हनूमान् वायुविक्रमः ।
अवतीर्य सरो दिव्यमुत्पलैः कुमुदैश्चितम् ॥
सोऽपिबत्तत्र पानीयं ग्राही चैव तमग्रहीत् । ६।८२।१९६-१९७ ।

---

1. च 'विविधानि च' । 2. ग च-छ '-स लं' । 3. ग-च-च 'त्वमाश्रमे' । 4. च '-ष्यच्च' छ 'पूर्वं' ।

[1]ततश्चाऽऽगत्य मकरी महा[2]माया महाकपिम् ।
अग्रसत्तं महावेगाद् मारुतिं घोररूपिणी ॥ २१ ॥
ततो ददर्श हनुमान् ग्रसन्तीं मकरीं रुषा ।
दारयामास हस्ताभ्यां वदनं सा ममार ह ॥ २२ ॥
ततोऽन्तरीक्षे ददृशे दिव्यरूपधराऽङ्गना ।
[3]धान्यमालीति विख्याता हनूमन्तमथाब्रवीत् ॥ २३ ॥
त्वत्प्रसादादहं शापाद्विमुक्ताऽस्मि कपीश्वर ।
शप्ताऽहं मुनिना पूर्वमप्सराः कारणान्तरे ॥ २४ ॥

---

इत्यादिना वाल्मीकीये कालनेमिवचनेनैव हनूमतः सरसि प्रवेशस्तत्सलिलपानञ्च । तत्र ग्राही अत्र मकरीति बहुधैव विरोधस्तेन ।

२१ । महामाया बहुमायावती मकरी मकराकारा । रा० ।

२२ । ददर्श चक्षुरुन्मील्येति शेषः । दृष्ट्वा हस्ताभ्यां दारयामासेत्यन्वयः । वाल्मीकीये नखैर्विदारणम् । तथाच—

वेगेन सुमहातेजास्तोलयामास तां स्थलम् ।
तोलयित्वा च तां ग्राहीं नखैरेव व्यदारयत् ॥ इति ६।१२।१५८ ।

२३ । ददृशे हनूमतेति शेषः । अथ हनूमन्तमब्रवीत् सेति शेषः । वाल्मीकीये गन्धकालीत्यस्या नाम । तथाच—

ततोऽसावन्तरीक्षस्था ग्राही वचनमब्रवीत् ।
श्रूयतां कपिशार्दूल हनूमन् वायुनन्दन ॥
जानीहि मामप्सरसं गन्धकालीन्तु नामतः । इति ६।८२।१५९—१६० ।

यद्यपि छ-पुस्तके गन्धकालीति वाल्मीकीयानुमतमाख्यानमस्या दृश्यते तथाऽपि संख्या-गरिष्ठादर्शसम्मतत्वेन धान्यमालीति नामैवास्माभिर्मूले गृहीतम् ।

२४ । शप्ताऽहमिति । शापस्य तत्प्रशमनस्य च कारणं व्यक्तं वाल्मीकीये । तथाच—

आकाशेन तु गच्छन्ती कुबेरभवनं पुरा ॥
विमानेनार्कवर्णेन तप्तकाञ्चनवर्चसा ।
नापश्यं तत्र वेगेन तपस्यन्तं महामुनिम् ॥
यक्षो नाम महातेजा मुनिः शापायुधस्तदा ।
अवधूतो मया चासौ विमानेन हरीश्वर ॥
अब्रवीत् स महातेजा मुनिरुग्रतपास्तदा ।
उत्तरस्यां दिशि गिरिर्यो नाम्ना गन्धमादनः ॥

---

1. ग-च-छ 'तत आ-' । 2. ग-च-छ '-काया' । 3. छ 'गन्धकालीति' ।

आश्रमे [1]यस्तु ते दृष्टः कालनेमिर्महासुरः ।
रावण[2]प्रहितो मार्गं विघ्नं कर्त्तुं तवानघ ॥ २५ ॥
मुनिवेशधरो नासौ मुनिर्विप्रविहिंसकः ।
जहि दुष्टं गच्छ शीघ्रं द्रोणाचलमनुत्तमम् ॥ २६ ॥
गच्छाम्यहं ब्रह्मलोकं त्वत्स्पर्शा[3]द्धूतकल्मषा ।
इत्युक्त्वा सा ययौ स्वर्गं हनूमानप्यथाऽऽश्रमम् ॥ २७ ॥
आगतं तं समालोक्य कालनेमिरभाषत ।
किं विलम्बेन महता तव वानरसत्तम ।
गृहाण मत्तो [4]मन्त्रांस्त्वं देहि मे गुरुदक्षिणाम् ॥ २८ ॥
[5]इत्युक्तो हनुमान्मुष्टिं दृढं बद्ध्वाह राक्षसम् ।
गृहाण दक्षिणामेतामित्यु[6]क्त्वा निजघान तम् ॥ २९ ॥
विसृज्य मुनिवेशं स कालनेमिर्महा[7]सुरः ।
युयुधे वायुपुत्रेण नानामायाविधानतः ॥ ३० ॥

---

दक्षिणे तस्य पार्श्वे तु समीपे यत् सरो महत् ।
ग्राही तत्र भवित्री त्वं सर्वप्राण्यपहारिणी ॥
ततोऽहं शापनिर्दग्धा पतिताऽस्मि महीतले ।
शापान्तायानुनीतश्च मामसौ मुनिरब्रवीत् ॥
यदा यास्यति वीरस्तु हनूमान् गन्धमादने ।
तदा शापाद्विमोक्षस्ते भविष्यति न संशयः ॥ इति ६।८२।१६०-१६६ ।

२५ । 'आश्रमे यस्तु ते दृष्ट' इत्यादि कालनेमिस्वरूपसमाख्यानात्मकोऽंशो 'देहि मे गुरुदक्षिणाम्' इत्यन्तोऽंशश्च वाल्मीकीये न स्तः । तत्र विपाटितग्राहीविग्रहस्य हनूमतः पुनराश्रमागमनं ध्यानादिकञ्च । तेन च ध्यानेन रावणप्रेषितोऽयं राक्षस इति विज्ञाततत्त्वेन हनूमता

तिष्ठ पाप दुराचार विज्ञातोऽसि मयाऽधुना । ६।८२।१३६ ।

इत्यादिना निर्भर्त्सितः कालनेमिः

स्वरूपं दर्शयामास विकृतं घोरदर्शनम् ॥ ६।८२।१३७

इति निजं राक्षसरूपं दर्शयामास ।

२८ । महता विलम्बेन किं कृतमिति विलम्बः किं कृत इत्यर्थः । रा० ।

---

1 च 'यस्त्वया' । 2. ङ '-प्रेषितो' । 3. च '-न्मुक्तक-' । 4. च 'मन्त्रं त्व' । 5. च 'श्रुत्वा च' । 6. ग '-क्त्वा तु जघान', च 'क्त्वाऽभिजघान' । 7. ग '-बलः' ।

महामायिकदूतोऽसौ [1]हनमान् मायिनां रिपुः ।
जघान मुष्टिना [2]शीर्षिण भग्न[3]मूर्द्धा ममार सः ॥ ३१ ॥
ततः क्षीरनिधिं गत्वा दृष्ट्वा [4]द्रोणं महागिरिम् ।
अदृष्ट्वा चौषधीस्तत्र गिरिमुत्पाट्य सत्वरः ॥ ३२ ॥
गृहीत्वा वायुवेगेन गत्वा रामस्य सन्निधिम् ।
उवाच हनुमान् राममानीतोऽयं महागिरिः ।
यद् युक्तं कुरु देवेश विलम्बो नात्र युज्यते ॥ ३३ ॥
श्रुत्वा हनूमतो वाक्यं रामः सन्तुष्टमानसः ।
गृहीत्वा चौषधीः [5]शीघ्रं सुषेणेन महामतिः ।
चिकित्सां कारयामास लक्ष्म[6]णाय महात्मने ॥ ३४ ॥

---

३१ । महामायिको रामः । मायिनां दैत्यानाम् । रा० ।

जघान मुष्टिनेति । अत्राऽऽह वाल्मीकिः—

ततो वायुसुतेनासौ बाहुपाशेन यन्त्रितः ॥
विगतासुर्गतश्रीको न्यपतद् भुवि राक्षसः ।
महानादं ततः कृत्वा गतो वैवस्वतक्षयम् ॥ इति ६।८२।१८३-१८४ ।

३२ । द्रोणगिरिमित्यत्र गन्धमादनमिति वाल्मीकीये । तत्र गन्धमादनप्राप्त्यनन्तरं हनुमतो गन्धर्वैः सह संग्रामस्तेषां विनाशश्च । तथाच—

निमेषेण हताः सर्वे तिस्रः कोट्यो महाबलाः ।
हत्वा वायुसुतः सद्य गन्धर्वांस्तान् महाबलान् ॥ इति ६।८३।१९ ।

अतः परञ्च तस्य ओषध्यन्वेषणम्, तदप्राप्त्या गिरेरुत्पाटनञ्च । तथाच—

पञ्चयोजनविस्तीर्णं सप्तयोजनमायतम् ।
दशयोजनमुत्सेधं तमकम्प्यं गिरेस्तटम् ॥
लीलया हरिमुख्योऽसौ बाहुभ्यामुदपाटयत् ॥ इति ६।८३।२८-२९ ।

३४ । गृहीत्वा तासां तेजोऽभिवृद्धयर्थं स्वयं गृहीत्वा सुषेणस्य वैद्यत्वात्तेन चिकित्सां कारयामास । एतेन वैद्यकशास्त्राभिनिविष्टत्वेन प्रसिद्धस्यैव चिकित्साधिकार इति सूचितम् । रा०।

सुषेणेति । अत्र वाल्मीकीयवर्णनम्—

सुग्रीवस्य वचः श्रुत्वा सुषेणस्त्वरितो ययौ ।
विस्मितः स गिरिं दृष्ट्वा फलमूलोपशोभितम् ॥ ६।९३।४१ ।

---

1. ख 'महामायाविनां विभुः' । 2. ख 'शीर्षे' । 3. क '-मूर्द्धो' । 4. ख 'द्रोणमहा-' । 5. ख 'सर्वाः' । 6. ख '-णस्य महात्मनः' ।

[1]ततः सुप्तोत्थित इव बुद्ध्वा प्रोवाच लक्ष्मणः ।
तिष्ठ तिष्ठ क गन्ताऽसि हन्मीदानीं दशा[2]नन ॥ ३५ ॥
इति ब्रुवन्त[3]मालोक्य [4]मूर्द्ध्न्यवघ्राय राघवः ।
मारुतिं प्राह वत्साद्य त्वत्प्रसादान्महाकपे ।
निरामयं प्रपश्यामि लक्ष्मणं भ्रातरं मम ॥ ३६ ॥
इत्युक्त्वा वानरैः [5]सार्द्धं सुग्रीवेण समन्वितः ।
विभीषणमतेनैव युद्धाय [6]समवस्थितः ॥ ३७ ॥
पाषाणैः[7] पादपैश्चैव पर्वताग्रैश्च वानराः ।
युद्धायाभिमुखा भूत्वा ययुः सर्वे युयुत्सवः ।
रावणो विव्यथे रामबाणैर्विद्धो महासुरः ॥ ३८ ॥
[8]मातङ्ग इव सिंहेन गरुडे[9]नेव पन्नगः ।
अभिभूतो[10]ऽगमद्राजा [11]राघवेण महात्मना ।
सिंहासने[12] समाविश्य राक्षसानिदमब्रवीत् ॥ ३९ ॥

---

आरुह्य तस्य शिखरे सोऽपश्यत् परमौषधिम् ।
दृष्ट्वा चोत्पाटयामास विशल्यकरणीं शुभाम् ॥
गृहीत्वा तरसा चैव सोऽवतीर्णो महीतले ।
शिलायां जर्जरीकृत्य सुषेणो वैद्यसत्तमः ॥
लक्ष्मणाय ददौ नस्यं सुषेणः सुसमाहितः ॥ इति ।६।८३।९३-९९ ।

३६ । मम भ्रातरमहं निरामयं गतपीडं पश्यामीत्यन्वयः । रा० ।

इति ब्रुवन्तं लक्ष्मणम् आलोक्य तस्य मूर्ध्न्यवघ्राय मारुतिं प्राहेत्यन्वयः । लक्ष्मणप्रत्युज्जीवनं पुना रामरावणयुद्धस्यान्तरा वाल्मीकीये रामाज्ञया हनूमता गिरेर्यथास्थाननिवेशः । तत्र गमनवेलायां पर्वतव्यापृतहस्तेन हनूमता रावणादेशादागतानां राक्षसानां पादप्रहारादिभिर्विनाशः । अयञ्च वृत्तान्तो लङ्काकाण्डे चतुरशीतितमे पञ्चाशीतितमे च सर्गे ।

३७ । विभीषणमतेनैव, तस्य लङ्काच्छिद्रज्ञत्वात् । रा० ।

३८ । युद्धायाभिमुखा युद्धं कर्तुं रिपूणामभिमुखा इत्यर्थः । रा० ।

३९ । राघवेणाभिभूतोऽगमत् गृहमिति शेषः । समाविश्येति उपविश्येत्यर्थः । रा० ।

---

1. च 'तदा', ग-छ 'सुप्तोत्थित इव तदा' । 2. ग '-ननम्' । 3. ग-च-छ 'मालिङ्ग' । 4. ग-च 'मूर्ध्न्युपाघ्राय' । 5 च 'शीघ्रं' । 6. च छ 'समुप-' । 7. छ '-षपाद-' । 8. छ 'मतङ्ग' । 9. च-छ '-नैव' । 10. ग-च-छ '-भव-' । 11. छ 'रामेण सु-' । 12 छ '-स' ।

मानुषेणैव मे [1]मृत्युमाह पूर्वं पितामहः ।
मानुषो[2] हि न मां हन्तुं शक्तोऽस्ति भुवि कश्चन ॥ ४० ॥
[3]ततो नारायणः साक्षान्मानुषोऽभून्न संशयः ।
रामो दाशरथिर्भूत्वा मां हन्तुं [4]समुपस्थितः ॥ ४१ ॥
अनरण्येन यत् पूर्वं शप्तोऽहं राक्षसेश्वराः ।
उत्पत्स्यते च मद्वंशे परमात्मा सनातनः ॥ ४२ ॥
तेन त्वं पुत्रपौत्रैश्च बान्धवैश्च समन्वितः ।
हनिष्यसे न सन्देह इत्युक्त्वा मां दिवं [5]गतः ।
स एव रामः सञ्जातो मदर्थे मां हनि[6]ष्यति ॥ ४३ ॥

---

समानार्थः समानशब्दश्च श्लोको वाल्मीकीये—

मातङ्ग इव सिंहेन गरुडेनेव पन्नगः ।
अभिभूतोऽभवद्राजा राघवेण महात्मना ॥ इति ।६।३७।२ ।

४० । मानुषेणैवेति । वाल्मीकीयेऽपि—

पुराणं ब्रह्मण इदं वचनं समुपस्थितम् ।
मानुषेभ्यो विजानीहि भयमित्येव तत्तथा ॥
देवदानवगन्धर्वयक्षराक्षसपन्नगैः ।
अवध्यत्वं मया प्राप्तं परिभूतास्तु मानुषाः । इति ।६।३७।६।७ ।

४२ । अनरण्येनेति । वृत्तमिदं वर्णितं पाश्चात्त्ये वाल्मीकीये । तथाच तत्र—

इक्ष्वाकुकुलजातेन ह्यनरण्येन यत् पुरा ।
उत्पत्स्यति हि मद्वंशे पुरुषो राक्षसाधम ॥
यस्त्वां सपुत्रं सामात्यं सबलं साश्वसारथिम् ।
निहनिष्यति संग्रामे त्वां कुलाधम दुर्मते ॥ ६।६०।८-१० ।

पाश्चात्त्ये अस्त्यन्यः कश्चिच्छापोदन्तोऽत्र न गृहीतः । स च—

शप्तोऽहं वेदवत्या च यथा सा धर्षिता पुरा ।
सेयं सीता महाभागा जाता जनकनन्दिनी ॥
उमा नन्दीश्वरश्चापि रम्भा वरुणकन्यका ।
यथोक्तास्तन्मया प्राप्तं न मिथ्या ऋषिभाषितम् ॥ इति । ६।६०।१०-११ ।

४३ । हनिष्यसे इत्यन्तः शापः । न सन्देह इति तस्यैव स्थिरीकरणम् । स चानरण्यो

---

1. च 'मृत्युं पूर्वमाह' । 2. ग '-षोऽपि' । 3. क 'एष' । 4. ग-च 'समवस्थितः' । 5. ग-च 'ययौ' । 6. क '-ष्यते' ।

कुम्भकर्णस्तु मूढात्मा सदा निद्रावशं गतः ।
तं विबोध्य महासत्त्वमानयन्तु ममान्तिकम् ॥ ४४ ॥

---

मामित्युक्त्वा दिवं गत इत्यन्वयः, मदर्थे मद्वधार्थे इत्यर्थः । स हनिष्यति मां हनिष्यत्येवेति निश्चयाभिलाषः । इदं ज्ञानं रजस्तमोजन्यत्वान्नोत्तमाय फलायेति बोध्यम् । रा० ।

४४ । मूढात्मा अत्यन्ततमःप्रकृतिः, निद्राप्रियत्वात् । रा० ।

वाल्मीकीये कुम्भकर्णप्रबोधवधादिकं लक्ष्मणशक्तिप्रहारात् पूर्वम् । कुम्भकर्णवधः पाद्मेऽपि शक्तिपातनात् पूर्वमेव । तथाच—

रावणस्यानुजं वीरं कुम्भकर्णं महाबलम् ।
निजघान रणे रामो बाणैरग्निशिखोपमैः ॥ २४२।३०२ ।

इति कुम्भकर्णवधः । तदनन्तरञ्च—

रामरावणयोश्चैव तथा सौमित्रिणा सह ।
शक्त्या निपातयामास लक्ष्मणं राक्षसेश्वरः ॥ २४२।३०७ ।

इति शक्तिनिक्षेपः,

ततो हनूमता नीतो महौषधिमहागिरिः ।
तेन रामानुजस्तूर्णं लब्धसंज्ञोऽभवत्तदा ॥ २४२।३११ ।

इति च तस्योद्बोध इति । कुम्भकर्णविबोधवार्त्ता च तत्रातिदीर्घा । तदायोजनमवलम्ब्य वाल्मीकीये—

तेऽथ चक्रुर्महात्मानः कुम्भकर्णाग्रतः स्थिताः ।
भक्ष्याणां मेरुसङ्काशं राशिं परमतर्पणम् ॥
मृगाणां महिषाणाञ्च वराहाणाञ्च सञ्चयान् ।
चक्रुर्नैर्ऋतशार्दूला राशिमन्नस्य चाद्भुतम् ॥
ततः शोणितकुम्भांश्च मद्यानि विविधानि च ।
पुरस्तात् कुम्भकर्णस्य चक्रुस्त्रिदशशत्रवः ॥
विलिप्तश्च परार्ध्येन चन्दनेन सुगन्धिना ।
वस्त्रैः प्रच्छादयामासुर्माल्यैर्गन्धैः सुगन्धिभिः ॥
धूपं सुगन्धं ससृजुस्तुष्टुवुश्च परन्तपम् ।
कुम्भकर्णं महानिद्रं बोधनायोपचक्रमुः । इत्यादि । ६।३७।३२—३६ ।

एवमग्रेऽपि—

ततो गजसहस्रन्तु शरीरे संप्रधावति ।
स मृद्यमानोऽपि तथा न चाबुध्यत राक्षसः ॥
ते राक्षसास्ततः खिन्नाश्चक्रुरन्यं पराक्रमम् ।
प्रमदाश्चाऽऽह्वयामासुः सुमृष्टमणिकुण्डलाः ॥

इत्युक्तास्ते महाकायास्तूर्णं गत्वा [1]तु यत्नतः ।
विबोध्य कुम्भक[2]र्णं निन्यू रावणसन्निधिम् ।
नमस्कृत्य स राजानमासनोपरि संस्थितः[3] ॥ ४५ ॥
[4]तमाह रावणो राजा भ्रातरं दीनया गिरा ।
कुम्भकर्ण निबोध त्वं महत् कष्टमुपस्थितम् ॥ ४६ ॥
रामेण निहताः शूराः पुत्राः पौत्राश्च बान्धवाः ।
किं कर्तव्यमिदानीं मे मृत्युकाल[5] उपस्थिते ॥ ४७ ॥
एष दाशरथी रामः सुग्रीवसहितो बली ।
समुद्रं सबलस्तीर्त्वा मूलं नः परिकृन्तति ॥ ४८ ॥
ये राक्षसा मुख्यतमास्ते हता वानरैर्युधि ।
वानराणां क्षयं युद्धे न पश्यामि कदाचन ॥ ४९ ॥
नाशयस्व महाबाहो यदर्थं परिबोधितः ।
भ्रातुरर्थे महा[6]सत्त्व कुरु कर्म [7]सुदुष्करम् ॥ ५० ॥
श्रुत्वा [8]तद्राक्षसेन्द्रस्य वचनं परिदेवितम् ।
कुम्भकर्णो जहासोच्चैर्वचनं चेदमब्रवीत्[9] ॥ ५१ ॥

---

नागराक्षसकन्याश्च तथा गन्धर्वयोषितः ।
मनुजानां दुहितरः किन्नराणां तथैव च ॥
* * * * *
तासां नूपुरशब्देन मेखलानां रवेण च ।
दिव्येन चैव गन्धेन स्पर्शेन विविधेन च ।
कुम्भकर्णस्तदा बुद्धः स्पर्शं परममन्यत ॥ इत्यादि । ६।३७।५५—६३ ।

४७ । मृत्युकाले उपस्थिते इदानीं मे किं कर्त्तव्यं तद्वदेति शेषः । रा० ।

४९ । वानरा नाशनीया इति चेत्तत्राऽऽह—वानराणां युद्धे क्षयं नाशं न पश्यामि । अनन्तत्वात् हनुमतौषध्यानयनेन जीवनाच्च । रा० ।

५० । अतस्तद्वानरं बलं हनूमत्सहितं नाशयस्व । रा० ।

५१ । रावणेन्द्रस्य सर्वश्रेष्ठरावणस्येत्यर्थः । यद्वा लोकरावणानां श्रेष्ठस्य । परिदेवितं परिदेवनरूपं वचनम् । रा० ।

---

1. च 'प्रय-' । 2. छ '-वस' । 3. छ '-तम्' । 4. अस्य श्लोकस्य स्थाने छ-पुस्तके 'तस्यान्तिके स्थितः सोऽपि राक्षसः क्रूरविक्रमः । रावण उवाच' इति पाठः । 5. ग-छ '-लः समागतः', च '-ल उपागतः' । 6. ग-च '-बाहो' । 7. च 'सुदुस्तरम्' । 8. ख-घ 'तद्रावणेन्द्रस्य' । 9. अतः परं छ-पुस्तके 'कुम्भकर्ण उवाच' इत्यधिकम् ।

[1]मानुषेण मृतिस्तस्य कल्पिता ब्रह्मणा पुरा ।
अतस्त्वं मानुषो भूत्वा जहि [2]रावणकण्टकम् ॥ ५७ ॥
तथेत्याह महाविष्णुः सत्यसङ्कल्प ईश्वरः ।
जातो रघुकुले देवो राम इत्य[3]भिविश्रुतः ॥ ५८ ॥
स हनिष्यति वः सर्वानित्युक्त्वा प्रययौ मुनिः ।
अतो जानीहि रामं त्वं परं ब्रह्म सनातनम् ॥ ५९ ॥
त्यज वैरं भजस्वाद्य मायामानुष[4]रूपिणम् ।
भजतो भक्तिभावेन प्रसीदति रघूत्तमः ॥ ६० ॥
भक्तिर्जनित्री ज्ञानस्य भक्तिर्मोक्षप्रदायिनी ।
भक्तिहीनेन यत् किञ्चित् कृतं सर्वमसत्[5]समम् ॥ ६१ ॥
अवताराः[6] सुबहवो विष्णोर्लीलानु[7]कारिणः ॥
तेषां सहस्रसदृशो रामो ज्ञान[8]मयः शिवः ॥ ६२ ॥

५७ । मानुषो भूत्वेति, दशरथपुत्रत्वेनेत्यर्थः । तथाच वाल्मीकीये—

तस्मादेष हरिर्देवः पद्मनाभस्त्रिविक्रमः ।
पुत्रो दशरथस्यास्तु चतुर्बाहुः सनातनः ॥ इति । ६।४०।४६ ।

५८ । विष्णोरीश्वरत्वसूचकं सत्यसङ्कल्पत्वम् । रा० ।

६० । मायया मनुष्यशरीरं न त्वसौ वस्तुतो मानुषः, कश्चिज्जीव इत्यर्थः । भजत इति द्वितीयाबहुवचनम् । रा० ।

वैरं त्यज रामे इति शेषः । अद्य अद्याऽऽरभ्येत्यर्थः । मानुषरूपिणं मानुषत्वमुपागतं रामं भज । ननु बद्धवैरस्य भजने किमिष्टं स्यादित्याह—भजत इत्यादि । भजतो जनस्य वैरादिभावं भक्तप्राणो रामो न गणयति, स च तस्य सर्वं वैरादिकं विस्मृत्य केवलं भजनमेवावलम्ब्य तं प्रति प्रसीदतीत्याशयः ।

६१ । भक्तान् प्रसीदति इत्यस्योपपत्तये भक्तेरुत्कर्षमाह—भक्तिरिति । ज्ञानजनकत्वादेव तस्या मोक्षदत्वम् । किं बहुना कर्मभक्तिहीनं कृतमसत्सममकृततुल्यम्, फलाजनकमित्यर्थः । रा० ।

६२ । सर्वावतारेष्वयं मुख्योऽवतार इत्याह—अवतारा इति । लीलानुकारिणस्तत्तज्जातिचेष्टानुकरणशीलस्येत्यर्थः । रा० ।

1. क-पुस्तके अयं श्लोको नास्ति । 2. ग 'त्रैलोक्य-', च 'तं लोकबाधकम्' । 3. च '-पि वि-' । 4. घ '-विग्रहम्' । 5. क '-हितम्' । 6. च '-रास्त्र -ब' । 7. ग-च-छ '-सारिणः' । 8. ग-च-छ '-वतां वरः' ।

रामं भजन्ति निपुणा मनसा वचसा[1]ऽनिशम् ।
अनायासेन संसारं तीर्त्वा यान्ति हरेः पदम् ॥ ६३ ॥
ये राममेव सततं भुवि शुद्धसत्त्वा ध्यायन्ति तस्य चरितानि पठन्ति सन्तः ।
मुक्तास्त एव भवभोगमहाहिपाशैः सीतापतेः पदमनन्तसुखं प्रयान्ति ॥ ६४ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे लङ्काकाण्डे
सप्तमोऽध्यायः ॥ ७ ॥

---

६४ । नरो० । भवभोग एव महाहिपाशास्तैस्तथा । भवभोगाः संसारसुखानि । सीतापतेः पदं वैकुण्ठम् ।

[ लङ्काकाण्डे सप्तमाध्यायव्याख्या समाप्ता ॥ ७ ॥ ]

---

[ सर्वेष्ववतारेष्वपि श्रीरामावतारस्य श्रेष्ठत्वमाह—अवतारा इत्यादिना । तेषामवताराणां सहस्रैरेव परिमितैः सहशस्तुल्यः । एतेनास्य पूर्णत्वमुक्तम् । एतत् प्रमाणयति ज्ञानवतां वर इति । यतो ज्ञानवतां तत्त्वज्ञानिनां वरो वरणीय इत्यर्थः । गो० ]

६३ । ये निपुणा रामं भजन्ति ते संसारं तीर्त्वा हरेः पदं यान्ति । रा० ।

अनिशं निरन्तरं मनसा तन्मूर्त्तिचिन्तया वचसा तन्नामकीर्त्तनादिनेत्यर्थः, संसारं संसारबन्धनं तीर्त्वा विमुच्येत्यर्थः, हरेः पदं स्थानं हरिसालोक्यमित्यर्थः ।

६४ । शुद्धसत्त्वाः शुद्धान्तःकरणाः । भवः संसारः भोगः शरीरं यस्य तादृशो यो महानहिः कालस्तदीयैः पाशैः बन्धनैर्मुक्ताः सीतापतेरनन्तसुखं पदं शुद्धं ब्रह्म प्रयान्ति प्राप्नुवन्ति । रा० ।

---

1 छ '-हरिम्' ।

# अष्टमोऽध्यायः

——॰:——

[1]श्रीमहादेव उवाच—

कुम्भकर्णवचः श्रुत्वा भ्रुकुटीविकटाननः ।
दशग्रीवो जगादेदमासनादुत्पतन्निव ॥ १ ॥

[2]त्वमानीतो न मे ज्ञानबोधनाय सुबुद्धिमान् ।
मया कृतं समीकृत्य युध्यस्व यदि रोचते ।
[3]नो चेद् गच्छ सुषुप्त्यर्थं निद्रा त्वां बाधतेऽधुना ॥ २ ॥

२ । नरो० । समीकृत्य स्वकृतेनेति शेषः ।

१ । अत्रार्थे वाल्मीकिः—

स तु श्रुत्वा महाराजः कुम्भकर्णस्य भाषितम् ।
भ्रुकुटीं चैव संचक्रे क्रुद्धश्चेदमुवाच ह ॥ इति । ६।४०।२२ ।

२ । समीकृत्य अङ्गीकृत्य मत्समव्यवहारो भूत्वा । रा० ।

[ समीकृत्य भद्राभद्रयोस्तुल्यत्वं कृत्वा । गो० ]

त्वमानीत इत्यादौ वाल्मीकीयानुमतत्वम् । तथाच—

मान्यो गुरुरिवाऽऽचार्यः किं भवाननुशास्ति माम् ।
अलं ते वाक्श्रमं कृत्वा कालयुक्तं विधीयताम् ॥
विभ्रमाच्चित्तमोहाद्वा बलवीर्योच्छ्रयेण वा ।
अभिपन्नमिदानीं यद्वृथा तस्य पुनः कथा ॥ इति । ६।४०।२३-२४ ।

अधुना अधुनापीत्यर्थः । 'मया कृतं समीकृत्ये'त्यादिना 'नो चेद् गच्छ सुषुप्त्यर्थमि'त्यादिना चात्र रावणस्य अभिमानपरवशत्वं सूच्यते, वाल्मीकीये अत्र नाभिमानस्य गन्धोऽपि, परं विपन्नस्य स्वजनस्य विपदुद्धारप्रार्थना । तथाच—

अस्मिन् काले हि यद्युक्तं तदिदानीं विधीयताम् ।
समापनय मद्दोषं विक्रमेण समीकुरु ॥
यदि खल्वस्ति ते स्नेहो भ्रातृत्वं चावगच्छति ।
यदि वा कार्यमेतत्ते हृदि कार्यतमं मतम् ॥

1. क-ख-घ-पुस्तकेषु 'श्रीमहादेव उवाच' इति नास्ति । 2. ग 'त्वा-' । 3. ग-च 'न' ।

रावणस्य वचः श्रुत्वा कुम्भकर्णो महाबलः ।
रुष्टोऽयमिति विज्ञाय तूर्णं युद्धाय निर्ययौ ॥ ३ ॥

स लङ्घयित्वा प्राकारं महापर्वतसन्निभः ।
निर्ययौ नग[1]रात्तूर्णं भीषयन् हरिसैनिकान् ॥ ४ ॥

स ननाद महानादं समुद्र[2]मभिनादयन् ।
वानरान् [3]कालयामास बाहुभ्यां भक्षयन् रुषा ॥ ५ ॥

कुम्भकर्णं तदा दृष्ट्वा सपक्षमिव पर्वतम् ।
दुद्रुवुर्वानराः सर्वे कालान्तक[4]मिवाखिलाः ॥ ६ ॥

---

५ । नरो० । कालयामास द्रावयामास ।

---

स सुहृद् यो विपन्नार्थं दीनमभ्युपपद्यते ।
स बन्धुर्योऽपनीतेषु साहाय्यायोपकल्पते ॥ इति ६।४०।२६-२७ ।

रावणस्याभिमानशौटीर्यं तत्राग्रे । तथाच—

तद् गच्छ शयनीयं त्वं पिब त्वं विगतज्वरः ।
शयमानं न हन्यात् त्वां राघवो लक्ष्मणस्तथा ॥ इत्यादि । ६।४१।२० ।

४ । [ प्राकारमिति, लङ्घयित्वा उत्प्लवनेनातीत्य इत्यर्थः । गो० ]

५ । अभिनादयन् स्वनादप्रतिध्वनियुतं कुर्वन् । कालयामास पीडयामास । रा० ।
[ कालयामास धारयामास । गो० ]
स ननाद वानरान् कालयामास च इत्यन्वयः । वाल्मीकीये—

बाहुभ्यां वानरान् सर्वान् आकृष्य स महाबलः ।
भक्षयामास संक्रुद्धो गरुडः पन्नगानिव ॥ इति ६।४६।३३

६ । कालान्तकमिव कालमिवान्तकमिव च तं दृष्ट्वा दुद्रुवुरित्यर्थः ।
अत्र वानराणां निर्याणप्रकारे कौतूहलोद्दीपकं किञ्चिद् वृत्तम्—

प्रक्षिप्ताः कुम्भकर्णेन वक्त्रे पातालसन्निभे ।
नासापुटाभ्यां निष्पेतुः कर्णाभ्याञ्चैव वानराः ॥ ६।४६।३४

इत्यादिना प्रस्तुतं कवयितृमुकुटमणिना वाल्मीकिना ।

---

1. च '-राच्छीघ्र' । 2. च '-मपि दारयन्' । 3. च 'कल-' । 4. च '-मिव द्रुतम्' ।

भ्रमन्तं हरिवाहिन्यां मुद्गरेण महा[1]बलम् ।
[2]कालयन्तं हरीन् वेगाद् भक्षयन्तं समन्ततः ।
चूर्णयन्तं मुद्गरेण पाणिपादैरनेकधा ॥ ७ ॥
कुम्भकर्णं तदा दृष्ट्वा गदापाणिर्विभीषणः ।
ननाम चरणौ तस्य भ्रातुर्ज्येष्ठस्य बुद्धिमान् ।
विभीषणोऽहं भ्रातर्मे दयां कुरु महामते ॥ ८ ॥
रावणस्तु मया भ्रातर्बहुधा परिबोधितः ।
सीतां देहीति रामाय रामः साक्षाज्जनार्दनः ।
न शृणोति च मां हन्तुं खड्गमुद्यम्य चोक्तवान् ॥ ९ ॥
धिक् त्वां गच्छेति मां [3]हत्वा पदा पापिभिरावृतः ।
चतुर्भिर्मन्त्रिभिः सार्द्धं रामं शरणमागतः ॥ १० ॥

---

७। पाणिपादैश्च स्वीयैश्चूर्णयन्तम् । एकवस्त्वाभाव आर्षः । एवमनेकप्रकारेण चूर्णयन्तम् ।

८। बुद्धिमान् सर्वास्ववस्थासु ज्येष्ठो मन्तव्य इति सदाचाराभिज्ञः । रा० ।

कुम्भकर्णयुद्धावसरे सुग्रीवकुम्भकर्णयोः किञ्चिद् युद्धं वाल्मीकीये दृश्यते। तत्र च कुम्भकर्णेन गृहीतो नीतश्च लङ्काभवनं सुग्रीवः कुम्भकर्णस्य कर्णनासापहृतिरूपां काञ्चित् विडम्बनात्मिकां कृतिं कृतवानिति मुदमाप्नुवन्तु पाठकास्तदंशविशेषविलोकनेन । तथाच—

ततः कराग्रैः सहसोर्ध्वमेत्य राजा हरीणाममरेन्द्रशत्रोः ।
चकर्त्त कर्णौ दशनैश्च नासां ददार पार्श्वेषु च कुम्भकर्णम् ॥
स कुम्भकर्णो हृतकर्णनासो भृशं नदन् वेदनयाऽर्दितश्च ।
रोषाभिभूतो रुधिरोक्षितश्च सुग्रीवमाविध्य पिपेष भूमौ ॥
स भूतले न्यस्तः कपिप्रवीरः सुरारिभिस्तैरभिहन्यमानः ।
जगाम वेगाद् वियदभ्युपेत्य पुनश्च रामं सहसा जगाम ॥
कर्णनासाविहीनस्तु कुम्भकर्णो महाबलः ।
रराज शोणितोत्सेकैर्गिरिः प्रस्रवणैरिव ॥ इति ६।४६।७२-७५ ।

कुम्भकर्णं तदा दृष्ट्वेत्यादि कुम्भकर्णविभीषणसंवादात्मकः प्रबन्धो वाल्मीकीये न दृश्यते ।

९-१०। परिबोधनप्रकारमाह—सीतामित्यादि । इति बोधितस्तन्न शृणोति श्रुतवान्, विपरीतं खड्गमुद्यम्य हन्तुमुद्यत इति शेषः । ततः कथञ्चिन्निवृत्तो मां पदा हत्वा उक्तवांश्च । किमुक्तवांस्तदाह—धिक् त्वां गच्छेति । ततोऽहं चतुर्भिर्मन्त्रिभिरिति । रा० ।

---

1. क '-बलः' । 2. क 'हरीन् वेगाद् भक्षयन्तं कालयन्तं समन्ततः' । 3. ग-च 'हित्वा यदा' ।

तच्छ्रुत्वा कुम्भकर्णोऽपि ज्ञात्वा भ्रातरमागतम् ।
समा[1]लिङ्ग्याऽऽह वत्स त्वं जीव रामपदाश्रयः ॥ ११ ॥
कुलसंरक्षणार्थाय राक्षसानां हिताय च ।
महाभागवतोऽसि त्वं पुरा मे नारदाच्छ्रुतम् ॥ १२ ॥
गच्छ तात [2]मयेदानीं दृश्यते न च किञ्चन ।
मदीयो वा परो वाऽपि मद[3]मत्तविलोचनः ॥ १३ ॥
इत्युक्तोऽश्रुमुखो भ्रातुश्चरणावभिवन्द्य सः ।
रामपार्श्वमुपा[4]गत्य चिन्ता[5]पर उपस्थितः ॥ १४ ॥

---

१३ । नरो० । हे तात, गच्छ, यतो मया इदानीं मदीयो वा परो वाऽपि किञ्चन यथा स्यात्तथा न दृश्यते, यतोऽहं मदमत्तविलोचन इति । अत्र स्थितोऽजानता मया यदि त्वं हनिष्यसे, तदा कुलरक्षणं राक्षसानां हितञ्च न भविष्यतीति भावः ।

---

स पदा मां हत्वा धिक् त्वां गच्छ इत्युक्त्वा पापिभिरावृतः परिवृतस्तस्थाविति शेषः । अहं चतुर्भिर्मन्त्रिभिः सार्द्धं रामं शरणं रक्षितारमागतः प्राप्तः ।

११ । समालिङ्ग्य चाऽऽहेति शेषः । तदेवाऽऽह—वत्स त्वमिति । रा० ।

रामस्य चरणाश्रयेण तव दीर्घजीवित्वं निश्चितमिति ध्वनितम् ।

१२ । ननु मे जीवनं कथं सम्भाव्यते ? तत्राऽऽह—महाभागवतोऽसीति । भगवद्भक्तस्य ते नाशः कथमपि न सम्भाव्य इति भावः । रा० ।

कुलसंरक्षणायेति । युद्धेऽस्मिन् त्वदितरे सर्वे राक्षसा विनाशं यास्यन्तीति तव प्राणरक्षायामेव कुलरक्षा भवेदित्याशयः । हितायेति, मृतानां तेषां श्राद्धाद्यौर्द्ध्वदैहिकक्रियानुष्ठानेनेत्यर्थः । भ्रात्रादिविरुद्धस्य मम श्राद्धाद्यनुष्ठानेन कथं तेषां हितं भवेदिति चेत्तत्राऽऽह—महाभागवतोऽसि त्वमिति । त्वद्विधेन भगवद्भक्तेनानुष्ठिते श्राद्धे निश्चितमेव तेषां पारलौकिकं हितं स्यादिति भावः ।

१३ । यतोऽहं मदेन मत्तनेत्रस्ततो मया स्वीयपरविभागेन किमपि न दृश्यतेऽतस्त्वं गच्छ, कदाचित् त्वय्यपि प्रहारसम्भवात् । रा० ।

१४ । चिन्तापरः कुम्भकर्णः कथं नाशमेष्यतीति चिन्तापरः । रा० ।

कुम्भकर्णेन विभीषण इत्युक्तः अश्रुमुखः कुम्भकर्णस्याचिरभाविविनाशशङ्कया । चिन्तापर इति स्वजनध्वंसमसहमानस्य चिन्ता स्वाभाविकीति ।

---

1. ख-घ-ङ '-लिङ्ग्य च'। 2. क-ख-घ 'ममे-'। 3. ग '-मन्द-'। 4. च '-गम्य'। 5. च '-परमुपाश्रितः'।

कुम्भकर्णोऽपि [1]हस्ताभ्यां पादाभ्यां पेषयन् हरीन् ।
[2]चचार वानरीं सेनां [3]कालयन् गन्धहस्तिवत् ॥ १५ ॥

दृष्ट्वा [4]तं राघवः क्रुद्धो वायव्यं शस्त्र[5]मादरात् ।
चिक्षेप कुम्भकर्णाय तेन चिच्छेद [6]रक्षसः ।
[7]समुद्गरं दक्षहस्तं तेन घोरं ननाद सः ॥ १६ ॥

स हस्तः पतितो भूमावने[8]कान् मर्दयन् कपीन् ।
पर्यन्त[9]माश्रिताः सर्वे वानरा भय[10]वेपिताः ।
रामराक्षसयोर्युद्धं पश्यन्तः पर्यवस्थिताः ॥ १७ ॥

कुम्भकर्णश्छिन्नहस्तः शालमुद्यम्य वेगतः ।
समरे राघवं हन्तुं दुद्राव तमथा[11]च्छिनत् ।
शालेन सहितं वामहस्तमैन्द्रेण राघवः ॥ १८ ॥

---

१५ । यस्य गन्धमाघ्राय अन्ये गजाः पलायन्ते स गन्धगजः, स यथा क्षुद्रपशून् कालयन् चरति तद्वदयं चचार । रा० ।

१६ । वायव्यं शस्त्रं वायव्यास्त्राभिमन्त्रितं शस्त्रम् । रा० ।

तेन वायव्येनास्त्रेण रक्षसः कुम्भकर्णस्य समुद्गरं दक्षहस्तं चिच्छेदेत्यन्वयः । वाल्मीकीयेऽपि—

वायव्यमाहूय ततो महास्त्रं रामः प्रचिक्षेप निशाचराय ।
समुद्गरं तेन जहार बाहुं स कृत्तबाहुस्तुमुलं ननाद ॥ इति ६।४६। ११८।

१७ । पर्यन्तमाश्रिता युद्धभूमध्ये स्थिता हस्तपातभयात्तत्प्रान्तमाश्रिता इत्यर्थः । रा० । पर्यन्तमाश्रिता इति । वाल्मीकीयेऽपि—

ते वानरा भग्नबलावशेषाः पर्यन्तमाश्रित्य भयावसन्नाः ।
प्रवेपिताङ्गा ददृशुः सुघोरं नरेन्द्ररक्षोऽधिपसंनिपातम् ॥ इति ६।४६।१२० ।

१८ । ऐन्द्रेण इन्द्रास्त्रेण । तथाच वाल्मीकीये—

स तस्य बाहुं सहशालवृक्षं समुद्यतं पन्नगभोगकल्पम् ।
इन्द्रास्त्रयुक्तेन जहार रामो बाणेन वज्राशनिसंनिभेन ॥ इति ६।४६।१२२ ।

---

1. च 'पादाभ्यां हस्ताभ्यां' । 2. ङ 'स चचार तदा सेना' । 3. ग-च 'कालयन्' 4. ग 'तु' । 5. ङ '-मादधत्' । 6. ङ 'तस्य वै' । 7. ग-च 'मुद्गरं दक्षहस्तञ्च' । 8. ख-ग-घ '-कानर्दयन्' । 9. च-ङ '-मास्थिताः' । 10. ङ '-विह्वलाः' । 11. क-ख-घ '-थोऽच्छिनत्' ।

छिन्नबाहुमथाऽऽयान्तं नर्दन्तं वीक्ष्य राघवः ।
द्वावर्द्धचन्द्रौ निशितावादायास्य पदद्वयम् ।
चिच्छेद पतितौ पादौ लङ्काद्वारि महास्वनौ ॥ १६ ॥
निकृत्तपाणिपादोऽपि कुम्भकर्णोऽतिभीषणः ।
वडवामुखवद् वक्त्रं व्यादाय रघुनन्दनम् ।
अभिदुद्राव निनदन् राहुश्चन्द्रमसं यथा ॥ २० ॥
[1]अपूरयच्छिताग्रैश्च सायकैस्तद्रघूत्तमः ।
[2]शरपूरितवक्त्रोऽसौ चुक्रोशातिभयङ्करः ॥ २१ ॥
अथ सूर्यप्रतीकाशमैन्द्रं शरमनुत्तमम् ।
वज्राशनिसमं रामश्चिक्षेपासुरमृत्यवे ॥ २२ ॥
[3]स तत् पर्वतसङ्काशं स्फुरत्कुण्डलदंष्ट्रकम् ।
चकर्त्त रक्षोऽधिपतेः शिरो वृत्रमिवाशनिः ॥ २३ ॥

---

२१ । नरो० । शिताग्रैस्तीक्ष्णाग्रैः, सायकैर्बाणैः ।

२२ । नरो० । अविद्यमान उत्तमो यस्मात् तं तथा । वज्राशनिसमं हीरकाशनितुल्यम् ।

२३ । नरो० । स शरः । तत् स्फुरन्त्यः कुण्डलदंष्ट्रा यस्य तत्तथा ।

---

१९ । अत्रापि वाल्मीकिः—

द्वावर्द्धचन्द्रौ निशितौ गृहीत्वा चिच्छेद पादौ युधि राक्षसस्य ॥ इति ६।४६।१२४ ।

२० । वडवामुखं नाम समुद्रे शतयोजनविस्तीर्णं वडवाग्निवासस्थानम् । रा० ।

[ वडवामुखमिति । वडवा और्वानलमुखी अश्वा, तद्वक्त्रवत् प्रज्वलन्मुखमित्यर्थः । गो० ]

२३ । अत्र बाहुच्छेदात् परमेव शिरःकर्त्तनम् । प्राच्यवाल्मीकीये एतदन्तरा हृद्विदारणमपि विनियोजितम् । तथाच—

तं कार्मुके समाधाय विकृष्य च महाबलः ।
ससर्ज कुम्भकर्णस्य वधाय शरमुत्तमम् ॥
दिव्यं मघवता दत्तं ज्वलन्तमिव तेजसा ।
स विसृष्टो बलवता रामेण निशितः शरः ॥
कुम्भकर्णस्य हृदयं भित्त्वा धरणिमाविशत् । इति ६।४६।१२९-१३१ ।

---

1. च 'आपू-' । 2. क 'बाण-' । 3. क 'एवं प-' ।

तच्छिरः पतितं लङ्काद्वारि कायो महोदधौ ।
शिरोऽ[1]स्यारोधयद् द्वारं कायो [2]नक्राद्यचूर्णयत् ॥ २४ ॥
ततो देवाः सऋषयो गन्धर्वाः पन्नगाः खगाः ।
सिद्धा यक्षा गुह्यकाश्च अप्सरोभिश्च राघवम् ।
ईडिरे कुसुमासारैर्वर्ष[3]न्तश्चाभिनन्दिताः ॥ २५ ॥

---

किन्त्वयमंशः पाश्चात्त्ये वाल्मीकीये न दृश्यते । ततश्च—

स तन्महापर्वतकूटसन्निभं विवृत्तदंष्ट्रोज्ज्वलचारुकुण्डलम् ।
चकर्त्त रक्षोऽधिपतेस्तदा शिरो यथैव वृत्रस्य पुरा पुरन्दरः ॥
इति ६।४६।१३४ ।

२४ । अस्य शिरो द्वारं रोधयत् अरुन्धदित्यर्थः । अडभाव आर्षः । निवृत्तप्रेषणाण्णिच् । नक्रादि समुद्रे कायपातात् । रा० ।

शिरो लङ्काद्वारि पतितम्, कायो महोदधौ पतित इति शेषः ।

तच्छिर इत्याद्यंशः प्राच्यवाल्मीकीयाननुमतः । तत्र—

विनद्य सुमहानादं न्यपतद्राक्षसो हतः ।
वानराणां सहस्रे द्वे कायेनाथ न्यपोथयत् ॥
संप्राकम्पन्त लङ्कायाः प्राकारास्तोरणानि च ।
तस्मिन्निपतिते भूमौ चुक्षुभे च महोदधिः ॥ ६।४६।१३५-१३६ ।

एतावन्मात्रम् । पाश्चात्त्ये पुनः—

तद्रामबाणाभिहतं पपात रक्षःशिरः पर्वतसन्निकाशम् ।
बभञ्ज चर्यागृहगोपुराणि प्राकारमुच्चं तमपातयच्च ॥ ६।६७।१७० ।

इत्यादिना शिरसो लङ्काभवनादौ पतनम्,

तच्चातिकायं हि महत्प्रकाशं रक्षस्तदा तोयनिधौ पपात ।
ग्राहान् परान् मीनवरान् भुजङ्गान् ममर्द भूमिञ्च तथाविवेश ॥

इत्यादिना कायस्य समुद्रपतनमिति पाश्चात्त्यवाल्मीकीयसंवादीदं वृत्तम् । एवमग्रेऽपि पाश्चात्त्ये वाल्मीकीये राक्षसानां रावणाय कुम्भकर्णनिधनवार्त्तानिवेदनावसरे—

प्रतपित्वा मुहूर्त्तन्तु प्रशान्तो रामतेजसा ।
कायेनार्द्धप्रविष्टेन समुद्रं भीमदर्शनम् ॥
निकृत्तनाशाकर्णेन विक्षरद्रुधिरेण च ।
रुद्ध्वा द्वारं शरीरेण लङ्कायाः पर्वतोपमः ॥ इति ६।६८।३-४ ।

---

1. क-ख घ-च '-स्य रो-', छ '-स्यारोह्य-' । 2. छ 'नक्राश्च चू-' । 3. च '-न्ति चाभि-' ।

आजगाम तदा रामं द्रष्टुं [1]देवमुनीश्वरः ।
नारदो गगनात्तूर्णं स्वभासा भासयन् दिशः ॥ २६ ॥
राममिन्दीवरश्याममुदा[2]राङ्गं धनुर्धरम् ।
ईषत्ताम्रविशालाक्षमैन्द्रास्त्राञ्चित[3]बाहुकम् ॥ २७ ॥
दयार्द्रदृष्ट्या पश्यन्तं वानरान् शरपीडितान् ।
दृष्ट्वा गद्गदया वाचा भक्त्या स्तोतुं प्रचक्रमे ॥ २८ ॥

नारद उवाच—

देवदेव जगन्नाथ परमात्मन् सनातन ।
नारायणाखिलाधार विश्वसाक्षिन् नमोऽस्तु ते ॥ २६ ॥
विशुद्धज्ञानरू[4]पोऽपि त्वं [5]लोकानतिवञ्चयन् ।
मायया [6]मनुजाकारः सुखदुःखादिमानिव ॥ ३० ॥
त्वं मायया [7]गूह्यमानः सर्वेषां हृदि संस्थितः ।
स्वयंज्योतिःस्वभा[8]वस्त्वं व्यक्त एवामलात्मनाम् ॥ ३१ ॥

---

२७ । नरो० । ईषत्ताम्रे ईषत्ताम्रवर्णे विशाले अक्षिणी यस्य तं तथा ।

३० । नरो० । विशुद्धमुपाधिशून्यं ज्ञानरूपं ज्ञानस्वरूपं यस्य स तथा ।

३१ । नरो० । गूह्यमानस्तिरोधीयमानः, स्वयंज्योतिःस्वभावः स्वयंप्रकाशस्वरूपः । अमलात्मनां रागादिदोषरहितान्तःकरणानाम् ।

---

२५ । अप्सरोभिः सहेति शेषः । ईडिरे तुष्टुवुः । कुसुमासारै रामं वर्षन्तोऽभिनन्दिता अभिनन्दवन्तो बभूवुरिति शेषः । रा० ।

२७ । ऐन्द्रास्त्रेण अञ्चितो युक्तो बाहुर्यस्य तम् । रा० ।

२८ । दयार्द्रदृष्ट्या शरपीडितान् वानरान् पश्यन्तं दृष्ट्वा स्तोतुं प्रचक्रमे राममिति शेषः । गद्गदयेति । रामस्य दर्शनानन्देन वानराणामकालमृत्युदर्शनदुःखेन च वाचो गद्गदत्वम् ।

२९ । देवानां हिरण्यगर्भादीनामपि देव पूज्य, परमात्मन्, सर्वे जीवा अंशा यस्य तादृश, अत एव सनातन, सदा भव नित्येत्यर्थः । नारं जीवसमूहस्तस्यायन, अखिलाधार जगदुत्पत्तिस्थितिनाशकारण, विश्वसाक्षिन् अन्तर्यामितयेति भावः । रा० ।

३० । अतिवञ्चयन् स्वस्वरूपगोपनेन संसारपातिनः कुर्वन् एतदपि मायाकृतमेव तत्त्वतः, तत्राऽऽरोपितं बोध्यम् । रा० ।

[ त्वं लोकाननुरञ्जयन् लोकान् अनुरञ्जयितुमित्यर्थः । मनुजाकारो न तु मनुजः । गो० ]

---

1. छ 'तत्र मुनी-' । 2 ख '-राङ्गधनु-' । 3. च '-विग्रहम्' । 4. ग-च-ञ '-पोऽसि' । 5 ग 'लोकानभि-', च 'लोक परि-' । 6. च 'मानुषा-' । 7. छ 'बुद्ध्यमानः' । 8. घ '-व त्व' ।

उन्मीलयन् [1]सृजस्येतन्नेत्रे राम जगत्त्रयम् ।
उपसंह्रियते सर्वं त्वया चक्षुर्निमीलनात् ॥ ३२ ॥
यस्मिन् सर्वमिदं भाति यतश्चैतच्चराचरम् ।
यस्मान्न किञ्चिल्लोकेऽस्मिंस्तस्मै ते ब्रह्मणे नमः ॥ ३३ ॥

---

३२ । नरो० । हे राम, एतज्जगत्त्रयस्य सृष्टौ संहारेऽपि तव आयासलेशोऽपि नास्तीति सूचयन्नाह—उन्मीलयन्नित्यादि ।

३३ । नरो० । यस्मिन् ब्रह्मणि सर्वमिदं जगद् भाति, यतश्च ब्रह्मण एतच्चराचरं जातम्, यस्माद् ब्रह्मणः किञ्चिदस्मिन् लोके नास्ति तत् त्वमेवेति स्तुवन्नमस्करोति—यस्मिन्नित्यादिपद्येन । यस्मिन्नित्यादिना अनन्तत्वमुक्तम् । यतश्चेत्यादिना जगद्धेतुत्वमुक्तम् । यस्मान्न किञ्चिल्लोकेऽस्मिन्नित्यनेन जगति त्वद्व्यतिरिक्तत्वं नास्ति जगद्व्यतिरिक्तत्वं त्वय्यस्तीति सूचितम् ।

---

३१ । सर्वेषां हृदि स्थितोऽपि स्वप्रकाशोऽपि त्वं मायया गूह्यमानो भवसि । तर्हीदृशत्वे किं मानमित्यत आह—अमलात्मनां व्यक्त एवेति । तदनुभव एव तव तादृशत्वे प्रमाणमिति भावः । रा० ।

[ ननु सीतानिमित्तं शत्रुवधव्याकुलस्य मम कथमुक्तरूपत्वमित्याह—त्वमित्यादि । त्वं सर्वेषां स्थावरजङ्गमानां हृदि संस्थितोऽन्तर्यामी, स्वयंज्योतिःस्वभावः स्वप्रकाशस्वरूपः; मायया गूह्यमान आच्छाद्यमानः मनुजाकारः प्रतीयसे इत्यनुषङ्गः । अमलात्मनां निर्मलबुद्धीनां सम्बन्धे पुनर्व्यक्त एव साक्षादीश्वर एव प्रतीयसे इति शेषः । गो० ]

३२ । उन्मीलयन्निति । तव निमेषोन्मेषावेव सृष्टिप्रलयाविति भावः । रा० ।

[ त्वमेव सृष्टिस्थितिप्रलयानां हेतुरित्याह—उन्मीलयन्निति । नेत्रे उन्मीलयन् विस्फारयन् एतज्जगत्त्रयं सृजसि । चक्षुर्निमीलनात् चक्षुषोर्मुद्रणात् सर्वमुपसंह्रियते । अयम्भावः—यदा प्रकृतौ तव ईक्षणं भवति, तदैव तद्द्वारा सर्वं जायते, यदा सृष्टिं त्यजसि तदैव प्रकृत्यादेरन्तर्मुखत्वात् सर्वं लीयते । तथाच श्रुतिः—'अजामेकां लोहितशुक्लकृष्णाम्' ( श्वेताश्व० ४।५ ) इति 'तदैक्षत बहु स्याम्' ( छान्दो० ६।२।३ ) इति च । स्मृतिरपि—'यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति' इति । गो० ]

३३ । यस्मिन्निति । यत एतच्चराचरं जायते यस्मिन् लीयते येन तिष्ठति चेत्यर्थः । सार्वविभक्तिकस्तसिः । यस्मादधिकं न किञ्चित्तस्मै ब्रह्मरूपिणे नम इत्यर्थः । रा० ।

[ सृष्टिलयहेतुत्वमुक्त्वा पालकत्वमाह—यस्मिन्निति । यस्मिन् त्वयि निमित्ते अधिकरणे च इदं सर्वं भाति । निमित्ततामाह—यतश्चतदिति । चराचरं जगद् यस्मिन्निमित्तभूताद् भवति ।

---

1. ग 'सृजत्येत-', क 'जगत्येत-' ।

[1]प्रकृतिं पुरुषं कालं व्यक्ताव्यक्तस्वरूपिणम् ।
यं जानन्ति मुनिश्रेष्ठास्तस्मै रामाय ते नमः ॥ ३४ ॥
विकाररहितं शुद्धं ज्ञानरूपं श्रुतिर्जगौ ।
त्वां सर्वजग[2]दाकारमूर्त्तिं चाप्याह सा श्रुतिः ॥ ३५ ॥

---

३४। नरो०। प्रकृत्यादिपदवाच्या ये पदार्थाः श्रूयन्ते ते अपि त्वमेवेति स्तुवन् नमस्करोति—प्रकृतिमिति पद्येन। पुरुषपदेनात्र हिरण्यगर्भ उच्यते, 'स वै शरीरी प्रथमः स वै पुरुष उच्यते। आदिकर्त्ता स भूतानां ब्रह्माग्रे समवर्त्तत ॥' 'हिरण्यगर्भः समवर्त्तताग्रे' ( ऋग्वेद० १० म०, १२१ सू० १ ऋक्० ) इत्यादिश्रुतेः। व्यक्ताव्यक्तस्वरूपिणमिति, व्यक्तं पञ्चीकृतभूतपञ्चकम्, अव्यक्तम् अपञ्चीकृतभूतपञ्चकम्।

---

उपादानमपि त्वमेवेत्याह—यस्मादस्मिन् लोके भवदन्यत् किञ्चिन्नास्ति, तस्मात्तस्मै तुभ्यं नमः। ननु कथमेतावत्त्वमिति चेत्तत्राऽऽह—ब्रह्मणे इति। अतः सर्वस्वरूपत्वं तव। तथाच श्रुतिः—'सर्वं खल्विदं ब्रह्म' ( छान्दो० ३।१४।१ ) इत्यादि। गो० ]

३४। यं प्रकृतिं जानन्ति, शक्तिशक्तिमतोरभेदात्। यं पुरुषं जानन्ति अंशांशिनोरभेदात्,

ममैवांशो जीवलोके जीवभूतः सनातनः। १५।७

इति गीतोक्तेः। व्यक्तस्वरूपः कालो निमिषादिः, अव्यक्तः क्षणरूपस्तदुभयरूपं कालं यं त्वां जानन्ति तस्मै नमः। रा०।

[ नन्वस्मिन् जगति प्रकृतिरुपादानं पुरुषो निमित्तम्। वादिभेदे प्रकृतिर्निमित्तं पुरुष उपादानम्, कालः संहर्त्ता, महदादिद्वारा जगज्जायते अतः कथमहं सृष्ट्यादिकर्त्ता सर्वमयो वेत्याह—प्रकृतिमिति। व्यक्तं कार्यमहङ्कारादि, अव्यक्तं कारणं महत्तत्त्वम्। यद्वा व्यक्ताव्यक्तं स्थूलसूक्ष्मप्रकृत्यादिस्वरूपं मुनिश्रेष्ठाः सनकादयो यं त्वां जानन्ति तस्मै ते तुभ्यं रामाय नमः। गो० ]

३५। विकाररहितत्ववादसर्वाकारवादयोरापाततो विरोधो दृश्यते, जगतो विकाररूपत्वात्। रा०।

[ ननु जगन्मयत्वेन मम विकारित्वमापादयसे, नेत्याह—विकाररहितमिति। विकाररहितं जन्मादिषड्भावहीनम्। तत् कुत इत्याह—ज्ञानरूपमिति। यतो ज्ञानरूपं चिद्घनम् अतः शुद्धम्, श्रुतिरुपनिषज्जगौ ऊचे। तथा च श्रुतिः—'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' ( श्वेताश्व० ४।५ ) इति, 'विज्ञानमानन्दं ब्रह्म' ( बृहदा० ३।९।२८ ) इति च। गो० ]

---

1. च 'प्रकृतिपुरुषाकारं'। 2. छ '-दाधार-'।

विरोधो दृश्यते देव वैदिको वेदवादिनाम् ।
निश्चयं नाधिगच्छन्ति त्वत्प्रसादं विना बुधाः ॥ ३६ ॥
मायया [1]क्रीडितो देव न विरोधो मनागपि ।
रश्मिजालं रवेर्यद्वद् दृश्यते जलवद् भ्रमात् ।
भ्रान्तिज्ञानात्तथा राम त्वयि सर्वं प्रकल्प्यते ॥ ३७ ॥

---

३९-३६। नरो०। हे देव, बुधा अपि त्वत्प्रसादं विना तत्त्वनिश्चयं न प्राप्नुवन्ति, यतः श्रुत्या तव विशुद्धज्ञानस्वरूपत्वस्य जगद्रूपत्वस्य च प्रतिपादनाद् वेदवादिनां वैदिकविरोध इत्याह—विकाररहितमिति द्वाभ्याम्। विकाररहितं देहेन्द्रियादिरहितम्, अत एव शुद्धम्। सर्वजगदाकार एव मूर्त्तिर्यस्य तं तथा। विरोधो विप्रतिपत्तिः। त्वत्प्रसादं त्वदनुग्रहम्।

३७। नरो०। यतस्त्वं मायया क्रीडितोऽतो मनागपि ईषदपि न विरोधो न विप्रतिपत्तिः। ननु जगतो मिथ्यात्व एव विरोधाभावो घटते, तत्तु वक्तुं न शक्यते जगतो दृश्यमानत्वादित्याह—रश्मिजालमित्यादि। रश्मिजालं किरणसमूहः। प्रकल्प्यते परमार्थतो नास्तीत्यर्थः।

---

३६। [ ननु 'हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीदि'ति, ( ऋग्वेद० १०म० १२१ सू० ६ ऋक्० ) 'इन्द्रो जातोऽत्र राजते' 'अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्याः' ( ऋग्वेद० ८ म० ३ अः ६ ऋक्० ) इत्यादिश्रुतयो ब्रह्मेन्द्रादीन् जगत्कारणजगत्पालकत्वेनाभिदधति, कथमहमेवेति चेद् वेदतत्त्वार्थाज्ञानां वैदिकानां भ्रम एवायमित्याह—विरोध इत्यादि। हे देव, वेदवादिनां वेदघोषकाणां न तु तदर्थाभिज्ञानां वैदिको वेदविषयजो विरोधो दृश्यते, आपाततो विरोध इव दृश्यते, किन्तु ते वेदवादिनो निश्चयं वेदार्थतत्त्वं नाधिगच्छन्ति न जानन्ति यतोऽबुधा अविद्वांसः। ननु 'तं त्वौपनिषदं पुरुषं पृच्छामी'ति ( बृहदा० ३।९।२६ ) 'तमेव विदित्वाऽतिमृत्युमेती'ति ( श्वेताश्व० ३।८ ) च श्रुतेर्वेदार्थानुशीलनेन ईश्वरज्ञानादेव मुक्तिस्तदर्थज्ञानाभावेन ईश्वरज्ञानाभावादनिर्मुक्तिप्रसङ्गः स्यादित्याह—त्वत्प्रसादं विनेति। वेदतत्त्वार्थज्ञानाभावादीश्वरज्ञानाभावेनानिर्मुक्तिस्त्वत्प्रसादे तु वेदार्थज्ञानं मुक्तिश्च सुलभैवेति भावः। गो०]

३७। त्वत्प्रसादलभ्यं निश्चयमाह—माययेति। एवञ्च जगदाकाररूपत्वं मायिकमिति न विरोधः। मायिकत्वज्ञानञ्च जगति त्वत्प्रसादं विना दुर्लभमिति भावः। ननु मायिकत्वेऽपि जगतस्तद्रूपत्वं भगवतः कथमित्यत्राऽऽह—रश्मिजालमिति। यथा तत्र मरुदेशावच्छिन्ने रविरश्मिजाले जलभ्रमो मृगाणां तथा त्वयि जगद् भ्रान्तिज्ञानाच्छुक्तौ रजतमिव प्रकल्प्यते जनैः, माययाऽपि निरधिष्ठानकभ्रमोत्पादनासम्भवात्, अतस्तद्रूप इत्युच्यसे। रा०।

[ निर्विरोधतामाह—माययेति। मायया ब्रह्मेन्द्रादिरूपेण क्रीडतस्तव मनागपि न

---

1. क ख-ग-घ-च-छ 'क्रीडतो'।

[1]मनसो विषयाद्देव रूपं ते निर्गुणं परम् ।
कथं दृश्यं भवेद्देव दृश्याभावे [2]भजेत् कथम् ॥ ३८ ॥
अतस्त्वावतारेषु रूपाणि निपुणा भुवि ।
भजन्ति बुद्धिसम्पन्नास्तरन्त्येव भवार्णवम् ॥ ३९ ॥
कामक्रोधादयस्तत्र [3]शत्रवः परिपन्थिनः ।
भीषयन्ति [4]तदा चेतो मार्जारा [5]मूषिकं यथा ॥ ४० ॥

---

३८-३९ । नरो० । ननु जगतो मिथ्यात्वाद् विरोधस्तावन्न भवतु, नीरूपस्य मम शरीरधारणं किमर्थमित्यत आह—मनस इत्यादि । मनसो विषयात् परमेव भिन्नमेव । यतो निर्गुणं गुणातीतम्, भक्तानुग्रहार्थमेव नीरूपस्य तव शरीरधारणमिति भावः । अतो निर्गुणस्य रूपस्य अदृश्यत्वाद् भक्तुमशक्यत्वात् अदृश्यं निर्गुणं रूपं ( ? ) भक्तुमशक्यत्वाद्वा । रूपाणि सगुणानीति शेषः ।

४० । नरो० । ननु भीता एव मां भजन्ति, इह संसारे ते केभ्यो भीता इत्यपेक्षायामाह—कामक्रोधादय इत्यादि । शत्रवः परिपन्थिन इति शत्रुवदपकारका इत्यर्थः । एकद्वापेक्षया

---

विरोधस्तेषामपि त्वद्रूपत्वान्न पार्थक्यम्, अतो ब्रह्मादिरूपं त्वामेव वेदाः प्रतिपादयन्तीत्यविरोध एवेत्यर्थः । भ्रान्त्या अन्यस्मिन् अन्यभावनं सदृष्टान्तमाह—रश्मिजालमित्यादि । रवे रश्मिजालं किरणनिकरो भ्रमाद् यद्वद् यथा जलवद्दृश्यते, हे राम, तथा त्वयि अप्रच्युतस्वरूपे सर्वं ब्रह्मादिस्थावरान्तं जगद् भ्रान्त्या प्रकल्प्यते । गो० ]

३८-३९ । यत्तु ते वास्तवं निर्गुणं रूपं तन्मनसः श्रवणमननिदिध्यासनादिसंस्कृतस्य मनसो विषयः । 'दृश्यते त्वग्र्यया बुद्ध्या' ( कठ०।३।१२ ) इति श्रुतेः । तत्तव निर्गुणं रूपं दृश्यं चक्षुरादिविषयः कथं भवेत्, दृश्याभावे दृश्यत्वाभावे कथं भजेत् सेवेत । अतस्तज्ज्ञानासम्भवात्तद्रूपाविचारेणावताररूपाणि भजन्ति तावतैव भवार्णवं तरन्त्येव । रा० ।

[ ननु जगद् यद्यसत्, अहमेव सत्यः, तर्हि जगद्दर्शने मम दर्शनं कथं न स्यादत आह—मनस इत्यादि । हे देव, मनसोऽपि अविषयात् ते तव निर्गुणं परं सर्वं प्रत्यग्रूपं कथं दृश्यं भवेत् ? तथाच श्रुतिः—'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह' ( तैत्ति० २।४।१ ) इति । ननु यदि मनसोऽप्यविषयत्वान्मम रूपं दुर्ज्ञेयं तर्हि जीवानां कथं संसारनिवृत्तिः स्यादत्राऽऽह—दृश्याभाव इत्यादिना सपादपद्येन । यतो दृश्याभावे तव परं रूपं कथं भजेत्, अतः कारणात् निपुणाः शास्त्रविचारचतुरास्तवावतारेषु मीनकूर्मादिषु तव रूपाणि स्वस्वाभिमतानि भजन्ति । भुवीति । मर्त्यलोकस्य कर्मक्षेत्रत्वान्न केवलं भजन्ति, भवार्णवं संसारसमुद्रं तरन्त्येव । एवेत्यसन्दिग्धार्थत्वम् । यतो बुद्धिसम्पन्नाः सारासारविवेकनिपुणाः । गो० ]

---

1. क-ख-घ 'मनसो विषयो' । 2. ख 'जपेत्' । 3. क-ख-घ-च-छ 'बहवः' । 4. ख-ग-च 'सदा', छ 'यदा' । 5. क-ख-ग-घ 'मूषकं' ।

त्वन्नाम स्मरतां नित्यं त्वद्रूपमपि मानसे ।
त्वत्पूजानिरतानां[1] ते कथामृतपरात्मनाम् ।
त्वद्भक्तसङ्गिनां राम संसारो गोष्पदायते ॥ ४१ ॥
अतस्ते सगुणं रूपं ध्यात्वाऽहं सर्वदा हृदि ।
मुक्तश्चरामि लोकेषु पूज्योऽहं सर्वदैवतैः ॥ ४२ ॥

---

बहुभ्यो महद्भयं भवतीति सूचनाय कामक्रोधादय इति बहुवचनान्तत्वमुक्तम् । मिलितबहुजनापेक्षया एकस्य महद्भयं भवतीति सूचनाय चेत इत्युक्तम् । अत एव दृष्टान्तेऽपि मार्जारा इति मूषिकमिति चोक्तम् ।

४१ । नरो० । भजनमाह—त्वन्नामेति सार्द्धेन पद्येन । मानसे कुर्वतामिति शेषः । कथामृतमेव परं परमार्थो यस्य तादृश आत्मा मनो येषां तेषां तथा । यद्वा कथामृते परं केवलम् आत्मा येषां तेषां तथा । गोष्पदायते गोष्पदमित्यवा......दरत् तुच्छो भवतीत्यर्थः ।

४२ । नरो० । अतो निर्गुणं रूपं (?) ध्यातुमशक्यत्वात् सगुणं शब्दादिगुणसहितं सत्त्वादिगुणसहितं वा ।

---

४० । भीषयन्ति त्वद्ध्यानान्निवर्तयन्ति । रा० ।

[ ननु केवलं ज्ञानेनैव निवार्याः कामादिपरिपन्थिनः कथं भक्तिमात्रेण निवर्तन्ताम्, तेषु सत्सु कथं वा संसारतारणं 'यदा सर्वे विमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥' (बृहदा० ४।४।७) इति श्रुतेः, तत्राऽऽह—कामेत्यादि । तत्र भजने कामक्रोधादयः शत्रवो भक्तिशातकाः परिपन्थिनः, यतो विरोधिनश्चेतः सदा भीषयन्ति, विवरान्तर्वर्तिनं मूषिकं मार्जारा यथा केवलं भीषयन्ति न तु किञ्चित् कर्त्तुं शक्नुवन्ति । अयं भावः—मार्जारा विवरं परित्यज्य भ्रमन्तमेव आक्रामन्ति, न तु विवरान्तर्गतम् । तथा त्वत्पादपद्मं परित्यज्य विषयेष्वासक्तमेव चेत आक्रामन्ति, न तु त्वत्पदाम्भोजनिमग्नमनन्यासक्तमिति । गो० ]

४१ । ध्यानदार्ढ्योपायमाह—त्वन्नाम स्मरतां पुंसां त्वद्रूपमपि मानसे भवतीति शेषः । नामस्मरणमेव भगवद्रूपध्याने दृढ उपाय इति भावः । सगुणसेवाऽपि मोक्षदेत्याह—त्वत्पूजेत्यादि । गोष्पदायते इत्यनेन तस्य शक्यतरणत्वं सूच्यते । रा० ।

[ अहो तव स्मरणादिमाहात्म्यम्, यतोऽतिदुस्तरसंसारसमुद्रः स्वयं गोष्पदवदतितुच्छो भवतीत्याह—त्वन्नामेत्यादि । त्वद्रूपमपि मानसे इति त्वद्रूपं येषां मानसे नित्यमस्तीति शेषः । गो० ]

४२ । अतो निर्गुणसेवाया दुष्करत्वात् सगुणसेवाया अपि मोक्षदत्वाच्चेत्यर्थः । मुक्तः संसारक्लेशात् । मुक्तावस्थत्वं स्वस्य सूचितम् । अत एव सर्वदैवतैः पूज्यः । रा० ।

---

1. च '-नाच्च' ।

राम त्वया महत् [1]कार्यं कृतं देवहितेच्छया ।
कुम्भकर्णवधेनाद्य भूभा[2]रोऽयं गतः प्रभो ॥ ४३ ॥
श्वो हनिष्यति सौमित्रिरिन्द्रजेतारमाहवे ।
हनिष्यसेऽथ [3]राम त्वं परश्वो दशकन्धरम् ॥ ४४ ॥
पश्यामि [4]सर्वं देवेश सिद्धैः सह नभोगतः ।
अनुगृह्णीष्व मां देव गमिष्यामि सुरालयम् ॥ ४५ ॥
इत्युक्त्वा राममामन्त्र्य नारदो [5]भगवानृषिः ।
ययौ देवैः पूज्यमानो ब्रह्मलोकमकल्मषम् ॥ ४६ ॥
भ्रातरं निहतं श्रुत्वा कुम्भकर्णं महाबलम् ।
रावणः शोकसन्तप्तो रामेणाक्लिष्टकर्मणा ।
मूर्च्छितः पतितो भूमावुत्थाय विललाप ह ॥ ४७ ॥

---

४३ । एवं मुख्यरूपेण स्तुत्वा प्रकृतकर्मणाऽपि स्तौति—रामेति । गतो गतप्रायः । रा० ।

४४ । श्व इति । इदं तद्वधस्याऽऽसन्नकालताद्योतकम् । वाल्मीक्युक्त्या अग्निवेश्योक्त्या च दिनत्रयेणेन्द्रजितो वधः प्रतीयते । अत्राप्यग्रे वक्ष्यति—'अहोरात्रैस्त्रिभिर्वीर. कथञ्चिद्विनिपातितः ।' इति । एवं परश्व इत्यपि, अग्निवेश्यरामायणे अष्टादशाहानि रामरावणयोर्द्वन्द्वयुद्धस्योक्तेः । रा० ।

४५ । नभोगतः नभःशब्देन भूर्लोकोर्द्ध्वलोकाः, तदन्यतमस्थितः सर्वं युद्धवृत्तान्तं पश्यामि साक्षात्करोमि । त्वद्भक्तिजनितज्ञानोत्कर्षेण ज्ञानप्रतिबन्धकस्य सर्वेन्द्रियतमसो निवर्त्तनात् । अनेन गमनानुज्ञार्थमुक्तयुद्धदर्शनार्थं स्थेयमित्यस्यावसरो निराकृतः । रा० ।

[ देवेशसिद्धैरिति, देवाश्च ईशश्च सिद्धाश्च तैः सह । गो० ]

४६ । [ अकल्मषं पतनादिदुःखशून्यम् । गो० ]

४७ । मूर्च्छितः सन् पतितः भूमाविति शेषः । वाल्मीकीयेऽपि—

स श्रुत्वा निहतं सङ्ख्ये कुम्भकर्णं महाबलम् ।
रावणः शोकसन्तप्तो मुमोह च पपात च ॥ इति ६।४८।२ ।
पितृव्यं पतितं श्रुत्वा देवान्तकनरान्तकौ ।
त्रिशिराश्चातिकायश्च बभूवुः शोकपीडिताः ॥

---

1. च 'कर्म' । 2. छ '-रोऽपगतः' । 3. क-ख 'रामस्त्व' । 4. छ 'सर्वदेवे-' ।
5. ग 'गंतवा-' ।

पितृव्यं निहतं [1]श्रुत्वा [2]पितरं चातिविह्वलम् ।
इन्द्रजित् प्राह शोकार्त्तं [3]त्यज शोकं महामते ॥ ४८ ॥

---

भ्रातरं निहतं श्रुत्वा रामेणाक्लिष्टकर्मणा ।
महोदरमहापार्श्वौ शोकाक्रान्तौ बभूवतुः ॥ ६।४८।३-४ ।

इत्यादिनाऽत्र कुम्भकर्णनिधनात् परमपि एतेषां वर्त्तमानत्वमिति 'अतिकायमुखमि'त्यादिना इतः पूर्वं ग्रन्थेऽस्मिन् यदुक्तं तन्न तत्रस्थमिति विभावयामः । ग्रन्थकृताऽस्मिन् लङ्काकाण्डे अत्यतिद्रुतगामित्वेन वृत्तानां पौर्वापर्यं विजहता किमपि वस्त्वन्तरमुद्भावयितुं प्रयतमानेन कष्टतमा दशोत्पादिता । वाल्मीकीये अतः परं क्रमेण नरान्तकत्रिशिरोमहापार्श्वातिकायादीनां युद्धं विनाशश्च तत इन्द्रजिद्युद्धम् ।

४८ । वाल्मीकीये अतिकायवधात् परं विजिगीषोरिन्द्रजितः—

न तात मोहप्रतिपत्तिकालो यदिन्द्रजिज्जीवति नैऋर्तेन्द्र ।
नेन्द्रारिबाणाभिहतो हि कश्चित् प्राणान् रणे धारयितुं समर्थः ॥ ६।९२।४

इत्यादि वाक्यम् । ततश्च इन्द्रजिता हवनम् अग्नेः प्रसादलाभश्च । ततस्तस्य युद्धं तस्मिन् युद्धे—

चतुःषष्टिर्हताः कोट्यो वानराणां तरस्विनाम् ।
दिवसस्याष्टमे भागे राक्षसेन निपातिताः ॥ ६।९३।१४

इत्यादिना चतुःषष्टिकोटीवानरविनाशो रामादीनां विगतचेतनत्वञ्च । जाम्बवतश्च—

विशल्यौ कुरु चाप्येतौ सादितौ रामलक्ष्मणौ ।
गत्वा परममध्वानमुपर्युपरि सागरम् ॥
हिमवन्तं नगश्रेष्ठं हनूमन् गन्तुमर्हसि ।
ततः काञ्चनमत्युग्रमृषभं नाम पर्वतम् ॥
कैलासशिखरञ्चैव द्रक्ष्यस्यद्भुतविक्रम ।
तयोः शिखरयोर्मध्ये विचित्रं ह्यतुलप्रभम् ॥
सर्वौषधियुतं वीर द्रक्ष्यस्योषधिपर्वतम् ।
तस्य वानरशार्दूल चतस्रो मूर्ध्नि संस्थिताः ॥
त्वं द्रक्ष्यस्योषधीर्दीप्ता दीपयन्तीर्दिशो दश ।
मृतसञ्जीवनीमेकां विशल्यकरणीं तथा ॥
स्ववर्णकरणीञ्चैव सन्धानीञ्च महौषधिम् ।
सर्वाः संगृह्य हनुमन् शीघ्रमागन्तुमर्हसि ॥ ६।९३।३३—३८

---

1. छ 'दृष्ट्वा' । 2. ग-छ 'पितरञ्चापि वि-' । 3. च-छ 'शोकं त्यज' ।

मयि जीवति राजेन्द्र मेघनादे महाबले ।
दुःखस्यावसरः कुत्र देवान्तक महामते ॥ ४६ ॥
व्येतु ते दुःखमखिलं स्वस्थो भव [1]महीपते ।
सर्वं समीकरिष्यामि हनिष्यामि च [2]ते रिपून् ॥ ५० ॥
गत्वा निकुम्भिलां सद्यस्त[3]र्पयित्वा हुताशनम् ।
लब्ध्वा रथादिकं तस्मादजे[4]योऽहं भवा[5]म्यरेः ॥ ५१ ॥
इत्युक्त्वा त्वरितं गत्वा निर्दिष्टं हवनस्थलम् ।
रक्तमाल्याम्बरधरो रक्तगन्धानुलेपनः ।
निकुम्भिलास्थले मौनी हवनायोपचक्रमे ॥ ५२ ॥
विभीष[6]णोऽथ [7]तच्छ्रुत्वा मेघनादस्य चेष्टितम् ।
प्राह रामाय सकलं होमारम्भं दुरात्मनः ॥ ५३ ॥

---

इत्यादिवाक्येन हनूमत ओषध्यानयनं रामादीनां पुनश्चेतनालाभश्च । अतः परं कुम्भनिकुम्भमकराक्षादीनां विनाशः । ततः पुनरिन्द्रजिद्युद्धम्, तेन मायासीताविनाशः । इन्द्रजिन्नाशार्थं लक्ष्मणस्य निकुम्भिलागमनमिति प्रकृतेन सहासङ्गतिः ।

४९ । [ देवान्तक इति रावणसम्बोधनम् । देवानामन्तको यमस्वरूप इति तदर्थः । गो० ]

५० । समीकरिष्यामि तदीयमुख्यहननेनाऽऽत्मीयं सर्वदुःखं दुःखेन समं करिष्यामीत्यर्थः । तदेवाऽऽह—हनिष्यामीति । रा० ।

५१ । तदुपायमाह—गत्वेति । लब्ध्वेत्यस्य योत्स्यामीति शेषः । तस्माद्रथादिलाभात्, अजेयः युद्ध इति शेषः । रा० ।

५२ । निर्दिष्टमुक्तं हवनस्थलं गत्वा हवनायोपचक्रमे इत्यन्वयः । रा० ।

एतद्गमनं मायासीतादर्शनात् परम् । निकुम्भिलायज्ञमवलम्ब्य वाल्मीकिः—

यज्ञभूमौ तु विधिना पावकस्तेन रक्षसा ।
हूयमानः प्रजज्वाल जपहोमवषट्कृतः ॥
सोऽर्चिष्मान् ददृशे चाथ जयाशंसी विभावसुः ।
सन्ध्यागत इवाऽऽदित्यः परिवेशसमन्वितः ॥ इति ६।६१।२८-२९ ।

---

1. क 'महामते' । 2. क-ख-घ 'वै' । 3. क '-र्पयामि' । 4 च '-यो हि' । 5. च '-म्यहम्' । 6 ग च-छ '-णोऽपि' । 7. ग 'तज् ज्ञात्वा', च 'तं ज्ञात्वा' ।

समाप्यते [1]चेद्धोमोऽयं मेघनादस्य दुर्मतेः ।
तदाऽजेयो भवेद्राम मेघनादः सुरासुरैः ।
अतः शीघ्रं लक्ष्मणेन घातयिष्यामि रावणिम् ॥ ५४ ॥
आज्ञापय मया सार्द्धं लक्ष्मणं बलिनां वरम् ।
हनिष्यति न सन्देहो मेघनादं तवा[2]नुजः ॥ ५५ ॥

श्रीराम उवाच—

अहमेव[3] गमिष्यामि हन्तुमिन्द्रजितं [4]रिपुम् ।
आग्नेयेन महास्त्रेण सर्वराक्षसघातिना ॥ ५६ ॥
विभीषणोऽपि तं प्राह नासावन्यैर्निहन्यते ।
यस्तु द्वादश वर्षाणि निद्राहारविवर्जितः ।
तेनैव मृत्यु[5]र्निर्दिष्टो ब्रह्मणाऽस्य दुरात्मनः ॥ ५७ ॥
लक्ष्मणस्तु [6]अयोध्याया निर्गम्यायास्त्वया सह[7] ।
[8]तदादि निद्राहारा[9]दीन्न जानाति रघूत्तम ।
[10]सेवार्थं तव राजेन्द्र ज्ञातं सर्वमिदं मया ॥ ५८ ॥
तदाज्ञापय [11]देवेश लक्ष्मणं [12]त्वरया मया ।
हनिष्यति न सन्देहः शेषः साक्षाद्धराधरः ॥ ५९ ॥

---

५४ । नरो० । मेघनादस्य मेघनादेनेत्यर्थः । अतः होमे समाप्तेऽजेयत्वात् । रावणिं रावणस्यापत्यम् ।

---

५४ । तदा अजेय इति च्छेदः । शीघ्रं होमसमाप्तेः प्रागेव । रा० ।
दुर्मतेर्मेघनादस्यायं होमश्चेत् समाप्यते समाप्तो भवेत् तदा अजेय इत्यादिः ।
५५ । बालो लक्ष्मणः कथं तं हन्यादिति सन्देहो माऽस्त्वित्याह—हनिष्यतीति । रा० ।
५७ । यस्तु द्वादश वर्षाणीत्याद्यंशो वाल्मीकीये न दृश्यते ।
५८ । तदादि निद्रादीनि न जानाति न स्मरति, अनुष्ठानन्तु दूरापास्तमित्यर्थः । रा० ।

---

1. ग-छ 'च होमोऽय' । 2. ग-च '-ऽऽज्ञया' । 3. घ-छ '-वाऽऽगमि-' । 4. छ 'रणे' । 5. छ '-रुद्दिष्टो' । 6. ग-च-छ 'यदायोध्या' । 7. अतः परं च-पुस्तके 'विनिद्रो निरदः स्त्रीणामदर्शी सुखमुन्नतम् ।' इत्यधिकम् । 8. अस्यार्द्धस्य स्थाने छ-पुस्तके 'योत्स्यते तस्य ते मृत्युर्भविष्यति न संशयः ।' इति पाठः । 9. च '-दिं न' । 10. अस्यार्द्धस्य स्थाने छ-पुस्तके 'विनिद्रो निरदः स्त्रीणामदर्शी सुखमुन्नतम्' इति पाठः । 11. ग-च-छ 'राजेन्द्र' । 12. ग-च 'त्वं मया सह' ।

त्वमेव साक्षाज्जगतामधीशो नारायणो लक्ष्मण [1]एव शेषः ।
युवां धराभारनिवारणार्थं जातौ जगन्नाटकसूत्रधारौ ॥ ६० ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे
लङ्काकाण्डे अष्टमोऽध्यायः ॥ ८ ॥

---

६० । नरो० । जगन्नाटयत इति जगन्नाटकौ तौ च सूत्रधारौ चेति जगन्नाटकसूत्रधारौ ।

[ लङ्काकाण्डे अष्टमाध्यायव्याख्या समाप्ता ॥ ८ ॥ ]

---

६० । तस्य शेषत्वमेव दार्ढ्याय पुनराह—त्वमेवेति । जगतो निर्माणरूपं नाटकं तस्य सूत्रधारौ मुख्यकारणे । रा० ।

---

1. छ 'एष' ।

# नवमोऽध्यायः

——:०:——

[1]श्रीमहादेव उवाच—

विभीषणवचः श्रुत्वा [2]रामो वाक्यमथाब्रवीत् ।
जानामि तस्य रौद्रस्य मायां कृत्स्नां विभीषण ॥ १ ॥
स [3]हि ब्रह्मास्त्रविच्छूरो मायावी च महाबलः ।
जानामि लक्ष्मणस्यापि स्वरूपं मम [4]सेवनम् ।
ज्ञात्वैवाऽऽसमहं तूष्णीं भविष्यत्[5]कार्यगौरवात् ॥ २ ॥
इत्युक्त्वा लक्ष्मणं प्राह रामो ज्ञानवतां वरः ।
गच्छ लक्ष्मण सैन्येन महता जहि रावणिम् ।
हनूमत्प्रमुखैः सर्वैर्यूथपैः सह लक्ष्मण ॥ ३ ॥
[6]जाम्बवानृक्षरा[7]जोऽयं [8]सह सैन्येन संवृतः ।
विभीषणश्च सचिवैः सह त्वामभियास्यति ।
अभिज्ञस्तस्य देशस्य जानाति विवराणि सः ॥ ४ ॥

---

१ । विभीषणेति । तस्य इन्द्रजितः, रौद्रस्य अतितामसस्य । रा० ।

जानामीति । जानामि तस्य रौद्रस्य मायामेतां दुरात्मनः ।
स हि दिव्यास्त्रवित्तात राक्षसापसदो महान् ॥ ६।६४।१६

इत्यादिवाल्मीकीयेनानुमतमेतत् ।

२ । मम सेवनं मत्सेवाकरणं निद्रादिराहित्यरूपम् । पूर्वं वनवाससमयेऽहं तस्य निद्राहारादिराहित्यं ज्ञात्वाऽपि भविष्यतः कार्यस्येन्द्रजिद्वधरूपस्य गुरुत्वात् तूष्णीमासम् , तमनिषिद्धवानित्यर्थः । रा० ।

३ । इत्युक्त्वा विभीषणमिति शेषः । लक्ष्मणेति द्विः सम्बोधनमादरपूर्वमन्यासाध्यत्वसूचनाय । रा० ।

४ । सः सैन्यसंवृत ऋक्षराजः सचिवसहितो विभीषणश्च त्वामभियास्यति अनुयास्यति ।

---

1. क-ख-च-पुस्तकेषु 'श्रीमहादेव उवाच' इति नास्ति । 2. च 'रामोऽपि वाक्यमब्रवीत्' । 3. क 'तु' । 4. च-टि 'केवलम्' । 5. च '-कालगौ-' । 6. क-पुस्तके इत आरभ्य पञ्चमश्लोकान्तो-ऽंशो नास्ति । 7. ग-च '-जश्च' । 8. ग 'सैन्येन महता वृत' ।

रामस्य वचनं श्रुत्वा लक्ष्मणः सविभीषणः ।
जग्राह कार्मुकं[1] श्रेष्ठमन्यद्भीमपराक्रमः ॥ ५ ॥
रामपादा[2]वुपस्पृश्य हृष्टः सौमित्रिरब्रवीत् ।
अद्य मत्कार्मुकान्मुक्ताः शरा निर्भिद्य रावणिम् ।
गमिस्यन्ति [3]हि पातालं स्नातुं भोगवतीजले ॥ ६ ॥
एवमुक्त्वा [4]स सौमित्रिः परिक्रम्य प्रणम्य तम् ।
इन्द्रजिन्निधनाकाङ्क्षी ययौ त्वरितविक्रमः ॥ ७ ॥
वानरैर्बहुसाहस्रैर्हनूमान् पृष्ठतोऽ[5]न्वयात् ।
[6]विभीषणश्च सहितो मन्त्रिभिस्त्वरितं ययौ ।
जाम्बवत्प्रमुखा ऋक्षाः सौमित्रिं त्वरयाऽ[7]न्वगुः ॥ ८ ॥
गत्वा निकुम्भिला[8]देशं लक्ष्मणो वानरैः सह ।
अपश्यद्बलसंघातं दूराद्राक्षससङ्कुलम् ॥ ९ ॥

---

विभीषणस्यानुगमनं कार्यसाधकमित्याह—अभिज्ञ इति। तस्य इन्द्रजिद्धननदेशस्य विवराणि रिपूणां छिद्राणि । रा० ।

[ तस्य देशस्य निकुम्भिलाख्यस्थानस्य अभिज्ञः । विवराणि छिद्राणि जानाति । गो० ]

विभीषणश्चेति । वाल्मीकीयेऽपि—

अयञ्च सचिवैः सार्द्धं महात्मा रावणानुजः ।
अभिज्ञस्तस्य देशस्य पृष्ठतोऽनुगमिष्यति ॥ इति ६।६४।२२ ।

५ । कार्मुकमन्यदिति । कार्मुकान्तरग्रहणं न वाल्मीकीयानुमतम् । तथाच तत्र—

जग्राह कार्मुकं श्रेष्ठं भीमं भीमपराक्रमः । इति ६।६४।२३ ।

६ । भोगवतीजले पातालस्थगङ्गासलिले,

भोगवती च पाताले स्वर्गे मन्दाकिनी तथा ।

इत्यादिदर्शनात् । वाल्मीकीये तु—

अद्य मत्कार्मुकोत्सृष्टाः शराः संभिद्य रावणिम् ।
लङ्कामभिपतिष्यन्ति हंसाः पुष्करिणीमिव ॥ इति ६।६४।२९ ।

९ । बलसङ्घातम् इन्द्रजिद्रक्षणार्थं स्थितम् । राक्षससङ्कुलं राक्षसव्याप्तम् । रा० ।

---

1. ग '-कश्रेष्ठम-' । 2. क-ख-ग-घ-च '-स्पृज स्पृश्य' । 3. च-छ 'च' । 4. ग 'च', च 'तु' । 5. ख-ग-घ-छ '-न्वगात्' । 6. छ-पुस्तके अय श्लोको नास्ति । 7. ग '-न्वयुः' । 8. छ '-स्थाने' ।

धनुरानस्य सौमि[1]त्रिर्यत्तोऽभूद् भूरिविक्रमः ।
अङ्गदेन च वीरेण [2]जाम्बवान् [3]राक्षसाधिपः[4] ॥ १० ॥
तदा विभीषणः प्राह सौमि[5]त्रिं पश्य राक्षसान् ।
यदेतद्राक्षसानीकं मेघश्यामं विलोक्यते ।
[6]अस्यानीकस्य महतो [7]भेदने यत्नवान् भव ॥ ११ ॥
राक्षसेन्द्रसुतोऽप्यस्मिन् [8]भिन्ने दृश्यो भविष्यति ।
अभिद्रवाऽऽशु यावद्वै नैतत् कर्म समाप्यते ।
जहि वीर दुरात्मानं हिंसापरमधार्मिकम् ॥ १२ ॥
विभीषणवचः श्रुत्वा लक्ष्मणः शुभलक्षणः ।
ववर्ष शरवर्षाणि राक्षसेन्द्रसुतं प्रति ॥ १३ ॥
पाषाणैः पर्वताग्रैश्च वृक्षैश्च हरियूथपाः ।
[9]निर्जघ्नुः सर्वतो दैत्यांस्तेऽपि वानरयूथपान् ॥ १४ ॥

---

१२ । नरो० । हिंसैव परः पुरुषार्थो यस्य तम्, अत एवाधार्मिकम् ।

---

अत्र वाल्मीकीये—

स गत्वा दूरमध्वानं लक्ष्मणः परवीरहा ।
राक्षसेन्द्रबलं दूरादपश्यद् व्यूहमास्थितम् ॥ इति ६।६४।२९ ।

१० । अङ्गदेन वीरेण जाम्बवान् यत्तोऽभूदित्यनुकर्षः । राक्षसाधिप इत्युत्तरार्द्धस्थविभीषणान्वयि । रा० ।

१२ । अस्मिन् रक्षोऽनीके भिन्ने त्वच्छरभेदेन पलायिते । रा० ।

१३ । राक्षसेन्द्रसुतं प्रतीति । एतच्च 'अस्यानीकस्य महतो भेदने यत्नवान् भव' 'राक्षसेन्द्रसुतोऽप्यस्मिन् भिन्ने दृश्यो भविष्यति' इत्याद्यत्रस्थविभीषणवचनोल्लङ्घि, 'इन्द्रजित् स्वबलं सर्वं मर्द्यमानं विलोक्य सः' (६।९।१६) इत्यग्रिमवचनविरोधि वाल्मीकीयमतविरोधि च । वाल्मीकीये तु—

विभीषणवचः श्रुत्वा संप्रहृष्टः स लक्ष्मणः ।
राक्षसेषु महाभीमं शरवर्षमपातयत् ॥ इति ६।६९।४ ।

सर्वमेतत् पर्यालोचयतैव रामवर्मणा 'राक्षसेन्द्रसुतं प्रति तत्सेनां प्रतीत्यर्थः' इति व्याख्यानमारचयामासे ।

१४ । ते राक्षसा अपि वानरयूथपान् निर्जघ्नुरित्यर्थः ।

---

1. च '-त्रिर्मत्तोऽ-' छ '-त्रिः प्रयतोऽभूद् रघूत्तम' । 2. छ 'जाम्बुवत्प्रमुखैर्वृतः' । 3. च 'वानराधिपैः' । 4. ग '-पैः' । 5. च '-त्रे' । 6. ग 'अप्यनी-', छ 'तस्यानी-' । 7. ग 'भेदेन' । 8. च 'क्षणे,' छ 'छिन्ने' । 9. च 'निजघ्नुः', छ-पुस्तके इदमर्द्धं नास्ति ।

परश्वधैः सितैर्बाणैरसिभिर्यष्टितोमरैः ।
[1]निर्जघ्नुर्वानरानीकं तदा शब्दो महानभूत् ।
स सम्प्रहारस्तुमुलः सञ्जज्ञे हरिरक्षसाम् ॥ १५ ॥
इन्द्रजित् स्वबलं [2]सर्वं [3]मर्द्यमानं विलोक्य सः ।
निकुम्भि[4]लाञ्च होमञ्च त्यक्त्वा शीघ्रं विनिर्गतः ॥ १६ ॥
रथमारुह्य सधनुः क्रोधेन महताऽगमत् ।
[5]समाह्वयित्वा [6]सौमित्रिं युद्धाय रणमूर्द्धनि ।
सौमित्रे मेघनादोऽहं मया जीवन्न मोक्ष्यसे ॥ १७ ॥
तत्र दृष्ट्वा पितृव्यं स प्राह निष्ठुरभाषणम् ।
इहैव जातः संवृ[7]द्धः साक्षाद् भ्राता पितुर्मम ॥ १८ ॥

---

१६। निकुम्भिलाञ्च होमञ्चेति केवलं कर्मत्याग एव न, किन्तु तद्देशत्यागोऽपीत्यर्थः। रा०।

वाल्मीकीयेऽपि—

स्वमनीकं विषण्णन्तु दृष्ट्वा शत्रुभिरर्दितम् ।
उत्तस्थाविन्द्रजिच्छीघ्रमसमाप्यैव कर्म तत् ॥
स तु कर्मण्यनिर्वृत्ते मन्युशल्यं समुद्वहन् ।
परित्रातुं बलं दीर्णमभिचक्राम रावणिः ॥ इति ६।६५।१२-१३।

१७। महता क्रोधेन युतो युद्धाय सौमित्रिं लक्ष्मणमाह्वयित्वा रणमूर्धनि रणभूमध्यभागमगमत् प्राप्तः। ल्यबभाव आर्षः। रा०।

१८। इन्द्रजिद्वाक्यं वाल्मीकीये—

एवमुक्तो महातेजाः समरे रावणात्मजः ।
अब्रवीत् परुषं वाक्यं दृष्ट्वा तत्र विभीषणम् ॥
इह त्वं जातवृद्धोऽसि साक्षाद् भ्राता पितुर्मम ।
कथं द्रुह्यसि पुत्राय पितृव्यः सन् निशाचर ॥
न ज्ञातित्वं न भ्रातृत्वं न जातिस्तव दुर्मते ।
प्रमाणं न च सौहार्दं न धर्मो धर्मदूषक ॥
शोच्यस्त्वमसि दुर्बुद्धे निन्दनीयश्च साधुभिः ।
यस्त्वं स्वजनमुत्सृज्य परभृत्यत्वमागतः ॥

---

1. च-छ 'निजघ्नु-'। 2. ग-घ '-सर्वमर्द्य-'। 3. छ 'युध्यमान'। 4. च '-लाया हो-'। 5. च 'स चाऽऽह्व-'। 6. ग-च-छ 'समरे'। 7. छ '-द्धो मान्यो भ्रा-'।

यस्त्वं स्वजनमुत्सृज्य परभृत्यत्वमागतः ।
कथं द्रुह्यसि पुत्राय पापीयानसि [1]दुर्मतिः ॥ १९ ॥

---

नैतच्छिथिलया बुद्धया त्वं वेत्सि महदन्तरम् ।
क्व च स्वजनसंवासः क्व च नीच पराश्रयः ॥
गुणवान् वा परजनः स्वजनो निर्गुणोऽपि वा ।
निर्गुणः स्वजनः श्रेयान् यः परः पर एव सः ॥
निरनुक्रोशता चेयं यादृशी ते निशाचर ।
स्वजने न त्वया शक्या प्रतिष्ठा वा सुखानि वा ॥
यदि त्वं परुषाण्युक्तः पित्रा मम निशाचर ।
गौरवात् प्रणयाद्वाऽपि तथैव परिसान्त्वितः ॥
यथैव प्रणयाद्वाऽपि गुरुर्वदति विप्रियम् ।
तथैव स पुनर्मूढ लालयत्यविचारयन् ॥
गुणवन्मित्रनाशार्थममित्रमुपचीयते ।
शालिस्तम्बसमीपस्थं श्यामाकमिव तं त्यजेत् ॥ इति ६।६६।१०-१९ ।

१९। द्रुह्यसि मच्छिद्रान्वेषणेन परेभ्यस्तद्दर्शनेन चेत्यर्थः। पुत्राय पुत्रतुल्याय, यतः पुत्रतुल्यं मां प्रति ते पापात्मको दुर्बुद्धिप्रभवश्चायं द्रोहः, अतस्त्वं पापीयान् दुर्मतिश्च सञ्जात इति भावः। वाल्मीकीये स्वजनपरित्यागकारणमवलम्ब्य विभीषणः—

कुले यद्यपि जातोऽहं रक्षसां पापकर्मणाम् ।
गुणो यः प्रथमो नृणां तन्मे शीलमराक्षसम् ॥
न रमे दारुणेनाहं राज्येन पापकर्मणा ।
भ्रात्रा विषमशीलेन न च रंस्ये दुरात्मना ॥
हरणञ्च परस्वानां परदाराभिमर्षणम् ।
सुहृदामभिशङ्का च त्रयो दोषाः क्षयावहाः ॥
महर्षीणां वधो घोरः सर्वदेवैश्च विग्रहः ।
क्रोधश्चैवाभिमानश्च वैरत्वं प्रतिकूलता ॥
एते दोषास्तव पितुर्जीवितैश्वर्यनाशनाः ।
गुणान् प्रच्छादयन्त्यस्य पर्वतानिव नीरदाः ॥ इत्याह ६।६६।२४-२८ ।

---

1. च-छ 'दुर्मते' ।

इत्युक्त्वा लक्ष्मणं दृष्ट्वा हनूमत्पृ[1]ष्ठतः स्थितम् ।
उद्यदायुधनिस्त्रिंशे[2] रथे महति संस्थितः ॥ २० ॥
महा[3]प्रमाणमुद्यम्य घोरं विस्फारयन् धनुः ।
अद्य वो मामका बाणाः प्राणान् [4]पास्यन्ति वानराः ॥ २१ ॥
ततः शरं दाशरथिः सन्धायामित्रकर्षणः ।
ससर्ज राक्षसेन्द्राय क्रुद्धः सर्प इव श्वसन् ।
इन्द्रजिद्रक्तनयनो लक्ष्मणं समुदैक्षत ॥ २२ ॥
शक्राशनिसमस्पर्शैर्लक्ष्मणेनाऽऽहतः शरैः ।
मुहूर्त्तमभव[5]न्मूढः पुनः [6]प्रत्याहितेन्द्रियः ।
ददर्शावस्थितं [7]वीरं वीरो दशरथात्मजम् ॥ २३ ॥
[8]सोऽभिचक्राम सौमित्रिं [9]क्रोधसंरक्तलोचनः ।
[10]शरान् धनुषि सन्धाय लक्ष्मणं चेदमब्रवीत् ॥ २४ ॥
यदि ते प्रथमे युद्धे न दृष्टो मे पराक्रमः ।
अद्य त्वां दर्शयिष्यामि तिष्ठेदानीं व्यवस्थितः ॥ २५ ॥

---

२३ । नरो० । मूढः प्राप्तमोहः । प्रत्याहितेन्द्रियः परावत्ति...न्द्रियः [परावर्त्तितेन्द्रियः ?] ।
२५ । नरो० । पराक्रमः शक्तिः ।

---

२० । उद्यन्ति प्रकाशं स्थितानि आयुधानि निस्त्रिंशाश्च यस्मिंस्तादृशे रथे इत्यर्थः । रा० 'उद्यतायुधनिस्त्रिंश' इति पाश्चात्त्यवाल्मीकीये । उद्यतायुधो निस्त्रिंशो निर्घृणश्चेत्यर्थ इति कतकः । उद्यतान्यायुधानि निस्त्रिंशाश्च येन सः । गोबलीवर्दवत् प्रयोग इति रामानुजः ।

२१ । महाप्रमाणं सार्द्धसप्तवितस्ति । भो वानराः, युष्माकं प्राणान् मम बाणाः पास्यन्तीति अवददिति शेषः । रा० ।

२२-२३ । इन्द्रजित् क्रोधाद्रक्तनयनो बाणपातसमकालं लक्ष्मणमपश्यत् । ततः शरैराहतः पीडितः मूढो मूर्च्छितोऽभवत् । प्रत्याहृतेन्द्रियः प्राप्तेन्द्रियज्ञानः पुनर्व्यपगतमूर्च्छोऽभवदिति यावत् । रा० ।

२५ । [ यदि ते इत्यादि । प्रथमे युद्धे यदि ते त्वया मे मम पराक्रमो न दृष्टो न ज्ञातस्तर्हि अद्य त्वां पराक्रमं दर्शयिष्यामि । इदानीं व्यवस्थितः सावधानः सन् तिष्ठ । गो० ]

---

1. च '-ष्ठसंस्थितः' । 2. ग-च '-शो' । 3. च '-प्रहारमु-', च-टि '-प्रभावमु-' । 4. च 'प्राश्नन्ति' । 5. च '-न्मूढ'' । 6. क-ख-ग-घ-च 'प्रत्याहृते-,' ङ 'प्रत्याहृते-' । 7. ग-च 'शूर' । 8. ङ 'सोऽपि च-' । 9. ग 'क्रोधेन रक्त-,' च 'क्रोधेनाऽऽरक्त-', ङ 'क्रोधात् प्रचलितेन्द्रियः' । 10. ग-च 'शरं' ।

इत्युक्त्वा सप्तभिर्बाणैरभिविव्याध लक्ष्मणम् ।
दशभिश्च हनूमन्तं तीक्ष्णधारैः शरोत्तमैः ॥ २६ ॥
ततः शरशतेनैव [1]सम्प्रयुक्तेन वीर्यवान् ।
[2]क्रोधाद्द्विगुणसंरब्धो निर्बिभेद विभीषणम् ॥ २७ ॥
लक्ष्मणोऽपि तथा शत्रुं शरवर्षैरवाकिरत् ।
तस्य [3]बाणैः सुसंविद्धं कवचं काञ्चनप्रभम् ।
व्यशीर्यत रथोपस्थे तिलशः पतितं भुवि ॥ २८ ॥
ततः शरसहस्रेण संक्रुद्धो रावणात्मजः ।
बिभेद समरे वीरं लक्ष्मणं भीमविक्रमम् ॥ २९ ॥
व्यशीर्यतापतद्दिव्यं कवचं लक्ष्मणस्य च ।
[4]कृतिप्रतिकृतान्योन्यं बभूवतु[5]रभिद्रुतौ ॥ ३० ॥

---

२७ । नरो० । क्रोधात् प्रकृतक्रोधमपेक्ष्येत्यर्थः, द्विगुणं संरब्धं क्रोधो यस्य स तथा ।

२८ । नरो० । रथोपस्थे रथोपरि ।

३० । नरो० । कृतिप्रतिकृतान्योन्यमभिद्रुतौ बभूवतुरित्यन्वयः । कृती चासौ प्रतिकृतश्चेति स चासावन्योन्यश्चेति (?) तं तथा ।

---

अत्र प्रायेण समार्थः समपदश्च श्लोकः पाश्चात्त्ये वाल्मीकीये—

यदि ते प्रथमे युद्धे न दृष्टो मत्पराक्रमः ।
अद्य त्वां दर्शयिष्यामि तिष्ठेदानीं व्यवस्थितः ॥ इति ६।८९।११ ।

२८ । अत्र वाल्मीकिः—

तस्य तद्बाणविध्वस्तं कवचं काञ्चनं महत् ।
व्यशीर्यत रथोपस्थे ताराजालमिवाम्बरे ॥ इति ६।६८।१९ ।

३० । दिव्यमपि लक्ष्मणस्य कवचं तद्बाणैर्व्यशीर्यतापतच्च । अन्योन्यं कृतप्रतिकृतौ कृते प्रतिकृतं याभ्यां तादृशौ । सन्धिरार्षः । रा० ।

अन्योन्यं कृतप्रतिकृता आर्षोऽडा । कृतप्रतिकृते यत्तौ बभूवतुरित्यर्थः । इति पाश्चात्त्यवाल्मीकीयटीकायां रामानुजः ।

---

1. ग-च-छ 'सुप्र-' । 2. क-ख-घ 'क्रोधद्वि-' । 3. ग 'बाणैश्च संवि-' । 4 क-ख-ग-घ-च-छ 'कृत-' । 5. ग-च '-रति-' ।

अभीक्ष्णं निश्वसन्तौ तौ युध्येतां[1] तुमुलं [2]युधि ।
शर[3]संवृतसर्वाङ्गौ सर्वतो रुधिरोक्षितौ ॥ ३१ ॥
सुदीर्घकालं तौ वीरावन्योन्यं निशितैः शरैः ।
[4]अयुध्येतां महासत्त्वौ जयाजयविवर्जितौ ॥ ३२ ॥
एतस्मिन्नन्तरे वीरो लक्ष्मणः पञ्चभिः शरैः ।
[5]रावणेः सारथिं साश्वं रथञ्च समचूर्णयत् ॥ ३३ ॥
चिच्छेद कार्मुकं तस्य दर्शयन् हस्तलाघवम् ।
[6]सोऽप्यन्यत् कार्मुकं [7]भद्रं सज्यञ्चक्रे त्वरान्वितः ॥ ३४ ॥
[8]तच्चापमपि चिच्छेद लक्ष्मणस्त्रिभिराशुगैः ।
तमेव च्छिन्नधन्वानं विव्याधानेकसायकैः ॥ ३५ ॥
पुनरन्यत् समा[9]दाय कार्मुकं भीम[10]विक्रमः ।
इन्द्रजिल्लक्ष्मणं [11]बाणैः शतैरादित्यसन्निभैः ।
बिभेद [12]वानरान् सर्वान् बाणैरापूरयन् [13]दिशः ॥ ३६ ॥

---

३१ । नरो० । अभीक्ष्णमसकृत् । तुमुलं यथा स्यात् । युधि संग्रामस्थले ।
३२ । नरो० । अन्योन्यं परस्परम् । अयुध्येतां संप्राहरताम् ।
३५ । नरो० । आशुगैर्बाणैः । सायकैर्बाणैः ।

---

३१ । तुमुलमत्याश्चर्यं द्रष्टृभिर्विविशिष्य ज्ञातुमशक्यञ्च । रा० ।
३२ । जयाजयविवर्जितावित्यनेन समयुद्धतोक्ता । रा० ।
३६ । अत्रापि ग्रन्थकृताऽकृतपरिग्रहं विभीषणसंग्रामावतरणं नाम किञ्चिद् वृत्तं वाल्मीकीये दृश्यते । तथाच—

तौ द्रष्टुकामः संग्रामे वरचापधरो बली ।
शूरः स रावणभ्राता तस्थौ समरमूर्धनि ॥ इत्यादि ६।६९।२।

एवं तत्र देवादीनां लक्ष्मणरक्षणरूपं किञ्चिद् वृत्तमपि वर्त्तते । तथाच—

ऋषयः पितरो देवा गन्धर्वा गरुडोरगाः ।
शतक्रतुं पुरस्कृत्य ररक्षुर्लक्ष्मणं रणे ॥ इति ६।७०।३० ।

---

1. क '-तामतुलं' । 2. क ख-ग 'पुनः' । 3 ग '-सहृत-', च '-संक्रान्त', छ '-संहृत' । 4. ग 'युध्येतान्तु' । 5 छ 'रावणिं' । 6 क-ख-घ 'सोऽन्यत्तु' । 7. च 'तव' । 8. ग-च-छ 'तच्चाप-' । 9. छ '-धाय' । 10. च '-निस्वनम्' । 11. ग-च-छ 'बाणशतै-' । 12. च 'बाणान् सर्वांस्तु', छ 'बलवान्' । 13. ग-च 'शतै', छ 'सितैः' ।

तत ऐन्द्रं समादाय लक्ष्मणो रावणिं प्रति ।
सन्धायाऽऽकृष्य कर्णान्तं कार्मुकं दृढनिष्ठुरम् ।
उवाच लक्ष्मणो वीरः स्मरन् रामपदाम्बुजम् ॥ ३७ ॥
धर्मात्मा सत्यसन्धश्च रामो दाशरथिर्यदि ।
त्रिलोक्यामप्रतिद्वन्द्वस्त[1]देनं जहि रावणिम् ॥ ३८ ॥
इत्युक्त्वा बाणमाक[2]र्णाद् विकृष्य तमजिह्मगम् ।
लक्ष्मणः समरे वीरः ससर्जेन्द्रजितं प्रति ॥ ३९ ॥
स शरः सशिरस्त्राणं [3]श्रीमज्ज्वलितकुण्डलम् ।
[4]प्रमथ्येन्द्रजितः कायात् पातयामास भूतले ॥ ४० ॥

---

३७। नरो०। दृढनिष्ठुरम् अतिकठिनम् ।

३८। नरो०। धर्मे आत्मा मनो यस्य स तथा। सत्यसन्धो दृढप्रतिज्ञः, अङ्गीकृतनिर्वाहक इति यावत् ।

३९। नरो०। अजिह्मगं बाणम् ।

४०। नरो०। शिरस्त्राणेन 'टोपर' इति ख्यातेन सह वर्त्तमानं सशिरस्त्राणम् । श्रीमती ज्वलिते कुण्डले यस्य तत्तथा। एतद्विशेषणद्वयबलात् शिर इति लभ्यम्। यद्वा श्रीमदिति शिरोविशेषणम्। अस्मिन् पक्षे ज्वलितकुण्डलमिति हेतुगर्भविशेषणम्। दीप्तकुण्डलत्वात् श्रीमत्त्वमित्यर्थः ।

---

३७। ऐन्द्रम् ऐन्द्रास्त्राभिमन्त्रितम्। यद्वा अगस्त्यद्वारा इन्द्रदत्तं तूणीराद्रामेण दत्तमित्यर्थः । रा० ।

उवाचेति। लक्ष्मणवाक्यं वाल्मीकीये—

धर्मात्मा सत्यसन्धश्च रामो दाशरथिर्यथा ।
पौरुषे चाप्रतिद्वन्द्वस्तथेमं जहि राक्षसम् ॥
पितृभक्तो देववरो वीरव्यूहरणे रतः ।
भक्तानुकम्पी भूतानां तथेमं जहि राक्षसम् ॥ इति ६।७०।३७-३८ ।

४०। सशिरस्त्राणं श्रीमज्ज्वलितकुण्डलं शिरः पातयामास। तथाच वाल्मीकीये—

तद्रावणतनूजस्य छिन्नं स्कन्धाच्छिरो महत् ।
तपनीयनिभं भूमौ ददृशे रुधिरोक्षितम् ॥ इति ६।७०।४१ ।

---

1. च '-दैनं'। 2. च '-र्णमाकृ-'। 3 च 'भ्रम-'। 4. च 'शिरश्चेन्द्र-'।

ततः प्रमुदिता देवाः कीर्त्तयन्तो रघूत्तमम् ।
[1]ववर्षुः पुष्पवर्षाणि स्तुवन्तश्च मुहुर्मुहुः ॥ ४१ ॥
जहर्ष शक्रो [2]भगवान् सह देवैर्महर्षिभिः ।
आकाशे[3]ऽपि च देवानां [4]शुश्रुवे दुन्दुभि[5]स्वनः ।
विमलं गगनं चाऽऽसीत् स्थिराऽभूद्विश्वधारिणी ॥ ४२ ॥
निहतं रावणिं दृष्ट्वा जयजल्पसमन्वितः ।
गतश्रमः स सौमित्रिः शङ्खमापूरयद्रणे ॥ ४३ ॥
सिंहनादं ततः कृत्वा ज्याशब्दमकरोद् विभुः ।
तेन नादेन संहृष्टा वानराश्च गतश्रमाः ॥ ४४ ॥
वानरेन्द्रैश्च सहितः स्तुवद्भिर्हृष्टमानसैः ।
लक्ष्मणः परितुष्टात्मा ददर्शाभ्येत्य राघवम् ॥ ४५ ॥
हनूमद्राक्षसाभ्यां च सहितो [6]विनयान्वितः ।
ववन्दे भ्रातरं रामं ज्येष्ठं नारायणं विभुम् ।
त्वत्प्रसादाद्रघुश्रेष्ठ हतो रावणिराहवे ॥ ४६ ॥
[7]श्रुत्वा तल्लक्ष्मणाद् भक्त्या तमालिङ्ग्य रघूत्तमः ।
मूर्द्ध्न्यवघ्राय मुदितः सस्नेहमिदमब्रवीत् ॥ ४७ ॥

---

४६ । नरो० । आहवे युद्धे ।

४७ । नरो० । भक्त्या इति उपलक्षणे तृतीया ।

---

४२ । स्थिराऽभूत्, तावत्पर्यन्तं राक्षसभारेण कम्पमानेवाऽऽसीदिति व्यङ्ग्यम् । रा० ।

४३ । जयजल्पः देवसृष्टो जयशब्दः । रा० ।

४६ । रावणिराहवे इति ।

नाऽऽचचक्षे तदा वीरः स्वयमिन्द्रजितो वधम् ।
रावणेस्तु शिरश्छिन्नं लक्ष्मणेन महात्मना ॥
इत्येवं कथयामास तदा हृष्टो विभीषणः ॥ ६।७१।६-७

इत्यादिना वाल्मीकीये विनयस्य काष्ठा दर्शिता इह तु विनयमात्रमिति भेदः ।

---

1. क-च 'ववृषुः' । 2. छ 'मघवान्' । 3. ग-च-छ 'चापि' । 4. च 'ववृधे' । 5. छ '-ध्वनि' । 6. छ 'विस्मया-' । 7. ग 'श्रुत्वा त लक्ष्मणं', च 'श्रुत्वैतल्लक्ष्मणं स्नेहात्', छ 'श्रुत्वा त लक्ष्मणं प्रीत्या समा-' ।

[1]साधु लक्ष्मण तुष्टोऽस्मि कर्म ते दुष्करं कृतम् ।
मेघनादस्य निधने जितं सर्वमरिन्दम ॥ ४८ ॥
अहोरात्रैस्त्रिभिर्वीरः कथञ्चिद् विनिपातितः ।
निःसपत्नः कृतोऽस्म्यद्य निर्यास्यति हि रावणः ।
पुत्रशोकान्मया योद्धुं तं हनिष्यामि रावणम् ॥ ४९ ॥
मेघनादं हतं श्रुत्वा लक्ष्मणेन महाबलम् ।
रावणः पतितो भूमौ मूर्च्छितः पुनरुत्थितः ॥ ५० ॥
विललापातिदीनात्मा पुत्रशोकेन रावणः ।
पुत्रस्य गुणकर्माणि संस्मरन् पर्यदेवयत् ॥ ५१ ॥
अद्य देवगणाः सर्वे लोकपाला महर्षयः ।
हतमिन्द्रजितं [2]ज्ञात्वा सुखं स्वप्स्यन्ति निर्भयाः ।
इत्यादि बहुशः पुत्रलालसो विललाप [3]ह ॥ ५२ ॥
ततः परमसंक्रुद्धो रावणो राक्ष[4]साधिपः ।
उवाच राक्षसान् सर्वान् [5]निनाशयि[6]षुराहवे ॥ ५३ ॥
स पुत्रवधसन्तप्तः [7]शूरः क्रोधवशं गतः ।
[8]संवीक्ष्य [9]रावणो बुद्ध्या हन्तुं सीतां प्रदुद्रुवे ॥ ५४ ॥
खड्गपाणिमथाऽऽयान्तं क्रुद्धं दृष्ट्वा दशाननम् ।
राक्षसीमध्यगा सीता भयशोकाकुलाऽभवत् ॥ ५५ ॥
एतस्मिन्नन्तरे तस्य सचिवो बुद्धि[10]मान् शुचिः ।
सुपार्श्वो नाम मेधावी रावणं वाक्यमब्रवीत् ॥ ५६ ॥

---

४९ । पुत्रशोकाद् रावणो मया योद्धुं निर्यास्यतीति सम्बन्धः ।

५३ । सर्वान् राक्षसान् निनाशयिषुर्नाशयितुमिच्छुरुवाच । युद्धाय गच्छध्वमिति शेषः । रा० ।

५४ । बुद्ध्या संवीक्ष्य सीतानाशे रामनाश इति विचार्येत्यर्थः । रा० ।

५६ । वाल्मीकीये सचिवस्य अविन्ध्य इति नाम दृश्यते । तथाच—

एतस्मिन्नन्तरे तत्र अमात्यो बुद्धिमान् शुचिः ।
अविन्ध्यो ज्ञानसम्पन्नो रावणं वाक्यमब्रवीत् ॥ इति ६।७२।६० ।

पाश्चात्त्ये वाल्मीकीये सुपार्श्व इत्येव नाम ( ६।९३।५८ ) ।

---

1. च 'साधुर्ल-' । 2. ग-च-छ 'श्रुत्वा' । 3. च 'च' । 4 च '-साधमः' । 5. ग-च-छ 'विना-' । 6. च '-तुमा-' । 7. क 'पुरः' । 8 च 'न वी-' । 9. च 'राक्षसो' । 10. च '-मत्तरः' ।

[1]ननु नाम दशग्री[2]व साक्षाद् वैश्रवणा[3]नुजः ।
वेद्विद्या[4]व्रत[5]स्नातः स्व[6]कर्मपरिनिष्ठितः ।
अनेकगुणसम्पन्नः कथं स्त्रीवध[7]मिच्छसि ॥ ५७ ॥

[8]जित्वा च त्रिदशान् सर्वान् स्ववशे [9]स्थाप्य तानपि ।
त्रैलोक्यं यशसा व्याप्तं स्त्रीवधं हातु[10]मिच्छति ॥ ५८ ॥

अस्माभिः सहितो युद्धे हत्वा राम[11]ञ्च लक्ष्मणम् ।
प्राप्स्यसे जानकीं शीघ्रमित्युक्तः स न्यवर्त्तत ॥ ५९ ॥

---

५७ । नरो० । वैश्रवणानुजः कुबेरानुजः । परम्परासम्बन्ध...[वार?]णाय साक्षादित्युक्तम् । वेदविद्या च व्रतञ्च ताभ्यां स्नातः पूतः वेदविद्याव्रतस्नातः ।

५८ । नरो० । सर्वान् त्रिदशान् देवान् जित्वा स्ववशेन तान् स्थाप्य स्थितस्य तव यशसा त्रैलोक्यं व्याप्तमत एव स्त्रीवधं हातुमिच्छति एधितुम्... । स्थाप्येति 'क्वचिदप्रादेश्चे'ति क्त्वो यप् । एताद्दशस्य तव यशसा यथा त्रैलोक्यं व्याप्तं स्त्रीवधे कृते अयशसा तथा तद् व्याप्यते इति भावः ।

---

५७ । हे दशग्रीव, वैश्रवणानुजत्वादिभिर्ननु नाम अतिशयेन प्रसिद्धः कथं स्त्रीवधमिच्छसीत्यन्वयः । रा० ।

'विश्रवसः सुत' इति वाल्मीकीये ( ६।७२।६१ ) ।

५९ । इति सुपार्श्वेनोक्तः स रावणो न्यवर्त्तत निवृत्तः । रा० ।

वाल्मीकीये न रावणस्य स्वयं निवर्त्तनम् अपि तु बलात् । तथाच—

एवमुक्त्वा तु तद्रक्षो बलात् संगृह्य वीर्यवान् ।
अपाकर्षत वैदेह्याः सकाशाद्राक्षसेश्वरम् ॥ इति ।
समवेक्ष्य च वैदेह्या रूपं सर्वगुणान्वितम् ।
ननाशैकपदे रोषो रावणस्य दुरात्मनः ॥ ६।७२।६७-६८ ।

इत्यादिना हतसर्वबान्धवस्यापि रावणस्य तदानीमपि रूपज एव मोहः प्रबलोऽभवदिति सूचितम् । स चापि निवर्त्तनस्य कारणान्तरम् ।

---

1. ग-च-छ 'कथं' । 2. च-छ '-वः' । 3. ग-छ '-त्मज.' । 4. च '-रतः' । 5. च 'पूतः' । 6. छ '-धर्म-' । 7. ग '-मर्हसि' । 8. क-ख-घ-छ-पुस्तकेष्वयं श्लोको नास्ति । 9. ग-च 'स्थापितानपि' । 10. ग '-मिच्छसि', च '-मर्हसि' । 11. च '-मं सल-' ।

ततो दुरात्मा सुहृदा निवेदितं वचः [1]सुधर्मं [2]प्रतिगृह्य रावणः ।
गृहं जगामाऽऽशु शुचा विमूढधीः पुनः [3]सभाञ्च प्रययौ सुहृद्वृतः ॥ ६० ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे लङ्काकाण्डे
नवमोऽध्यायः ॥ ९ ॥

---

६० । नरो० । दुरात्मा दुष्टान्तःकरणः । विमूढा कर्त्तव्याकर्त्तव्यविवेकशून्या धीरन्तःकरणं यस्य । यद्वा विमूढा विपरीता धीर्बुद्धिर्यस्य स तथा ।

[ लङ्काकाण्डे नवमाध्यायव्याख्या समाप्ता ॥ ९ ॥ ]

---

६० । शुचा शोकेन विमूढधीः । सभागमनमेव तदवसरे युक्तम्, तत्र गृहगमनं विमोहः । रा० ।

प्रथमं गृहगमनं परतः सभारोहणमिति । वाल्मीकीयेऽपि—

गृहं गत्वाऽथ स पुनः सभां प्राप सुहृद्वृतः ॥ इति ६।७२।६९।

---

1. च 'सुकर्म्यं', छ 'सुधर्म्यं' । 2. छ 'परि-' । 3. ग 'सभायाञ्च ययौ', च 'सभाया' ।

# दशमोऽध्यायः

[1]श्रीमहादेव उवाच—

स विचार्य सभामध्ये राक्षसैः सह मन्त्रिभिः ।
निर्ययौ [2]येऽवशिष्टा[3]स्तै राक्षसैः सह राघवम् ।
[4]शलभः शलभैर्युक्तः प्रज्वलन्तमिवानलम् ॥ १ ॥
ततो रामेण निहताः सर्वे ते राक्षसा युधि ।
स्वयं [5]रामेण निहतस्तीक्ष्णबाणेन वक्षसि ।
व्यथितस्त्वरितं[6] लङ्कां प्रविवेश दशाननः ॥ २ ॥
दृष्ट्वा रामस्य बहुशः पौरुषं [7]चाप्यमानुषम् ।
रावणो[8] मारुतेश्चैव शीघ्रं शुक्रान्तिकं ययौ ।
नमस्कृत्य दशग्रीवः शुक्रं प्राञ्जलिरब्रवीत् ॥ ३ ॥
भगवन् राघवे[9]णैवं लङ्का राक्षसयू[10]थपैः ।
विनाशिता [11]महादैत्या निहताः पुत्रबान्धवाः ।
कथं मे दुःख[12]सन्दोहस्त्वयि तिष्ठति सद्गुरौ ॥ ४ ॥

---

१ । शलभः शलभैर्युक्तः सन् यथा अनलं निर्याति तथा राघवं निर्ययौ प्राप्तवानित्यर्थः । अयमाशयः—शलभो यथा जानन्नपि स्वमृत्युं दीप्त्यादिभिराकृष्टः स्वबन्ध्वादिभिः सहितोऽनलं प्रविशति, तथा रामतत्त्वाभिज्ञोऽप्ययं रावणः स्वं पराभवं विजानन्नपि तत्पदप्राप्त्याशयाकृष्टस्तं निर्ययौ ।

२ । ततो निर्याणानन्तरमित्यर्थः । निहता अभवन्निति शेषः । स्वयं रावणः रामेण निहत आहतः, अत एव व्यथितस्त्वरितं प्रविवेश ।

३ । चापीति पादपूरणे । मारुतेश्च पौरुषं दृष्ट्वेत्यनुकर्षः । रा० ।

शुक्रान्तिकगमनं तदुपदेशः, हवनम् अङ्गदस्य मन्दोदरीगञ्जनं तद्वाक्यादिकञ्च वाल्मीकीये न दृश्यते ।

४ । एवम्प्रकारेण राक्षसयूथपैः सह लङ्का विनाशितेत्यन्वयः । रा० ।

---

1. क-ख-पुस्तकयो. 'श्रीमहादेव उवाच' इति नास्ति । 2. ग 'रामशेषैश्च', च 'राक्षसो रामं शिष्टैश्च राक्षसैः सह' । 3. घ '-ष्टान्ते' । 4. क-पुस्तके इदमर्द्धं नास्ति । 5 च 'चानेन' । 6. छ '-तो' । 7. छ 'चाथ मा-' । 8. च '-णः पुष्पकारूढ' । 9. ग-च-छ '-णैव' । 10. ग-च '-थपाः' । 11. च 'हता दै-' । 12. ग '-सम्मोह-' ।

इति विज्ञापितो दैत्यगुरुः प्राह दशाननम् ।
होमं कुरु प्रयत्नेन [1]रहसि त्वं दशानन ॥ ५ ॥
[2]यदि विघ्नो न चेद्धोमे [3]तर्हि होमानलोत्थितः ।
म[4]हान् रथश्च वाहाश्च चापतूणीरसायकाः ।
सम्भविष्यन्ति तैर्यु[5]क्तस्त्वमजेयो भविष्यसि ॥ ६ ॥
गृहाण [6]मन्त्रान् मद्दत्तान् गच्छ होमं कुरु द्रुतम् ।
इत्युक्तस्त्वरितं[7] गत्वा रावणो राक्षसाधिपः ।
गुहां पातालसदृशीं मन्दिरे [8]स्वे चकार [9]ह ॥ ७ ॥
लङ्का[10]द्वारकपाटादि बद्ध्वा [11]सर्वत्र यत्नतः ।
होमद्रव्याणि सम्पाद्य यान्युक्तान्याभि[12]चारिके ।
गुहां प्रविश्य चैकान्ते मौनी होमं प्रचक्रमे ॥ ८ ॥
उत्थितं धूममालोक्य महान्तं रावणानुजः ।
रामाय दर्शयामास होमधूमं [13]भयाकुलः ॥ ९ ॥
पश्य राम दशग्रीवो होमं कर्त्तुं [14]समारभत् ।
[15]यदि [16]होमः समाप्तः स्यात्तदाऽजेयो भविष्यति ।
[17]अतो विघ्नाय होमस्य प्रेष[18]याऽऽशु हरीश्वरान् ॥ १० ॥

---

विनाशप्रकारमाह—विनाशिता इति । महादैत्या महाराक्षसाः कुम्भकर्णादय इत्यर्थः, निहता मृताः, पुत्रबान्धवाश्च मृता इति शेषः ।

६ । तूणीरसायकास्तूणीरस्थिताः सायका इत्यर्थः । सम्भविष्यन्ति त्वां सम्यक् प्राप्स्यन्ति । रा० ।

७ । इत्युक्तः शुक्रेणेति शेषः, स्वे मन्दिरे निजगृहे गत्वा तत्र पातालसदृशीं गुहां गुहाकारां यज्ञभूमिं चकार ।

८ । सर्वत्र सर्वदिक्षु । आदिना अन्यान्यपि छिद्राणि । रा० ।

९ । उत्थितं धूमं होमधूममित्यर्थः । भयाकुलो रावणानुजो विभीषणः । भयकारणन्तु होमे समाप्ते 'अजेयोऽयं भविष्यती'तिरूपम् । तच्चाग्रे स्वयमेव वक्ष्यति ।

१० । हे राम, दशग्रीवो होमं कर्त्तुं समारभत् इति पश्य, यदि होमः समाप्तः स्यात्

---

1. क 'हर विघ्न' । 2. ग-च 'नचेद्विघ्नो भवेद्धोमे' । 3. ग-च-छ 'तदा' । 4. च '-द्द्रथ-' । 5. छ '-क्तो ह्यजेयो हि भवान् परैः' । 6. च 'मन्त्र' मद्दत्तं' । 7. छ '-तो' । 8. क-ख 'खे' । 9. च 'स-' । 10. च '-द्वारे कपाटादिं' । 11. छ 'सर्वप्र-' । 12. च-छ '-चारके' । 13. च 'समाकुलः' । 14, ग 'समाचरन्', च 'समाचरत्' । 15. च 'होमो यदि' । 16. ग-छ 'होमसमाप्तिः' । 17. च-छ 'ततो' । 18. छ '-यस्व' ।

तथेति रामः सुग्रीवसम्मतेनाङ्गदं कपिम् ।
हनूमत्प्रमु[1]खान् वीरानादिदेश महाबलान् ॥ ११ ॥
प्राकारं लङ्घयित्वा ते गत्वा रावणमन्दिरम् ।
दश[2]कोट्यः प्लव[3]ङ्गानां [4]गत्वा मन्दिररक्षकान् ।
चूर्णयामा[5]सुरश्वांश्च गजांश्च न्यहनन् क्षणात् ॥ १२ ॥
ततश्च सरमा नाम प्रभाते हस्तसंज्ञया ।
विभीषणस्य [6]भार्या सा होमस्थानमसूचयत् ॥ १३ ॥
गुहापिधानपाषाणमङ्गदः पाद[7]घट्टनैः ।
चूर्णयित्वा महा[8]सत्त्वः प्रविवेश महागुहाम् ॥ १४ ॥
दृष्ट्वा दशाननं तत्र मीलिताक्षं [9]दृढासनम् ।
[10]ततोऽङ्गदाज्ञया सर्वे वानरा विविशुद्रुतम् ॥ १५ ॥

---

तदाऽयम् अजेयो भविष्यति इति जानीहीति शेषः । अत्र किं कर्त्तव्यं तत्त्वयैवोपदेष्टव्यमिति चेदाह—अतो विघ्नायेति ।

११ । सुग्रीवसम्मतेन सुग्रीवसम्मत्या । एतेन सुग्रीवस्य प्राधान्यं रामविश्वास्यत्वञ्च सूचितम् । कपिमङ्गदं महाबलान् हनूमत्प्रमुखान् वीरान् च आदिदेश । महाबलान् अतिशय-शक्तियुक्तान् । न तु केवलं शक्तियुक्तान् अपि तु वीरान् शूरान् युद्धनिपुणानपीत्यर्थः ।

१२ । प्लवङ्गानां दशकोट्यः प्राकारं लङ्घयित्वा रावणमन्दिरं गत्वा मन्दिररक्षकान् गत्वा हत्वा चेत्यर्थः । धातूनामनेकार्थत्वात् ।

१३ । विभीषणस्य भार्या सरमा नाम हस्तसंज्ञया होमस्थानमसूचयद् ज्ञापितवती । रा० ।

प्रभाते इति पदेन होमारम्भो वानरादीनां गमनञ्च रात्राविति सूचितम् । अन्यथा प्रभात-पदस्य वैयर्थ्यापत्तेः ।

१४ । गुहापिधानपाषाणं गुहाद्वारकवाटभूतं शिलाखण्डमित्यर्थः । पादघट्टनैः पादप्रहारैः । महासत्त्व इति विशेषणेन बलवतस्तस्य रावणपिहितपाषाणविचूर्णनेऽपि अकुतोभयतेति दर्शितम् ।

१५ । तत्र दृढासनं दशाननं दृष्ट्वा अङ्गदः प्रवेशार्थं वानरानाज्ञापयामास, ते च तदाज्ञया प्रविविशुरित्यर्थः करणीयः ।

---

1. ग-छ '-खान् सर्वा-', च '-खाश्चैव वानरानादिदेश ह' । 2. च-छ '-कोटिघ्न-' । 3. च '-ङ्गाश्च' । 4. च 'तूर्णं', छ 'हत्वा' । 5. छ '-सुश्च रथान् गजादीन् व्यहनन्' । 6. छ 'सा भार्या' । 7. छ '-घातकैः' । 8. छ '-बाहुः' । 9. छ 'दशाननम्' । 10. च 'तदा-' ।

[1]तत्र कोलाहलं चक्रुस्ताडयन्तश्च सेवकान् ।
सम्भारांश्चिक्षि[2]पुस्तत्र होमकुण्डे समन्ततः ॥ १६ ॥
स्रुवमाच्छिद्य हस्ताच्च [3]रावणस्य बलाद्रुषा ।
तेनैव [4]सञ्जघानाऽऽशु हनूमान् [5]प्लवगाग्रणीः ॥ १७ ॥
घ्नन्ति [6]दन्तैश्च काष्ठैश्च वानरास्तमितस्ततः ।
न जहौ रावणो ध्यानं हतोऽपि विजिगीषया ॥ १८ ॥
प्रविश्यान्तःपुरे [7]वेश्मन्यङ्गदो [8]वेगवत्तरः ।
समानयत् केशबन्धे धृत्वा मन्दोदरीं शुभाम् ।
रावणस्यैव पुरतो विलपन्तीमनाथवत् ॥ १९ ॥
विददाराङ्गदस्तस्याः कञ्चुकं रत्नभूषितम् ।
मुक्ता विमुक्ताः पतिताः [9]समन्ताद्रत्नसञ्चयैः[10] ।
श्रोणिसूत्रं निपतितं [11]त्रुटितं रत्न[12]चित्रितम् ॥ २० ॥

---

१६ । नरो० । सम्भारान् साधनानि ।

१९ । नरो० । अनाथवत् अनाथामिव इत्यर्थः । ह्रस्वोऽत्र छान्दसः ।

२० । नरो० । विमुक्ता अर्थात् कञ्चुकात् । रत्नसञ्चयैः रत्नसमूहैः, पतितमिति शेषः ।

---

१६ । आद्यं तत्रेति पदं गुहाया विशेषणम्, तेन तत्र गुहायामित्यर्थः । सेवकान् रावणभृत्यान् । समन्ततः चतुर्दिग्भ्य उद्धृत्य सम्भारान् तत्र होमकुण्डे चिक्षिपुरित्यन्वयः ।

१७ । सञ्जघान रावणमिति शेषः ।

१८ । इतस्ततः सर्वेषु शरीरावयवेषु । हतोऽपि आहतोऽपीत्यर्थः ।

१९ । अन्तःपुरे अन्तःपुरवर्त्तिनि वेश्मनि मन्दोदरीगृहे इत्यर्थः । अनाथवद् विलपन्तीं शुभां मन्दोदरीं समानयत्, आनीय च रावणस्य पुरत एव तस्याः कञ्चुकं विददार इति द्वाभ्यामन्वयः । रावणस्य पुरत इत्युक्त्या पत्न्यवमानावलोकनेन विजिगीषो रावणस्यापि ध्यानम् अविरमवश्यमेव विभ्रष्टं भवेदिति अङ्गदस्याभिप्राय आसीदिति सूचितम् । कविकल्पितेनानेन वृत्तेनाङ्गदादीनां जात्यपकर्षः संसूचितः । वाल्मीकीये तु नैवम्, तत्र वानरा अपि इमे विदित-शिष्टाचारास्तादृशे गर्हितकर्मणि अनभ्यस्ता इवेति दृश्यते ।

२० । ततः कञ्चुकाद्विमुक्ता विभक्ता मुक्ता रत्नसञ्चयैस्ततो विभक्तैः सह भूमौ पतिता इत्यर्थः । त्रुटितं वानराणामाकर्षणेन भग्नम् । रा० ।

---

1. क 'तत.' । 2. च -'पुः सर्वे' । 3. ग-च 'रावण सबलो रुषा', क 'रावणं सबलं रुषा' । 4. च 'तं जघा-' । 5. च-क 'वानरा-' । 6. च 'दण्डै-' । 7. क 'विश्यन्न-' । 8. च 'बुद्धिम-' । 9. ग-च-क 'सौम-' । 10. च '-या' । 11. क 'रचित' । 12. ग-च '-चर्चितम्' ।

[1]ततोत्सृज्य ययुः सर्वे [2]विध्वंस्य हवनं महत् ।
रामपार्श्वमुपागम्य तस्थुः सर्वे प्रहर्षिताः ॥ २७ ॥

रावणस्तु [3]ततो भार्यामुवाच परिसान्त्वयन् ।
दैवाधीनमिदं भद्रे जीवता किन्न दृश्यते ॥ २८ ॥

त्यज शोकं विशालाक्षि ज्ञानमालम्ब्य निश्चितम् ।
अज्ञानप्रभवः[4] शोकः [5]शोको ज्ञानविनाशकृत् ॥ २९ ॥

अज्ञानप्रभवाऽहंधीः शरी[6]रादिष्वना[7]त्मनः ।
तन्मू[8]लपुत्रदारादिसम्बन्धः संसृ[9]तिस्ततः ॥ ३० ॥

---

२९। नरो०। अज्ञानं माया प्रभवः कारणं यस्य स तथा ।

३०। नरो०। अज्ञानं प्रभवः कारणं यस्याः सा तथा। शरीरादिष्विति आदिपदेन इन्द्रियादेः परिग्रहः। अनात्मनः आत्मज्ञानशून्यस्य। सा मूलं यस्य स चासौ पुत्रदारादि-सम्बन्धश्चेति स तथा। संसृतिः संसारः। ततोऽज्ञानमूलपुत्रदारादिसम्बन्धात् ।

---

२७। ततोत्सृज्य तत उत्सृज्येति च्छेदः। आर्षः सन्धिः। महत् महाफलजनकं हवनमित्यर्थः। रा०।

२८। जीवता प्राणिना किं न दृश्यते, असम्भावितमपि दृश्यत इत्यर्थः। रा०।

२९। ततो मम ईदृशी अवस्थेति शोकं त्यज्य। ज्ञानं भावि दुर्लङ्घ्यमिति ज्ञानम्। अज्ञानकृतस्य वस्तुतो ज्ञानेन नाश इति चेत् सर्वमिदमज्ञानकृतमेवेत्याह—अज्ञानेति। अत एव कर्त्तव्याकर्त्तव्यविषयज्ञाननाशकः, अतः सर्वथा ज्ञानालम्बेन स त्यक्तुं शक्य इति भावः। रा०।

३०। किं बहुना सर्वः संसार एवाज्ञानमूलकस्तन्मूलस्य शरीरादिष्वहंज्ञानस्याज्ञान-प्रभवत्वादित्याह—अज्ञानप्रभवेति। पुत्रदारादिसम्बन्ध एते मदीया इत्यध्यासः। ततः संसृतिः बन्धककर्मोत्पत्तिः। रा०।

[ अज्ञानेत्यादि। आत्मनस्तावत् शरीरादिषु अनात्मसु आत्मभिन्नेषु अहंधीः अज्ञानप्रभवा। अतः पुत्रादिसम्बन्धश्च तन्मूलः देहाहंबुद्धिमूलः, ततः पुत्रादिसम्बन्धाद् देहबुद्धेर्वा संसृतिः संसारो भवति। गो० ]

---

1. च 'तदो-'। 2. क छ 'विध्वस्य'। 3. च 'तदा'। 4. ग-च-छ '-वं शोकं'। 5. ग 'लोकज्ञानविनाशकृत्'। 6. च '-रेषु त्वना-'। 7. क-ख-ग-घ छ '-त्मसु'। 8. क-ख-ग-घ '-लः पु-', च '-लं पु-',। 9. छ '-तेस्तत'।

हर्षशोकभयक्रोधलोभमोह[1]स्पृहादयः ।
अज्ञानप्रभवा ह्येते जन्ममृत्युजरादयः ॥ ३१ ॥
आत्मा तु केवलः शुद्धो व्यतिरिक्तो ह्यलेपकः ।
आनन्दरूपो ज्ञानात्मा सर्वभावविवर्जितः ॥ ३२ ॥
[2]संयोगो वा वियोगो वा विद्यते केनचित् सतः ।
एवं ज्ञात्वा [3]स्वमात्मानं त्यज शोकमनिन्दिते ॥ ३३ ॥

---

३१ । नरो० । न शोक एवाज्ञानप्रभवः, किन्तु हर्षशोकादयो जन्ममृत्युजरादयश्च यावन्तो विद्यन्ते तावन्त एवाज्ञानप्रभवा इत्याह—हर्षेति पद्येन ।

३२ । नरो० । देहात्मनोरविवेकस्तावत् शोकहेतुर्भवतीति तद्विवेकार्थमाह—आत्मा त्वित्यादि । केवलः निर्द्धर्मकः, शुद्धो रागादिदोषरहितः, व्यतिरिक्तः शरीरादिभ्य इति शेषः । अलेपकोऽसङ्गः ज्ञानाज्ञानस्वरूपः । सर्वभावविवर्जितः वृद्ध्यादिषड्भावविकाररहितः ।

३३ । नरो० । पुत्रान् न शोचामि, किन्तु तद्वियोगजन्यदुःखमनुभवन्तीर्वधूः शोचामीति चेत्तत्राऽऽह—संयोगो वेत्यादि । सतः सत्यस्य कालत्रयेऽबाधितस्य केनचित् संयोगो वा विद्यते केनचिद् वियोगो वा विद्यते, केनापि वियोगो नास्तीत्यर्थः । तथाच श्रुतिः—'आकाशवत् सर्वगतो नित्य' इति । एतादृशीं दशां गतमात्मानं शोचामीति चेत्तत्राऽऽह—एवमित्यादि ।

---

३१ । एवं हर्षादयो जन्माद्याश्चाज्ञानमूलास्तत्तज्जनककर्मणामज्ञानजन्यत्वात् । इदं लब्धमिति हर्षजनकस्येदं मे नष्टमिति शोकजनकस्यायं मे हन्तेत्यादिभयादिजनकज्ञानस्याज्ञान-मूलकत्वाच्च । रा० ।

[ हर्षादयोऽपि अज्ञानप्रभवाः आत्मनो वस्तुतस्तदभाव एवेत्यर्थः । गो० ]

३२-३३ । आत्मनस्तु वास्तवो न केनापि सम्बन्ध इत्याह—आत्मा त्विति । बहुशो व्याख्यातमेतत् । सर्वभावैः सुखदुःखैर्विवर्जितः । तदेवाऽऽह—न संयोग इति । तद्बुद्धिरेव मुख्यतया हर्षशोककारणमिति भावः । रा० ।

[ आत्मा केवलोऽद्वितीयः, यतो व्यतिरिक्तः देहादेर्भिन्नः अतः शुद्धो रागादिहीनः, तत् कुतः ? यतोऽलेपकः कच्चिदप्यसक्तः । सर्वत्र हेतुः—आनन्दरूप इति । ज्ञानात्मा चाऽऽनन्द-रूपत्वात् कच्चिदप्यनासक्तः । ज्ञानरूपत्वादद्वितीयत्वं शुद्धत्वं देहादिभिन्नत्वञ्च । सर्वभाव-विवर्जितः षड्भावादिविवर्जितः । अत्रापि हेतुः—सत इति । सत इति नित्यसिद्धस्य । ननु दृश्यन्त एव जन्ममरणसंयोगवियोग आत्मनः कथं न इत्युच्यते तत्राऽऽह—आत्मेति । सता सह सतः संयोगवियोगौ सम्भवतः, अतः शोकाद्यो वृथैवेति भावः । गो० ]

---

1. ग-च-ट-छ '-मदाद-', च '-भयाद-' । 2. क-ख-ग 'न सयोगो', घ 'न संयोगो मियोगो' ।
3. घ 'स्वमा-' ।

इदानीमेव गच्छामि [1]हत्वा रामं सलक्ष्मणम् ।
आगमिष्यामि नो चेन्मां दारयिष्यति सायकैः ।
श्रीरामो वज्रकल्पैश्च ततो गच्छामि तत्पदम् ॥ ३४ ॥
तदा त्वया मे कर्त्तव्या क्रिया मच्छासनात् प्रिये ।
सीतां हत्वा मया सार्द्धं त्वं प्रवेक्ष्यसि पावकम् ॥ ३५ ॥
एवं श्रुत्वा वचस्तस्य रावण[2]स्यातिदुःखिता ।
उवाच नाथ मे वाक्यं शृणु सत्यं तथा कुरु ॥ ३६ ॥
[3]शक्यो [4]न राघवो जेतुं त्वया चान्यैः कदाचन ।
रामो [5]देववरः साक्षात् प्रधान[6]पुरुषेश्वरः ॥ ३७ ॥
मत्स्यो भूत्वा पुराकल्पे मनुं वैवस्वतं प्रभुः ।
ररक्ष सकलापद्भ्यो राघवो भक्तवत्सलः ॥ ३८ ॥
रामः कूर्मोऽभवत् पूर्वं लक्षयोजनविस्तृतः ।
समुद्र[7]मथने पृष्ठे दधार [8]कनकाचलम् ॥ ३९ ॥
हिरण्याक्षोऽतिदुर्वृत्तो [9]हतोऽनेन महात्मना ।
क्रोडरूपेण वपुषा क्षोणीमुद्धरता [10]क्वचित् ॥ ४० ॥
त्रिलोककण्टकं दैत्यं हिरण्यकशिपुं पुरा ।
हतवान् नारसिंहेन वपुषा रघुनन्दनः ॥ ४१ ॥

---

३४ । दारयिष्यति दारणेन नाशयिष्यतीत्यर्थः । वज्रकल्पैः सायकैर्दारयिष्यतीत्यन्वयः । ततस्तत्पदं सर्वोत्तमं स्थानं वैकुण्ठं गमिष्यामि । रा० ।

ततः श्रीरामो वज्रकल्पैः सायकैर्दारयिष्यतीति तत्पदं वैकुण्ठाख्यं गच्छामि गमिष्यामि । भविष्यत्सामीप्ये वर्त्तमानप्रयोगः ।

३५ । सीतां हत्वा त्वया मे क्रिया सपिण्डीकरणान्ता कर्त्तव्या । 'पुत्राभावे तु पत्नी स्यात्' इति स्मृतेः । यद्वा मया सार्द्धं पावकं प्रवेक्ष्यसि सत्यामिच्छायामिति शेषः । रा० ।

३६ । सत्यं वाक्यं शृणु तथा कुरु च मद्वाक्यार्थमनुतिष्ठ चेत्यर्थः । रा० ।

३७ । प्रधानस्य प्रकृतेः पुरुषाणां जीवानाञ्चेश्वरो नियन्ता । रा० ।

३८ । तदेव बोधयन्ती तदवतारानाह—मत्स्य इति । इदं पुराणे प्रसिद्धम् । रा० । मत्स्यो भूत्वेत्याद्यंशः पूर्वमेवास्माभिर्विवृतः ।

४० । क्रोडरूपेण वाराहरूपेण । रा० ।

---

1. च 'गत्वा' । 2. क '-स्यापि दुःखि-' । 3. ग 'न शक्तो' । 4. च 'नो' । 5. ग-च 'नारायणः' । 6. च '-पुरुषोत्तमः' । 7. क '-मन्थने' । 8. च 'मन्दरा-' । 9. च 'हतो येन' । 10. च 'बलात्' ।

विक्रमैस्त्रिभिरेवासौ बलिं बद्ध्वा जगत्त्रयम् ।
आक्राम्यादात् सुरेन्द्राय भृत्याय [1]रघुसत्तमः ॥ ४२ ॥
राक्षसाः क्षत्रियाकारा जाता भूमेर्भरा[2]वहाः ।
तान् हत्वा बहुशो रामो भुवं जित्वा ह्यदान्मुनेः ॥ ४३ ॥
स एव साम्प्रतं जातो रघुवंशे परात्परः ।
भवदर्थे रघुश्रेष्ठो मानुषत्वमुपागतः ॥ ४४ ॥
तस्य भार्या किमर्थं वा हृता सीता [3]वनाद् बलात् ।
मम पुत्रविनाशार्थं [4]स्वस्यापि निधनाय च ॥ ४५ ॥
इतः परं [5]वा वैदेहीं प्रेषयस्व रघूत्तमे ।
विभीषणाय राज्यं तु दत्त्वा गच्छामहे वनम् ॥ ४६ ॥
मन्दोदरीवचः श्रुत्वा रावणो वाक्यमब्रवीत् ।
कथं भद्रे रणे पुत्रान् भ्रातॄन् राक्षसमण्डलम् ।
घातयित्वा राघवेण जीवामि वनगोचरः ॥ ४७ ॥

---

४२ । जगत्त्रयमाक्रम्य पादैरिति शेषः । रा० ।

४३ । रामः परशुरामः । मुनेः कश्यपस्य । रा० ।

[ रामः परशुरामरूपः मुनेः कश्यपस्य सम्बन्धेऽदात् । गो० ]

मुनेः कश्यपस्य इति रामवर्मगोपालचक्रवर्त्तिनौ । भागवते न केवलं कश्यपाय किन्तु—

दद‍ौ प्राचीं दिशं होत्रे ब्रह्मणे दक्षिणां दिशम् ।
अध्वर्यवे प्रतीचीं वा उद्गात्रे उत्तरां दिशम् ॥
अन्येभ्योऽवान्तरदिशः कश्यपाय च मध्यतः ।
आर्यावर्त्तमुपद्रष्ट्रे सदस्येभ्यस्ततः परम् ॥ ९।१६।२१-२२

इत्यादिना होत्रादिभ्यः सर्वेभ्य एव क्षत्रियान्तकरस्य परशुरामस्य पृथिवीदानम् ।

४४ । भवदर्थे भवन्नाशाय उद्धाराय वा । ननु रामो नारायणश्चेत् कथं नराकार इत्याह—मानुषत्वमिति । 'मानुषेणैव ते मृतिरि'ति स भगवान् मानुषमेव वपुर्धृत्वा उपागतः ।

४५ । तस्य भार्या किमर्थं हृता इति पृष्ट्वा सा कमपीष्टमर्थं तत्रापश्यन्ती पुनरनिष्टजनकमेवार्थमुद्घाटयति—मम पुत्रविनाशार्थमिति ।

४६ । वा अथवा यदि स्वविनाशार्थं नायमुद्योगस्तर्हि इतः पुत्रादिनिधनात् परमपीत्यर्थः ।

---

1. क 'सुरस-' । 2. च '-पहाः' । 3. ग-छ 'बलाद् वनात्' । 4. च-छ 'तवापि' । 5. ग-छ 'च' ।

रामेण सह योत्स्यामि रामबाणैः सुशीघ्रगैः ।
विदार्यमाणो यास्यामि तद्विष्णोः परमं पदम् ॥ ४८ ॥

जानामि राघवं विष्णुं लक्ष्मीं जानामि जानकीम् ।
ज्ञात्वैव जानकी सीता मयानीता वनाद् बलात् ॥ ४९ ॥

[1]रामेण निधनं प्राप्य यास्या[2]मीति परं पदम् ।
विमुच्य त्वां तु [3]संसारे गमिष्यामि [4]स ह प्रिये ॥ ५० ॥

[5]परानन्दमयी शुद्धा सेव्यते या मुमुक्षुभिः ।
तां गतिन्तु गमिष्यामि हतो रामेण संयुगे ।
प्रक्षाल्य कल्मषाणीह मुक्तिं यास्यामि दुर्लभाम् ॥ ५१ ॥

---

५० । नरो० । सोऽहं त्वां संसारे विमुच्य गमिष्यामीति सम्बन्धः । ह पादपूरणे । यद्वा अन्यस्त्रीभिरिति पूरणीयम् ।

५१ । नरो० । प्रक्षाल्य नाशयित्वा, कल्मषाणि पापानि ।

---

४७ । राघवेण घातयित्वा कथं जीवामि जीवने प्रियताबुद्धिं करोमि । रा० ।

४८ । मरणस्य सन्निहितत्वाद् विपरीतबुद्धिं रावणस्याऽऽह—रामेण सहेत्यादि । रा० ।

४९ । जानामि राघवमिति । प्रायःसमानार्थः कश्चिच्छ्लोको वाल्मीकीयेऽपि दृश्यते । स च कुम्भकर्णरावणवाक्यावसरे । तत्रापि रावणस्यैव तद्वाक्यम् । तथाच—

जानामि सीतां धरणीप्रसूतां जानामि रामं मधुसूदनञ्च ।
एतद्धि जाने त्वहमस्य वध्यस्तेनाऽऽहृता मे जनकात्मजैषा ॥

इति ।६।४१।२४

५०-५१ । रामेण निधनं प्राप्य परं पदं यास्यामीति ज्ञात्वैव जानकी बलादानीतेत्यन्वयः । हे प्रिये, त्वां विमुच्य त्यक्त्वा संसारात्, ल्यब्लोपे पञ्चमी, संसारं सन्त्यज्य मृतैर्बन्धुभिः सह गमिष्यामि । गम्यते सा गतिः स्थानं परानन्दमयी दुःखराहित्याद् ब्रह्मलोकैकदेशवैकुण्ठरूपा शुद्धा रजस्तमसोऽस्पृष्टशुद्धसत्त्वमयी या मुमुक्षुभिः सेव्यते दहराद्युपासनाभिः प्राप्यते रामेण संयुगे हतस्तां गतिं गमिष्यामि । इह कल्मषाणि राक्षसदेहेन कृतानि पापानि अन्तकाले रामनामस्मरणाद्राममूर्त्तिदर्शनाच्च प्रक्षाल्य दूरीकृत्य मुक्तिं यास्यामि । रा० ।

---

1. च-पुस्तके इदमङ्कं नास्ति । 2. क '-मि परमं पदम्' । 3. क-च 'संसार', ख-घ 'संसारात्' । 4. च 'शृणु' । 5. क-पुस्तके 'परानन्दमयी'त्यादि—'संयुगे' इत्यन्तोऽंशो नास्ति ।

क्लेशादिपञ्चकतरङ्ग[1]युतं भ्रमाढ्यं दारात्मजाप्तधनबन्धु[2]सखाभियुक्तम् ।
और्वानलाभनिज[3]रोषमनङ्ग[4]जालं संसारसागरमतीत्य हरिं व्रजामि ॥ ५२ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे लङ्काकाण्डे
दशमोऽध्यायः ॥ १० ॥

---

५२ । नरो० । क्लेशादिपञ्चकमेव तरङ्गस्तेन युतम् । आदिपदेन अज्ञानलोभमोहप्रमादानां ग्रहणम् । भ्रमाढ्यं भ्रमसम्पन्नम् । भ्रमो मिथ्यामतिरावर्त्तश्च । दाराश्च आत्मजाश्च आप्ताश्च हितैषिणः धनानि च बन्धुसखाश्च तैरभियुक्तम् । बन्धुसहिताः स...[ खायः ? ] उपकारका बन्धुसखाः । बन्धवो ज्ञातयः । और्वानलो वडवानलस्तस्येव आभा यस्य तादृशो निजरोषो यत्र तं तथा । अनङ्ग एव जालमानायो यत्र तं तथा ।

[ लङ्काकाण्डे दशमाध्यायव्याख्या समाप्ता ॥ १० ॥ ]

---

५२ । क्लेशादीति । 'अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः' इति योगशास्त्रोक्ताः । तत्राविद्या अनित्याशुचिदुःखरूपानात्मसु नित्यशुचिसुखात्मत्वख्यातिः शुक्तिरजतादिज्ञानानि च । अस्मिता शरीराद् व्यतिरिक्त आत्मा नास्तीत्येवं प्रत्ययः । रागद्वेषौ प्रसिद्धौ । अभिनिवेशो मरणादित्रासः, तज्जन्याः स्थूलवृत्तय आदिपदग्राह्याः, यासां ध्यानहेयत्वं योगशास्त्रे उक्तम्, तद्रूपास्तरङ्गा यत्र तं चेमं युगं तत्परिवृत्तिभ्रमेणाऽऽढ्यम्, दारादिरूपझषैर्ग्राहैर्युक्तम्, तत्तत्प्राणिनां रोष एवौर्वानलाभो यत्र शोषकत्वात्तम्, अनङ्गः काम एव जालं बन्धकत्वाद् यत्र तम्, कामेन हि तत्तद्विषये जनो बध्यते । रा० ।

[ सागरसाम्यं वर्णयति—क्लेशादीति । क्लेशादिपञ्चकम् अविद्यास्मितारागद्वेषाभिनिवेशाः, त एव तरङ्गा निरन्तरोद्भूतत्वात्, तैर्युतम् । भ्रमो भ्रान्तिः अतत्त्वे तत्त्वरूपश्च, अन्यस्मिन्नन्यारोप इति यावत् । तेनाऽऽढ्यं युक्तं बहुलीकृतञ्च । दारादिभिर्युक्तं समुद्रपक्षे जलजन्तव एव । और्वानलतुल्या निजरोषाः । अनङ्गः काम एव जालवत् । गो० ]

---

1. क-ख-घ '-युग' । 2. क-ख-घ '-झषा-,' ग-च-छ '-सखा-' । 3. च '-बोध-' । 4. च-टि-छ '-मीनं' ।

# एकादशोऽध्यायः

——:०:——

[1]श्रीमहादेव उवाच—

इत्युक्त्वा वचनं प्रेम्णा राज्ञीं मन्दोदरीं तदा ।
रावणः प्रययौ योद्धुं रामेण सह संयुगे ॥ १ ॥
दृढं स्यन्दनमास्थाय वृतो घोरैर्निशाचरैः ।
चक्रैः षोडशभिर्युक्तं सवरूथं सकूबरम् ॥ २ ॥
पिशाचवदनैर्घोरैः खरैर्युक्तं भयावहम् ।
सर्वास्त्रशस्त्रसहितं सर्वोपस्करसंयुतम् ।
निश्चक्रामाथ सहसा रावणो भीषणाकृतिः ॥ ३ ॥

---

१ । नरो० । संयुगे संग्रामे ।

२ । नरो० । स्यन्दनं रथम् । सवरूथं सकूबरमिति । 'रथगुप्तिर्वरूथो ना कूबरस्तु युगन्धरः' इत्यमरः ।

३ । नरो० । खरैर्गर्दभैः । सहसा अविमृश्य ।

---

२ । वरूथो रथगुप्तिः । रा० ।

अत्रास्मिन् रामरावणयोः संग्रामे रावणस्य मायाकल्पितरथारोहणं वाल्मीकीये । तथाच—

दशग्रीवस्त्वपक्रम्य मायया राक्षसर्षभः ।
कल्पयामास रुचिरं रथं पावकसन्निभम् ॥ इति ६।८६।२ ।

रथं विशिनष्टि तत्रैव—

युक्तं मनुष्यवदनैर्हयैः परमशीघ्रगैः ।
सर्वशस्त्रायुधोपेतं कालान्तयमदर्शनम् ॥
मनःसङ्कल्पगं स्वक्षं सुचक्रं सुवरूथिनम् ।
प्राज्ञसूतयुतं श्रीमत्सर्वं हेमविभूषितम् ॥ इति ६।८६।३-४ ।

३ । उपस्करो युद्धसामग्री । रा० ।

---

1. क-ख-घ-पुस्तकेषु 'श्रीमहादेव उवाच' इति नास्ति ।

आयान्तं रावणं दृष्ट्वा भीषणं रणकर्कशम् ।
सन्त्रस्ताऽभूत्तदा सेना वानरी रामपालिता ।
हनूमानथ चोत्प्लुत्य रावणं योद्धुमाययौ ॥ ४ ॥
आगत्य हनुमान् रक्षोवक्षस्यतुलविक्रमः ।
मुष्टि[1]बन्धं दृढं [2]बद्ध्वा ताडयामास वेगतः ॥ ५ ॥
तेन मुष्टिप्रहारेण जानुभ्यामपतद्रथे ।
मूर्च्छितोऽथ मुहूर्त्तेन रावणः पुनरुत्थितः ।
उवाच च हनूमन्तं शूरोऽसि मम सम्मतः ॥ ६ ॥
हनूमानाह [3]तं धिङ् मां [4]यत्त्वं जीवसि रावण ।
त्वं तावन्मुष्टिना वक्षो मम ताडय [5]रावण ।
पश्चान्मया हतः प्राणान् मोक्ष्यसे नात्र संशयः ॥ ७ ॥
तथेति मुष्टिना वक्षो रावणेनापि ताडितः[6] ।
विघूर्णमाननयनः किञ्चित् [7]कश्मलमाययौ ॥ ८ ॥
संज्ञामवाप्य कपिराड् रावणं हन्तुमुद्यतः ।
ततोऽन्यत्र गतो भीत्या रावणो राक्षसाधिपः ॥ ९ ॥
हनूमानङ्गदश्चैव नलो नीलस्तथैव च ।
चत्वारः [8]समरे तावद् दृष्ट्वा राक्षसपुङ्गवान् ॥ १० ॥

---

८ । नरो० । कश्मलम् ईषद्व्यथाम् ।

९ । नरो० । संज्ञां चेतनाम् ।

---

४ । अथ वानरसैन्यानां सन्त्रासानन्तरम् । हनूमान् उत्प्लुत्य योद्धुं रावणमाययौ इत्यन्वयः ।

६ । जानुभ्यां स्वशरीरभारमुद्वहन्नित्यर्थः, मूर्च्छितो रथे अपतत्, अथ मूर्च्छानन्तर-मित्यर्थः, मुहूर्त्तेन क्षणकालाभ्यन्तर एव मोहमुक्तः सन् उत्थित उवाच च । शूरोऽसीत्यादि हनूमत्प्रशंसाकारणं रावणस्य तदाघातेन मोहोपगमनमेव ।

७ । पूर्वं त्वं मुष्टिना मम वक्षस्ताडय ततः मया हतस्ताडितः प्राणान् मोक्ष्यसे इत्यन्वयः । एतेन हनूमतो निर्भयत्वं सूचितम् ।

८ । वक्षो वक्षसीत्यर्थः । रावणेन ताडितो हनूमान् ।

---

1. क-ख-च-छ '-बद्धं' । 2. ग-च-छ 'क्षत्वा' । 3. छ 'धिक् तं मा' । 4. क-ख-घ 'यत्त्व' । 5. च 'राक्षस' । 6. च '-सम्' । 7. क-घ 'कश्मल-' । 8. क-ख-घ 'समवेताग्रे' ।

अग्निवर्णं तथा [1]सर्परोमाणं खड्गरोमकम् ।
तथा वृश्चिकरोमाणं [2]निजघ्नुः क्रमशोऽसुरान् ॥ ११ ॥
चत्वारश्चतुरो हत्वा राक्षसान् भीमविक्रमान् ।
सिंहनादं पृथक् कृत्वा रामपार्श्वमुपा[3]गताः ॥ १२ ॥
ततः क्रुद्धो दशग्रीवः सन्दश्य दशनच्छदम् ।
विवृत्य [4]नयनं क्रूरो राममेवा[5]न्वधावत ॥ १३ ॥
दशग्रीवो रथस्थस्तु रामं वज्रोपमैः शरैः ।
आजघान महाघोरैर्धारा[6]भिरिव तोयदः ।
रामस्य पुरतः सर्वान् वानरानपि विव्यथे ॥ १४ ॥
ततः [7]पावकसङ्काशैः शरैः काञ्चन[8]भूषणैः ।
अभ्यवर्षद्रणे रामो दशग्रीवं समाहितः ॥ १५ ॥
रथस्थं रावणं दृष्ट्वा भूमिष्ठं रघुनन्दनम् ।
आहूय मातलिं शक्रो वचनञ्चेदमब्रवीत् ॥ १६ ॥

---

११ । नरो० । अग्नेरिव वर्णो यस्य तं तथा । वृश्चिकस्येव रोमाणि यस्य तं तथा ।

---

१२ । पृथक् सिंहनादं कृत्वा प्रत्येकं सिंहनादं कृत्वेत्यर्थः । रा० ।

१३ । दशनच्छदम् ओष्ठम् । विवृत्य क्रोधवशाद्विस्तार्य । रा० ।

१४ । तोयदो धाराभिरिव, पर्वतमिति शेषः । विव्यथे व्यथयामास, अन्तर्भावितण्यर्थः । रा० ।

१५ । पावकसङ्काशैरिति वह्निप्रतिमैस्तद्दीप्तिवदुद्दीप्तैरित्यर्थः । पवनसङ्काशैरिति पाठः क्वचित्, तत्र तादृश्यं वेगेन, तेन पवनवेगतुल्यवेगैः शरैरित्यर्थः ।

१६ । वाल्मीकीये सरथं रावणं विरथञ्च राममवलोक्य—

भूमौ स्थितस्य रामस्य रथस्थस्य च रक्षसः ।
न समं युद्धमित्याहुर्देवगन्धर्वदानवाः ॥ ६।८६।६

इति देवादीनामभिमतप्रकाशः ; ततश्च—

देवतानां वचः श्रुत्वा शतक्रतुरनन्तरम् ।
प्रेषयामास रामाय रथं मातलिसारथिम् ॥ ६।८६।७

इति देवराजेन सरथस्य मातलेः प्रेरणम् ।

---

1. ग-च-छ 'सर्व-' । 2. ग-घ 'निर्जघ्नुः' । 3. ग-च-छ '-ययुः' । 4. क-ख-घ-च 'नयने' । 5. ग '-त्वपद्यत' । 6. च '-निविडतो-' । 7. क 'पवन-', ख 'पावन-' । 8. ग-च-छ '-भूषितैः' ।

रथेन मम भूमिष्ठं शीघ्रं याहि रघू[1]त्तमम् ।
त्वरितं भूतलं गत्वा कुरु कार्यं ममानघ ॥ १७ ॥
एवमुक्तोऽथ तं नत्वा मातलिर्देवसारथिः ।
[2]ततो हयैश्च संयोज्य हरितैः स्यन्दनोत्तमम् ।
स्वर्गाज्जयार्थं रामस्य ह्युपचक्राम मातलिः ॥ १८ ॥
अब्रवीच्च ततो राममप्रत[3]र्क्यं रथे स्थितः ।
प्राञ्जलिर्देवराजेन प्रेषितोऽस्मि रघूत्तम ॥ १९ ॥
रथोऽयं देवराजस्य विजयाय तव प्रभो ।
प्रेषि[4]तश्च महाराज धनुरैन्द्रञ्च भूषितम् ।
अभेद्यं[5] कवचं खड्गं [6]दिव्यतूणीयुगं तथा ॥ २० ॥

---

१९ । नरो० । अप्रतर्क्यमिति क्रियाविशेषणम् । मातलेरेतादृशी स्थिती रावणभयात् ।

---

१७ । मम कार्यं रामस्य रथेन योजनरूपम् । रा० ।

१८ । उपचक्राम रामसमीपमाजगामेत्यर्थः । अप्रतर्क्यरथे अन्यैः सर्वैरदृश्यरथे । रा० । देवराजस्यन्दनमधिकृत्य वाल्मीकीये—

ततः कनकचित्राङ्गः किङ्किणीशतभूषितः ।
तरुणादित्यसङ्काशो वैदूर्यसमकूबरः ॥
सदश्वैः काञ्चनापीडैर्युक्तश्वेतप्रकीर्णकैः ।
हरिभिः सूर्यसङ्काशैर्हेमजालविभूषितैः ॥
वज्रदण्डध्वजः श्रीमान् देवराजरथो वरः ।
अभ्यवर्त्तत काकुत्स्थमवतीर्य त्रिपिष्टपात् ॥ इति ३।८६।८-१० ।

सरथस्य मातलेरागमनात् परं रथोऽयं मायाविना रावणेन प्रेरितो न वेति विकल्पना वाल्मीकीये लक्ष्मणसुग्रीवादीनाम् । सा च—

विभीषणो महाप्राज्ञो दृष्ट्वा वचनमब्रवीत् ।
सुविश्रब्धं रथं वीर आरोह त्वमशङ्कितः ॥
अहं सर्वां विजानामि मायां वै रक्षसामिह ।
नैवंविधा राक्षसेन्द्रे रथा विद्यन्ति शत्रुहन् ॥ ६।८६।१६-१७

इत्यादिविभीषणवाक्येन विनष्टा ।

१९-२० । प्राञ्जलिरब्रवीदित्यन्वयः । किमब्रवीदित्याह—देवराजेनेत्यादि । अयं देवराजस्य

---

1. ग '-द्वहम्' । 2. च 'तदा' । 3. क-ख-घ '-क्यैरथे' । 4. ग '-तोऽयं' । 5. ग-च '-द्यकव-' । 6. च 'तूणीरयुगलं' ।

आरुह्य[1] च रथं राम रावणं जहि राक्षसम् ।
मया सारथिना देव वृत्रं देवपतिर्यथा ॥ २१ ॥

इत्युक्तस्तं परिक्रम्य नमस्कृत्य [2]रथोत्तमम् ।
आरुरोह रथं रामो लोकाँल्लक्ष्म्या नियोजयन् ॥ २२ ॥

---

२२ । नरो० । लक्ष्म्या शोभया ।

---

रथ इति रूपबोधनम् । स च तव विजयाय तेन प्रेषितः । ऐन्द्रं स्वीयं धनुश्च तेन प्रेषितम् । रा० ।

वाल्मीकीये रामं प्रति मातलेर्वाक्यम्—

अथाब्रवीत्तदा रामं सप्रतोदो रथे स्थितः ।
प्राञ्जलिर्मातलिर्वाक्यं सहस्राक्षस्य सारथिः ॥
सहस्राक्षेण काकुत्स्थ रथोऽयं विजयाय वै ।
प्रेषितस्ते महेन्द्रेण श्रीमाञ् शत्रुनिवर्हणः ॥ इति ६।८६।१९-२० ।

अत्र चाप-कवच-खड्ग-तूणीरादीनां प्रेषणम् ।

एतच्चैन्द्रं महच्चापं कवचं चाग्निसन्निभम् ।
शराश्चाऽऽदित्यसङ्काशाः शक्तयश्चामलाः शिताः ॥ ६।८६।२१

इत्यादिना वाल्मीकीये चाप-कवच-शर-शक्तीनां प्रेषणम् ।

२१ । आरुह्येति । वाल्मीकीयेऽपि—

आरुह्येमं रथं राम रावणं जहि राक्षसम् ।
मया सारथिना वीर महेन्द्र इव दानवान् ॥ इति ६।८६।२२ ।

२२ । लोकान् लक्ष्म्या नियोजयन् रावणवधस्याल्पकालावशिष्टत्वबोधनेनाऽऽनन्दयन्नित्यर्थः । रा० ।

इत्युक्त इति ।

इत्युक्तः स परिक्रम्य संप्रहृष्टतनूरुहः ।
रथं प्रदक्षिणीकृत्य मातलिं प्रतिपूज्य च ॥
ततो विचिन्त्य तं देवं देवान् संपरिपूज्य सः ।
आरुरोह रथं दिव्यं जयाय परमास्त्रवित् ॥ ६।८६।२३-२४

इत्यादिना वाल्मीकीयेऽपि देवानां नमस्कृतिमुक्त्वा रामस्य समुदाचारप्रणयिता दर्शिता ।

---

1. ग-च '-ह्यैन', छ '-ह्यैव' । 2. छ 'रघूत्तम:' ।

ततोऽभवन्म[1]हायुद्धं भैरवं रोमहर्षणम् ।
महात्मनो राघवस्य रावणस्य च धीमतः ॥ २३ ॥
[2]आग्नेयेन [3]च आग्नेयं दैवं दैवेन राघवः ।
अस्त्रं राक्षसराजस्य जघान परमास्त्रवित् ॥ २४ ॥
ततस्तु ससृजे घोरं राक्षसं चास्त्रमस्त्रवित् ।
क्रोधेन महताविष्टो रामस्योपरि रावणः ॥ २५ ॥
रावणस्य धनुर्मुक्ताः सर्पा भूत्वा महाविषाः ।
शराः काञ्चनपुङ्खाभा राघवं परितोऽपतन् ॥ २६ ॥
तैः शरैः सर्पवदनैर्वमद्भिरनलं मुखैः ।
दिशश्च विदिशश्चैव व्याप्ता[4]स्तत्र तदाऽभवन् ॥ २७ ॥
रामः सर्पांस्ततो दृष्ट्वा समन्तात् परिपूरितान् ।
सौपर्णमस्त्रं तद् घोरं पुरः प्रावर्त्तयद्रणे ॥ २८ ॥
[5]रामेण मुक्तास्ते बाणा भूत्वा गरुडरूपिणः ।
चिच्छिदुः सर्पबाणांस्तान् समन्तात् सर्पशत्रवः ॥ २९ ॥

---

पाश्चात्त्ये पुनः—

इत्युक्तः संपरिक्रम्य रथं तमभिवाद्य च ।
आरुरोह तदा रामो लोकाँल्लक्ष्म्या विराजयन् ॥ ६।१०३।१७

इति प्रकृतार्थसंवाद्येव पाठः ।

२३ । भैरवमित्यत्र द्वैरथमिति वाल्मीकीये । तथाच—

अथाभूदद्भुतं युद्धं द्वैरथं लोमहर्षणम् ।
रामस्य च महाबाहोर्बलिनो रावणस्य च ॥ इति ६।८६।२७ ।

२४ । आग्नेयेन च इत्यत्र गान्धर्वेण तु इति वाल्मीकीये । तथाच—

गान्धर्वेण तु गान्धर्वं दैवं दैवेन राघवः ।
अस्त्रं राक्षसराजस्य जघान परमास्त्रवित् ॥ इति ६।८६।२८ ।

२७ । तदा तस्मिन् समये, तत्र युद्धभूमौ ।

२८ । पुरः रावणसम्मुखे । रा० ।

ततो रामः समन्तात् परिपूरितान् सर्पान् दृष्ट्वा तद्घोरं तेषां सर्पाणां घोरं भयजनकम् । यद्वा, तदितिच्छेदः, तत् प्रसिद्धमित्यर्थः । पुरः सर्पाणामग्रतः ।

---

1. क-च '-हद्द युद्ध' । 2. च 'आग्नेयास्त्रेण' । 3 ग-च-छ 'चाऽऽग्नेय' । 4. च '-स्तत्राभवञ् शरा.' । 5. ग-छ 'रामस्य' ।

अस्त्रे प्रतिहते युद्धे रामेण दशकन्धरः ।
अभ्यवर्षत्ततो रामं घोराभिः शरवृष्टिभिः ॥ ३० ॥
ततः पुनः शरानीकै राममक्लिष्टकारिणम् ।
अर्दयित्वा तु घोरेण मातलिं प्रत्यविध्यत ॥ ३१ ॥
पातयित्वा रथोपस्थे रथकेतुञ्च काञ्चनम्[1] ।
ऐन्द्रानश्वानभ्यहनद्रावणः क्रोधमूर्च्छितः ॥ ३२ ॥
[2]विषेदुर्देवगन्धर्वाश्चारणाः पितरस्तथा ।
आर्त्ताकारं हरिं दृष्ट्वा व्यथिताश्च महर्षयः ।
व्यथिता वानरेन्द्राश्च बभूवुः सविभीषणाः ॥ ३३ ॥
दशास्यो विंशतिभुजः प्रगृहीतशरासनः ।
ददृशे रावणस्तत्र मैनाक इव पर्वतः ॥ ३४ ॥
रामस्तु [3]भृकुटिं बद्ध्वा क्रोधसंरक्तलोचनः ।
कोपं चकार [4]सदृशं निर्दहन्निव राक्षसम् ॥ ३५ ॥

---

३९ । नरो० । सदृशमनुरूपम् ।

---

३२ । रथोपस्थे रथकेतुं पातयित्वेत्यनेन तस्य वेतसादिवच्छरैर्नम्रीकरणं विवक्षितम् । क्रोधमूर्च्छित उच्छ्रितक्रोध इत्यर्थः । रा० ।

३३ । आर्त्ताकारम् आर्तसदृशाकारम्, अभिनीततदाकारं न तु वस्तुतस्तदाकारम् । रा० ।

३४ । अत्र वाल्मीकीये—

दशग्रीवो विंशभुजः प्रगृहीतशरासनः ।
अदृश्यत तदाऽकम्प्यो मैनाक इव पर्वतः ॥ इति ६।८६।४४ ।

पाश्चात्त्ये पुनः—

दशास्यो विंशतिभुजः प्रगृहीतशरासनः ।
अदृश्यत दशग्रीवो मैनाक इव पर्वतः ॥ इति ६।१०३।३७ ।

३९ । सदृशं कोपम् आत्मनः सदृशं कोपम् । रा० ।

अत्र पाश्चात्त्ये वाल्मीकीये कश्चिन्नवीनः प्रबन्धो दृश्यते । स च युद्धपरिश्रान्तस्य रामस्य उत्साहवर्द्धनार्थमगस्त्येनाऽऽदित्यहृदयपाठोपदेशरूपः । तथाच—

दैवतैश्च समागम्य द्रष्टुमभ्यागतो रणम् ।
उपगम्याब्रवीद्राममगस्त्यो भगवांस्तदा ॥

---

1. अतः परं च-पुस्तके 'धनुश्चिच्छेद रामस्य तदद्भुतमिवाभवत् । पश्यतो रामचन्द्रस्य शरैराशीविषोपमैः ॥' इत्यधिकम् । 2 क 'विप्रर्षिदेव-' । 3. ग-घ 'भ्रु-' । 4. च 'सुभृशं', क 'स भृशं' ।

धनुरादाय देवेन्द्रधनुराकारमद्भुतम् ।
गृहीत्वा पाणिना बाणं कालानलसमप्रभम् ।
निर्दहन्निव चक्षुर्भ्यां [1]ददर्श रिपुमन्तिके ॥ ३६ ॥

पराक्रमं दर्शयितुं तेजसा प्रज्वलन्निव ।
प्रचक्रमे कालरूपी[2] सर्वलोकस्य पश्यतः ॥ ३७ ॥

विकृष्य चापं रामस्तु रावणं प्रतिविध्य च ।
हर्षयन् वानरानीकं कालान्तक इवाऽऽबभौ ॥ ३८ ॥

क्रुद्धं रामस्य वदनं दृष्ट्वा शत्रुं प्रबाधतः ।
तत्रसुः सर्वभूतानि चचाल च वसुन्धरा ॥ ३९ ॥

रामं दृष्ट्वा महारौद्रमुत्पातांश्च सुदारुणान् ।
त्रस्तानि सर्वभूतानि रावणं चाविशद् भयम् ॥ ४० ॥

---

३६ । नरो० । देवेन्द्रधनुष इव आकारो यस्य तत्तथा ।
३७ । नरो० । पराक्रमं बलम् ।
३८ । नरो० । कालान्तक इव प्रलयकालयम इव ।

---

राम राम महाबाहो शृणु गुह्यं सनातनम् ।
येन सर्वानरीन् वत्स समरे विजयिष्यसे ॥

आदित्यहृदयं पुण्यं सर्वशत्रुविनाशनम् ।
जयावहं जपं नित्यमक्षरं परमं शिवम् ॥ ६।१०६।२-४ ।

एतदुपदेशानन्तरम्—

एतच्छ्रुत्वा महातेजा नष्टशोकोऽभवत्तदा ।
धारयामास सुप्रीतो राघवः प्रयतात्मवान् ॥६।१०६।२८

इत्यादिना तद्धारणं रामस्य ।

३६ । देवेन्द्रधनुर्वर्षाकाले दृश्यमानमिन्द्रधनुरिति ख्यातम्, तत्सदृशम् । आत्मनेपदमार्षम् । रा० ।

पाणिना बाणं गृहीत्वा राम इति शेषः । रिपुं रावणम् ।

३९ । शत्रुं प्रबाधतो रामस्य क्रुद्धं वदनं दृष्ट्वा सर्वभूतानि तत्रसुरित्यन्वयः ।

---

1. क-ख-ग-घ 'ददृशे' । 2. छ '-रूपः' ।

विमानस्थाः सुरगणाः सिद्धगन्धर्वकिन्नराः ।
ददृशुः[1] सुमहायुद्धं लोकसंवर्त्तकोपमम् ॥ ४१ ॥
[2]ऐन्द्रमस्त्रं समादाय रावणस्य शिरोऽच्छिनत् ।
मूर्द्धानो रावणस्याथ बहवो रुधिरोक्षिताः ।
गगनात् प्रपतन्ति स्म तालादिव फलानि [3]हि ॥ ४२ ॥
न दिनं न च वै रात्रिर्न सन्ध्या न दिशोऽपि वा ।
प्रकाशन्ते[4] न तद्रूपं दृश्यते [5]तत्र सङ्गरे ।
ततो रामो बभूवाथ विस्मयाविष्टमानसः ॥ ४३ ॥

---

४१ । नरो० । लोकसंवर्त्तकोपमं लोकप्रलयतुल्यम् ।

४३ । नरो० । तद्रूपं रावणरूपम् । विस्मयाविष्टमानसो विस्मयव्याप्तमनाः ।

---

४१ । लोकसंवर्त्तकोपमं सर्वलोकप्रलयकृदादीवकादियुद्धसदृशम् । रा० ।

४२ । मूर्द्धानः रामबाणकृत्ता इत्यर्थः । रा० ।

राम ऐन्द्रमस्त्रं समादाय गृहीत्वा उत्सृज्य चेत्यर्थः, रावणस्य शिरः अच्छिनत् । अथ शिरश्छेदसमुद्भूतेन तेन रुधिरेण उक्षिता रावणस्य मूर्द्धानः प्रपतन्ति स्म । रावणस्य शिरसां छेदनं पुनरुत्थानञ्च वाल्मीकीये—

ततः सन्धाय रामस्तु क्षुरमाशीविषोपमम् ॥
रावणस्य शिरः कायाच्चिच्छेद परमास्त्रवित् ।
तच्छिन्नं पतितं भूमौ दृष्टं लोकैस्त्रिभिस्तदा ॥
तथैव सदृशञ्चान्यद्रावणस्योत्थितं शिरः ।
तत् क्षिप्तं क्षिप्रहस्तेन राघवेण महात्मना ॥
द्वितीयं रावणशिरश्छिन्नमेव हि लक्ष्यते ।
छिन्नमात्रं शिरस्तच्च पुनरन्यदलक्षयत् ॥
तदप्यशनिसङ्काशैश्छिन्नं रामेण लक्ष्यते ।
छिद्यते जायते चैव रावणस्य पुनः पुनः ॥
रामेण समरे रोषाद्राक्षसस्य दुरात्मनः ।
एवमेव रणे तस्य रामो लेभे न हि क्षयम् ॥
शतमेकोत्तरं छिन्नं शिरसां तुल्यवर्चसाम् ।
न चैव राक्षसेन्द्रस्य दृश्यते जीवितक्षयः ॥ इति ।६।९२।२१-२७

४३ । न दिनमित्यादि । अनेनानेकदिनं रामरावणयोर्निरन्तरयुद्धं वृत्तमिति सूचितम् । तद्रूपं छिन्नमस्तकरावणरूपं पुनः पुनः शिरःप्रादुर्भावात् । तदेवाऽऽह—तत इति । रा० ।

---

1. ग-च-छ '-शुस्ते महा-' । 2. ग-च-पुस्तकयोरिदमर्द्धं नास्ति । 3. ग 'ह', च 'च' । 4. क-ख-घ '-स्ते' । 5. ग-च 'यत्र' ।

शतमेकोत्तरं छिन्नं शिरसां [1]चैकवर्चसाम् ।
न चैव रावणः शान्तो दृश्यते जीवित[2]त्तयात् ॥ ४४ ॥
ततः सर्वास्त्रविद् [3]धीरः कौशल्या[4]नन्दवर्द्धनः ।
[5]अस्त्रैश्च [6]बहुभिर्युक्तश्चिन्तयामास राघवः ॥ ४५ ॥
यैर्यैर्बाणैर्हता दैत्या महासत्त्वपराक्रमाः ।
[7]त एते निष्फलं याता रावणस्य [8]निपातने ॥ ४६ ॥

---

४४ । नरो० । श्रीरामविस्मयमाह—शतमिति पद्येन । एकमुत्तरमधिकं यत्र तत्तथा धारानिति शेषः । छिन्नमिति भावे क्तः । शिरसामिति सम्बन्धविवक्षायां षष्ठी । एकं वर्चस्तेजो येषां तेषां तथा ।

---

अत्र प्रवर्त्तमानमिदं युद्धं साप्तरात्रिकमिति वाल्मीकीये ज्ञायते । तथा च—

तत् प्रवृत्तं महद् युद्धं तुमुलं लोमहर्षणम् ।
अन्तरीक्षे च भूमौ च पुनश्च गिरिमूर्द्धनि ॥
देवदानवयक्षाणां पिशाचोरगरक्षसाम् ।
पश्यतां तन्महद् युद्धं सप्तरात्रमवर्त्तत ॥
नैव रात्रिं न दिवसं न मुहूर्त्तं न च क्षणम् ।
रामरावणयोर्युद्धं विश्राममगमत्तदा ॥ इति ६।९२।३३-३९ ।

पाद्मेऽप्येवम् । तथाच—

ततो युद्धमभूद् घोरं रामरावणयोर्महत् ।
साप्ताहिकमहोरात्रं शस्त्रास्त्रैरतिभीषणम् ॥ इति २४२।३१७ ।

४४ । एकवर्चसां तुल्यतेजसाम् । शान्तो गतचेष्टः । रा० ।

४६ । निष्फलत्वं याताः प्राप्ताः । निष्फला जाता इति क्वचित् पाठः । रा० ।

दैत्या मारीचादयो राक्षसाः । एतच्च वाल्मीकीये स्पष्टम् । शिरसां छेदेऽपि रावणस्य जीवितनाशमपश्यतस्तत्रभवतो रामस्य चिन्ताप्रकारो वाल्मीकीये—

ततः सर्वास्त्रविच्छूरः कौशल्यानन्दिवर्द्धनः ।
विषमैर्बहुभिर्युक्तश्चिन्तयामास राघवः ॥
मारीचो निहतो येन खरो येन च दूषणः ।
वाली च समरामर्षी विराधो दण्डके वने ॥
इमे ते सायकाः सर्वे युद्धे प्रत्ययिता मम ।
किं तु तत् कारणं येन रावणे मन्दतेजसः ॥ इति ६।९२।२८-३० ।

---

1. ग 'चार्क-' । 2. ग-च-छ '-चये' । 3. क-ग-च 'वीरः' । 4. च '-नन्दि-' । 5. च 'अस्त्रै-र्बहुविधैर्यु-' । 6. छ 'विविधै-' । 7. घ 'एते ते', च 'अत ते' । 8. ग 'विनाशने,' छ 'विघातने' ।

इति चिन्ताकुले रामे समीपस्थो विभीषणः ।
उवाच राघवं वाक्यं ब्रह्मदत्तवरो ह्यसौ ॥ ४७ ॥
विच्छिन्ना बाहवो[1]ऽप्यस्य विच्छिन्नानि शिरांसि च ।
उत्पत्[2]स्यन्ते पुनः शीघ्रमित्याह भगवानजः ॥ ४८ ॥
नाभिदेशेऽमृतं तस्य कुण्डलाकारसंस्थितम् ।
तच्छोषयानलास्त्रेण तस्य मृत्युस्ततो भवेत् ॥ ४९ ॥
विभीषणवचः श्रुत्वा रामः शीघ्रपराक्रमः ।
पावकास्त्रेण [3]संयोज्य नाभिं विव्याध रक्षसः ॥ ५० ॥
अनन्तरञ्च चिच्छेद शिरांसि च महाबलः ।
बाहूनपि च संरब्धो रावणस्य रघूत्तमः ॥ ५१ ॥
ततो घोरां महाशक्तिमादाय दशकन्धरः ।
विभीषणवधार्थाय चिक्षेप क्रोधविह्वलः ॥ ५२ ॥
चिच्छेद राघवो बाणैस्तां [4]शितैर्हेमभूषितैः ।
दशग्रीवशिरश्छेदा[5]त्तदा तेजो विनिर्गतम् ॥ ५३ ॥
[6]म्लानरूपो बभूवाथ छिन्नैः शीर्षै[7]र्भयङ्करैः ।
एकेन मुख्यशिरसा बाहुभ्यां रावणो बभौ ॥ ५४ ॥

---

४८ । नरो० । को वरो दत्त इत्यपेक्षायामाह—विच्छिन्ना बाहव इत्यादि । अजो ब्रह्मा ।

४९ । नरो० । कुण्डलाकारेण संस्थितं कुण्डलाकारसंस्थितम् ।

५१ । नरो० । संरब्धः क्रुद्धः ।

५२ । नरो० । क्रोधेन विह्वलः कार्याकार्यविवेकशून्यः ।

---

४७ । असौ रावण इत्यर्थः ।

४९ । तस्य रावणस्य । कुण्डलाकारेण नाभेश्चक्षुर्दिक्षु स्थितम् इत्याशयः ।

विभीषणस्यानलास्त्रशोषणोपदेशरूपः प्रबन्धो वाल्मीकीये न दृश्यते । तत्र मातलेरेव ब्रह्मास्त्रक्षेपणोपदेशः । अग्निपुराणेऽपि—

पैतामहेन हृदयं भित्त्वा रामेण रावणः ।
भूतले पातितः ... ... ... ... ॥ १०।२९

इत्यादिना ब्रह्मास्त्रेणैव तद्वधो दृश्यते, न तु विभीषणवाक्यात्मकः प्रबन्धः ।

---

1. ग '-वो राम' । 2. क-ख-घ-च '-स्यन्ति' । 3. छ 'तीक्ष्णेन' । 4. च 'शक्तिं हेम-' । 5. छ '-त्ततस्ते-' । 6. ग 'स्थाणु-' । 7. छ '-र्भयानकैः' ।

[1]रावणस्तु पुनः क्रुद्धो नानाशस्त्रास्त्रवृष्टिभिः ।
ववर्ष रामं [2]तं रामस्तथा बाणैर्ववर्ष [3]च ॥ ५५ ॥

[4]ततो युद्धमभूद् घोरं तुमुलं लोमहर्षणम् ।
अथ [5]संस्मारयामास मातली राघवं तदा ॥ ५६ ॥

विसृजास्त्रं वधायास्य ब्राह्मयं शीघ्रं रघूत्तम ।
विनाशकालः प्रथितो यः सुरैः सोऽद्य वर्त्तते ॥ ५७ ॥

उत्तमाङ्गं न [6]चैतस्य च्छेत्तव्यं राघव त्वया ।
नैव शीर्षिण प्रभो वध्यो वध्य एव हि मर्मणि ॥ ५८ ॥

ततः संस्मारितो रामस्तेन वाक्येन मातलेः ।
जग्राह स शरं दीप्तं निश्वसन्तमिवोरगम् ॥ ५९ ॥

---

९६। नरो०। घोरं भयानकम्। तुमुलं महत्।

---

९२। अत्रस्थोऽयं विभीषणहननार्थं शक्तिक्षेपोऽपि वाल्मीकिनाऽनाघ्रातः।

९४। मुख्यशिरसेत्यनेनान्यानि युद्धादिकाले एव प्रादुर्भवन्तीति सूचितम्। रा०।

९६। अथ संस्मारयामासेति। वाल्मीकीयेऽपि—

अथ संस्मारयामास राघवं मातलिस्तदा ।
अजानन्नेव किं वीर त्वमेवमनुवर्त्तसे ॥
* * * * * *
विसृजास्मै वधाय त्वमस्त्रं पैतामहं प्रभो ।
विनाशो निर्मितो ह्यस्य स्वयमेव स्वयम्भुवा ।
उत्तमाङ्गं न चैतस्य च्छेत्तव्यं राघव त्वया ।
नैष मूर्ध्नि प्रभो वध्यो वध्य एष हि मर्मसु ॥ इति ६।९२।३६-४१ ।

९७। [ विनाशकाल इति। सुरैः यः समयः विनाशकालः प्रथितः निर्मितः स समयः अद्य वर्त्तते। गो० ]

९९। अत्र समार्थः समशब्दश्च श्लोको वाल्मीकीये—

ततः संस्मारितो रामस्तेन वाक्येन मातलेः ।
जग्राह स शरं दीप्तं निश्वसन्तमिवोरगम् ॥ इति ६।९२।४२ ।

---

1. च 'दशग्रीव'। 2. च 'रामस्तं तथा'। 3. छ 'ह'। 4. ग 'तयोर्युद्ध-', च 'पुनर्युद्ध-'। 5. छ 'स स्मार-'। 6. छ 'वै तस्य'।

यस्य पार्श्वे तु पवनः फले भास्करपावकौ ।
शरीरमाकाशमयं गौरवे मेरुमन्दरौ ॥ ६० ॥
पर्वस्वपि च विन्यस्ता लोकपाला महौजसः ।
जाज्वल्यमानं वपुषा [1]भातं भास्करवर्चसा ॥ ६१ ॥
तमुग्रमस्त्रं लोकानां भयनाशनमद्भुतम् ।
अभिमन्त्र्य ततो रामस्तं महेषुं महाभुजः ।
वेदप्रोक्तेन विधिना सन्दधे [2]कार्मुके बली ॥ ६२ ॥
तस्मिन् सन्धीयमाने तु राघवेण शरोत्तमे ।
सर्वभूतानि वित्रेसुश्चचाल च वसुन्धरा ॥ ६३ ॥
स रावणाय संक्रुद्धो भृशमानम्य कार्मुकम् ।
चिक्षेप परमायत्त[3]स्तमस्त्रं मर्मघा[4]तिनम् ॥ ६४ ॥

---

६० । नरो० । गौरवे गुरुत्वे ।

---

अत्र वाल्मीकीये ब्रह्मास्त्रलाभप्रसङ्गेनाऽऽह—

यमस्मै प्रथमं प्रादादगस्त्यो भगवानृषिः ।
ब्रह्मदत्तं स तं बाणं जग्राह युधि तद्वधे ॥
ब्रह्मणा निर्मितं पूर्वमिन्द्रस्यार्थेऽमितौजसा ।
दत्तं सुरपतेः पूर्वं त्रिलोकजयकाङ्क्षिणः ॥ इति ६।९२।४३-४४ ।

६० । आकाशमयमित्यनेनातिमहत्त्वं सूचितम् । आकाशपदेन व्यापकत्वाद्धिरण्यगर्भो वा । गौरवे मेरुमन्दरौ यस्य सदृशावित्यर्थः । रा० ।

अत्र पार्श्वे पवनः वाल्मीकीये पुङ्खे । तथाच—

पवनो यत्र पुङ्खे तु फले पावकभास्करौ ।
शरीरमाकाशमयं गौरवे मेरुमन्दरौ ॥ इति ६।९२।४५ ।

शरं विशिनष्टि वाल्मीकिः—

पर्वस्वपि च विन्यस्ता ये भवन्ति भयावहाः ।
धनदो वरुणो वज्री पाशहस्तस्तथाऽन्तकः ॥
जाज्वल्यमानं वपुषा सुपुङ्खं हेमभूषितम् ।
तेजसा सर्वभूतानां कृतं भास्करवर्चसा ॥ इत्यादि ६।९२।४६-४७ ।

६१ । भास्करवर्चसा भातं तत्तुल्यतेजःप्रकाशम् । रा० ।

---

1. ग-घ-च-छ 'भान्तं', ख 'शान्त-' । 2. छ 'कार्मुकं' । 3. च-छ '-स्तदस्त्र' । 4. ग '-तनम्' ।

स [1]वज्र इव दुर्द्धर्षो वज्रपाणिविसर्जितः[2]।
कृतान्त इव घोरास्यो न्यपतद्रावणोरसि ॥ ६५ ॥
स निमग्नो महाघोरः शरीरान्तकरः [3]शरः।
बिभेद हृदयं तूर्णं रावणस्य महात्मनः ॥ ६६ ॥
[4]रावणस्याहरत् प्राणान् विवेश धरणीतले।
स शरो रावणं हत्वा रामतूणीरमाविशत् ॥ ६७ ॥
तस्य हस्तात् पपाताऽऽशु सशरं कार्मुकं महत्।
गतासुर्भ्रमिवेगेन राक्षसेन्द्रोऽपतद् भुवि ॥ ६८ ॥
तं दृष्ट्वा पतितं भूमौ हतशेषाश्च राक्षसाः।
हतनाथा भयत्रस्ता दुद्रुवुः सर्वतो दिशम् ॥ ६९ ॥
दशग्रीवस्य निधनं विजयं राघवस्य च।
[5]ततो [6]विनेदुः संहृष्टा वानरा जितकाशिनः।
वदन्तो रामविजयं रावणस्य च तद्वधम् ॥ ७० ॥

---

७०। नरो०। जितकाशिन इति 'तच्छीलादौ सुपी'ति णिन्।

---

६५। वज्रपाणिना त्यक्तो वज्र इव स बाणो रावणोरसि न्यपतत्। रा०।

६६। वाल्मीकीयेऽपि—

कृतान्त इव चावार्यो न्यपतद्राक्षसोपरि।
बिभेद हृदयञ्चैव रावणस्य दुरात्मनः ॥ इति ६।९२।९७।

पाद्मेऽपि—

तदस्त्रं राघवोत्सृष्टं रावणस्य स्तनान्तरम्।
विदार्य धरणीं भित्त्वा रसातलतले गतम् ॥ इति २४२।३२०।

६७। वेगवशाद्रावणप्राणहरणोत्तरं भूमौ प्रविश्य पुनः स्वाधिष्ठातृदेवतातेजोवशाद् रामतूणीरं प्रविष्टः। रा०।

६८। तस्य हस्तादिति। तस्य रावणस्य हस्तात्। अत्र वाल्मीकिः—

तस्य हस्ताद्धृतं चाऽऽशु कार्मुकं तत् ससायकम्।
प्राभ्रश्यत सह प्राणैर्भ्रश्यमानस्य जीवितात् ॥
गतासुर्गतवेगोऽसौ राक्षसेन्द्रो गतद्युतिः।
पपात स्यन्दनाद्भूमौ वृत्रो वज्रहतो यथा ॥ इति ६।९२।६०-६१।

---

1. च-छ 'वज्रमिव'। 2. च-छ '-तम्'। 3. ख-छ 'परः'। 4. च 'चिप्रं तस्या-', छ 'रावणस्य हरन्'। 5. च 'हृष्टा'। 6. ग-छ 'निनेदुः'।

अथान्तरीक्षे व्यनदत् सौम्यस्त्रिदशदुन्दुभिः ।
पपात पुष्पवृष्टिश्च समन्ताद्राघवोपरि ॥ ७१ ॥
तुष्टुवुर्मुनयः सिद्धाश्चारणाश्च दिवौकसः ।
अथान्तरीक्षे ननृतुः [1]सर्वतोऽप्सरसो मुदा ॥ ७२ ॥
रावणस्य च देहोत्थं ज्योतिरादित्यवत् स्फुरत् ।
प्रविवेश रघुश्रेष्ठं देवानां पश्यतां सताम् ॥ ७३ ॥
देवा ऊचुरहो भाग्यं रावणस्य [2]महात्मनः ।
वयं तु सात्त्विका देवा विष्णोः कारुण्य[3]भाजनाः ।
भयदुःखादिभि[4]र्व्याप्ताः संसारे[5] परिवर्त्तिनः ॥ ७४ ॥
अयं तु राक्षसः क्रूरो ब्रह्महाऽतीव तामसः ।
परदाररतो विष्णुद्वेषी तापसहिंसकः ।
पश्यतस्सु सर्वभूतेषु राममेव प्रविष्टवान् ॥ ७५ ॥
एवं ब्रुवत्सु देवेषु नारदः प्राह [6]सस्मितः ।
शृणुतात्र सुरा यूयं धर्म[7]तत्त्वविचक्षणाः ॥ ७६ ॥
रावणो राघव[8]द्वेषादनिशं हृदि [9]भावयन् ।
भृत्यैः सह सदा रामचरित्रं द्वेषसंयुतः ॥ ७७ ॥

---

७० । ततो दशग्रीवस्य निधनं राघवस्य विजयञ्च दृष्ट्वेति शेषः, जितकाशिनो वानराः संहृष्टाः सन्तो रामविजयं रावणस्य तद्वधं ततो रामान्निधनं वदन्तो विनेदुरित्यन्वयः ।

७३ । सूर्यतुल्यं रावणस्य देहोत्थं तेजो रघुश्रेष्ठं प्रविवेश तं प्रविश्य तदाज्ञया वैकुण्ठलोकं जगाम इति बोध्यम् । रा० ।

रावणस्य च देहोत्थमित्यादिर्नारदवाक्यान्तोऽंशो वाल्मीकीये नास्ति ।

७४ । वयन्त्विवति । वयं देवा अपि तेजसा द्योतमाना अपि सात्त्विका अपि सत्त्वप्रधाना अपि विष्णोर्भगवतः करुणापात्रभूता अपि भयदुःखादिव्याप्ताः पुनः पुनः संसारभाजश्चेत्यर्थः ।

७५ । अयं राक्षसः क्रूरोऽपि ब्रह्महाऽपि अत्यन्ततामसोऽपि परदाररतत्वादिगुणोऽपि रामं प्रविष्टवान् तत्प्रवेशेन मोक्षद्वारं लब्धवान्, वैकुण्ठगतानां प्रतिसञ्चरे मुक्तिश्रवणादित्याश्चर्यमित्यर्थः । रा० ।

---

1. ग-क्ष 'सर्वेश्चाप्सरसो', च 'सर्वे चाप्सरसो'। 2. च 'दुरात्मनः'। 3. च '-मागताः'। 4. क्ष '-र्गुप्ताः'। 5. क्ष '-रपरि-'। 6. घ 'सुस्मितः'। 7. च '-तत्त्वं वि-'। 8. च '-वं द्वेषा-'। 9. ग 'भावयेत्', क्ष 'भावितः'।

श्रुत्वा [1]रामात्मनिधनं भयात् सर्वत्र राघवम् ।
पश्य[2]न्ननुदिनं स्वप्ने राममेवानु[3]पश्यति ॥ ७८ ॥
क्रोधोऽपि रावणस्याऽऽशु [4]गुरुबन्ध्वधिकोऽभवत् ।
रामेण निहत[5]श्चान्ते निर्धूताशेषकल्मषः ।
रामसायुज्य[6]मेवाऽऽप रावणो मुक्तबन्धनः ॥ ७९ ॥
पापिष्ठो[7] वा दुरात्मा परधनपरदारेषु सक्तो यदि स्यात्
नित्यं स्नेहाद् भयाद्वा [8]रघुकुलतिलकं भावयन् सम्परेतः ।
भूत्वा शुद्धान्त[9]रात्मा भवशतजनितानेकदोषैर्विमुक्तः
सद्यो रामस्य विष्णोः सुरवर[10]विनुतं याति वैकुण्ठमाद्यम् ॥ ८० ॥

---

७८ । नरो० । रामादात्मनिधनं रामात्मनिधनम् ।

७९ । नरो० । गुरुश्च बन्धुश्च गुरुबन्धू, ताभ्यामधिको गुरुबन्ध्वधिकः । गुरुरुपदेशकर्ता आचार्यः, बन्धुरुपकारकः । निर्धूतानि नष्टानि अशेषकल्मषाणि यस्य स तथा । रामसायुज्यं रामत्वम् । मुक्तं बन्धनम् अन्तःकरणादिकम् अन्तःकरणाद्युपाधिसम्बन्धो येन स तथा ।

८० । नरो० । सम्परेतः मृतः । शुद्धो रागादिदोषरहितोऽन्तरात्माऽन्तःकरणं यस्य स तथा ।

---

७७—७८ । रावणो द्वेषसंयुक्तोऽपि भृत्यैः सह रामचरित्रं शुकसारणादिभ्यः श्रुत्वा तद्-द्वेषादेवानिशं तं हृदि भावयन् । अत्र श्रुत्वा भावयन्नित्यनेन श्रवणमननिदिध्यासनसम्पदुक्ता, मनन-मनुक्तमपि अर्थाक्षिप्तं बोध्यम् । तथा रामात् स्वनिधनं श्रुत्वा भयात् सर्वत्र राघवं पश्यन् इदं फलं लब्धवानिति शेषः । तस्य च दर्शनस्य सार्वकालिकत्वमाह—अनुदिनं स्वप्नेऽपि राममेव पश्यति । अनेन साक्षात्कार उक्तः । एवं सगुणविषयत्वादेषां वैकुण्ठलोकप्राप्तिद्वारा मोक्ष-जनकत्वं दहराद्युपासनावदिति बोध्यम् । रा० ।

७९ । उपसंहरति—क्रोधोऽपीति । अपिना यः प्रीत्यैवमाचरेत् तस्य मुक्तिः सर्वथेति ध्वनितम् । गुरुबोधः गुरुसेवाजन्यबोधः, तद्वदधिकः सर्वधर्माधिकोऽभवदित्यर्थः । भगवतो हस्तात् मृत्युरप्येवंफलक इत्याह—रामेणेति । सह समाने देशे युज्यते सयुक्, तस्य भावः सायुज्यं समानलोकवास इत्यर्थः । तदेवाभिप्रेत्याग्रे वक्ष्यति—वैकुण्ठं यातीति । रा० ।

[ गुरुवद्बोधक इति । गुरुवद्बोधकः गुरुरिव रामभावनादाता इत्यर्थः । गो० ]

---

1 क-ख-ग-घ-च-छ 'रामात् स्वनि-' । 2 च '-न्त्यनु-' । 3. 'ग-च-छ '-धावति' । 4. क ख घ 'गुरुबोधादिको-', ग-च-छ 'गुरुवद्बोधको-' । 5. ग-च '-स्वार्यं', छ '-स्वाऽऽसीद्' । 6. छ '-चैवाथ' । 7. छ '-ष्ठोऽपि' । 8. छ 'हृदि रघुतिलकं' । 9. क-ख घ-च-छ '-रङ्गो' । 10. च '-रचितं' ।

हत्वा युद्धे दशास्यं त्रिभुवनविषमं वामहस्तेन चापं
[1]भूमौ विष्टभ्य तिष्ठन्नितरकरधृतं भ्रामयन् बाणमेकम्।
आरक्तोपान्तनेत्रः शरदलितवपुः सूर्यकोटिप्रकाशो
वीरः श्रीबन्धुराङ्गस्त्रिदशपतिनुतः पातु मां वीररामः॥ ८१॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे लङ्काकाण्डे
एकादशोऽध्यायः॥ ११॥

---

८१। नरो०। श्रीबन्धुराङ्ग इति 'बन्धुरं तून्नतानतमि'त्यमरः।

[ लङ्काकाण्डे एकादशाध्यायव्याख्या समाप्ता॥ ११॥ ]

---

८०। दुरात्मा परानिष्टादिचिन्तकः, पापिष्ठत्वं कायिकपापवत्त्वम्, तदेव स्फुटयति—परधनपरदारेत्यादि। स्नेहाद् भयाद्वेत्यादि। स्नेहाद् भयाद्वेत्यनेनोभयोस्तुल्यफलत्वम्। स्नेहाद् गोप्यादिः, भयाद्रावणादिः। तत्र स्नेहवतामैहलौकिकस्नेहाधिक्यं विशेष इति बोध्यम्, पारलौकिकन्तु फलं तुल्यमित्याशयेन वाशब्दः। अन्तरङ्गमन्तःकरणं तच्छुद्धं यस्य सः। सुरवरो ब्रह्मा। रा०।

[ सम्परेतः मृतः। भवशतजनितानेकदोषैरनेकजन्मजनितैरनेकैर्दोषैः विमुक्तः सन्। गो० ]

८१। त्रिभुवनस्य विषमं दुःखदम्। शरैर्दलितं विदारितं वपुर्यस्य सः, बन्धुराङ्गः यथोचितं नतोन्नताङ्गः। एवं ध्यातॄणां सर्वभयापहमिति तन्त्रेषु प्रसिद्धम्। रा०।

---

1. क 'भूयो'।

# द्वादशोऽध्यायः

——:०:——

[1]श्रीमहादेव उवाच—

रामो विभीषणं दृष्ट्वा हनूमन्तं तथाऽङ्गदम्।
लक्ष्मणं कपिराजञ्च जाम्बवन्तं[2] तथाऽपरान्।
परितुष्टेन मनसा सर्वानेवाब्रवीद् वचः ॥ १ ॥
भवतां बाहुवीर्येण निहतो रावणो मया।
कीर्त्तिः स्थास्यति वः पुण्या यावच्चन्द्रदिवाकरौ ॥ २ ॥
कीर्त्तयिष्यन्ति भवतः कथां त्रैलोक्यपावनीम्।
ययोपेतां कलिहरां यास्यन्ति परमां गतिम् ॥ ३ ॥

१। दृष्ट्वा स्निग्धेन चक्षुषेति शेषः। तथाविधदर्शनञ्च स्वसाहायकार्थं सर्वेषामेवैषां प्राणव्ययेऽपि अकुण्ठितत्वादेतेषामेव साहायकेन रावणरूपामोघशक्तिशत्रुनिपातनाच्च। अपरान् अन्यानपि वानरभल्लूकादीनित्यर्थः।

२। तेषां वीराणामुत्साहार्थं वाक्यमाह—भवतामिति। एवंविधवाक्येन बोधिता वीरा रणे प्राणव्ययेनापि स्वाभीष्टं साधयन्तीति सूचितम्। अथ पारितोषिकं ददाति—कीर्त्तिरिति। वः पुण्या कीर्त्तिः स्थास्यतीति। रा०।

भवतामिति। पुण्या पवित्रा। वाल्मीकीयेऽपि—

ततः सकामं सुग्रीवमङ्गदं सुहृदं तथा।
प्रीत्या परमया युक्तो हत्वा राक्षसपुङ्गवम् ॥
ऋक्षवानरगोपुच्छाँल्लक्ष्मणं सविभीषणम्।
उवाचेदं तदा सर्वान् राघवो मधुरं वचः ॥
भवतां बाहुवीर्येण विक्रमेण बलेन च।
हतो राक्षसराजोऽयं रावणो लोकरावणः ॥
अत्यद्भुतमिदं कर्म भवतां कीर्त्तिवर्द्धनम्।
कथयिष्यन्ति पुरुषा यावद् भूमिर्धरिष्यति ॥ इति ६।९२।७३-७६।

३। किञ्च यया कीर्त्त्या संयुक्तामिमां भवतां विजयकथां ये कीर्त्तयिष्यन्ति ते परमां गतिं यास्यन्ति। रा०।

1. क-ख-पुस्तकयोः 'श्रीमहादेव उवाच' इति नास्ति। 2. छ '-न्तमथा-'।

एतस्मिन्नन्तरे दृष्ट्वा रावणं पतितं भुवि ।
मन्दोदरीमुखाः सर्वाः स्त्रियो रावणपालिताः ।
[1]पतिता रावणस्याग्रे [2]शोचन्त्यः पर्यदेवयन् ॥ ४ ॥

यया कथया उपेतां युक्तां कलिहरां गतिं यास्यन्ति तां कथां कीर्त्तयिष्यन्ति, जना इति उभयत्रापि योज्यम्। ननु कथं कलिनाशकत्वं तस्या इत्याह—त्रैलोक्यपावनीमिति। मदाश्रयत्वेन भवतां कथाऽपि स्वर्गमर्त्त्यपातालरूपं भुवनत्रयं पवित्रीकरिष्यतीति भावः।

४। एतस्मिन्नन्तरे रामवाक्यावसरे इत्यर्थः। वाल्मीकीये प्रथमं भ्रातृशोकसन्तप्तस्य विभीषणस्य—

भ्रातरं तु हतं दृष्ट्वा रावणं रामसायकैः ।
शोकवेगपरीतात्मा विललाप विभीषणः ॥ ६।९३।१०

इत्यादिना विलापकथनम्।

ततस्तद्धेतुमद्वाक्यं परिदृष्टार्थनिश्चयः ।
रामः शोकसमाविष्टं प्रत्युवाच विभीषणम् ॥
* * * * * *
इयं हि पूर्वनिर्दिष्टा गतिः क्षत्रियशाश्वती ।
क्षत्रियो निहतः संख्ये न शोच्य इति निश्चयः ॥
तदेवं निश्चयं ज्ञात्वा सत्त्वमास्थाय विज्वरः ।
यदिहानन्तरं कार्यं तदिदानीं विचिन्तय ॥ ६।९३।२०-२६

इत्यादिना स्वयं रामस्यैव विभीषणाय प्रबोधदानम्। ततः—

रावणं निहतं श्रुत्वा राघवेण महात्मना ।
अन्तःपुराद्विनिष्पेतू राक्षस्यः शोकमूर्च्छिताः ॥ ६।९४।१

इत्यादिना रावणावरोधस्थितानां योषितां रावणसमीपगमनमुक्तम्। मन्दोदरीविलापो लङ्काकाण्डे पञ्चनवतितमसर्गे, तस्मात् इमे श्लोकाः पाठकानामौत्सुक्यविनिवृत्त्यर्थमस्माभिस्तेभ्य उपह्रियन्ते—

अकस्माच्चाभिकामोऽसि सीतां राक्षसपुङ्गव ।
ऐश्वर्यस्य विनाशाय शरीरस्य ममैव हि ॥
सन्त्यस्याः प्रमदास्तुल्या रूपेणाभ्यधिकास्तु याः ।
अनङ्गवशमापन्नस्त्वं तु तन्नावबुध्यसे ॥
न कुलेन न रूपेण न दाक्षिण्येन मैथिली ।
ममाधिका वा तुल्या वा त्वं तु मोहान्न बुध्यसे ॥

1. ग-च-छ 'पतिला'। 2. ग-छ 'बहुधा'।

[1]विभीषणः शुशोचाऽऽर्त्तः[2] शोकेन महता वृतः।
[3]पतितो रावणस्याग्रे बहुधा पर्यदेवयत् ॥ ५ ॥
रामस्तु लक्ष्मणं प्राह बोधयस्व विभीषणम्।
करोतु भ्रातृसंस्कारं किं विलम्बेन मानद ॥ ६ ॥
स्त्रियो मन्दोदरीमुख्याः पतिता विलपन्ति च।
निवारयतु ताः सर्वा राक्षसी रावणप्रियाः ॥ ७ ॥
एवमुक्तोऽथ रामेण लक्ष्मणो[4]ऽगाद् विभीषणम्।
उवाच मृतकोपान्ते पतितं मृतकोपमम्।
शोकेन महताविष्टं सौमित्रिरिदमब्रवीत् ॥ ८ ॥
यं शोचसि त्वं दुःखेन कोऽयं तव विभीषण।
त्वं वाऽस्य कतमः सृष्टेः पुरेदानीमतः परम् ॥ ९ ॥

---

साग्रं तु स्त्रीसहस्रं वै रूपयौवनशालि च।
न तेऽभिरुचितं वीर कालेन हृतचेतसः ॥
सर्वथा सर्वभूतानां नास्ति मृत्युरलक्षणः।
तव त्वयं रणे मृत्युर्मैथिलीकृतलक्षणः ॥ ६।९५।१९-११।

६। बोधयस्व शोकापनयनवाक्यैः संसारानित्यत्वं बोधयेत्यर्थः। रा०।

'रामस्तु' लक्ष्मणं प्राह इत्यत्र वाल्मीकीये रामेण स्वयमेव स्त्रीणां सान्त्वनार्थं भ्रातृसंस्कारार्थञ्च विभीषणायोपदेशः, न तु लक्ष्मणमुखेन। तथा च—

एतस्मिन्नन्तरे रामो विभीषणमुवाच ह।
सत्कारः क्रियतां भ्रातुः स्त्रीगणः परिसान्त्व्यताम् ॥ इति ६।९५।४९।

ततश्च— विभीषणस्त्वविन्ध्यादीन् वृद्धामात्यान् बहुश्रुतान्।
आज्ञापयामास तदा राजा सत्क्रियतामिति ॥
भ्रातृदाराश्च ताः सर्वाः सान्त्वयित्वा स कालवित्।
चक्रे स सलिलं भ्रातुर्ज्ञातीनां चानुपूर्वशः ॥ ६।९५।६०-६१

इत्यादिना च विभीषणेनैव तासां समाश्वासनम्।

८। मृतकस्य रावणस्य समीपे मृतकतुल्यतया निश्चेष्टं पतितम्। रा०।

९। अयं तव कः? आत्मनः शुद्धबुद्धस्वभावत्वान्न केनापि सम्बन्ध इति भावः। किञ्च सृष्टेः पुरा तवास्य कश्चित् सम्बन्धो नैवाऽऽसीत्। एवमतः परमिदानीं च न कश्चित् सम्बन्धः,

---

1. ग-ङ-पुस्तकयोरयं श्लोको नास्ति। 2. च '-र्त्तौ दुःखेन'। 3. च-पुस्तके इदमर्द्धं नास्ति। 4. ङ '-णो हि वि-'।

यद्वत्तोयौघपतिताः सिकता यान्ति [1]तद्वशाः ।
संयुज्यन्ते वियुज्यन्ते तथा कालेन देहिनः ॥ १० ॥
यथा धानासु वै धाना भवन्ति [2]न भवन्ति च ।
एवं भूतेषु भूतानि प्रेरितानीशमायया ॥ ११ ॥

---

१० । नरो० । सम्बन्धविशेषान्न शोचामि किन्तु वियोगजन्यदुःखमसहमानोऽहं मम सहवासिनं शोचामीति चेत्तत्राऽऽह—यद्वदित्यादि । यद्वत्तोयौघपतिता जलसमूहपतिता सिकता वालुकास्तद्वशा यान्ति, कालेन संयुज्यन्ते, तथा कर्मप्रवाहपतिता देहिनः कालेन संयुज्यन्ते परस्परेण संयुक्ताः क्रियन्ते । वियुज्यन्ते परस्पराद् वियुक्ताः क्रियन्ते इति सम्बन्धः ।

११ । नरो० । अनेन सह एकस्यां मातरि न भविष्यामीति इमं शोचामीति चेत्तत्रा-

---

पूर्वापरकालयोः सम्बन्धाभावेन मध्येऽपि न वास्तवः सम्बन्धः किन्त्वाभिमानिक एवेति भावः । रा० ।

[ अयं भ्रातृदृष्ट्या शोचति, तत्र शोकं दवयितुं प्रथमं तावत् पितृभ्रातृसम्बन्धस्यानैकान्तिकत्वं दर्शयति—यमित्यादि । हे विभीषण, यं दुःखेन शोचसि, तव कोऽयं भवति, त्वं वा अस्य कतमो भवसि ? ननु अहमस्य कनीयान् अयं मे सोदरो ज्येष्ठः, अतस्तं शोचामि तत्राऽऽह—सृष्टेरिति । सृष्टेः पुरा पूर्वम् इदानीमस्मिन् जन्मनि वा अतः परं भाविजन्मनि, सृष्टिधाराया अनाद्यनवच्छिन्नत्वात् । गो० ]

१० । तदेव दृष्टान्तेनाऽऽह—यद्वदिति । तोयौघपतिताः सिकता जलवेगाहृताः किञ्चिद्दूरं मिलिता यान्ति, ततः काश्चिद् गुरुतया अधस्तिष्ठन्ति लघुतया विलीयन्ते वा, अपरा गच्छन्ति, तासां यथा न कश्चित् सम्बन्धः, एवं देहिनः कालेन तद्वेगेन संयुज्यन्ते वियुज्यन्ते च । वस्तुतश्च तेषां न कश्चित् सम्बन्ध इत्यर्थः । रा० ।

[ नन्विदानीं भ्राता ममातः शोचामीति चेत्, कालपरतन्त्राणां जीवानां स्ववशत्वाभावात् संयोगवियोगस्यानियतत्वाद् वृथा शोक इत्याह—यद्वदिति । तोयौघपतिताः सिकताः वालुका यथा तद्वशास्तोयप्रवाहवशाः सत्यो यान्ति क्वचित् संयुज्यन्ते परस्परं मिलिता भवन्ति, वियुज्यन्ते क्वचित् पृथग् भवन्ति इति नियमाभावः, तथा देहिनो जीवा अपि कालेन हेतुना कालवशाः क्वचित् सहैव गच्छन्ति संयुक्ता वियुक्ताश्च भवन्ति । गो० ]

तमेवाभिप्रायं प्रकटयति—यद्वदिति । तोयस्य ओघे प्रवाहे पतिताः सिकता वालुका यद्वत् यथा यान्ति तथा कालवेगेन देहिनो जीवा अपि संयुज्यन्ते वियुज्यन्ते चेत्यर्थः ।

११ । दृष्टान्तमाह—यथेति । धाना भृष्टयवास्तासु ऊर्ध्वाधरभावेन काश्चिद्धानाः क्षणं

---

1. ख 'तादृशाः'। 2. क 'प्रभवन्ति च'।

त्वं [1]चायं वयमन्ये [2]च तुल्याः काल[3]वशोद्भवाः ।
जन्ममृत्यू[4] यदा यस्मात्तदा तस्माद् भवि[5]ष्यतः ॥ १२ ॥
ईश्वरः सर्वभूतानि [6]भूतैः सृजति [7]हन्त्यजः ।
आत्मसृष्टैरस्वतन्त्रैरनपे[8]क्षो हि बालवत् ॥ १३ ॥

ऽऽह—यथेत्यादि । यथा धानासु यवादिबीजेषु धाना यवादयो भवन्ति न भवन्ति च, एवमीशमायया प्रेरितानि भूतानि भूतेषु भवन्ति न भवन्ति चेति सम्बन्धः । एवं तथेत्यर्थः ।

१२ । नरो० । एतस्मादावां जातावहं जीवामि अयमस्मान्मृत इति शोचामीति चेत्तत्राऽऽह—त्वं चायमित्यादि ।

१३ । नरो० । मम वाक्येन मारणोपायं ज्ञात्वा मारित इति शोचामीति चेत्तत्राऽऽह—

भवन्ति, ततः पुनस्तासां स्निग्धत्वात्ततो न भवन्ति वियुज्यन्ते, एवमीशमायया प्रेरितानि भूतानि भूतेषु संयुज्यन्ते वियुज्यन्ते चेत्यर्थः । रा० ।

[ ननु भवत्वस्वातन्त्र्यं तथाऽप्येतावन्तं कालमेकत्राऽऽसमिदानीमयं मृतोऽहं जीवामीति शोचामीति चेत्तत्राऽऽह—यथेत्यादि । धानासु धाना बीजानि भवन्ति सन्ति न भवन्ति च न सन्ति । एवं भूतेषु भौतिकेषु देहेषु भूतानि जीवा ईश्वरस्य मायया प्रेरितानि सन्ति भवन्ति न भवन्ति चेत्यर्थ इति मरणस्य जीवनस्याप्यनियतत्वमुक्तम् । गो० ]

तथाऽप्येतावन्तं कालमयं मम भ्रातासीत् इदानीञ्च स मृत इति अवश्यमेव दुःखं स्यादित्याह—यथेति । यथा धानासु बीजेषु धाना बीजान्तराणि सम्भवन्ति न भवन्ति च, तथैव भूतानि भ्रातृबान्धवपुत्रादिरूपाणि ईशमायया प्रेरितानि । धानानां जन्यजनकत्वेऽपि यथा पुत्रादिभावना नास्ति एवमत्रापीति न शोकावसर इत्याशयः ।

१२ । एवमयं संयोगो वियोगश्च तवैवेति न, किन्तु सर्वेषामस्माकं तुल्य इत्याह—त्वं चेमे वयमित्यादि । अस्माकमप्येवं वियोगो भवतीति भावः । यदा यस्मिन् काले यस्माज्जन्ममृत्यू कर्मसहकृतौ भगवता कल्पितौ तदा तस्मिन् काले तौ भविष्यत एव न त्वन्यथेत्यर्थः । रा० ।

[ न केवलमस्यैवैवं किन्तु सर्वेषामप्येवमित्याह—त्वञ्चेत्यादि । यान् शोचसि त इमे रावणादयः वयमस्मदादयः अन्ये ये देशान्तरवर्त्तिनः सर्वे कालवशोद्भवाः कालवशेन उद्भवो जन्म येषां ते सर्वे तुल्याः अस्वतन्त्रा अनियतावस्थानाश्चेत्यर्थः । जन्म मृत्युश्च यदा यस्मिन् काले यस्मान्निमित्तमात्रान्नियमित इति शेषः, तदा तस्मिन्नेव काले तस्मादेव निमित्ताद्भविष्यति । तेनायं मानुषान्मृत इत्यपि सम्भ्रमो न कार्य इत्युक्तम् । गो० ]

1. क-ख-ग-घ-च-छ 'चेमे' । 2. ग-च-छ 'तु' । 3. छ '-वशाद् भवाः' । 4. ग '-त्युर्जरा', च '-त्युर्यदा' । 5. ग '-ष्यति' । 6. च 'सृजत्यवति' । 7. छ 'हन्ति च' । 8. क-ख ग-घ '-चोऽपि' ।

देहेन देहिनो [1]जीवाद् देहाद् देहोऽभिजायते ।
[2]बीजादेव यथा बीजं [3]देहेभ्य [4]इव शाश्वतः ।
[5]देहिदेहविभागोऽयमविवेककृतः पुरा ॥ १४ ॥

---

ईश्वर इत्यादि । ह्रदि ईश्वरप्रेरणया भूतानि कथं घ्नन्तीति चेत्तत्राऽऽह—अस्वतन्त्रैरिति । भूतानामेव कर्तृत्वमस्तु ईश्वरस्य कर्तृत्वं कुत इत्यत आह—अनपेक्ष इति । स्वतन्त्र इत्यर्थः । हि निश्चितम् । दृष्टान्तमाह—बालवदिति । बालो यथा स्वेच्छया वालुकादिभिर्गृहादिकं निर्मिमीते भनक्ति च तथेत्यर्थः ।

१४ । नरो० । किञ्च देहजन्मनि देहिजन्म तन्नाशे तन्नाशश्चाङ्गीकृत्य 'जन्ममृत्यू यदा यस्मादि'त्याद्युक्तम्, वस्तुतस्तु देहिनो जन्ममरणं नास्तीत्याह—देहेनेति पद्येन । देहेन करणभूतेन देहिनो देहाभिमानिनो जीवाद्देहाद्देहोऽभिजायते । जीवादिति मृतशरीरव्यावृत्तिः । दृष्टान्तमाह—बीजादेवेति । देहाज्जायमानो देहो देहान्तरजनको भविष्यतीति सूचनाय बीजादेव बीजमित्युक्तम् । देहेभ्य इव शाश्वत इति, शाश्वतो नित्य आत्मेत्यर्थः । जातदेहसम्बन्धाद् जातप्रायत्वं न तु जातत्वमिति सूचनाय इवशब्दः प्रयुक्तः । राजदेहः कथं न शोच्य इति चेत्तत्राऽऽह—देहिदेहविभागोऽयमविवेककृतः पुरेति । पुरा ब्रह्मज्ञानात् पूर्वमित्यर्थः । ब्रह्मज्ञाने सति सर्वं बाधितं भवतीति भावः ।

---

१३ । यथा बालोऽनपेक्षोऽपि बाल्यस्वभावादेव सृष्टैर्मृन्मयादिभिश्चित्रैः स्वनिर्मितानि तादृशानि सृजति द्वे स्त्रीपुरुषाकारे कृत्वा तृतीयमेकं निर्मायेत इदं जातमनयोरपत्यमिति व्यवहरति परस्पराभिघातेन नाशयति च, एवमीश्वरोऽनपेक्षोऽपि सर्जनजन्यफलानपेक्षोऽपि आत्मसृष्टैरेव भूतैः प्राणिभिः स्त्रीपुरुषग्राम्यव्यवहारद्वारा पराणि सृजति ततः केनचित् किञ्चिद्धन्ति च । ननु तेषामेव तत्र कर्तृत्वमस्त्वित्यत्राऽऽह—अस्वतन्त्रैरिति । तृणमात्रचालनेऽपि स्वातन्त्र्यरहितैः । रा० ।

[ नन्वीश्वरस्य सृष्टौ किं प्रयोजनं तत्राऽऽह—अनपेक्ष इति, परिपूर्णस्य उद्देश्याभावात् । बालवत् बालको यथा प्रयोजनाभावेऽपि किमपि करोति तथैवायं सृजति । गो० ]

१४ । ननु तत् किं सृज्यमाने देहे एव जीवो नेत्याह—देहेनेति । जीवास्तेन देहेन देहिनो न तु देहात्मान एव ते । न तु देहः किमपि कारणमेव नेत्याह—देहादिति, कर्मद्वारेति शेषः । अस्य व्यवहारस्यानादित्वे दृष्टान्तमाह—बीजादेवेति । स च देहादन्य इव अन्य एवेत्यर्थः । भेदकधर्ममाह—शाश्वत इति । तेन नित्यत्वानित्यत्वाभ्यां देहदेहिनोर्भेद उक्तः । वस्तुतस्तस्य देहिव्यवहारप्रयोजको देहसम्बन्धोऽपि कल्पित एवेत्याह—देहीत । अविवेककृतः

---

1. क-ख-ग-घ-च-छ 'जीवा' 2. छ-पुस्तके इदमर्द्धं परश्लोकपूर्वार्द्धञ्च न स्तः । 3. क-ख-घ-च 'देहान्' । 4. च 'इह' । 5. ख 'देहदेहि-' ।

नानात्वं जन्म नाशश्च क्षयो [1]वृद्धिः क्रियाफलम् ।
द्रष्टु[2]राभान्त्यतद्धर्मा यथाऽग्नेर्दारुविक्रियाः ।
त इमे [3]देहसं[4]योगादात्मना भान्त्यसद्ग्रहात् ॥ १५ ॥

१९ । नरो० । नन्वेवञ्चेत्तर्हि नानात्वादयो धर्मा जडाः कथं प्रकाशन्ते कथं वात्मनि प्रतीयन्ते इत्यत आह—नानात्वमित्यादि । क्रियाफलं कर्मफलं पापं पुण्यञ्च । द्रष्टुरनुपहित-चैतन्यस्य सम्बन्धे सति आभान्ति प्रकाशन्ते । तस्य द्रष्टुर्धर्मास्तद्धर्माः, न तद्धर्मा अतद्धर्माः । दृष्टान्तमाह—यथेति । अग्नेः सम्बन्धे सति दारुविक्रिया दारुविकारा यथा प्रकाशन्ते तथेत्यर्थः । ते नानात्वादयो धर्माः । असद्ग्रहाद् मिथ्याज्ञानात् । तत्र हेतुः—देहसंयोगादिति । मिथ्या-ज्ञानञ्चात्र देहधर्माणामात्मधर्मत्वेन ज्ञानम् ।

अन्तःकरणेनाऽऽत्मनोऽविवेकात् अहंममेत्यादिबुद्धिरिति भावः । एवञ्च देह एव ममता-बुद्धेरवास्तवत्वे भ्रात्रादौ ममत्वबुद्धिः सुतरामवास्तवीति सूचितम् । रा० ।

[ यदुक्तं तद्विवृणोति—देहेनेति । जीवा देहेन उपलक्षिता देहिनो भवन्ति, देहात् पित्रादि-देहात् देह एव जायते न तु देही जीवः । यतः शाश्वतः नित्यः जन्ममरणशून्य इत्यर्थः । तत्र दृष्टान्तः—बीजादेव फलादेव यथा बीजान्तरं जायते अर्थो (?) वृक्षः शाश्वत एव तद्वत्, यद्वा अर्थः (?) कृषक इव, स यथा बीजवापकोऽपि न जायते एवं देहकर्मकारको जीवः । यद्वा पित्रादिरर्थः (?) स इव जीवस्य अजनने दृष्टान्तः । अतो जीवस्य जन्ममरणाभावाद् देहस्याऽऽगमापायित्वात् तद-पगमने शोको निर्विषय एवेति भावः । ननु यदि जीवो नित्यः जन्ममरणशून्यः देहस्त्वागमापायी तर्हि जीवस्य तद्ग्रहणे किं प्रयोजनं तत्राऽऽह—देहीति । देही जीवः देहस्तदायतनं तयोर्विभागो विभजनं सम्बन्धः, पुरा अनादिः, अविवेकेन अविद्यया अज्ञानेन कृतः, तस्माद् यावदविद्या तावदेव देहसम्बन्धः, अविद्यानाशे देहसम्बन्धोऽपि निवर्त्तते । गो० ]

१९ । वस्तुतो भ्रात्रादौ स्वातिरिक्तत्वबुद्धिर्नाशादिबुद्धिश्च सर्वं मिथ्यैव शुक्तिरजतादि-बुद्धिवदित्याह—नानात्वमिति । नानात्वं भेदः । क्रियाफलं सुखदुःखे । एते अतद्धर्मा अनात्मधर्मा द्रष्टुस्तद्वृत्तित्वेन भान्ति । अन्तःकरणतत्कार्यधर्मा एवैते तदविवेकाद् आत्मनि भान्ति यथा दारुगतवक्रत्वादिना तद्गताग्नेर्वक्रत्वादीति भावः । त इमे नानात्वादयः देहसंयोगात् । देहपदेनान्तःकरणमप्युपलक्ष्यते । असद्ग्रहोऽहंममताबुद्धिः । रा० ।

१९-१६-१७ । [ न केवलं देहसम्बन्धः अविवेकेन देहधर्मा अपि जीवे फलन्तीत्याह—नानात्वमित्यादि । नानात्वं पार्थक्यं जन्मनाशौ क्षयो ह्रासः वृद्धिश्च, क्रियाफलं सुखं दुःखञ्च । धर्मा देहस्यैव अविवेकेन द्रष्टुर्जीवस्य आभान्ति । तत्र दृष्टान्तः—यथा दारुविक्रिया दारुण

1. क-च-छ 'बुद्धि' । 2. ग-च '-राभान्ति तद्धर्मा', छ '-राबाधधर्माय'(?) । 3. च 'देहिसं-' । 4. च-छ '-योग आत्मन्याभान्त्यस-' ।

[1]प्रपा यथा तथा [2]नाना ध्यायतो[3]ऽसत्सदाग्रहात् ।
[4]प्रसुप्ता स्यादहंमानात्तदा भाति न संसृतिः ॥ १६ ॥
[5]जीवतोऽपि [6]तथा तद्वद्विमुक्तस्यानहंकृतेः ।
तस्मान्मायामनो[7]मात्रं जह्यहंममता[8]भ्रमम् ॥ १७ ॥

---

१६। नरो०। संसारः कस्मादुदेति कस्माद्वा निवर्त्तते इत्यपेक्षायामाह—प्रपा यथेत्यादि। प्रपा पानीयशाला यथा लोकराहित्यात् प्रसुप्ता स्यात् लोकसम्बन्धाद् भाति च तथा असत्सदाग्रहात् नाना ध्यायतः संसृतिः प्रसुप्ता स्यात्तथा भाति चेति योजना। असत्सदाग्रहात्...[अस ?]तोऽसत्यस्य अज्ञानादिसकलजडसमूहस्य सदाग्रहादित्यर्थः। अहंमानात् अनात्मनि आत्मबुद्धेरित्यर्थः।

१७। नरो०। तर्हि किमेवम्भूतस्य मरण एव संसृतिनिवृत्तिः स्यादिति चेत्तत्राऽऽह—जीवतोऽपीत्यादि। अविद्य...[माना अह ?]ङ्कृतिर्यस्य तस्य तथा। स्वस्वरूपाखण्डब्रह्मज्ञानेन

---

ऋजुकौटिल्यादिगुणास्तस्याग्नेर्भान्ति तथा। न हि दृश्यधर्मा द्रष्टुर्भवन्ति अतोऽज्ञानादेव। पुनरेतदेव दृष्टान्तान्तरेण विवृणोति—त इमे इत्यादि। त इमे नानात्वादयो धर्मा देहसंयोगात् तत्र देहे अयमसन् इति ग्रहाज् ज्ञानात् आत्मनि भान्ति। यद्वा असन् अविशुद्धो यो ग्रहो ज्ञानं तस्माज् ज्ञानादित्यर्थः। प्रपा पानीयशालिका। अयं भावः—आगमापायिभिः परकीयलोकैः पूर्णा यथा प्रपा भवति तथैवेमे धर्मा आत्मनि दृश्यन्ते इति अनात्मीयत्वे दृष्टान्तः। तथैव असद् मिथ्याभूतं सद्ग्रहाद् भाति। यद्वा ते तव इमे शोकाद्याः सद्ग्रहाद् भ्रात्रादेर्नित्यत्वज्ञानाद् भान्ति। तव कथम्भूतस्य ? सदिति ज्ञानात् अन्यत् आत्मभिन्नम् असन्मिथ्याभूतं सर्वं ध्यायतश्चिन्तयतः। यथा प्रपा लक्षणया प्रपामिलिता लोका असन्तस्तथैव भ्रात्रादयः कर्माधीनत्वादित्यर्थः। अतस्तद्वियोगे कः शोकावसरः। अहङ्काराभावे सुषुप्तिदृष्टान्तमाह—प्रसुप्तस्यानहंमानादिति। अनहंमानादहङ्काराभावात् तदा संसृतिः संसारहेतु रागद्वेषसुखदुःखादिर्यथा जीवतोऽपि जनस्य न दृश्यते तथा तेनैव प्रकारेण आत्मानन्देन हेतुना वियुक्तस्य रागादिरहितस्य अनहङ्कृतेरहङ्कारहीनस्य जीवस्य संसृतिर्न दृश्यते निवर्त्तते इत्यर्थः। संसारधाराया अहङ्कारमूलत्वाद् विनिगमयति—तस्मादित्यादि। यतः संसारहेतुस्तस्मान्माया च मनो मायाविलासश्च तन्मात्रमित्यर्थः। अहम् अहंमानः ममता अस्वकीये स्वकीयत्वाभिमानः स एव भ्रमस्तं जहि। गो० ]

१६-१७। यथा सदसद्वाऽन्यद् किञ्चिद् वस्तु आग्रहाद् ध्यायतो भृङ्गिकीटन्यायेन तथा

---

1. क-ग 'यथा', ख-घ 'प्रथा'। 2. क-ख-ग-घ 'चान्यद्', ङ 'साऽन्यद्'। 3. क-ख-ग '-ऽसदसदग्रहात्'। 4. क-ख-ग-घ 'प्रसुप्तस्यानहंभावा-', च 'सुषुप्तस्यानहंमा-,' ङ 'असुप्त. स्यादहंभावा-'। 5. क-ख-च-ङ 'जीवितो-'। 6. च 'यथा'। 7. क-ख-घ '-धर्मं'। 8. ङ '-श्रयम्'।

रामभद्रे भगवति मनो [1]देह्यात्मनीश्वरे ।
सर्वभूतात्मनि परे मायामानुषरूपिणि ॥ १८ ॥

---

तज्ज्ञानबाधनद्वारा स्वस्वरूपाखण्डब्रह्मणि साक्षात्कृतेऽज्ञानतत्कार्यसञ्चितकर्मसंशयविपर्ययादीनामपि बाधितत्वात् अखिलबन्धरहितो जीवन्मुक्त उच्यते ।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥

इति श्रुतेः । अयन्तु व्युत्थानसमये मांस-शोणित-मूत्र-पुरीषादिभाजनेन शरीरेण मा......[ न्ध्य-कौण्य-बाधिर्यमूक ? ]त्वादिभाजनेन इन्द्रियग्रामेण अशनाया-पिपासा-शोक-मोहादिभाजनेनान्तःकरणेन च पूर्वपूर्ववासनया क्रियमाणानि कर्माणि भुज्यमानानि ज्ञानाविरुद्धारब्धफलानि च पश्यन्नपि बाधितत्वान्न पश्यति यथेन्द्रजालं पश्यन्नपि बाधितत्वात् परमार्थतो न पश्यति, 'सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव' इत्यादिश्रुतेः । उक्तञ्च—

सुषुप्तिवज्जाग्रति यो न पश्यति स्वयञ्च पश्यन्नपि वाऽद्वयत्वतः ।
तथाऽपि कुर्वन्नपि निष्क्रियश्च यः स आत्मविन्नान्य इतीह निश्चयः ॥

इति । उपसंहरति—तस्मादिति त्रिभिः । मायाधीनं मनो मात्रं यत्र तं तथा ।

१८ । नरो० । परे मूलकारणे ।

---

प्रथा भवति ध्यायमानवस्तुसदसत्त्वाभ्यां ध्यातुरपि सदसत्त्वप्रथा भवति तद्वत् । अनेन वास्तवता नाशादीनां निराकृता । एवञ्च शोको निरालम्ब इति तात्पर्यम् । ज्ञानाच्च दुःखनिवृत्तिरित्याह—प्रसुप्तस्येति । यथा प्रसुप्ताहंभावाभावात् संसृतिर्न भाति । प्रस्वापोऽत्र सुषुप्तिः । तया विमुक्तस्य तत्त्वज्ञानाज्जीवन्मुक्तस्य जीवतोऽपि अनहङ्कृतेरहङ्काराभावात्तथा संसाराभावाज्जन्यदुःखशोकाद्यभाव इत्यर्थः । उपसंहरति—तस्मादिति । मायामनोधर्मं मायापरिणाममनोधर्ममहंममताभ्रमं जहि, अन्यधर्मस्यान्यनिष्ठत्वेन ग्रहाद् भ्रमत्वं मायापरिणामत्वेन मनसो जडत्वमुक्तमनोमात्रान्तःकरणम् । रा० ।

१८ । आत्मनीश्वरे इत्यनेन तस्यैव मुख्यमात्मत्वं मन्ये । तत्प्रतिबिम्बत्वादात्मव्यवहारमात्रमिति भावः । उक्तमेव पुनराह—सर्वभूतात्मनीति । रा० ।

[ततः किं कर्तव्यमित्यत्र सारार्थमुपदिशति—भगवति अचिन्त्यैश्वर्ये आत्मनि परमात्मनि ईश्वरे सर्वनियन्तरि सर्वभूतात्मनि सर्वस्वरूपे परे सर्वस्मादन्यस्मिन् मायया मानुषरूपिणि मनो देहि अर्पय । गो० ]

---

1. छ '-धेय्या-' ।

बाह्येन्द्रियार्थ[1]सम्बन्धात् [2]त्याजयित्वा मनः शनैः ।
तत्र [3]दोषान् दर्शयित्वा रामानन्दे नियोजय ॥ १९ ॥
देहबुद्ध्या भवेद् भ्राता पिता माता सुहृत् प्रियः ।
विलक्षणं यदा देहाज्ज्ञानात्यात्मानमात्मना ॥ २० ॥
[4]तदा कः कस्य वा बन्धुर्भ्राता माता पिता सुहृत् ।
मिथ्याज्ञानवशाज्जाता दारागारादयः[5] सदा ॥ २१ ॥

---

१९ । नरो० । बाह्येन्द्रियार्थसम्बन्धादिति । बाह्येन्द्रियार्थाः शब्द-स्पर्श-रूप रस-गन्धाः । बाह्येति अन्तरिन्द्रियव्यावृत्तिः । तत्र दोषान् दर्शयित्वेति, दोषान् सङ्गादीन् । तथाच भगवद्गीता—

ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते ।
सङ्गात् संजायते कामः कामात् क्रोधोऽभिजायते ॥
क्रोधाद् भवति सम्मोहः सम्मोहात् स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात् प्रणश्यति ॥ २।६२-६३ । इति ।

२०-२१ । नरो० । तर्हि कथं भ्रात्रादिव्यवहारो दृश्यते इति चेत्तत्राऽऽह—देहबुद्ध्येत्यादि । देहाभिमानेन भ्रात्रादिव्यवहारो भवेदित्यर्थः । अयं भावः—यदा देहाभिमानो नास्ति तदा स्वतः सम्बन्धाभावाद् भ्रात्रादिव्यवहारोऽपि नास्तीति । तमेव व्यङ्ग्यार्थमाह—विलक्षणं यदेति पद्येन । विलक्षणं भिन्नम् । आत्मना स्वयम् । तदा कः कस्य बन्धुरिति, तदा

---

१९ । बाह्येन्द्रियविषयसम्बन्धात् मनो दूरीकृत्य भगवति नियोजय । तत्सम्बन्धत्यागोपायमाह—तत्र दोषानिति । रा० ।

[ ननु निरन्तरं विषयासक्तं मनः कथं तत्र धारयितव्यमित्यत्र प्रकारमाह—बाह्येति । तत्र बाह्येन्द्रियार्थसम्बन्धाद् दोषान् परिणामविरसत्वक्षणिकत्वदुःखहेतुत्वादिदोषान् दर्शयित्वा विरोध्य(?) मनः प्रयोज्यं कर्म बाह्येन्द्रियार्थैर्बाह्येन्द्रियविषयैः सम्बन्धान् त्याजयित्वा रामानन्दे नियोजय, राम एव आनन्दः आनन्दरूपत्वात् । गो० ]

२०-२१ । ननु भगवति तदनुसन्धानेऽपि कथं संसारहानिस्तत्राऽऽह—देहबुद्ध्येति । देहेऽन्तःकरणादावात्मबुद्ध्येत्यर्थः । भगवतो मनसाऽनुसन्धानेन तत्प्रसादाद्देहभिन्नात्मप्रतीतौ तदविवेककृतसंसारस्य स्वत एव हानिरिति भावः । तदेव पुनर्दार्ढ्यायाऽऽह—मिथ्येति । आगारं गृहम् । रा० ।

[ तथा सति आत्मज्ञानात् पित्रादिसम्बन्धस्य देहनिमित्तत्वाद्देहाहंमानाभावात्तन्निमित्तकः

---

1. क '-सबाधात्' । 2. क-ख-च 'त्यज-' । 3. ग 'दोष' । 4. छ 'कदा' । 5. ग-च '-यसदा' ।

शब्दादयश्च विषया विविधाश्चैव सम्पदः ।
बलं कोशो भृत्य[1]वर्गो राज्यं भूमिः सुतादयः ।
अज्ञान[2]जत्वात् [3]सर्वैंते क्षणसङ्गमभङ्गुराः ॥ २२ ॥
अथोत्तिष्ठ हृदा रामं भावयन् भक्तिभावितम् ।
अनुवर्त्तस्व राज्यादि भुञ्जन् प्रारब्धमन्वहम् ॥ २३ ॥

---

कस्यापि कोऽपि बन्धुर्नास्तीत्यर्थः, इति दिक् । तथाच सुषुप्तिं प्रकृत्य श्रुतिः—'अत्र पिता अपिता भवति माता अमाता लोका अलोका देवा अदेवा वेदा अवेदा अत्र स्तेनोऽस्तेनो भवति, भ्रूणहा अभ्रूणहा, चाण्डालोऽचाण्डालः, पौक्कसोऽपौक्कसः, श्रमणोऽश्रमणः, तापसोऽतापसः, अनन्वागतं पुण्येन अनन्वागतं पापेन तीर्णो हि तदा सर्वान् लोकान् हृदयस्य तरति' इत्यादि । न भ्रात्रादिव्यवहार एव मिथ्याज्ञानमूलः, किन्तु दारागारादिव्यवहारोऽपीत्याह—मिथ्येत्यर्द्धेन । जाता व्यवहारयोग्या इति शेषः ।

२२ । नरो० । शब्दादिसम्पदादिपुत्रादिपदार्थानामत्यस्थिरत्वज्ञानं विना तेष्वलं-बुद्धिर्न जायते इति तेषामत्यन्तास्थिरत्वं दर्शयति—शब्दादयश्चेति सार्द्धेन । शब्दादयश्चेति पदेन स्पर्श-रूप-रस गन्धानां ग्रहणम् । अज्ञानजत्वादित्यादि । सर्वैंते इति सन्धिरत्र आर्षः । क्षणसङ्गमेन भङ्गुराः । अज्ञाननाशके तत्त्वज्ञाने जाते सति अज्ञानस्यास्थिरत्वात् तत्कार्यस्य प्रपञ्चस्यापि अस्थिरत्वमिति भावः ।

२३ । नरो० । भावयन् ध्यायन् । भक्तिभावितं भक्तिप्रापितं भक्तिध्यातं वा । प्रारब्धं प्राक्तनं कर्म, अन्वहं प्रतिदिनम् ।

---

शोकः स्वयं विरमेदित्याह—देहबुद्ध्येति । देहबुद्ध्या देहात्मबुद्ध्या भ्रात्रादयो भवन्ति । यदा तु देहाद् विलक्षणं भिन्नमात्मानम् आत्मना बुद्ध्या जानाति तदा कः कस्य बन्धुः पित्रादिः, सुहृत् हितकारी । मिथ्याज्ञानवशादिति, मिथ्याज्ञानं देहादिष्वहंममत्वज्ञानम्, तद्वशात् । गो० ]

२२ । [ बलं सैन्यम् । एते अज्ञानजाः, अतः क्षणं सङ्गमो येषां ते च ते भङ्गुरा विनाशशीलाश्चेति । गो० ]

२३ । प्रारब्धं भोगं विना दुस्त्यजमिति बुद्ध्वा राज्यादि भुञ्जन्ननुवर्त्तस्व तत्पालने यतस्व । रा० ।

[ अथ अतः कारणात् अनुवर्त्तस्व राज्यादि पालय । ननु यदि सर्वं मृषा संसारहेतुश्च तत् किं राज्याद्यनुवर्त्तनेन ? तत्राऽऽह—भुञ्जन्निति । अन्वहं प्रारब्धं कर्म भुञ्जन् भुञ्जानः । गो० ]

---

1. ग-च-छ '-वर्गा' । 2. छ '-कालात्' । 3. क-ख-ग-घ-च-छ 'सर्वे ते' ।

भूतं भवि[1]ष्यद्भजन् वर्त्तमानमथाचरन् ।
[2]विहरस्व यथान्यायं भवदोषैर्न लिप्यसे ॥ २४ ॥
आज्ञापयति रामस्त्वां यद् भ्रातुः साम्पराय[3]कम् ।
तत् कुरुष्व यथा[4]शास्त्रं रुदतीश्चापि योषितः ।
निवारय महाबुद्धे लङ्कां [5]गच्छन्तु मा चिरम् ॥ २५ ॥
श्रुत्वा [6]यथावद् वचनं लक्ष्मणस्य विभीषणः ।
त्यक्त्वा शोकञ्च मोहञ्च रामपार्श्वमुपागमत् ॥ २६ ॥
[7]विमृश्य बुद्ध्या धर्मज्ञो धर्मार्थसहितं वचः ।
रामस्यैवानुवृत्त्यर्थमुत्तरं [8]पर्यभाषत ॥ २७ ॥

---

२४ । नरो० । भवदोषैः संसारदोषैः कामक्रोधादिभिः ।

२५ । नरो० । साम्परायिकं पारलौकिकम् ।

---

२४ । भूतं भविष्यच्चाभजन् कथमिदं गतं कथमग्रे गमिष्यतीत्यविचारयन् एवं भवदोषैर्न लिप्यसे । रा० ।

[ भूतं भविष्यच्च अभजन् अननुसन्दधानः । वर्त्तमानमेवाऽऽचरन् प्रारब्धकर्मोपस्थितं यत्तदेव भुञ्जानः भुक्तभोक्तव्ययोरभिनिवेशमकुर्वन् यथान्यायं यथोचितं भवदोषैः संसारदोषैर्न लिप्यसे । एतेन प्रारब्धकर्मक्षयार्थम् अनहंकृतः संयतेन्द्रिय एव कर्म कुर्वन् कर्मदोषैर्न लिप्तो भवति । तथाच श्रुतिः—'पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते' ( छान्दो० ४।१४।३ ) 'कर्मणा लिप्यते पापेन तत्सुकृतदुष्कृते धुनुते' ( कौषीत० १।४ ) 'किमहं साधु नाकरवं किमहं पापमकरवमि'त्याद्या ( तैत्ति० ३।९।१ ) । गो० ]

२५ । हे महाबुद्धे, रुदतीः रावणान्तःपुरात् निपतिता विलपन्तीर्योषितो निवारय सान्त्वनावाक्यैः सान्त्वय इत्यर्थः । लङ्कां गच्छन्तु ता इति शेषः । चिरं विलम्बं मा कुर्वन्तु इति शेषः ।

[ साम्परायिकं पारलौकिकम् । गो० ]

२६ । यथावद् यथायोग्यमुचितमिति यावत् ।

२७ । विमृश्य भगवच्छत्रोः क्रियाकरणे भगवतो दुःखं स्यादिति विचार्य । रा० ।

अनुवृत्त्यर्थम् अनुवर्त्तनार्थं मतानुवर्त्तनेन तत्सन्तुष्टिविधानार्थमित्यर्थः । रामस्य परब्रह्मरूपिणः । तदनुगमनेनैव ऐहिकामुष्मिकसर्वाभीष्टसिद्धिः स्यादिति भ्रात्रादीनां पारलौकिकक्रियाकरणेऽपि तस्य न बुद्धिरभूदित्याशयः ।

---

1. च '-ष्यञ्च भ-' । 2. च 'विरमस्व' । 3. छ '-कीम्' । 4. ग '-शीघ्रं', छ '-न्यायं' । 5. छ 'गच्छतु' । 6. च 'तथा तद-', छ 'तथावद्' । 7. वा-छ 'विमृज्य' । 8. ग-च 'प्रत्यभा-' ।

नृशंसमनृतं क्रूरं त्यक्तधर्मव्रतं प्रभो।
नार्होऽस्मि देव [1]संस्कर्तुं परदाराभि[2]मर्शिनम् ॥ २८ ॥
श्रुत्वा तद्वचनं प्रीतो रामो वचनमब्रवीत्।
मरणा[3]न्तानि वैराणि नि[4]र्वृत्तं नः प्रयोजनम्।
क्रियतामस्य संस्कारो ममाप्येष यथा तव ॥ २९ ॥

---

२८। नरो०। क्रूरं निर्दयम् अत एव नृशंसं घातुकम्, अनृतमसत्यम्।

---

२८। नृशंसमित्यत्र वाल्मीकीये, रामादेशात् परं विभीषणवाक्यम्—

त्यक्तधर्मव्रतं क्रूरं नृशंसमनृजुं तथा।
नाहमर्हामि सत्कर्त्तुं परदाराभिमर्षिणम् ॥
भ्रातृरूपो हि मे शत्रुरेष सर्वाहिते रतः।
रावणो नार्हते पूजां पूज्योऽपि गुरुगौरवात् ॥
नृशंस इति मां कामं वक्ष्यन्ति भुवि राक्षसाः।
इतरे सर्वलोका मां वक्ष्यन्ति गुणवानिति ॥
दग्धं ह्ययशसा लोके नैनं धक्ष्यति पावकः। इति ६।९९।४७-५०।

२९। निर्वृत्तं निष्पन्नम्, यथा तव भ्राता तथा ममापि, मरणे विरोधस्यापगमात्। रा०। विभीषणवचसां प्रत्युत्तररूपेण वाल्मीकीये रामस्य नीतिसमुदाचारादिपरिनिष्ठितं वागुजातम्। तथाच—

विभीषणमुवाचेदं वाक्यज्ञो वाक्यकोविदम्।
उच्छ्रितश्चापि दीनश्च शत्रुश्च रणमूर्धनि ॥
गुरुरेव गुरुर्वीर विग्रहान्ते विधीयते।
यदाऽयं विजितः शेते तव भ्राता विभीषण ॥
विजिते त्यज्यतां दोषो विजयान्ता हि विग्रहाः।
अथवा यत् समुचितं यथा वाऽप्यनुमन्यसे ॥
तथाऽस्तु न परोक्षं ते धर्मं पश्यामि बुद्धितः।
तवापि मे प्रियं कार्यं त्वत्प्रसादाद्धि मे जयः ॥
हेतुमात्रं तु रामो वै जयमूलं विभीषणः।
अवश्यन्तु क्षमं वाच्यो मया त्वं राक्षसोत्तम ॥

---

1. क 'सत्कर्त्तुं'। 2. क 'मर्षणम्'। 3. क '-न्तिकवैराणि'। 4. ख-घ '-र्वृत्त', ग '-वृत्तिर्नः'।

रामाज्ञां शिरसा [1]धृत्वा शीघ्रमेव विभीषणः ।
सान्त्ववाक्यैर्[2]महाबुद्धिं राज्ञीं मन्दोदरीं [3]तदा ॥ ३० ॥
सान्त्वयामास धर्मात्मा धर्मबुद्धिर्विभीषणः ।
त्वरयामास धर्मज्ञः संस्कारार्थं [4]स्वबान्धवान् ॥ ३१ ॥
[5]चित्यां निवेश्य विधिवत् पितृमेधविधानतः ।
आहिताग्नेर्यथा कार्यं रावणस्य विभीषणः ।
तथैव सर्वमकरोद् [6]बन्धुभिः सह [7]मन्त्रिभिः ॥ ३२ ॥

---

३२ । नरो० । पितृमेधविधानतः पितृयज्ञविधानेनेत्यर्थः ।

---

अधर्मानृतसंयुक्तः कामं त्वेष निशाचरः ।
तेजस्वी बलवाञ् शूरः संग्रामेषु च सर्वदा ॥
शतक्रतुमुखैर्देवैः श्रूयते न पराजितः ।
महात्मा बलसम्पन्नो रावणो लोकरावणः ॥
त्वत्प्रसादान्महाबाहो सत्कारं विधिपूर्वकम् ।
एष त्वर्हति धर्मज्ञ त्वं यशः प्रथयिष्यसि ॥ इति ६।९५।९१-९८ ।

३२ । आहिताग्नेरग्निहोत्रिणो यथा कार्यं योग्यं तथैवौर्द्ध्वदेहिकमकरोत् । रा० ।

पितृमेधविधानेन रावणसत्कारे द्रव्यासादनं चित्यां स्थापनञ्च वाल्मीकीये—

ततः सुग्रीवसन्दिष्टा वानरा भीमविक्रमाः ।
चन्दनागुरुकाष्ठानि समाजह्रुरितस्ततः ॥
पत्रं मृणालञ्च सपारिजातं प्रियङ्गुकालीयकनागपुष्पम् ।
रसालनागाह्वयशस्यकं च मनःशिलाचन्दनधावनञ्च ॥
कुम्भांश्चतुर्भ्यश्च महोदधिभ्यो जलस्य पूर्णान् सहसा च जह्रुः ।
सप्तस्वथान्येषु महीधरेषु ते वानरेन्द्राः कुसुमानि जह्रुः ॥
पवित्रदर्भान् दधिदुग्धसर्पिः श्रुवं प्रणीताश्च तथेध्मजालम् ।
तस्याग्निहोत्रञ्च गृहादहीनं निर्यातयामास विभीषणस्तु ॥ इति ६।९६।२-९ ।
रावणं प्रयते देशे निक्षिप्य परिचारकाः ।
चितां चन्दनकाष्ठान्तां नागकेशरसंयुताम् ॥
उदारागुरुसंयुक्तां तुङ्गकालीयकाधिकाम् ।
महतीं सर्वगन्धानां चितां कृत्वा समुच्छ्रिताम् ॥

---

1. च 'कृत्वा' । 2. क '-मोहि-' । 3. ग 'तथा' । 4. च 'सवा-' । 5. च 'चितां', क 'चितौ' । 6. च 'बहुभिः' । 7. च 'बन्धुभिः' ।

प्रविष्टासु च सर्वासु राक्षसीषु विभीषणः ।
रामपार्श्वमुपागत्य तदाऽतिष्ठद् विनीतवत् ॥ ३५ ॥

[1]रामोऽपि सह सैन्येन [2]ससुग्रीवः सलक्ष्मणः ।
हर्षं लेभे [3]रिपून् हत्वा यथा वृत्रं शतक्रतुः ॥ ३६ ॥

मातलिश्च तदा रामं परिक्रम्याभि[4]नन्द्य च ।
अनुज्ञातश्च रामेण ययौ स्वर्गं विहायसा ॥ ३७ ॥

ततो हृष्ट[5]मना रामो लक्ष्मणं चेदमब्रवीत् ।
विभीषणाय मे लङ्काराज्यं दत्तं पुरैव हि ॥ ३८ ॥

इदानीमपि गत्वा त्वं लङ्कामध्ये विभीषणम् ।
अभिषेचय विप्रैश्च मन्त्रवद्विधिपूर्वकम् ॥ ३९ ॥

---

३५ । युद्धमूर्ध्नि हतस्य सद्यःशौचत्वात् तदहरेव सर्वं प्रेतकृत्यं समाप्य रामसमीपागमनम् । रा० ।

उद्यतैराहवे शस्त्रैः क्षत्रधर्ममृतस्य तु ।
सद्यः सन्तिष्ठते यज्ञस्तथाऽशौचमिति स्थितिः ॥

इति मनूक्त्या युद्धमृतस्य सद्यःशौचदर्शनात् तद्दिन एव अशौचापगे तत्परदिने पारलौकिकं कार्यजातं निष्पन्नमिति तदनन्तरं रामसमीपगमनमिति विभावयामः ।

३७ । 'यद्यपि भारते सीताया आगमनोत्तरं रथादवतरणं भगवता उक्तम्, तथाऽपि तत्र पौर्वापर्याभावान्न क्षतिः', इति पाश्चात्त्यवाल्मीकीयटीकायां रामानुजः । रामेणानुज्ञात इति । व्यक्तं वाल्मीकीये—

राघवस्तु रथं दिव्यमिन्द्रदत्तं रविप्रभम् ।
अनुज्ञाय महाप्राज्ञो मातलिं प्रत्यपूजयत् ॥
दर्शिता महती शक्तिः कृतं मे प्रियमुत्तमम् ।
गच्छेदानीमनुज्ञातो मया त्वं त्रिदशालयम् ॥
इति रामाभ्यनुज्ञातो मातलिः शक्रसारथिः ।
दिव्यं तु रथमास्थाय दिवमेवाऽऽरुरोह सः ॥ इति ६।९७।४-६

३८ । मे मया ।

---

1. छ-पुस्तके अयं श्लोको नास्ति । 2. क-ख-च 'सुग्रीवः सहलक्ष्मणः' । 3. ग-च-छ 'रिपुं' । 4. ख-घ '-वाद्य च,' ग '-वन्द्य च' । 5. छ '-तरो' ।

इत्युक्तो लक्ष्मणस्तूर्णं जगाम [1]सह वानरैः ।
लङ्कां सुवर्णकलशैः समुद्रजलसंयुतैः ।
अभिषेकं शुभं चक्रे राक्षसेन्द्रस्य धीमतः ॥ ४० ॥
ततः पौरजनैः सार्द्धं नानोपायनपाणिभिः ।
विभी[2]षणः ससौमित्रिरुपायनपुरस्कृतः ।
दण्डप्रणाममकरोद्रामस्याक्लिष्टकर्मणः ॥ ४१ ॥
रामो विभीषणं दृष्ट्वा प्राप्तराज्यं मुदाऽन्वितः ।
कृतकृत्यमिवाऽऽत्मानममन्यत सहानुजः ॥ ४२ ॥
सुग्रीवञ्च समालिङ्ग्य रामो वाक्यमथाब्रवीत् ।
सहायेन त्वया वीर जितो मे रावणो महान् ।
विभीषणोऽपि लङ्कायामभिषिक्तो मयाऽनघ ॥ ४३ ॥

---

४० । लङ्कां जगामेत्यन्वयः । ततः सुवर्णकलशै राक्षसेन्द्रस्याभिषेकं प्रचक्रे । रा० ।
अभिषेकप्रकारमाह पाश्चात्त्ये वाल्मीकीये—

तथेत्युक्त्वा सुसंहृष्टः सौवर्णं घटमाददे ।
तं घटं वानरेन्द्राणां हस्ते दत्त्वा मनोजवान् ॥
व्यादिदेश महासत्त्वान् समुद्रसलिलन्तदा ।
अतिशीघ्रं ततो गत्वा वानरास्ते मनोजवाः ॥
आगतास्तु जलं गृह्य समुद्राद् वानरोत्तमाः ।
ततस्त्वेकं घटं गृह्य संस्थाप्य परमासने ॥
घटेन तेन सौमित्रिरभ्यषिञ्चद् विभीषणम् ।
लङ्कायां रक्षसां मध्ये राजानं रामशासनात् ॥ ६।११४।१२-१९ ।

४१ । उपायनपुरस्कृतोऽग्रे कृतमुपायनं येन सः, आहिताग्न्यादित्वात् परनिपातः । दण्डं प्रणामं दण्डवत् प्रणामम् । रा० ।

उपायनान्याह वाल्मीकीये—

अक्षतान् मोदकाँल्लाजान् दिव्याः सुमनसस्तथा ।
आजह्रुस्ते तदा हृष्टाः पौरास्तत्र निशाचराः ॥
तद् गृहीत्वा तु दुर्धर्षो राघवाय न्यवेदयत् ।
मङ्गल्यं मङ्गलं सर्वं लक्ष्मणाय च वीर्यवान् ॥ इति ६।९७।१९-२० ।

---

1. क 'वानरैः सह' । 2. क '-षणस्स सौमित्रि-' ।

ततः प्राह हनूमन्तं पार्श्वस्थं विनयान्वितम् ।
विभीषणस्यानु[1]मतो गच्छ त्वं रावणालयम् ॥ ४४ ॥
जानक्यै सर्वमाख्याहि रावणस्य वधादिकम् ।
जानक्याः प्रतिवाक्यं मे शीघ्रमेव निवेदय ॥ ४५ ॥
[2]एवमाज्ञापितो धीमान् रामेण पवनात्मजः ।
[3]प्रविवेश पुरीं लङ्कां पूज्यमानो निशाचरैः ॥ ४६ ॥
प्रविश्य रावणगृहं शिंशपामूलमाश्रिताम् ।
ददर्श जानकीं तत्र कृशां दीनामनिन्दिताम् ।
राक्षसीभिः परिवृतां ध्यायन्तीं राममेव हि ॥ ४७ ॥
विनयावनतो भूत्वा प्रणम्य पवनात्मजः ।
कृताञ्जलिपुटो भूत्वा [4]प्रह्वो भक्त्याऽग्रतः स्थितः ॥ ४८ ॥
तं दृष्ट्वा जानकी [5]तूष्णीं स्थित्वा [6]पूर्वस्मृतिं ययौ ।
ज्ञात्वा [7]तं रामदूतं सा हर्षात् सौम्यमुखी [8]भवत् ॥ ४९ ॥

---

४४ । विभीषणस्य अनुमतः अनुमतिं गृहीत्वेत्यर्थः । तदानीं तस्यैव लङ्काया अधीशत्वात् तदनुमतिग्रहणम् । वृत्तमिदमुपलक्ष्य वाल्मीकीयेऽपि—

अनुमान्य महाराजमिमं सौम्य विभीषणम् ।
प्रविश्य नगरीं लङ्कां कुशलं ब्रूहि मैथिलीम् ॥ इति ६।९७।२३ ।

४५ । प्रतिवाक्यं प्रतिसन्देशमित्यर्थः । तथाच वाल्मीकीये—

प्रियमेतदिहाऽऽख्याहि वैदेह्यास्त्वं हरीश्वर ।
प्रतिगृह्य च सन्देशमुपावर्त्तितुमर्हसि ॥ इति ६।९७।२५ ।

४८ । भक्त्येति प्रह्वत्वादेर्हेतुकथनम् । पूर्वस्मृतिं पूर्वमागतो यः स एवायमिति स्मृतिं स्मरणं ययौ प्राप्तवती । रा० ।

भक्त्या प्रह्वो नम्रः । कृताञ्जलिपुटः सन् तत्सन्निधौ स्थितोऽभवदिति शेषः ।

४९ । भवदभवदित्यर्थः । अडभाव आर्षः । रा० ।

अत्र पाश्चात्त्ये वाल्मीकीये—

दृष्ट्वा तमागतं देवी हनूमन्तं महाबलम् ।
तूष्णीमास्ते प्रमुदिता स्मृत्वा दृष्ट्वा तदाऽभवत् ॥ इति ६।११९।९ ।

---

1. क-ख-घ-ङ ‘मते’ । 2. ङ-पुस्तके एतदर्द्धं नास्ति । 3 ङ ‘ततो जगाम हनुमान्’ । 4. च-छ ‘बहुभक्त्याऽग्रतः’ । 5. ङ ‘तूर्णं’ । 6. ग-च ‘पूर्वां स्मृ-’ । 7. ग-च ‘रामस्य दूतं’ । 8. च ‘भवेत्’ ।

[1]स तां सौम्यमुखीं दृष्ट्वा [2]तस्याः पवननन्दनः ।
रामस्य भाषितं सर्वमाख्यातुमुपचक्रमे ॥ ५० ॥
देवि [3]रामः ससुग्रीवो विभीषणसहायवान् ।
[4]कुशली वानराणाञ्च [5]सैन्यैश्च सह लक्ष्मणः ॥ ५१ ॥
रावणं ससुतं हत्वा सबलं सह [6]मन्त्रिभिः ।
त्वामाह कुशलं रामो[7] राज्ये कृत्वा विभीषणम् ॥ ५२ ॥
श्रुत्वा भर्त्तुः प्रियं वाक्यं हर्षगद्गदया गिरा ।
किं ते प्रियं करोम्यद्य न पश्यामि जगत्त्रये ।
[8]समं ते प्रियवाक्यस्य रत्नान्याभरणानि च ॥ ५३ ॥

---

५० । रामस्य भाषितं सन्देशम् । रा० ।

५१ । वानराणां सैन्यैः सहैव लक्ष्मणश्च कुशली सर्वे कुशलिन इत्यर्थः । रा० ।

५२ । राज्ये विभीषणं कृत्वा इत्यनेन निरवशेषसर्वकृत्यसिद्धिरुक्ता । रा० ।

राज्ये विभीषणं कृत्वा स्थापयित्वा, विभीषणाय लङ्काराज्यं प्रदायेति यावत् ।

५३ । भर्त्तुः सम्बन्धि प्रियं विजयसंश्रितं वाक्यम् । हर्षगद्गदया गिरा उवाचेति शेषः । किन्ते प्रियं करोमि, यादृशं प्रियं कर्त्तव्यं तादृशं जगत्त्रयेऽपि न पश्यामीत्यर्थः ।

अत्राऽऽह वाल्मीकिः—

न हि पश्यामि तत् सौम्य पृथिव्यामपि किञ्चन ।
सदृशं त्वत्प्रियाख्याने सत्यमेतद् ब्रवीमि ते ॥ ६।९८।१५।

अत्रातिहर्षवशात पाश्चात्त्ये प्राच्येऽपि वाल्मीकीये सीतायाः प्रथमं वाग्राहित्यम् । तथाच पाश्चात्त्ये—

एवमुक्ता हनुमता सीता शशिनिभानना ।
प्रहर्षेणावरुद्धा सा व्याहर्त्तुं न शशाक ह ॥ इति ६।११५।१४ ।

प्राच्येऽपि—

एवमुक्ता समुत्पत्य सीता शशिनिभानना ।
प्रहर्षेणातिसंरुद्धा व्याजहार न किञ्चन ॥ इति ६।९८।११।

---

1. च 'सीता' । 2 घ 'तस्यै' । 3. छ 'रामस्य सुग्रीवविभीषणसहायिनः' । 4. छ 'कुशलं' । 5. ग-छ 'सैन्यस्य,' च 'सैन्येन' । 6. च 'बन्धुभिः' । 7. छ '-मः कृत्वा राज्ये' । 8. छ-पुस्तके इत आरभ्य पादषट्कं नास्ति ।

एवमुक्तस्तु वैदेह्या प्रत्युवाच प्लवङ्गमः ।
रत्नौघाद् विविधाद् वाऽपि [1]देवराज्याद् विशिष्यते ।
[2]हतशत्रुं विजयिनं रामं पश्यामि सुस्थिरम् ॥ ५४ ॥
तस्य तद् वचनं श्रुत्वा मैथिली प्राह मारुतिम् ।
सर्वे सौम्यगुणाः [3]सौम्य त्वय्येव परिनिष्ठिताः ।
रामं द्रक्ष्या[4]मि शीघ्रं[5] मामाज्ञापयतु राघवः ॥ ५५ ॥

---

५५ । नरो० । सौम्यगुणाः शोभनगुणाः । हे सौम्य हे सुन्दर ।

[ लङ्काकाण्डे द्वादशाध्यायव्याख्या समाप्ता ॥ १२ ॥ ]

---

५४ । देवराज्यादित्यस्यापीति शेषः । प्राप्तजयस्य रामस्य [अवलोकनं] सर्वतोऽप्यधिकं निरवधिफलदातृत्वादिति भावः । रा० ।

वाल्मीकीयेऽत्र हनूमद्वाक्यम्—

भर्त्तुः प्रियहिते युक्ते भर्त्तुर्विजयनन्दिनि ।
स्निग्धमेव हि तद्वाक्यं त्वमेवार्हसि भाषितुम् ॥
तवैतद्वचनं देवि सारवत्स्निग्धमेव च ।
रत्नौघवरदानेन देवराज्येन वा समम् ॥
अर्थतश्च मया प्राप्ता देवि राज्यादयो गुणाः ।
हतशत्रुं विजयिनं रामं पश्यामि यत् स्थितम् ॥ इति ६।९८।१८-२०।

५५ । सौम्याः सोमवत् चन्द्रवत् प्रियदर्शनाः, शोभमाना इति यावत् । सौम्य सोमवत् प्रियदर्शन । रा० ।

अतः परं वाल्मीकीये—

अहं त्वेकं वरं देवि त्वत्तो याचे प्रियं महत् ।
तन्मे प्रीत्या प्रयच्छ त्वं रामश्चाप्यनुदिश्यताम् ॥
इमाः श्रुता मया पूर्वं राक्षस्यो विकृताननाः ।
असकृत् परुषं वाक्यं वदन्त्यो रावणाज्ञया ॥
इच्छामि विविधैर्घातैर्हन्तुमेताः सुदारुणाः ।
घोराः क्रूरसमाचारा वरमेतं प्रयच्छ मे ॥ ६।९८।२१-२३

इत्यादिना हनूमतो राक्षसीहननरूपवरप्रार्थना । ततश्च

राजसंश्रयवश्यानां वर्त्तीनां पराज्ञया ।
विधेयानाञ्च दासीनां न कुप्येत् प्लवगर्षभ ॥

---

1. च 'देवि रा-' । 2. क 'हत्वा श-' । 3. क 'सम्यक्' । 4. च '-म्यहं' । 5. च '-प्रमाज्ञा-' ।

तथेति तां नमस्कृत्य ययौ द्रष्टुं रघूत्तमम् ।
जानक्या भाषितं सर्वं रामस्याग्रे [1]न्यवेदयत् ॥ ५६ ॥

यन्निमित्तोऽयमारम्भः कर्मणाञ्च फलोदयः ।
तां देवीं शोकसन्तप्तां द्रष्टुमर्हसि मैथिलीम् ॥ ५७ ॥

एवमुक्तो हनुमता रामो ज्ञानवतां वरः ।
मायासीतां परि[2]त्यक्तुं जानकीमनले[3] स्थिताम् ।
आदातुं मनसा ध्यात्वा रामः प्राह विभीषणम् ॥ ५८ ॥

गच्छ राजन् जनकजामानयाऽऽशु ममान्तिकम् ।
स्नातां विरजवस्त्राढ्यां सर्वाभरणभूषिताम् ॥ ५९ ॥

विभीषणोऽपि तच्छ्रुत्वा जगाम सहमारुतिः ।
राक्षसीभिः [4]सुवृद्धाभिः स्नापयि[5]त्वा तु मैथिलीम् ।
सर्वाभरणसम्पन्नामारोप्य शिविकोत्तमे ॥ ६० ॥

---

भाग्यवैषम्यदोषेण पुरस्ताद्दुष्कृतेन च ।
प्राप्तमेतन्मया सर्वं स्वकृतं ह्युपभुज्यते ॥

पापानां वा शुभानां वा वधार्हाणामथापि वा ।
कार्यकारणकर्त्तृत्वे न कश्चिदपराध्यति ॥ ६।९८।२८-२९,३४

इत्यादिना सीतया तत्र हनूमतः प्रवृत्तिः प्रतिषिद्धा ।

५७। कर्मणां युद्धादीनां फलोदयरूपां तां देवीमित्यन्वयः। रा०।

निवेदनमेवाऽऽह—यन्निमित्तोऽयमिति। अयं सेतुबन्धादिरूप आरम्भः। कर्मणां तेषां तेषां फलोदय उपस्थित इति शेषः।

५८। अनले अग्नौ स्थितां जानकीमादातुं मनसा ध्यात्वा निश्चित्य प्राहेत्यन्वयः। रा०।

५९। विरजवस्त्राणि निर्मलवस्त्राणि, तदाढ्यां तैः शोभिताम्। रा०।

अत्र वाल्मीकिः—

मम सीतां शिरःस्नातामुपस्थापय मैथिलीम् ।
दिव्याङ्गरागां वैदेहीं दिव्याभरणभूषिताम् ॥ इति ६ । ९९ । ६ ।

६०। शिविकोत्तमे सर्वशिविकाभ्य उत्तमे शिविकारूपे वाहने। रा०।

---

1. क 'निवेदयेत्'। 2. ग-च-छ '-त्यज्य'। 3. च '-लस्थिता'। 4. क 'सव-'। 5. च '-त्वाऽथ', क '-त्वा च'।

[1]याष्टिकैर्बहुभिर्गुप्तां कञ्चुकोष्णीषिभिः[2] शुभाम् ।
तां द्रष्टुमागताः सर्वे वानरा जनकात्मजाम् ॥ ६१ ॥

तान् वारयन्तो बहवः [3]सर्वतो वेत्रपाणयः ।
कोलाहलं प्रकुर्वन्तो रामपार्श्वमुपा[4]ययुः ॥ ६२ ॥

दृष्ट्वा तां शिबिकारूढां दूरा[5]दथ रघूत्तमः ।
विभीषण किमर्थं ते वानरान् वारयन्ति हि ॥ ६३ ॥

---

सहमारुतिरिति वाल्मीकीयाननुमतम् । तत्र रामेण विभीषणस्य प्रेषणम्, तेन एकेनैव विभीषणेन सीतासकाशगमनं सीतायाः समानयनञ्च । तथाच—

दीर्घमुष्णञ्च निश्वस्य जगतीमवलोकयन् ।
उवाच स ततो रामो राक्षसेन्द्रं विभीषणम् ॥
एवमुक्तस्तु रामेण त्वरमाणो विभीषणः ।
प्रविश्यान्तःपुरं सीतां प्राञ्जलिः प्रत्युवाच ताम् ॥ इति ६।९९।५-७ ।

६१ । याष्टिकैराचारवशाद् यष्टिहस्तै रक्षकैः षण्ढैर्बहुभिर्गुप्ताम् । रा० ।

६२ । अत्र वाल्मीकिः—

ततो वानरमुख्यास्ते कौतूहलसमन्विताः ।
वैदेहीं द्रष्टुमिच्छन्तस्तस्थुः शतसहस्रशः ॥
कथंरूपा नु वैदेही स्त्रीरत्नं कीदृशं नु तत् ।
यस्या वानरलोकोऽयं कृते संशयमागतः ॥
यस्या हेतोर्हतो राजा रावणो राक्षसाधिपः ।
सेतुश्च योजनशतं जले बद्धो महोदधेः ॥ इति ६।९९।१४-१६ ।

६३ । अत्र रामे वानरान् प्रति अनुरागदाक्षिण्ययोः समावेशो वाल्मीकीये । तेन सीताया यानारोहणं युक्तिपूर्वकं विनिवारयामास सः । तथाच—

उत्सार्यमाणांस्तान् दृष्ट्वा समन्ताज्जातसम्भ्रमान् ।
दाक्षिण्याच्चानुरागाच्च वारयामास राघवः ॥
संरब्धश्चाब्रवीद्रामश्चक्षुषा निर्दहन्निव ।
विभीषणं महाप्राज्ञं सोपालम्भमिदं वचः ॥

---

1. ग-च 'यष्टिभिर्ब-', ख 'यष्टि-' । 2. ग-च '-भिर्वृताम्' । 3. च 'सर्वे ते' । 4. ख '-गताः' । 5. ख '-देव' ।

पश्यन्तु वानराः सर्वे मैथिलीं मातरं यथा ।
पादचारेण सायातु जानकी मम सन्निधिम् ॥ ६४ ॥
श्रुत्वा तद् रामवचनं शिविकादवरुह्य सा ।
पादचारेण शनकैरागता रामसन्निधिम् ॥ ६५ ॥
रामोऽपि दृष्ट्वा तां [1]मायासीतां [2]कार्यार्थनिर्मिताम् ।
अवाच्यवादान् बहुशः प्राह तां रघुनन्दनः ॥ ६६ ॥

---

किमर्थं मामनादृत्य क्लिश्यतेऽयं त्वया जनः ।
उद्वेगं मा कृथा ह्येषां जनोऽयं स्वजनो मम ॥
... ... ... ... ...
पुत्रपक्षे प्रजा राज्ञस्तवापि विदितं ध्रुवम् ।
पश्यन्तु मातरं तस्मादिमे कौतूहलान्विताः ॥
न गृहाणि न वस्त्राणि न प्राकारा न सत्क्रियाः ।
न चान्यो राजसत्कारः शीलमावरणं स्त्रियाः ॥
व्यसनेषु विवाहेषु कन्यानां च स्वयंवरे ।
क्रतौ संसत्सु च स्त्रीणां दर्शनं सार्वलौकिकम् ॥ इत्यादि ६।९९।२६ ३४ ।

६४ । सा या सूर्यचन्द्रादिभिरपि तत्त्वतोऽज्ञाता तादृशीं वानराः सुखेन पश्यन्त्वित्याशयः । रा० ।

६५ । शिविकात् शिविकायाः । लिङ्गव्यत्यय आर्षः । रा० ।

६६ । अवाच्यवादान् वक्तुमनर्हवचनानि परपुरुषगृहे स्थिताऽसि धिक् त्वामित्यादीनि । रा० ।

अत्र मायासीतेति कृत्वा अनायासेनैव ग्रन्थकृता सीतापरित्यागादिकार्यं सुविहितम् । वाल्मीकीये न मायासीता । तत्र सा रामस्य सुखदुःखसाक्षिणी मूर्त्तिमती विदेहतनया । तस्याः परित्यागज्वलनप्रवेशावसरे च आदिकवेस्तत्रभवतो वाल्मीकेः कवित्वसुधासहस्रधारया स्नपितं पाठकजनहृदयम् । तच्च वृत्तं कथाभिर्बह्वीभिः पुष्टम् अतिमहत्त्वया प्रथितमिति तत् सर्वमत्र दर्शयितुं न प्रभवामो वयम् । यत्किञ्चिदत्र उद्ध्रियते । तथाच स्वसकाशे समुपस्थितां सीतां प्रति रामवाक्यम्—

एषाऽसि विजिता भद्रे शत्रुहस्तान्मया रणे ।
पौरुषाद् यदनुष्ठेयं तदेतदुपपादितम् ॥

---

1. क 'भार्यां सी-' । 2. क 'मायावि-' ।

[1]अमृष्यमाणा सा सीता वचनं राघवोदितम् ।
लक्ष्मणं प्राह मे शीघ्रं प्रज्वालय हुताशनम् ।
विश्वा[2]सार्थं हि रामस्य लोकानां प्रत्ययाय च ॥ ६७ ॥

---

गतोऽस्म्यन्तममर्षस्य धर्षणा प्रतिमार्जिता ।
अपमानश्च शत्रुश्च मया युगपदुद्धृतौ ॥ इति ६।१००।२-३ ।
यत् कर्त्तव्यं मनुष्येण धर्षणां प्रतिमार्जता ।
तत् कृतं त्वां विनिर्जित्य मयैतन्मानरक्षणम् ॥
... ... ... ... ...
प्राप्तचारित्र्यसन्देहा मम प्रतिमुखे स्थिता ।
दीपो नेत्रान्तरस्येव प्रतिकूलाऽसि मे दृढम् ॥
तद् गच्छाभ्यनुजाने त्वां यथेष्टं जनकात्मजे ।
एता दश दिशो भद्रे कार्यमस्ति न मे त्वया ॥
कः पुमान् हि कुले जातः स्त्रियं परगृहोषिताम् ।
तेजस्वी पुनरादद्यात् सुहृल्लेखेन चेतसा ॥
रावणाङ्कपरिक्लिष्टां दृष्टां दुष्टेन चक्षुषा ।
कथं त्वां पुनरादद्यां कुलं व्यपदिशन् महत् ॥
... ... ... ... ...
लक्ष्मणे भरते वा त्वं कुरु बुद्धिं यथासुखम् ।
सुग्रीवे वानरेन्द्रे वा राक्षसे वा विभीषणे ॥ इति च ६।१००।१२-२२ ।

रामवाक्यावसाने सीतायाः प्रत्युत्तरञ्च—

यदहं गात्रसंस्पर्शं तव शत्रोर्गता विभो ।
कामकारो न मे तत्र दैवं तत्रापराध्यति ॥
मदधीनन्तु हृदयं तच्च मे त्वयि वर्त्तते ।
पराधीनेषु गात्रेषु किं करिष्याम्यनीश्वरा ॥
... ... ... ... ...
एवं ब्रुवाणा रुदती बाष्पगद्गदभाषिणी ।
अब्रवील्लक्ष्मणं सीता दीना ध्यानपरायणा ॥ इत्यादि ६।१०१।९-१९ ।

६७]। मे मन्निमित्तमित्यर्थः। किमर्थन्ते अयमारम्भ इत्याह—विश्वासार्थमिति । रामस्य विश्वासार्थं लोकानां प्रत्ययार्थञ्च चितां प्रवेक्ष्यामीति शेषः ।

---

1. क 'अमृष्य-'। 2. ग '-सार्थं राघवस्य', च '-सार्थं राघवस्य'।

राघवस्य मतं ज्ञात्वा लक्ष्मणोऽपि तदैव हि ।
महाकाष्ठचयं कृत्वा ज्वालयित्वा हुताशनम् ।
रामपार्श्वमुपागम्य तस्थौ तूष्णी[1]मरिन्दमः ॥ ६८ ॥

ततः सीता परिक्रम्य राघवं भक्तिसंयुता ।
पश्यतां सर्व[2]लोकानां देवराक्षसयोषिताम् ॥ ६९ ॥

प्रणम्य [3]देवताभ्यश्च ब्राह्मणेभ्यश्च मैथिली ।
बद्धाञ्जलिपुटा चेद[4]मुवाचाग्निसमीपगा ॥ ७० ॥

---

६८ । मतं ज्ञात्वा आकारसूचितमिति शेषः । तथाच वाल्मीकिः—

स विज्ञाय मतं तत्तु रामस्याऽऽकारसूचितम् ।
चितां चकार सौमित्रिर्मते रामस्य वीर्यवान् ॥ इति ६।१०१।२३ ।

महाकाष्ठचयं कृत्वा संगृह्येत्यर्थः ।

६९ । वाल्मीकीयेऽपि—

अधोमुखं स्थितं रामं ततः कृत्वा प्रदक्षिणम् ।
उपासर्पत वैदेही दीप्यमानं हुताशनम् ॥ इति ६।१०१।२५ ।

७० । प्रणम्य देवताभ्यः सा ब्राह्मणेभ्यश्च मैथिली ।
बद्धाञ्जलिपुटा देवमुवाचाग्निं समीपतः ॥ ६।१०१।२६

इत्यादिना वाल्मीकीयेऽपि देवब्राह्मणनमस्कृत्या सीतायाः समुदाचारः प्रदर्शितः । ततश्च—

यथाऽहं कर्मणा वाचा शरीरेण च राघवम् ।
सततं नातिवर्त्तेयं प्रकाशं वा रहःसु वा ॥
यथा मे हृदयं नित्यं नातिवर्त्तति राघवात् ।
तथाऽयं लोकसाक्षी मां सर्वतः पातु पावकः ॥ ६।१०१-२७-२८

इत्युक्त्वा चाऽऽत्मचारित्र्यदार्ढ्यं प्रदर्शितम् । अतः परम्—

एवमुक्त्वा तु वैदेही परिक्रम्य हुताशनम् ।
प्रवेष्टुकामा ज्वलनं वाक्यं चैवेदमब्रवीत् ॥
त्वमग्ने सर्वभूतानां शरीरान्तरगोचरः ।
त्वं साक्षी मम देहस्थस्त्राहि मां देवसत्तम ॥ ६।१०१।२९-३०

---

1 क '-मनिन्दिता' । 2. च '-देवाना' । 3 ग-क 'देवते-', च 'ब्राह्मणेभ्यश्च देवतेभ्यश्च' ।
4. च '-मुत्वायाग्नि-' ।

यथा मे हृदयं[1] नित्यं नापसर्पति राघ[2]वात् ।
तथा लोकस्य साक्षी [3]मां सर्वतः [4]पातु पावकः ॥ ७१ ॥
एवमुक्त्वा[5] तदा सीता परिक्रम्य हुताशनम् ।
विवेश ज्वलनं दीप्तं निर्भयेण हृदा सती ॥ ७२ ॥
दृष्ट्वा [6]ततो भूतगणाः ससिद्धाः सीतां महावह्निगतां भृशार्त्ताः ।
परस्परं प्राहुरहो स सीतां रामः [7]श्रियं स्वां कथमत्यज[8]ज्ज्ञः ॥ ७३ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे लङ्काकाण्डे
द्वादशोऽध्यायः ॥ १२ ॥

---

इत्यादिना अग्नेः प्रार्थनम् ।

ततः सा राघवं सीता नमस्कृत्याऽऽयतेक्षणा ।
विवेश ज्वलनं दीप्तं निःशङ्केनान्तरात्मना ॥

* * * *

सा तप्तवरहेमाभा तप्तकाञ्चनभूषिता ।
पपात ज्वलने दीप्ते हुताहुतिरिवाध्वरे ॥ ६।१०१।३२-३५

इत्यग्नौ प्रवेशः ।

७३ । ज्ञः सर्वज्ञोऽपि रामः कथं सीतामत्यजद् वह्निप्रवेशमनुज्ञातवानिति प्राहुः । रा० ।

[ स सीतां रामः श्रियमिति । साक्षान्नारायणो रामः स्वां स्वकीयां प्रकृतिं श्रियं सीतां कथमत्यजत् । अहो विस्मये । गो० ]

स सीतास्नेहेन अतिमात्रहृतहृदयः सीताविच्छेदेनातिमात्रव्याकुलश्च रामः । सर्वज्ञो रामः कथं सीतां विशुद्धां विजानन्नपि अत्यजदिति विस्मयः ।

---

1. ग-क '-यान्नित्यं' । 2. ग-क '-वः' । 3. च 'ल' । 4. च 'पाहि' । 5. ङ '-क्त्वा तु सा' । 6. च 'तदा' । 7. च-ङ 'प्रिया' । 8. ग '-जद्धः', च '-जन्न' ।

# त्रयोदशोऽध्यायः

[1]श्रीमहादेव उवाच—

ततः शक्रः सहस्राक्षो यमश्च वरुणस्तथा ।
कुबेरश्च महातेजाः पिनाकी वृषवाहनः ॥ १ ॥
ब्रह्मा [2]ब्रह्मविदां श्रेष्ठो मुनिभिः सिद्धचारणैः ।
[3]ऋषयः पितरः साध्या गन्धर्वाप्सरसोरगाः ॥ २ ॥
एते चान्ये विमानाग्र्यैराजग्मुर्यत्र राघवः ।
अब्रुवन् परमात्मानं रामं प्राञ्जलयश्च ते[4] ॥ ३ ॥
कर्त्ता त्वं सर्वलोकानां साक्षी विज्ञानविग्रहः ।
वसूनामष्टमोऽसि त्वं रुद्राणां शङ्करो भवान् ॥ ४ ॥

---

१ । ततः सीताया अग्निप्रवेशानन्तरम् ।

२ । [ अप्सरसोरगा इति विभक्तिलोपेऽपि सन्धिरार्षः । गो० ]

पितरो ऋषय इति पाठो बहुपुस्तकसम्मतः । तत्र च पाठे सन्धिरार्षः । ब्रह्मविदां चतुर्मुखप्रजापतिविष्णुदेवराजादिदिक्पालवशिष्ठाद्यृषितत्सन्तानजब्राह्मणा ब्रह्मविदस्तेषां श्रेष्ठो ज्येष्ठो हिरण्यगर्भः । 'यो वै ब्रह्माण विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' ( श्वेताश्व० ६।१८ ) इति श्रुतेः, 'हिरण्यगर्भः समवर्त्तताग्रे' ( ऋग्वेद० १०।१२१।१ ) इति श्रुतेश्च । इति पाश्चात्यवाल्मीकीयटीकायां रामानुजः ।

३ । अन्ये नागतिर्यगादयः । वाल्मीकीये चान्ये इति न दृश्यते । तत्र—

एते सर्वे समागम्य विमानैः सूर्यसन्निभैः ।
आगत्य च पुरीं लङ्कामभिजग्मुस्तु राघवम् ॥ इति ६।१०२।९ ।

तत्र देवैः सह दशरथस्याप्यागमनं दृश्यते । तथाच—

स च राजा दशरथो विमानेनान्तरीक्षगः ।
अभ्याजगाम तं देशं देवराजसमद्युतिः ॥ इति ६।१०२।४ ।

४ । साक्षी अन्तर्यामितया सर्वद्रष्टा । अथ सर्वात्म्यमाह—वसूनामित्यादि । रा० ।

---

1. क-ख-पुस्तकयोः 'श्रीमहादेव उवाच' इति नास्ति । 2. छ 'वेद-' । 3. क-ख-ग घ 'पितरो ऋषयः' । 4. छ-पुस्तके अतः परं 'देवा ऊचुः' इत्यधिकम् ।

आदिकर्त्ताऽसि लोकानां ब्रह्मा त्वं चतुराननः ।
अश्विनौ घ्राणभूतौ ते चक्षुषी चन्द्रभास्करौ ॥ ५ ॥

लोकानामादिरन्तोऽसि नित्य एकः सदोदितः ।
सदा शुद्धः सदा बुद्धः सदा मुक्तो[1] गुणोदयः ॥ ६ ॥

---

६ । नरो० । लोकानामिति । आदिः कारणम्, अन्तो लयस्थानं संहारहेतुर्वा । अत्र हेतुः—नित्य इति, सनातन इत्यर्थः । नित्यत्वे हेतुरेक इति, अद्वितीय इत्यर्थः । सदा उदितम् उदयो यस्य स तथा । सदा मुक्त उपाधित इति शेषः । अत एव सदा शुद्धः । गुणानामुदयो यस्मात् स तथा ।

---

[ कर्त्ता त्वं सर्वलोकानामिति । ननु लोककर्तृत्वे किमहं सक्रियो विकारी ? नेत्याह—साक्षी द्रष्टा । ईक्षणमात्रेणैव कर्तृत्वं तवेत्यर्थः । तथाच श्रुतिः—'तदैक्षत बहु स्याम्'( छान्दो० ६।२।३ ) इति । ननु तर्हि किं रागवशाद् द्रष्टा ? नेत्याह—विज्ञानविग्रहः । न हि विज्ञानघनो रागी भवति । वसूनामष्टमोऽग्निः, 'वसूनामस्मि पावकः' इति स्वयमुक्तत्वात् । गो० ]

अत्राऽऽह पाश्चात्त्ये वाल्मीकीये—

कर्त्ता सर्वस्य लोकस्य श्रेष्ठो ज्ञानविदां विभुः । इति ६।११९।६ ।
ऋतधामा वसुः पूर्वं वसूनाञ्च प्रजापतिः ।
त्वं त्रयाणां हि लोकानामादिकर्त्ता स्वयं प्रभुः ॥
रुद्राणामष्टमो रुद्रः साध्यानामपि पञ्चमः । इति च ६।११९।७-८ ।

कर्त्ता सर्वस्येति । मनुष्यदेहे राघवे सर्वलोककर्तृत्वाद्युक्तिर्मूलस्वरूपाभिप्रायेण । इति तट्टीकायां रामानुजः ।

रुद्राणां शङ्करश्चास्मि.................. ।
वसूनां पावकश्चास्मि............... ॥ गीता १०।२३ ।

रुद्राणाम् एकादशरुद्राणाम् । वसूनाम् अष्टानामिति एतट्टीकायां शङ्करः ।

५ । आदिकर्त्ता सृष्टेः प्रधानकर्त्ता । विराड्रूपमाह—अश्विनावित्यादि । इदं पुराणान्तरोक्तस्य सर्वस्योपलक्षणम् । रा० ।

'अश्विनौ घ्राणभूतौ ते' इत्यत्र पाश्चात्त्ये वाल्मीकीये—

अश्विनौ चापि ते कर्णौ चन्द्रसूर्यौ च चक्षुषी । इति ६।११९।६।

६ । आदिरुत्पत्तिकृत् । अन्तो नाशकृत् । सदोदितो रात्रिदिनव्यवहारहीनः, शुद्धो

---

1. क-ख-घ '-क्तोऽगुणोऽव्ययः' ।

त्वन्मायासंवृतानां त्वं भासि मानुषविग्रहः ।
त्वन्नाम स्मरतां राम सदा भासि चिदात्मकः ॥ ७ ॥
रावणेन हृतं स्थानमस्माकं तेजसा सह ।
त्वयाऽद्य निहतो दुष्टः पुनः प्राप्तं पदं स्वकम् ॥ ८ ॥
एवं स्तुवत्सु देवेषु ब्रह्मा साक्षात् पितामहः ।
अब्रवीत् प्रणतो भूत्वा रामं [1]सत्यपथि स्थितम् ॥ ९ ॥

---

७। नरो०। ननु तर्हि कथं लोका मां मानुषं मन्यन्ते इत्यत आह—त्वन्माया-संवृतानामित्यादि। त्वन्मायासंवृतानां त्वदधीनमायाच्छन्नानामित्यर्थः। तर्हि मम स्वरूपं के जानन्तीत्यपेक्षायामाह—त्वन्नाम स्मरतामित्यादि। चित् आत्मा स्वरूपं यस्य स तथा।

८। नरो०। कस्मान्मां भवन्तः स्तुवन्ति इत्यपेक्षायामाह—रावणेनेत्यादि।

९। नरो०। सत्यपथीति अत्र 'ऋगादेरत् सर्वत्रे'त्यादिना प्राप्तोऽत्प्रत्यय'स्ते चानित्या' इत्यनेन निषिद्धः।

---

मायागुणास्पृष्टः, अत एव सदा बुद्धः ज्ञानस्वरूपः, अत एव मुक्तोऽसंसारी, अगुणः अद्वय इति च्छेदः। रा०।

[ नित्यो जन्मादिहीनः, एकः सजातीयभेदरहितः, सदोदितः लयहीनः, सदा शुद्धः निर्लेपत्वात्, सदा बुद्धो ज्ञानघनत्वात्, सदा मुक्तो मायासङ्गाभावात्। 'विद्यामयो यः स तु नित्यमुक्तः' इति श्रीभागवतोक्तेः। गुणोदयः गुणानामुदयो यस्मात् सः। गो० ]

लोकानाम् आदिरन्तोऽसीति

अन्ते चाऽऽदौ च लोकानां दृश्यसे त्वं परन्तप।
प्रभवं निधनं चापि न विदुः को भवानिति ॥ ६।१०२।२०

परमाख्यं परं यच्च त्वमेव परिगीयसे।
स्थित्युत्पत्तिविनाशानां त्वामाहुः परमां गतिम् ॥ ६।१०२।२९

इत्यादिना वाल्मीकीये तत्प्रकारस्य स्पष्टं कारणमुक्तम्।

७। त्वन्मायया संवृतानां संवृतज्ञानानाम्। चिदात्मकः शुद्धज्ञानस्वरूपः। रा०।

[ ननु मानुषमात्रस्य मम कथमियं स्तुतिः क्रियते इति चेत्तत्राऽऽह—त्वन्मायेत्यादि। मानुषविग्रह इव विग्रहो यस्य स तथा। गो० ]

८। तेजसा सह स्थानं हृतं तेजोऽपि हृतं स्थानञ्चेत्यर्थः। रा०।

---

1. क-ख-ग-घ-च 'सत्यपथे', ङ 'सत्यपदे'।

ब्रह्मोवाच—

[1]वन्दे देवं विष्णुमशेषस्थितिहेतुं त्वामध्यात्मज्ञानिभिरन्तर्हृदि भाव्यम् ।
[2]हेयाहेयद्वन्द्वविहीनं परमेकं सत्तामात्रं सर्वहृदिस्थं दृशिरूपम् ॥ १० ॥
प्राणापानौ निश्चयबुद्ध्या हृदि [3]रुद्ध्वा छित्वा [4]सर्वं संशयबन्धं विष[5]यौघान् ।
[6]पश्यन्तीशं [7]यं गतमोहा [8]यतयस्तं वन्दे रामं रत्नकिरीटं रविभासम् ॥ ११ ॥

---

१० । नरो० । विष्णुं सर्वव्यापकम् । अशेषस्थितिहेतुं सर्वजीवनकारणम् । अन्तर्हृदि अन्तःकरणे भाव्यं ध्येयम् । हेयाहेयद्वन्द्वविहीनं प्रतिकूलानुकूलयुग्मरहितमित्यर्थः, अनुपादेयोपादेययुग्मरहितमित्यर्थो वा । परं परमात्मानम्, एकमद्वितीयम्, सर्वहृदिस्थं सर्वान्तर्यामिणम्, अत एव दृशिरूपं दृग्रूपमित्यर्थः ।

११ । नरो० । प्राणापानाविति । प्रागननवान् वायुः प्राणो नासिकादिस्थानवर्त्ती, अवागननवान् अपानः पाय्वादिस्थानवर्त्ती । गतमोहा विवेकिनः । रत्नखचितं किरीटं यस्य तम् । अत एव रवेरिव भा दीप्तिर्यस्य यस्मिन् वा तम् ।

---

१० । अशेषस्य स्थितिकारणम् । अध्यात्मज्ञानिन आत्मविषयतत्त्वज्ञानवन्तः । हेये सुखदुःखे तत्साधने तद्रूपद्वन्द्वविहीनम्, कूटस्थत्वात् सत्तामात्रम्, सर्वस्य हृदि तिष्ठतीति व्यवहारनियामकम्, दृशिर्ज्ञानम् 'इक् कृष्णादिभ्यः' इति इक्प्रत्ययः । रा० ।

[ स्वप्रार्थितं निःशेषं सम्पादितमिति ब्रह्मा अतिहर्षभक्तिभ्यां श्रीराममष्टभिः श्लोकैः स्तौति—वन्दे इत्यादि । त्वां रामं वन्दे । ननु त्वं पितामहः सर्वस्रष्टा कथमत्यन्तमर्वाचीनं मानुषं मां वन्दसे इत्याह—विष्णुमिति । विष्णुं ममापि जनकम् । ननु स पृथगेव कथमहम् ? तत्राऽऽह—न केवलमेतावत् अशेषस्थितिहेतुम्, अतः स एव त्वं न पृथक् । अध्यात्मज्ञानिभिः अन्तर्हृदि हृदयमध्ये भाव्यम् । हेयं निन्द्यं दुःखादि, अहेयं सुखादि । यद्वा हेयमसत् कार्यम्, अहेयं सत् कारणम्, यद्वा हेयं पापम् अहेयं पुण्यम्, तयोर्द्वन्द्वं तेन विहीनं नित्यानन्दमयत्वाद् ब्रह्मत्वाद् नित्यमुक्तत्वाच्च । तत्र हेतुः—परं सर्वप्रत्यक्षम् । एकमद्वितीयम् । तत्रापि हेतुः—सत्तामात्रम्, केवलभावरूपं सर्वान्तर्यामिणम् । ननु सर्वहृदिस्थत्वात् तद्दोषप्रसक्तिः स्यात्तत्राऽऽह—दृशिरूपं ज्ञानरूपम्, न हि ज्ञानस्वरूपस्य आसक्तिः कुत्राप्यस्तीत्यर्थः । गो० ]

११ । निश्चयबुद्ध्या हठयोगेनावश्यं भगवन्तं ज्ञास्यामीत्येवंरूपेण कुम्भकेन हृदि प्राणापानौ रुद्ध्वा सञ्चारहीनौ कृत्वा । तत्र प्राण ऊर्ध्वसञ्चारी अपानोऽधश्चारी । श्रवणादिभिरीश्वरविषयं

---

1. च-छ 'रामं' । 2. च 'हेयाहेय-' । 3. क-ग 'रुद्धा' । 4. छ 'सर्वसंशयबन्धविषयी-' । 5. च '-यौघम्' । 6. च 'पश्यन्ति त्वा' । 7. छ 'सङ्गत-' । 8. च 'हृदयस्थ' ।

मायातीतं माधवमाद्यं जगदादिं [1]मनोऽतीतं मोह[2]विनाशं मुनिवन्द्यम् ।
योगिध्येयं [3]योगविधानं परिपूर्णं वन्दे रामं रञ्जितलोकं रमणीयम् ॥ १२ ॥

१२ । नरो० । मा लक्ष्मीस्तस्या धवो माधवस्तम् । जगदादिं जगत्कारणम् । मनोऽतीतं श्रवणमननादिभिरसंस्कृतमनोऽगोचरमित्यर्थः । मोहविनाशम् अज्ञाननाशकम्, अतो मुनिवन्द्यम् । योगविधानं योगविधातारम्, अतो योगिध्येयम् । परिपूर्णं सुखेच्छादुःखनाशेच्छाशून्यमित्यर्थः, वृद्धिपरिणामापक्षयशून्यमित्यर्थो वा ।

संशयबन्धम् ईश्वरोऽस्ति न वा ज्ञानरूपो वा शरीरी वेत्यादिसंशयरूपबन्धनम्, एवंसंशयस्यैव संसारमूलकारणत्वात् । विषयौघांश्च छित्त्वा ततोऽन्तःकरणं विमुखं कृत्वा तत्रेश्वरविषयसन्देहस्य श्रवणादिना छेदः, विषयाणां चानित्याशुचित्वप्रतिसन्धानेन त्यागः । गतमोहास्त्यक्ततमसो यं पश्यन्ति तं रामं वन्दे इत्यन्वयः । रा० ।

[ प्राणापानाविति । निश्चयबुद्ध्या निश्चयात्मिकया बुद्ध्या । प्राणः प्राणवायुः, अपानः अधोवृत्तिर्वायुः, तौ हृदि रुद्ध्वा स्थिरीकृत्य सर्वं संशयबन्धं संशयरूपबन्धनम् । विषयौघान् विषयसमूहान् । यद्वा विषयेषु ये आवेगास्तांश्च जित्वा गतमोहा यमीशं हृदि पश्यन्ति तं रामं वन्दे । रत्नमयं किरीटं यस्य, रवेरिव भा दीप्तिर्यस्य । यद्वा रविमपि भासयति यस्तम्, 'तस्य भासा सर्वमिदं विभाति' ( कठ० ५।१५ ) इति श्रुतेः ।

१२ । मायातीतं तद्गुणास्पृष्टम् । आद्यमित्यस्यैव विवरणं जगदादिमिति । मानातीतं देशकालकृतपरिच्छेदशून्यम् । मोहविनाशं सेवकानां मोहनाशकम् । योगविधानं योगविधातारं योगमार्गप्रवर्त्तकम् । रा० ।

[रामं वन्दे । कीदृशम् ? मायातीतं मायामतीत्य अतिक्रम्य वर्त्तमानम् । मा लक्ष्मीस्तस्या धवं कान्तम् । आद्यम् आदिरेव आद्यस्तं परब्रह्म । जगदादिं प्रधानम् । मानातीतम् अप्रमेयम् अनन्तत्वात् । यद्वा मीयते अनेन मानं शब्दः, 'तं त्वौपनिषदं पुरुषं पृच्छामि' ( बृहदा० ३।९।२६ ) इति श्रुतेः । तदतिक्रम्य वर्त्तमानं शब्दागोचरत्वात् । तथा च श्रुतिः—'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह ( तैत्ति० २।४।१ ) इति । यद्वा मानमिन्द्रियं तदतिक्रान्तम् इन्द्रियागोचरम् । मोहविनाशं मोहो हृद्गताहंमानस्तं विनाशयति तथा तम्, अतो मुनिभिर्वन्द्यम्, परमपुरुषार्थत्वात् । योगिध्येयं परमात्मत्वात् । योगनिधानं योगाधारम् । परिपूर्णमाप्तकामत्वात् । रञ्जितलोकं वशीकृतसर्वजनम् । रमणीयं सुन्दरम् । गो० ]

नरोत्तमानुरोधात् 'मनोऽतीतम्' इति पाठो मूले सन्निवेशितः, छन्दोऽनुरोधात् पुनः पादटीकायां धृतः 'मानातीतम्' इत्येव पाठः साधीयान् प्रतिभाति ।

1. क-ख-छ 'मानातीतं', छ 'मानाद्दीनं' । 2. क-छ '-विकाशं' । 3. क-छ 'योगि-' ।

भावाभावप्रत्ययहीनं भवमुख्यैर्भोगासक्तैरर्चितपादाम्बुजयुग्मम् ।
नित्यं शुद्धं बुद्धमनन्तं प्रणवाख्यं वन्दे रामं [1]वीरमशेषासुर[2]सारम् ॥ १३ ॥
त्वं मे नाथो[3] नाथितकार्याखिलकारी मानातीतो माधवरूपोऽखिलधारी ।
भक्त्या गम्यो भावितरूपो भवहारी योगाभ्यासैर्भावितचेतःसहचारी ॥ १४ ॥

---

१३ । नरो० । भावाभावप्रत्ययहीनं विनाशकारणरहितमित्यर्थः । भवमुख्यैः शिवाद्यैः । अशेषाणामसुराणां सारो बलं यस्मात्, अशेषेषु असुरेषु सारो बलं शक्तिर्वा यस्य तं तथा ।

१४ । नरो० । अखिलानि कार्याणि राजदन्तादित्वात् कार्याखिलानि, तानि करोतीति कार्याखिलकारी, नाथितः कार्याखिलकारी नाथितकार्याखिलकारी । माधवरूपो नारायणस्वरूपः । भावितं ध्यातं रूपं यस्य तादृशः सन् भवहारी संसारभयनाशकारी । भावितं शोधितं यच्चेतस्तेन सह चरितुं शीलं यस्य स तथा ।

---

१३ । भावाभावप्रत्ययहीनं संसारे मिथ्यात्वान्न तस्य भावप्रत्ययो नाप्यभावप्रत्ययः दृश्यत्वात् । तेनानिर्वचनीयत्वज्ञानविषयस्तस्य स इति सूचितम् । यद्वा अज्ञानाभावाभावप्रत्ययाविषयम्, शाश्वतः सत्त्वात् प्रत्यक्षेणानुपलम्भाच्च तत्त्वम् । यद्वा भावो दृश्यम् अभावस्तुच्छं तद्विषयज्ञानाविषयम् अदृश्यत्वादतुच्छत्वाच्च । भोगासक्तैर्भोगेष्वसक्तैस्त्यक्तभोगैर्भवमुख्यैः शिवादिभिः पूजितचरणकमलम्, नित्यं कालत्रयाबाध्यम्, शुद्धं मायादोषास्पृष्टम्, बुद्धं ज्ञानस्वरूपम्, अनन्तं देशाद्यपरिच्छेद्यम्, प्रणव आख्या नाम यस्य तं प्रणवाख्यम्, 'तस्य वाचकः प्रणवः' ( समाधिपा० १।२७ ) इति पातञ्जलसूत्रात् । अशेषासुरदावं सर्वदैत्यनाशकमित्यर्थः । रा० ।

[भावाभावप्रत्ययहीनम्, भावः सत् स्थूलम् अभावोऽसत् सूक्ष्ममतीन्द्रियम्, तयोः प्रत्ययः स्थूलसूक्ष्मबोधकं यज्ज्ञानं तेन हीनं तस्याप्यगम्यम् । यद्वा भावाभावप्रत्ययः कार्यकारणप्रतीतिः, तेन हीनं सर्वातीतत्वात् । यद्वा भावाभावशब्दाभ्यां सदसती, तत्र सत् कारणं महदादि, असत् अकार्यमाकाशादि, प्रतीयते साक्षाद् दृश्यतेऽसौ प्रत्ययो भौतिकप्रपञ्चः, तैर्हीनं व्यतिरिक्तम् । ननु तर्हि किं प्रधानम्? न; बुद्धं नित्यबोधरूपम्, तर्हि किं जीवः? न; शुद्धमविद्यासङ्गरहितम् । भवमुख्यैः शिवाद्यैः । भोगेषु असक्तैस्त्यक्तसर्वविषयैरर्चितं पादाम्बुजयुग्मं यस्य । नित्यं जन्मादिरहितम् । शुद्धं क्वचिदप्यनासक्तम् । बुद्ध नित्यज्ञानरूपम्, लयविक्षेपरहितम् । अनन्तं देशकालाभ्यां परिच्छेदरहितम् । प्रणवाख्यं प्रणवेनाऽऽख्यायते अभिधीयते प्रणवाख्यं परंब्रह्मवाच्यम् । धीरं मायागुणैरक्षोभ्यम् । अशेषानसुरान् दावयति नाशयतीति तम् । गो० ]

१४ । मे ब्रह्मणस्त्वं नाथः । नाथत्वमेवोपपादयति नाथितकार्याखिलकारी प्रार्थितसकल-

---

1. घ 'वीत-' । 2. क-ख-ग-घ-च-ङ '-दावम्' । 3. च '-थोऽर्थित-' ।

त्वामाद्यन्तं लोकततीनां परमीशं [1]लोकानां नो लौकिकमानैरधिगम्यम् ।
भक्तिश्रद्धाभावसमेतैर्भजनीयं वन्दे रामं सुन्दरमिन्दीवरनीलम् ॥ १५ ॥
को वा ज्ञातुं त्वाम[2]भिमानं गतमानं मानासक्तो माधव शक्तो मुनिमान्यम् ।
वृन्दारण्ये वन्दितवृन्दारकवृन्दं[3] वन्दे रामं भवमुखवन्द्यं सुखकन्दम् ॥ १६ ॥

---

१५। नरो०। आद्यन्तं जन्मकारणं विनाशकारणञ्चेत्यर्थः। लौकिकमानैर्लौकिक-पूजाभिः। लौकिकेति विशेषणाद् वैधपूजाव्यावृत्तिः। भक्तिश्रद्धाभावसमेतैरिति......।

१६। नरो०। अभिमानं ज्ञानस्वरूपम्। गतो मानो देहाभिमानो यस्मात् तं तथा।

---

कार्यकर्त्ता। अखिलशब्दस्य परनिपात आर्षः। मानातीतः देशतः कालतो रूपतश्चेत्येवं त्रिविध-परिच्छेदशून्यः। मा लक्ष्मीस्तस्या धवः पतिः, भक्त्याऽनन्यशरणरूपया गम्यः प्राप्यः। भावितरूपः सन् भवस्य संसारस्य हारी हर्त्ता, योगाभ्यासैर्भावितं विहीनदोषं तथा शुद्धं यच्चेतोऽन्तःकरणं तत्र सहचारी तद्वृत्तिविषय इत्यर्थः, 'दृश्यते त्वग्र्यया बुद्ध्या' ( कठ० ३।१२ ) इति श्रुतेः। रा०।

[ त्वं मे नाथ इति। त्वमेव मे मम नाथः स्वामी, यतो नाथितं प्रार्थितं यत् काय तदखिलं समग्रं कर्त्तुं शीलं यस्य स तथा। मानातीत इयत्तया अपरिच्छिन्नः, माधवरूपः लक्ष्मीकान्तरूपः, अखिलधारी सर्वाधारः, भक्त्या अगस्त्येन आ सर्वतोभावेन भावितं रूपं यस्य रामभक्तत्वात्। यद्वा अगं पापं स्त्यायति नाशयति अगस्त्यः, आ ईषदपि भक्त्या भावितं रूपं यस्य, एकदेशेन सम्बन्धो जन्ममरणनिवर्त्तकः (?)। योगाभ्यासैर्भावितं शुद्धं यच्चेतस्तत्र सहचारी सर्वदा वर्त्तमानः, एवम्भूतं रामं वन्दे इत्युत्तरेणान्वयः। गो० ]

१५। लोकततीनां परम्पराणाम् आद्यन्तं सृष्टिनाशहेतुम्, लोकानां परमीशं पालनहेतुम्, लौकिकमानैर्लौकिकैः प्रमाणैर्न अधिगम्यम् अज्ञेयं शास्त्रैकगम्यमित्यर्थः। भक्तिः परमेश्वरे तत्पूजादौ प्रीतिः श्रद्धा ततः फलावश्यम्भावनिश्चयः, तद्रूपैर्भावैश्चित्तधर्मैर्युक्तैः पुरुषैः सेव्यम्। रा०।

[ त्वामित्यादि। लोकततीनां लोकश्रेणीनाम् आद्यन्तम् आदिश्चासावन्तश्चेति तम्, सृष्टिलयहेतुम्। परं सर्वाराध्यम्, तत्र हेतुः—ईशं नियन्तारम्, लोकातीतं लोकस्य परभूतम्। तर्हि तत्सत्तायां किं मानम्? तत्राऽऽह—मीयते एभिरिति मानानि बुद्ध्यादीन्द्रियाणि लौकिकानि अस्मदादीनां यानि इन्द्रियाणि लक्षणया तत्प्रवृत्तयः, तैरधिगम्यम् अनुमेयम्, जडानां बुद्ध्यादीनां प्रवृत्तेश्चेतनाधिष्ठानं विनाऽनुपपत्तेः। इत्थमनुपपत्तिद्वारा सर्वप्रेरकत्वेम ईश्वरोऽनुमीयते। यद्वा बुद्ध्यादीनि कर्त्तृप्रयोज्यानि कारणत्वाद् वास्यादिवत् इत्यनुमानेन कर्त्ता करणप्रवर्त्तक ईश्वरोऽनु-मीयते। भक्तिश्च श्रद्धाभावश्च तद्युक्तैर्जनैर्भजनीयमीश्वरम्, इन्दीवरं नीलोत्पलं तद्वन्नीलम्। गो०]

१६। हे माधव, अतिमानं सर्वतोऽपि व्यापकं गतमानं स्वगतेयत्तयाऽपरिच्छेद्यमीदृशं त्वां ज्ञातुं मानासक्तः मानेषु प्रमाणेषु इन्द्रियेष्वसक्तः को वा शक्तः समर्थः। कृष्णावतारे वृन्दारण्ये

---

1. ग-च-छ 'लोकातीतं'। 2. घ '-ति-'। 3. क '-न्दैर्वं-'।

नानाशास्त्रैर्वेदकदम्बैः प्रतिपाद्यं नित्यानन्दं निर्विषयज्ञानमनादिम् ।
मत्सेवार्थं मानुष[1]भावं प्रतिपन्नं वन्दे रामं मरकतवर्णं [2]मथुरेशम् ॥ १७ ॥

---

मानासक्तो देहाभिमानासक्तः । मुनिमान्यं मुनिपूज्यम् । वन्दितं वृन्दारकवृन्दं देवसमूहो येन यस्माद्वा तं तथा । अत्र क्तप्रत्ययार्थोऽतीतत्वम......भुवो भारापहरणार्थं भक्तानुग्रहार्थञ्च वृन्दावनेऽपि त्वमेव अवतरिष्यसीति भावः । सुखकन्दं सुखमूलम्, अत एव भवमुखवन्द्यं शिवादिवन्द्यम् ।

१७ । नरो० । शास्त्रोपदेशं विना कथमेवं मां वदसीति चेत्तत्राऽऽह—नानाशास्त्रैरित्यादि । वेदकदम्बैर्वेदसमूहैः । तैः कानि स्वरूपाणि ममोपदिष्टानीत्यपेक्षायामाह—नित्यानन्दमित्यादि । नित्यश्चासावानन्दश्चेति तं तथा । निर्नास्ति विषयो यस्य तच्च तज्ज्ञानञ्चेति तत्तथा । निर्विषयत्वविशेषणाद् घटादिज्ञानव्यावृत्तिः । अन्यथा घटादिज्ञानसाक्षात्कारेऽपि मोक्षप्रसङ्गः स्यात्, विशेषाभिधानान्न पौनरुक्त्यम् । अनादिं सनातनम् ।

---

स्थित्वा मायया वन्दितं नमस्कृतं वृन्दारकाणां देवानां वृन्दं येन । भवमुख्यैः शिवादिभिर्वन्द्यं सुखकन्दं सुखजनकं त्वां वन्दे । रा० ।

[ को वेत्यादि । हे माधव, मानासक्तः मानाय ज्ञानाय आसक्तस्तत्परः सन् को जनस्त्वां ज्ञातुं शक्तः, न कोऽपीत्यर्थः । यद्वा को ब्रह्मा अहमपि किं शक्तो नैवेत्यर्थः । यतोऽतिमानं मानं ज्ञानम् अतिक्रम्य वर्त्तमानम् ओषधिज(?)मित्यर्थः, वृत्तिविषयत्वात् । भवः श्रीशिवः मुखमाद्यं येषां तैर्वन्द्यम् । सुखकन्दं सुखस्य निदानम् । गतमानं विक्षेपादिशून्यं जितेन्द्रियम्, मुनीनां सततं मननपरायणानां मान्यं पूज्यम् । वृन्दारण्ये नन्दितमानन्दितं वृन्दारकवृन्दं देवसमूहो येन । गो० ]

१७ । नानाशास्त्रैः निर्णीतार्था ये वेदकदम्बा वेदसमूहास्तैः प्रतिपाद्यम्, निर्विषयज्ञानं निर्विकल्पकज्ञानविषयम्, बाह्यविषयाविषयकज्ञानविषयमित्यर्थः । मत्सेवार्थं रावणादिवधेनेति शेषः । मथुरेशम् अग्रे शत्रुघ्नाय मथुराराज्यदानात्तत्त्वम्, कृष्णावताराभिप्रायेण च । रा० ।

[ पुनः श्रीकृष्णरूपेण प्रणमति—नानाशास्त्रैरिति । नानाशास्त्रैर्वेदकदम्बैश्च वेदसमूहैश्च प्रतिपाद्यम् । अयमर्थः—शैवादितन्त्रेषु शिवादिरूपेण, वेदेषु इन्द्रादिरूपेण त्वामेव सर्वदेवरूपं प्रतिपादयतीत्यर्थः । नित्यानन्दं निर्विषयज्ञानं विषयज्ञानान्निर्गतं तदगम्यम् । यद्वा निर्विकल्पज्ञानरूपम् । अनादिं सर्वकारणम् । मत्सेवार्थं मत्कर्तृकसेवैवार्थः प्रयोजनं यत्र तद्यथा स्यात्तथा मानुषभावप्रतिपन्नं प्राप्तम्, रावणादिवधः स्वेच्छयैव सिद्धत्वात् मया सेवा कर्त्तव्या एतदर्थमेव मानुषत्वं प्राप्तमिति भावः । मरकतं नीलमणिः तद्वद्वर्णः कान्तिर्यस्य तम् । मथुरेशं मथुराया ईश्वरम् । गो० ]

---

1. च '-भावप्रति-' । 2. ग 'सुखवेशम्' ।

श्रद्धायुक्तो यः पठतीमं स्तव[1]माद्यं ब्राह्मं ब्रह्मज्ञानविधानं भुवि मर्त्यः ।
रामं श्यामं कामितकामप्रदमीशं ध्यात्वा [2]ध्याता पातकजालैर्विगतः स्यात् ॥ १८ ॥

श्रुत्वा स्तुतिं लोकगु[3]रोर्विभावसुः स्वाङ्के समा[4]दाय विदेहपुत्रिकाम् ।
विभ्राजमानां विमलारुणद्युतिं रक्ताम्बरां दिव्यविभूषणा[5]न्विताम् ॥ १९ ॥

[6]प्रोवाच साक्षी जगतां रघूत्तमं [7]प्रपन्नसर्वार्त्तिहरं हुताशनः ।
गृहाण देवीं रघुनाथ जानकीं पुरा त्वया मय्यवरोपितां वने ॥ २० ॥

---

१८ । नरो० । कामितकामप्रदं वाञ्छितविषयप्रदम् ।

---

१८ । ब्राह्मं ब्रह्मकृतं ब्रह्मज्ञानविधानं तज्जनकं कामितकामप्रदम् अभीष्टवस्तुदातारम् । तादृशं ध्यात्वा यः पठति स ध्याता पुरुषः पातकजालैर्विगतो हीनः स्यात् । रा० ।

[ श्रद्धायुक्त इति । ब्राह्मं ब्रह्मप्रोक्तम् । कामितः अभिलषितो यः कामस्तं प्रददातीति तं रामं ध्यात्वा यः पठति पापसमूहैर्विगतो मुक्तः स्यात् । गो० ]

१९ । [ विभावसुरग्निः । हुताशन इति पुनरुक्तस्य विशेषणस्यायं भावः—यः खलु हुतमात्रम् अश्नाति दहति सोऽप्यग्निः स्वस्मिन् प्रविष्टां सीतां गृहीत्वा स्वयमुपस्थित इति आश्चर्यमेव । गो० ]

अत्राऽऽह वाल्मीकीये—

विधूमाग्निश्रितास्थान्तु जानकीमन्वरक्षत ।
उत्तस्थौ मूर्त्तिमानाशु गृहीत्वा जनकात्मजाम् ॥

तरुणादित्यसङ्काशां तप्तकाञ्चनभूषिताम् ।
रक्ताम्बरधरां बालां नीलकुञ्चितमूर्धजाम् ॥

अक्लिष्टमाल्याभरणां तथारूपां मनस्विनीम् ।
ददौ रामाय वैदेहीमङ्केनाङ्के विभावसुः ॥ इति ६।१०३।२-४।

२० । अग्निवाक्यं वाल्मीकीये—

अब्रवीच्च तदा रामं साक्षी लोकस्य पावकः ।
एषा ते राममहिषी पापमस्यां न विद्यते ॥
नैव वाचा न मनसा नैव बुद्ध्या न चक्षुषा ।
सुवृत्ता वृत्तसम्पन्ना न त्वामतिचरत्यसौ ॥

---

1. क '-नाद्यं' । 2. क-छ 'ध्यात्वा' । 3. च-छ '-रुर्वि-' । 4. ग '-धाय' । 5. ग-च-छ '-ञ्चिताम्' । 6. छ 'जगाद' । 7. च-छ 'प्रसन्न-

विधाय मायाजनकात्मजां हरे दशाननप्राणविनाशनाय च ।
हतो दशास्यः सह पुत्रबान्धवैर्निराकृतोऽनेन [1]भरो भुवः प्रभो ।
तिरोहिता सा प्रतिबिम्बरूपिणी कृता यदर्थं कृतकृत्यतां गता ॥ २१ ॥

ततोऽति[2]हृष्टां [3]परिगृह्य जानकीं रामः[4] प्रहृष्टः प्रतिपूज्य पावकम् ।
स्वाङ्के समावेश्य [5]सदाऽनपायिनीं श्रियं त्रिलोकी[6]जननीं श्रियः पतिः ॥ २२ ॥

[7]दृष्ट्वाऽथ रामं जनकात्मजायुतं श्रिया स्फुरन्तं सुरनायको मुदा ।
भक्त्या गिरा गद्गदया समेत्य कृताञ्जलिः स्तोतुमथोपचक्रमे ॥ २३ ॥

---

२१ । नरो० । प्रतिबिम्बरूपिणी छायासीता ।

---

रावणेनोपनीतैषा वीर्योत्सिक्तेन रक्षसा ।
त्वया विरहिता धीर विवशा निर्जनाद् वनात् ॥
रुद्धा चान्तःपुरे दीना त्वच्चिन्ता त्वत्परायणा ।
रक्षिता राक्षसीभिश्च विकृताभिः समन्ततः ॥
प्रलोभ्यमाना विविधं भर्त्स्यमाना च मैथिली ।
न चाप्यचिन्तयद्रक्षस्त्वद्गतेनान्तरात्मना ॥ इत्यादि ६।१०३।५-९ ।

२१ । मायाजनकात्मजां मायारूपां तां जनकात्मजासदृशीं मायया विधाय निर्मायेति यावत्, पुरा मय्यवरोपितामिति पूर्वेणान्वयः । इदानीं तन्निर्माणकृत्यस्य जातत्वात् मायानिर्मिता मयि लीनेत्याह—हत इति । अनेन दशास्यवधेन । प्रतिबिम्बरूपिणी सीता प्रतिबिम्बरूपा यदर्थं सा कृता निर्मिता तद्विषयतः कृतकृत्यतां गता अतस्तिरोहिता लीना । रा० ।

[ हतो दशास्य इति, अनेन दशास्यवधेन भुवो भरो भारो निराकृतः दूरीकृतः । प्रतिबिम्बरूपिणी छायासीता यदर्थं यन्निमित्तं कृता निर्मिता तत्र कृतकृत्यतां सम्पादितकर्त्तव्यतां प्राप्ता । गो० ]

२२ । भागवते सीतासकाशे हनूमत्प्रेषणादि सीताग्निप्रवेशान्तं वृत्तं न दृश्यते । तत्र

ततो ददर्श भगवानशोकवनिकाश्रमे ।
क्षामां स्वविरहव्याधिं शिंशपामूलमाश्रिताम् ॥
रामः प्रियतमां भार्यां दीनां वीक्ष्यान्वकम्पत ।
आत्मसन्दर्शनाह्लादविकसन्मुखपङ्कजाम् ॥ इति ९।१०।३०-३१ ।

---

1. ग-च 'भुवो भर.', घ 'भर: प्रभो भुव.' । 2. ग-च-छ '-हृष्टः' । 3. ग-च-छ 'प्रति-' । 4. ग-च-छ '-मसदा तत्' । 5. च 'मुदा-' । 6. च-छ 'की ज-' । 7. छ 'दृष्ट्वा च' ।

[1]इन्द्र उवाच—

भजेऽहं[2] सदा राममिन्दीवराभं भवारण्यदावान[3]लाभाभिरामम् ।
भवानीहृदा भावितानन्दरूपं भवाभावहेतुं भवादिप्रपन्नम् ॥ २४ ॥
सुरानीकदुःखौघनाशैकहेतुं नराकारदेहं निराकारमीड्यम् ।
परेशं परानन्दरूपं वरेण्यं हरिं राममीशं भजे [4]भारनाशम् ॥ २५ ॥

---

२४ । नरो० । इन्दीवरस्येव आभा यस्य तं तथा । एतेन नयनप्रीतिकरत्वं सूचितम् । भव एव अरण्यं तस्य दावानलो वनाग्निस्तस्येव आभा यस्य स चासौ अभिरामश्चेति तं तथा । एतेन निर्वाणमुक्तिदातृत्वं सूचितम् । भावितं ध्यातम् आनन्दरूपम् आनन्दजनकं रूपं यस्य तं तथा । भवानीहृदा भावितानन्दरूपमित्यनेन भवादिप्रपन्नमित्यनेन च विश्वोपास्योपास्यत्वमुक्तम् । भवाभावहेतुं विश्वस्य जन्मविनाशकारणमित्यर्थः । एतेन सृष्टेः प्रागपि वर्त्तमानत्वं सूचितम् ।

२५ । नरो० । कुतो मां स्तौषीति चेदाह—सुरानीकदुःखौघनाशैकहेतुमिति । देवसमूहस्य दुःखसमूहस्य नाशस्य प्रधानकारणमित्यर्थः । दशरथपुत्रं मनुष्यं मां कथं स्तौषीति चेत्तत्राऽऽह—नराकारदेहमिति । तर्हि पूर्वं किमाकारः स्थितोऽहमित्यत आह—निराकारमिति, आकारशून्यमित्यर्थः । तथाऽपि स्तुत्यमेव स्तुवन्तीत्यत आह—ईड्यमिति । ईड्यत्वे हेतुर्वरेण्यमिति, उत्तममित्यर्थः । वरेण्यत्वे हेतवः—परेशं ब्रह्मादीनामपीशमित्यर्थः । कर्त्तु...र्थं भारनाशं भुव इति शेषः ।

---

२४ । इन्दीवरं नीलोत्पलं तदाभं तत्कान्तिम् । भवारण्यस्य संसारारण्यस्य दावानलाभं तत्तुल्यं तन्नाशकत्वादभिधानं नाम यस्य तम् । भवानीहृदा पार्वतीहृदयेन भावितं ध्यातम् आनन्दरूपं यस्य तम् । भवाभावहेतुं संसारनिराकरणम् । भवादिभिः प्रपन्नं सेवितम् । रा० ।

[ अतिहर्षभरकन्दलितान्तरात्मा इन्द्रः श्रीरामं स्तौति—भजेऽहमित्यादिना । एवम्भूतं राममहं भजे । भवः संसार एवारण्यम् असंख्यत्वात्, तत्र दावानलाभं वनाग्नितुल्यमभिधानं नाम यस्य, नाममात्रेण संसारनाशकत्वात् । भवान्या हृदा भावितं चिन्तितमानन्दमयं रूपं यस्य । भवाभावहेतुं भवस्य पुनःपुनर्जन्ममरणरूपस्याभावो यस्मात् भवाभावो मोक्षस्तस्य हेतुं कारणम् । यद्वा भवाभावः पुनःसंसारनिवृत्तिस्तस्य हेतुम्, 'तमेव विदित्वाऽतिमृत्युमेति' ( श्वेताश्व० ३।८ ) इति श्रुतेः । भवः शिवस्तदादिभिः प्रपन्नं सेवितम् । गो० ]

२५ । सुरसमूहस्य यो दुःखौघो दुःखसमूहस्तन्नाशस्य मुख्यकारणम्, नराकारदेहं माययेति शेषः, वस्तुतो निराकारम् ; ईड्यं स्तुत्यम् । परेषां ब्रह्मादीनामपीशम्, वरेण्यं श्रेष्ठम्, भारनाशं भूभारनाशकम् । रा० ।

---

1. ङ 'देवराज उवाच' । 2. ङ '-ऽय' । 3. ग '-ल वाऽभि-', क-ख-घ-च-ङ '-लाभाभिधानम्' । 4. ग 'भावनीयम्' ।

प्रपन्नाखिलानन्द[1]देहं [2]प्रपन्नं प्रपन्नार्त्तिनिःशेषनाशाभि[3]धेयम् ।
तपोयोगयोगीश[4]भावाविभाव्यं कपीशादिमित्रं भजे राम[5]मित्रम् ॥ २६ ॥

२६। नरो०। प्रपन्नानां शरणागतानाम् अखिल आनन्दो यस्मात् तादृशो देहो यस्य तं तथा। प्रपन्नानामार्त्तानाम् आर्त्तेर्निःशेषेण नाशो यस्मात् स तथा, सः अभिधेयं नाम यस्य तं तथा। एतद्विशेषणेन ..न्यस्यापि सम्भवतीति न तत्र चित्रमिति चेत्तत्राऽऽह—तपोयोगयोगीश-भावाविभाव्यमिति। स्वर्गादिफलोपायभूतेन तपोयोगेन ये योगीशास्तेषां भावेन मनसा अविभाव्यं ध्यातुमशक्यमित्यर्थः। तर्हि मद्भजनं निरर्थकमिति चेत्तत्राऽऽह—कपीशादिमित्रमिति। एतेनातिदयालुत्वं सूचितम्।

[ सुरानीकेत्यादि। रामं भजे। कीदृशम्? सुरानीकस्य यो दुःखौघो दुःखसमूहस्तस्य नाशस्य एकहेतुमद्वितीयकारणम्, एको मुख्यो हेतुरिति वा। आकारः करचरणादिः, तद्रहितो देहो मूर्त्तिर्यस्य स तम्। तथाच श्रुतिः—'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' (श्वेताश्व० ३।१९) इत्याद्या। ननु किं न तर्हि पिण्डवन्नेत्याह—निराकारम्। आक्रियते व्यज्यते अनेन आकारः संस्थानम्, निर्गत आकारो यस्मात् स निराकारस्तम्, आकाशवदमूर्त्तित्वात्। तथाच श्रुतिः—'आकाशशरीरं ब्रह्म' (तैत्ति० १।६।२) इति। ईड्यं स्तुत्यम्, तत्र हेतुः—परेशमिति। परेषां ब्रह्मादीनामपि ईशम् ईश्वरम्। परम् आनन्दरूपम् अखण्डानन्दघनम्, ब्रह्मत्वात्। तथाच श्रुतिः—'विज्ञानमानन्दं ब्रह्म' (बृहदा० ३।९।२८) इति। वरेण्यं सर्वैर्वरणीयम्, सर्वार्थदत्वात्। हरिं संसारहेतुम् (?)। ईशं पालयितारम्, स्वामित्वात्। भारं पृथिवीभारभूतं रावणादिं नाशयतीति भारनाशम्। गो० ]

२६। प्रपन्नेति। शरणागतानामखिलानन्ददातारम्, प्रपन्नं भक्तैरिति शेषः, प्रपन्ना-नामार्त्तीनां निःशेषं यथा भवति तथा नाशं नाशकृत् अभिधानं नाम यस्य, तपसा शमदमादिना योगो येषां तादृशैर्योगीशैर्भावेन सत्तया तद्रूपेणाभिभाव्यं ध्येयम्, कपीशः सुग्रीवः, आदिना विभीषणस्तन्मित्रं राममित्रं रामरूपं सूर्यम्। रा०।

[ प्रपन्नेत्यादि। रामचन्द्रं भजे। राममित्रमिति पाठः। राम एव मित्रः सूर्यः, भय-तमोनाशकत्वात्। प्रपन्नानामखिलानामानन्दं दोग्धि पूरयतीति तम्, प्रपन्नानां या आर्त्तिस्तां निःशेषं नाशयतीति प्रपन्नार्त्तिनिःशेषनाशम् अभिधेयं नाम यस्य तथा तम्। तपश्च अनशनादि-योगश्च ताभ्यां योगीशैर्भावेन भक्त्या आ सम्यग् विभाव्यं चिन्तनीयम्। कपीशः सुग्रीवस्तदाद्या मित्राणि सखायो यस्य तम्। गो० ]

1. क-ख ग च-छ '-दोह'। 2. ग-च 'प्रसन्न'। 3. क-ख-घ-छ '-धानम्। 4, ग '-चेतोवि-', घ 'भावाभि-'। 5. च '-चन्द्रम्'।

सदा भोगभाजां सुदूरे विभान्तं [1]सदा योगभाजामदूरे विभान्तम् ।
चिदानन्दकन्दं सदा राघ[2]वेशं विदेहात्मजानन्दरूपं प्रपद्ये ॥ २७ ॥
महायोगमायाविशे[3]षानुयुक्तो विभासीश लीलानराकार[4]वृत्तिः ।
[5]त्वदानन्दलीलाकथा[6]पूर्णकर्णाः [7]सदानन्दरूपा भवन्तीह [8]लोके ॥ २८ ॥

---

२७। नरो०। तर्हि केषामसन्निहितः केषां वा सन्निहितोऽहमित्यपेक्षायामाह—सदेत्यादि। भोगभाजाम् ऐहिकपारलौकिकविषयभोगभाजां सुदूरेऽतिदूरे। योगभाजां समाधियोगभाजाम्। मद्भजनेन किं लभ्यमिति चेत्तत्राऽऽह—चिदानन्दकन्दमिति, ज्ञानसुखमूलमित्यर्थः। ज्ञानदातृत्वमानन्ददातृत्वञ्च तवैवेति भावः। रघुवंशजातस्य ममातिस्तुतिः कथं क्रियते इत्यत आह—राघवेशमिति।

२८। नरो०। तर्हि कथं मम प्रयोजनवत्त्वमित्यत आह—महेत्यादि। योगमाया अचिन्त्यशक्तिः। त्वदानन्दलीलेत्यादि। आनन्दजनिका या लीलाकथास्ताभिः पूर्णाः कर्णा येषां ते तथा। अत एव आनन्दपूर्णं रूपं शरीरं येषां ते तथा। 'पूर्वार्थे'त्यादिना पूर्णपदलोपः। आनन्दि इति पाठो वा।

---

२७। भोगभाजां भोगिनां संसारिणां सुदूरे विभान्तं तज्ज्ञानाविषयमिति यावत्। योगिनां सदा अदूरे विभान्तम्, तेषां सर्वदा आत्मत्वेन ज्ञानविषयमित्यर्थः। चिदानन्दकन्दं चितश्चैतन्यस्य आनन्दस्य कन्दम्, सर्वचेतनानां सर्वानन्दानां तन्मूलकत्वात्; 'एतस्यैवाऽऽनन्दस्य अन्यानि भूतानि मात्रामुपजीवन्ति' ( बृहदा० ४।३।३२ ) इति श्रुतेः। राघवेशं रघुवंशस्वामिनम्। विदेहात्मजानन्दरूपं जानक्या आनन्दरूपं सर्वानन्दप्रदम्। रा०।

[ सदेत्यादि। राघवेशं रघूणामीशम्, कर्मधारयो वा। सदा भोगं विषयं भजन्ते ये तेषाम्, सुदूरे मनोबुद्ध्योरगोचरे विभान्तं प्रकाशमानम्। तदुक्तम्—

विषयाविष्टचित्तानां विष्णुरेष सुदूरतः।
वारुणीदिग्गतं वस्तु व्रजन्नैन्द्रीं किमाप्नुयात्॥

इति। मुदा हर्षेण ये [योगं] भजन्ते तेषामदूरे निकटे हृदये एव विभान्तं विशेषेण प्रकाशमानम्। चिच्च आनन्दश्च तयोः कन्दं मूलम्। विदेहात्मजा सीता तस्या मूर्त्तमानन्दम्। गो० ]

२८। महेति। महती योगमाया तद्गुणविशेषैः सत्त्वादिभिरनुयुक्तः, यथा जवाकुसुमयुक्तः स्फटिको रक्तो भाति, तथा तदनुयोगाल्लीलया नराकारा वृत्तिश्चेष्टा यस्य तादृशो विभासि, तव या आनन्देन लीलास्तत्कथाभिः पूर्णाः कर्णा येषां ते सदा आनन्दरूपा इह लोके भवन्ति। रा०।

---

1. ग-च 'मुदा'। 2. ग-च '-वेन्द्र'। 3. च 'षार्य-'। 4. च '-मूर्त्ति'। 5. ग 'मुदा-'। 6. ग '-कर्णपूर्णाः'। 7. ख 'मुदा-'। 8. च 'सर्वे'।

[1]अहंमान[2]पानादि[3]मत्त. प्रमत्तो न [4]वेदाखिलेशाभिमानाभिमानः ।
इदानीं भवत्पादपद्मप्रसादात् त्रिलोकाधिपत्याभिमानो विनष्टः ॥ २९ ॥
स्फुर[5]द्रत्नकेयूरहाराभिरामं धराभारभूतासुरानीकदावम् ।
शरच्चन्द्रवक्त्रं लसत्पद्मनेत्रं दुरा[6]वारपारं भजे राघवेशम् ॥ ३० ॥

२९ । नरो० । तर्हि त्वं मां कथं न भजसीत्यत आह—अहंमानपानादिमत्त इत्यादि । अहंबुद्धिमधुपानादिभिरुद्धत इत्यर्थः । अत एव प्रमत्तः प्रमादाश्रय इत्यर्थः । ज्ञानाभावे हेत्वन्तरमाह—अखिलेशाभिमानाभिमान इति । अहमखिलेश इत्यभिमानो बुद्धिरखिलेशाभिमानः, तेन अभिमानो दर्पो यस्य स तथा । अतः परं भक्ष्यामीत्याह—इदानीमिति ।

३० । नरो० । अतिहर्षात् पुनः स्तौति—स्फुरदिति त्रिभिः । रत्नखचिते केयूरे रत्नकेयूरे च हारश्च ते रत्नकेयूरहाराः, स्फुरन्तश्च रत्नकेयूरहाराश्चेति तैरभिरामो मनोहरस्तं तथा, एतेन दर्शनाद् ध्यानाच्च मनःप्रीतिकरत्वं सूचितम् । धराया भारभूतं यदसुरानीकम् असुरसमूहस्तस्य दावम् अरण्यवह्निम् , एतेन कृतनिरुपद्रवसुरादिकत्वं पृथिव्याः स्वास्थ्यकारकत्वं वा सूचितम् । शरच्चन्द्र इव वक्त्रं यस्य तम्, एतेन मुखस्य सौन्दर्यातिशयः सूचितः । लसत्पद्मे इव नेत्रे यस्य तं तथा, एतेन नेत्रसौन्दर्यातिशयः सूचितः । दुरावारं दुष्प्रापं पारमन्तो यस्य तम् , एतेन देशकालाद्यपरिच्छिन्नत्वं सूचितम् ।

[ ननु देवेन्द्रस्त्वं मां मानुषं कथं स्तौषीति चेत्तत्राऽऽह—महेत्यादि । महती अचिन्त्या सर्वविषयव्यापिनी या योगरूपा माया अघटनघटनापटीयसी शक्तिः, सैव विशेषोऽर्थोऽर्थसाधनं तेन युक्तः । लीलया नराकारा मूर्त्तिर्यस्य तथाभूतः सन् विभासि, तस्मात्त्वं मानुषः । गो० ]

२९-३० । अहंमानोऽहङ्कारस्तद्रूपं पानं सुरादिकर्म । ल्युडन्तः । तेनाभितो मत्तः, अत एव प्रकर्षेण मत्तः । अखिला ये ईशा भूम्यादेस्तदभिमानेन तुल्योऽभिमानो यस्य तादृशोऽहं त्वां न वेद न जानामि, त्रिलोके यदाधिपत्यं तत्प्रयुक्तोऽभिमानो विनष्टो गतः । स्फुरद्रत्नकेयूरहारैरभिरामं जनमनोहरम् । धरायाः पृथ्व्या भारभूता ये असुरा दैत्यास्तदनीकस्य दावाग्नितुल्यम् । दुरापः दुःखेन प्राप्यः अवारपारो यस्य तम् । पृषोदरादित्वाद् वर्णलोपः । रा० ।

[ अस्मदादिजेतृरावणवधेन प्राप्तप्रत्ययस्त्वामहं ब्रह्मस्वरूपं ज्ञात्वा नष्टाभिमानस्त्वां भजे इति पद्यद्वयेनाऽऽह—अहमिति । योऽहं प्राक् मानो गर्वः पानममृतादेर्मादकस्य, ताभ्यां मत्तः, अतः प्रमत्तोऽनवहितस्त्वां न वेद न ज्ञातवान् । अज्ञाने हेत्वन्तरमाह—अखिलेशाभिमानः सकललोकेश्वरोऽहमिति अभिमानो यस्य सः (?) । इदानीं रावणवधे तव पादपद्मप्रसादात् त्रिलोक्याधिपत्येन योऽभिमानः गर्वः स विनष्टो यस्य सः (?) । तथाभूतः सन् राघवेशं त्वां

1. च 'अहङ्कारपानादि-' । 2. क-ख-घ '-पानाभि-', छ '-यानाति-' । 3. क-ख-घ-च '-मत्तप्रम-', ग-छ 'मत्तः प्रमत्तं' । 4. क 'वेदादि-' । 5. छ '-न्नेल-' । 6. ग '-पारपार' ।

सुराधीश[1]नीलाभनीला[2]ञ्जकान्तिं विराधादिरक्षोवधाल्लोकशान्तिम् ।
किरीटादिशोभं [3]पुरारातिलाभं [4]भजे रामचन्द्रं रघूणामधीशम् ॥ ३१ ॥
लसच्चन्द्रकोटिप्रकाशादिपीठे समासीनमङ्के समाधाय सीताम् ।
स्फुरद्धेमवर्णां तडित्पुञ्ज[5]भासं भजे रामचन्द्रं [6]निवृत्तार्त्तितन्द्रम् ॥ ३२ ॥
ततः प्रोवाच भगवान् भवान्या सहितो भवः ।
रामं कमलपत्राक्षं विमानस्थो नभःस्थले ॥ ३३ ॥

---

३१ । नरो० । सुराधीशनीलस्येव इन्द्रनीलमणेरिव आभा यस्य तम्, नीलाब्जस्येव कान्तिर्यस्य तम् । एताभ्याम् अनन्यसाधारणकत्वं सूचितम् । किरीटादिना शोभा यस्य तम् । पुरारातिलाभमिति, पुरारातिः शिवः ।

[ लङ्काकाण्डे त्रयोदशाध्यायव्याख्या समाप्ता ॥ १३ ॥ ]

---

भजेऽहं राघवेति वा । ईशमीश्वरम् । कीदृशम् ? स्फुरन्ति रत्नानि यत्र, एवम्भूताभ्यां केयूराभ्याम् अङ्गदाभ्यां हारेण चाभिरामं मनोहरम् । यद्वा एवम्भूतकेयूरहाराणामभिरामः शोभा यस्मात् । धराया भारभूतस्य असुरनिकरस्य दावं वनाग्निवद्दाहम्, 'वने च वनवह्नौ च दवो दावश्च कीर्त्तितः' इति कोषः । दुरापारपारं दुरापारः अपारः, अर्थात् संसारस्तस्य पारं पारे वर्त्तमानम्, प्रपञ्चातीतत्वात् । गो० ]

३१ । सुराधीशनील इन्द्रनीलमणिः अभ्रञ्च तद्वन्नीला अङ्गकान्तिर्यस्य तम् । लोकशान्तिं लोकानां शान्तिः सुखं यस्मात् तम् । किरीटादिभिः शोभा यस्य तम् । पुरारातेर्लाभभूतं यत्नप्राप्यनिध्यादिसदृशम् । रा० ।

[ सुराधीशेत्यादि । सुराधीशनील इन्द्रनीलमणिः स च अभ्रं मेघश्च, तद्वन्नीला अङ्गस्य कान्तिर्यस्य । किरीटादेः शोभा यस्मिन् । पुरारातेः शिवस्य लाभम्, हृदये निरन्तरप्रकाशमानत्वेन परमपुरुषार्थसिद्धिरूपत्वात् । एवंभूतं रामचन्द्रं भजे । गो० ]

३२ । लसच्चन्द्रकोटिप्रकाशादि यत्र तादृशे पीठे उक्तविशेषणां सीतामङ्के समाधाय गृहीत्वा समासीनम् । निवृत्ते आर्त्तितन्द्रे दुःखालस्ये यस्मात् तं सदा प्रकाशरूपमित्यर्थः । रा० ।

[ लसच्चन्द्रेति । रामचन्द्रं भजे, लसद्देदीप्यमानश्चन्द्रकोटिवत् प्रकाशो दीप्तिर्यस्य तादृशे आदिपीठे योगपीठे सीतामङ्के समाधाय कृत्वा समासीनम् । सीतां वर्णयति स्फुरद्देदीप्यमानं यद्धेम सुवर्णं तद्वद् वर्णो यस्यास्ताम् । गो० ]

३३ । भवः शिवः नभःस्थले आकाशे विमाने स्थितः सन् प्रोवाचेत्यन्वयः । रा० ।

---

1. क-ख-घ-च-छ '-लीलाभनीलाङ्ग-' । 2. ग '-ङ्गका-' । 3. च 'पुराद्यादि-' । 4. च 'रघूणामधीशं भजे रामचन्द्रम्' । 5. ख-च '-भासां' । 6. छ 'रघूणामधीशम्' ।

आगमिष्याम्ययोध्यायां द्रष्टुं त्वां [1]राज्यसत्कृतम् ।
इदानीं पश्य पितरमस्य देहस्य राघव ॥ ३४ ॥
ततोऽपश्यद् विमानस्थं रामो दशरथं पुरः ।
ननाम शिरसा पादौ मुदा भक्त्या सहानुजः ॥ ३५ ॥
आलिङ्ग्य मूर्ध्न्यवघ्राय रामं दशरथोऽब्रवीत् ।
तारितोऽस्मि त्वया वत्स संसाराद् दुःखसागरात् ।
इत्युक्त्वा पुनरालिङ्ग्य ययौ रामेण पूजितः ॥ ३६ ॥

---

अत्रेदं शिववाक्यं वाल्मीकीये ब्रह्मवाक्यम् । तथाच—

एतच्छ्रुत्वा शुभं वाक्यं राघवस्य महात्मनः ।
ततो रामं शुभं वाक्यं व्याजहार पितामहः ॥ ६।१०४।१ ।

* * * * *

एष राजा विमानस्थः पिता दशरथस्तव ।
काकुत्स्थ मानुषे लोके गुरुस्तव महायशाः ॥
इन्द्रलोकं गतः श्रीमांस्त्वया पुत्रेण तारितः ।
लक्ष्मणेन सह भ्रात्रा त्वमेनमभिवादय ॥ इति ६।१०४।८-९ ।

पाश्चात्ये वाल्मीकीये पुनः शिववाक्यमेव । तथाच—

एतच्छ्रुत्वा शुभं वाक्यं राघवेणानुभाषितम् ।
ततः शुभतरं वाक्यं व्याजहार महेश्वरः ॥ इति ६।१२१।१ ।

३४ । अस्य तव देहस्य पितर जनयितारम् । रा० ।

[ पितरमस्य देहस्येति । दृश्यमानदेहस्यैव पितरं पितृव्यपदेशं न जगज्जनकस्येत्यर्थः । गो० ]

३५ । सहानुजः सहलक्ष्मणः पादौ स्पृष्ट्वा शिरसा ननामेत्यन्वयः । रा० ।

पुरः स्वसम्मुखे । विमानस्थं दशरथम् अपश्यत् ।

३६ । अत्र रामस्य पितृसन्निधौ कैकेय्या भरतस्य च कृते काचित् प्रार्थना दृश्यते । सा च—

इदमिच्छाम्यहं त्वेकं भवत्प्रीत्या हितं वरम् ।
कुरु प्रसादं धर्मज्ञ कैकेय्या भरतस्य च ॥
सपुत्रां त्वां त्यजामीति यदुक्ता कैकयी त्वया ।
स शापः कैकयीं घोरः सपुत्रां न स्पृशेत् प्रभो ॥ इति ६।१०४।३२-३३ ।

---

1. च 'राजसत्-', छ 'राज्यसंस्कृ-' ।

रामोऽपि देवराजं तं दृष्ट्वा प्राह कृता[1]ञ्जलिम् ।
[2]मत्कृते निहतान् सङ्ख्ये वानरान् [3]पतितान् भुवि ।
जीवयाऽऽशु सुधावृष्ट्या सहस्राक्ष ममाऽऽज्ञया ॥ ३७ ॥
तथेत्यमृतवृष्ट्या ताञ् जीवयामास वानरान् ।
ये ये मृता मृधे पूर्वं ते ते सुप्तोत्थिता इव ॥ ३८ ॥
पूर्ववद् बलिनो हृष्टा रामपार्श्वमुपा[4]ययुः ।
[5]नोत्थिता राक्षसास्तत्र पीयूषस्पर्शनादपि ॥ ३९ ॥

---

दशरथेनापि—

तथेत्येवं पिता पुत्रं रामं दशरथोऽब्रवीत् । ६।१०४।३४

इत्यादिना तद्वाक्यमङ्गीकृतम् ।

३७ । अत्र महेन्द्रसविधे रामस्य प्रार्थनाद्वयी वाल्मीकीये—

मम हेतोः पराक्रान्ता ये गता यमसादनम् ।
ते सर्वे जीवितं प्राप्य समुत्तिष्ठन्तु वानराः ॥ ६।१०५।५
मत्कृते निहताः शूरा मत्प्रिये सततं स्थिताः ।
तव प्रसादाज्जीवन्तु वरमेतमहं वृणे ॥ ६।१०५।७
अकाले चापि पुष्पाणि मूलानि च फलानि च ।
नद्यश्च विमलास्तत्र तिष्ठेयुर्यत्र वानराः ॥ इति ६।१०५।९

ततश्च—

समुत्थास्यन्ति हरयः सुप्ता निद्राक्षये यथा ।
गोलाङ्गूलास्तथर्क्षाश्च वानराः सह यूथपैः ॥
*   *   *   *
अकाले पुष्पवन्तश्च फलवन्तश्च पादपाः ।
भविष्यन्ति महेष्वास नद्यश्च सलिलैर्युताः ॥ ६।१०५।१४,१७

इत्यादिना महेन्द्रेणापि वरद्वयप्रदानम् ।

३९ । पूर्ववदिति । राक्षसानान्तु नोत्थानं सत्यसङ्कल्पस्य भगवतः शरैर्दग्धानामुत्थापनेऽमृतस्यापि सामर्थ्याभावात्, शरपातकाले पुनर्जीवनस्यैव भगवता असङ्कल्पनात् । केचित्तु रक्षसां गणनार्थं रावणेन समुद्रे प्रक्षेपान्नोत्थानम् । यद्वा रावणदाहकाले सर्वेषां रक्षसां तत्सम्बन्धिभिर्दाहकरणेन भस्मनश्च समुद्रे प्रक्षेपेण नोत्थानमित्याहुः । रा० ।

---

1. छ '-ञ्जलिः' । 2. ग 'त्वत्-' । 3. ग 'सञ्चितान्', छ 'निहतान्' । 4. ग-च '-गताः' । 5. ग-च-छ-पुस्तकेष्विदमर्द्धं नास्ति ।

विभीषणस्तु साष्टाङ्गं प्रणिपत्याब्रवीद् वचः ।
देव मामनुगृह्णीष्व [1]यदि ते मय्यनुग्रहः ॥ ४० ॥

मङ्गलस्नानमद्य त्वं कुरु सीतासमन्वितः ।
अलङ्कृत्य सह भ्रात्रा श्वो गमिष्यामहे वयम् ॥ ४१ ॥

विभीषणवचः श्रुत्वा प्रत्युवाच रघूत्तमः ।
सुकुमारोऽति[2]भक्तो मे भरतो माम[3]पेक्षते ॥ ४२ ॥

जटावल्कलधारी [4]स शब्दब्रह्मसमाहितः ।
कथं तेन विना स्नानमलङ्कारादिकं मम ॥ ४३ ॥

अतः सुग्रीवमुख्यांस्त्वं पूजयाऽऽशु विशेषतः ।
पूजितेषु कपीन्द्रेषु पूजितोऽहं न संशयः ॥ ४४ ॥

इत्युक्तो राघवेणाऽऽशु स्वर्णरत्नाम्बराणि च ।
ववर्ष राक्षसश्रेष्ठो यथाकामं यथारुचि ॥ ४५ ॥

---

४० । 'मयि भक्तिर्यदा तव' इति भूयिष्ठादर्शसम्मतः पाठः । तथात्वे यदा यदीत्यर्थः, भक्तिः स्नेह इत्यर्थः करणीयः ।

४१ । अद्य मङ्गलस्नानं कुरु । श्वो भ्रात्रा लक्ष्मणेन त्वया सीतया च सह वयं गमिष्यामः, अयोध्यामिति शेषः । मङ्गलस्नानप्रकारमाह वाल्मीकीये—

तां रात्रिमुषितं रामं सुखासीनमरिन्दमम् ।
अब्रवीत् प्राञ्जलिर्वाक्यं वाक्यज्ञः स विभीषणः ॥

स्नानानि चाङ्गरागांश्च माल्यानि विविधानि च ।
चन्दनानि च मुख्यानि वासांस्याभरणानि च ॥

अलङ्कारविधौ युक्तास्तान्यादाय वरस्त्रियः ।
उपस्थितास्त्वां विधिना स्नापयिष्यन्ति राघव ॥ इति ६।१०५।१-३ ।

४३ । शब्दब्रह्म प्रणवस्तत्र समाहितः, शब्दतोऽर्थतश्च तद्ध्यानवान् । रा० ।

४४ । सुग्रीवो मुख्यो येषां तान् कपीन्द्रानिति शेषः । रा० ।

४५ । ववर्ष वानरेभ्य इति शेषः । यथाकामं स्वस्य, यथारुचि वानराणामिति ।

---

1. क-ख-ग-घ 'मयि भक्तिर्यदा तव', च 'त्वयि भक्तिर्यदा मम' । 2. ग '-भक्त्या' । 3. ख-ग-घ-च '-वेक्षते' । 4. ग-च 'स शत्रुघ्नसहितः पुरे', क 'च शत्रुघ्नसहितः पुरे' ।

[1]ततस्तान् पूजितान् दृष्ट्वा रामो रत्नैश्च यूथपान् ।
अभि[2]नन्द्य यथान्यायं विससर्ज हरीश्वरान् ॥ ४६ ॥
विभीषणसमानीतं पुष्पकं सूर्यवर्चसम् ।
आरुरोह ततो रामस्तद् विमानमनुत्तमम् ॥ ४७ ॥
[3]अङ्के निधाय वैदेहीं लज्जमानां यशस्विनीम् ।
लक्ष्मणेन सह भ्रात्रा विक्रान्तेन धनुष्मता ॥ ४८ ॥
अब्रवीच्च विमानस्थः श्रीरामः सर्ववानरान् ।
सुग्रीवं हरिराजञ्च अङ्गदञ्च विभीषणम् ॥ ४९ ॥
मित्रकार्यं कृतं सर्वं भवद्भिः सह वानरैः ।
अनुज्ञाता मया सर्वे यथेष्टं गन्तुमर्हथ ॥ ५० ॥
सुग्रीव [4]प्रतियाह्याशु किष्किन्ध्यां सर्व[5]सैनिकैः ।
स्वराज्ये वस लङ्कायां मम भक्तो विभीषण ॥ ५१ ॥
न त्वां धर्षयितुं [6]शक्ताः सेन्द्रा अपि दिवौकसः ।
अयोध्यां गन्तुमिच्छामि राजधानीं पितुर्मम ॥ ५२ ॥

४६। रत्नैश्चेति चकारात् स्वर्णाम्बराणां ग्रहणम्, पूर्वं 'स्वर्णरत्नाम्बराणि च' इति दर्शनात्। विससर्ज इति वाल्मीकीये नास्ति। तत्र—

ततस्तान् वानरान् दृष्ट्वा धनरत्नैश्च पूजितान् ।
आरुरोह तदा रामस्तद्विमानं मनोजवम् ॥ इति ६।१०७।९।

वाल्मीकीये एवं दर्शनात् अस्याग्रेऽपि पुनर्वानराणां संवादश्रवणाद् विसर्जनानन्तरमपि वानरा रामप्रस्थानदर्शनाशया वा अयोध्यागमनाभिलाषेण वा तत्रैवाऽऽसन्निति युक्तमुत्पश्यामः।

४७। ततो हरीणां पूजानन्तरमित्यर्थः। तद् विभीषणसमानीतं पुष्पकं नाम विमानमित्यर्थः।

४८। लज्जमानां तामिव, जनाग्रे भर्तृसमीपावस्थानात्तदभिनयः। विक्रान्तेन पराक्रमशालिना। रा०।

५०। स्वयं विमानमारुह्य भूमिष्ठान् सर्ववानरादीनाह—मित्रकार्यं कृतमिति। वानरैः सह भवद्भिः सर्वं कार्यं कृतमित्यन्वयः। रा०।

५१-५२। हे विभीषण, मम भक्तः सन् स्वराज्ये लङ्कायां वसेत्यन्वयः। ननु पूर्वविरोधेन देवा मां पीडयिष्यन्ति तत् कथमत्रावस्थितिरत आह—न त्वामिति। रा०।

1. च 'अत-'। 2. छ '-मन्त्र्य'। 3. च 'स्वाङ्कमादाय', छ 'अङ्कमादाय'। 4. छ 'त्वं प्रयाह्याशु'। 5 च 'वानरैः'। 6. च 'शक्याः'।

एवमुक्तास्तु रामेण वानरास्ते महाबलाः ।
ऊचुः प्राञ्जलयः सर्वे [1]राक्षसश्च विभीषणः ॥ ५३ ॥
अयोध्यां गन्तुमिच्छामस्त्वया सह रघूत्तम ।
दृष्ट्वा त्वामभि[2]षिक्तं तु कौशल्यामभिवाद्य च ।
पश्चाद् वृणीमहे राज्यमनुज्ञां देहि नः प्रभो ॥ ५४ ॥
रामस्तथेति सुग्रीव[3] वानरैः सविभीषणः ।
पुष्पकं सहनूमांश्च शीघ्रमारोह साम्प्रतम् ॥ ५५ ॥

---

विभीषणं प्रति रामवाक्यं पाद्मे उत्तरखण्डे—

यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी ।
यावन्मम कथा लोके तावद्राज्यं विभीषणे ॥
गत्वा मम पदं दिव्यं योगिगम्यं सनातनम् ।
सपुत्रपौत्रः सगणः सम्प्राप्नुहि महाबलः ॥ इति २४२।२६-२७ ।

५३ । वाल्मीकीयेऽपि—

एवमुक्तास्तु रामेण हरीन्द्रो हरियूथपाः ।
ऊचुः प्राञ्जलयः सर्वे राक्षसश्च विभीषणः ॥
अयोध्यां नगरीं गन्तुमिच्छामः सहितास्त्वया ।
तवाभिषेकमिच्छामो द्रष्टुं हृदयकाङ्क्षितम् ॥
दृष्ट्वा तवाभिषेकञ्च कौशल्यामभिवाद्य च ।
न चिरादागमिष्यामः स्वगृहान् नृपसत्तम ॥ इति ६।१०७।१७ १९ ।

५४-५५ । वृणीमहे सम्भजिष्यामह इत्यर्थः । रामस्तथेत्युक्त्वा हे सुग्रीव, सविभीषणः सहनूमान् वानरैः सह शीघ्रमारोह । रा० ।

रामस्य परमानन्दपूर्वकमेषां गमनानुमतिर्वाल्मीकीये । तथाच—

प्रियात् प्रियतरं लब्धं मया यदि गमिष्यथ ।
सर्वैर्भवद्भिः सहितः प्रीतिं लप्स्ये पुरीं गतः ॥ इति ६।१०७।२१ ।

रामस्तथा इत्युक्त्वा सुग्रीवं सम्बोध्य पुनराह—हे सुग्रीव, सविभीषणः सहनूमांश्च त्वमिति शेषः । साम्प्रतं शीघ्रं पुष्पकम् आरोह इत्यन्वयः ।

विभीषणाय भगवान् दत्त्वा रक्षोगणेशताम् ।
लङ्कामायुश्च कल्पान्तं ययौ चीर्णव्रतः पुरीम् ॥ ९।१०।६२

इत्यादिभागवतोक्त्या विभीषणस्य रामेण सह गमनं संशयितमिव प्रतिभाति ।

---

1. ग-च 'राक्षसाः सविभीषणाः' । 2. ग-च-छ '-षेकार्द्रं' । 3. छ '-वं' ।

ततस्तु[1] पुष्पकं दिव्यं सुग्रीवः सह सेनया[2]।
विभी[3]षणश्च सामात्यः सर्वे चाऽऽरुरुहुर्द्रुतम् ॥ ५६ ॥
तेष्वारूढेषु सर्वेषु कौबेरं परमासनम्।
राघवेणाभ्यनुज्ञातमुत्पपात विहायसा ॥ ५७ ॥
बभौ तेन विमानेन हंसयुक्तेन भास्वता।
[4]प्रहृष्टश्च तदा रामश्चतुर्मुख इवापरः ॥ ५८ ॥
ततो बभौ भास्करबिम्बतुल्यं कुबेरयानं तपसाऽनुलब्धम्।
रामेण शोभां नितरां प्रपेदे सीतासमेतेन सहानुजेन ॥ ५९ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे लङ्काकाण्डे
त्रयोदशोऽध्यायः ॥ १३ ॥

---

५६। ततो रामनिदेशात् परमित्यर्थः। सेनया सह सुग्रीवः सामात्यो विभीषणः सर्वे वानराश्च दिव्यं पुष्पकं द्रुतमारुरुहुरित्यन्वयः।

५७। परमासनं यानं पुष्पकमिति यावत्। विहायसा आकाशमार्गेणोत्पपात उदगच्छदित्यर्थः।

तेष्वारूढेषु सर्वेषु कौबेरं यानमुत्तमम्।
राघवेणाभ्यनुज्ञातं दिवमेवोत्पपात ह ॥ ६।१०७।२४

इत्यादिना वाल्मीकीयेनापि विमानस्य दिवि उत्पतनं दृश्यते।

---

1. ग-च '-सं'। 2. च-पुस्तके अतः परं 'आरुरोह रथं रम्यं मुदा रामाज्ञया तदा' इत्यधिकम्। 3. च '-षणः सहामात्यैः'। 4. क 'आहृ-'।

# चतुर्दशोऽध्यायः

——:०:——

[1]श्रीमहादेव उवाच—

पातयित्वा ततश्चक्षुः सर्वतो रघुनन्दनः ।
अब्रवीन्मैथिलीं सीतां रामः शशिनिभाननाम् ॥ १ ॥
त्रिकूटशिखराग्रस्थां [2]पश्य लङ्कां महाप्रभाम् ।
एतां रणभुवं पश्य मांसकर्दमपङ्किलाम् ।
असुराणां प्लवङ्गा[3]नामत्र [4]वैशसनं महत् ॥ २ ॥
अत्र मे निहतः शेते रावणो राक्षसेश्वरः ।
कुम्भकर्णेन्द्रजिन्मुख्याः सर्वे चात्र निपातिताः ।
एष सेतुर्मया बद्धः सागरे सलिला[5]शये ॥ ३ ॥
एतच्च दृश्यते [6]तीर्थं सागरस्य महात्मनः ।
सेतु[7]बन्धमिति ख्यातं त्रैलोक्येन च पूजितम्[8] ।
एतत् पवित्रं परमं दर्शनात् पातकापहम्[9] ॥ ४ ॥

---

१। [ ततः पुष्पकारोहणानन्तरं रघुनन्दनो रामः सर्वतश्चक्षुः पातयित्वा सञ्चार्य सीतामब्रवीत्। गो० ]

२। कर्दमोऽत्यन्तार्द्रद्रव्यम्, पङ्क ईषदार्द्र इति भेदः। वैशसनं बाधनं महायुद्धमिति यावत्। रा०।

३। मे मया त्वत्प्रियेण। रा०।

सेतुमवलम्ब्य वाल्मीकीये—

एष सेतुर्मया बद्धः सागरे मकरालये ।
तव हेतोर्विशालाक्षि कीर्त्तिरेषा भविष्यति ।

---

1. क-ख-पुस्तकयोः 'श्रीमहादेव उवाच' इति नास्ति। 2 छ 'पश्यँल्लङ्का'। 3. च छ '-नां यत्र'। 4. च 'वै समरं'। 5 छ '-श्रयः'। 6 क-घ 'तीरं'। 7. ग-छ '-बन्ध इति', च 'बन्धः समाख्यातस्त्रै-'। 8. च '-तः'। 9. अतः परं च-पुस्तके 'सेतुं दृष्ट्वा समुद्रस्य पुनर्जन्म न विद्यते। सेतुं गत्वा च यः स्नात्वा तर्पयित्वा तु वै पितॄन्। स्थानान्तरे मृतो जन्तुर्मुक्तोऽसौ पितृभिः सह ॥ सेतुबन्धस्य माहात्म्यं मया वक्तुं न शक्यते। अहं वसामि वै सेतुं सर्वदेवैः समन्वितः ॥ ऋषयः सिद्धगन्धर्वा मम दर्शनलालसाः। वसन्ति सेतौ मुनयो वालखिल्यादयोऽमलाः ॥ यात्रा सेतोः कृता येन स देवो नात्र संशयः। तिस्रः कोट्यर्द्धकोटीना तीर्थाना भुवनत्रये। आयान्ति नित्यं स्नानार्थं मध्याह्ने सेतुदर्शने ॥' इत्यधिकम्।

अत्र रामेश्वरो देवो मया शम्भुः प्रतिष्ठितः ।
अत्र मां शरणं प्राप्तो मन्त्रिभिश्च विभीषणः ।
एषा सुग्रीवनगरी किष्किन्ध्या चित्रकानना ॥ ५ ॥
[1]तत्र रामाज्ञया ताराप्रमुखा हरियोषितः ।
आनयामास सुग्रीवः सीतायाः प्रियकाम्यया ॥ ६ ॥
ताभिः सहोत्थितं [2]शीघ्रं विमानं [3]प्रेक्ष्य राघवः ।
प्राह चाद्रिमृष्यमूकं पश्य बाल्यत्र मे हतः ॥ ७ ॥

---

यावत् स्थास्यन्ति गिरयो यावत् स्थास्यति सागरः ।
नलसेतुरिति ख्यातस्तावच्च स्थास्यति ध्रुवम् ॥ इति ६।१०७।१९-१६ ।

५। रामेश्वरस्थापनरूपेयं वार्त्ता अत्रापि, वाल्मीकीये न दृश्यते ।

६। रामाज्ञया ताराप्रमुखा अयोध्यायामायान्त्विवति रामाज्ञा । रा० ।

'तत्र रामाज्ञये'ति श्लोकः प्राच्यवाल्मीकीयासम्मतः । एतेन च श्लोकेन ताराप्रभृतीनाम् अयोध्यागमनार्थमानयनं सुव्यक्तम् । एतच्च वृत्तं पाश्चात्त्ये वाल्मीकीये दृश्यते । तथाच—

अथ दृष्ट्वा पुरीं सीता किष्किन्ध्यां बालिपालिताम् ।
अब्रवीत् प्रश्रितं वाक्यं रामं प्रणयसाध्वसा ॥
सुग्रीवप्रियभार्याभिस्ताराप्रमुखतो नृप ।
अन्येषां वानरेन्द्राणां स्त्रीभिः परिवृता ह्यहम् ॥
गन्तुमिच्छे सहायोध्यां त्वया सह रघूत्तम ।
एवमुक्तोऽथ वैदेह्या राघवः प्रत्युवाच ताम् ॥
एवमस्त्विवति किष्किन्ध्यां प्राप्य संस्थाप्य राघवः ।
विमानं प्रेक्ष्य सुग्रीवं वाक्यमेतदुवाच ह ॥
ब्रूहि वानरशार्दूल सर्वान् वानरपुङ्गवान् ।
स्त्रीभिः परिवृताः सर्वे ह्ययोध्यां यान्तु सीतया ॥
तथा त्वमेभिः सर्वाभिः स्त्रीभिः सह महाबल ।
अतित्वरय सुग्रीव गच्छामः प्लवगाधिप ॥
... ... ... ...
तारया चाभ्यनुज्ञाताः सर्वा वानरयोषितः ।
नेपथ्यविधिपूर्वन्तु कृत्वा चापि प्रदक्षिणम् ॥
अभ्यारोहन् विमानन्तत् सीतादर्शनकाङ्क्षया । इति ६।१२९।२३—३७ ।

७। प्राह सीतामिति शेषः । ऋष्यमूकमद्रिं पश्य । अत्र मे बाली हतस्तत्स्थानं पश्य । रा० ।

---

1. च-छ 'अत' । 2. छ 'वीक्ष्य' । 3. छ 'लघु' ।

एषा पञ्चवटी नाम राक्षसा यत्र मे हताः ।
अगस्त्यस्य सुतीक्ष्णस्य पश्याऽऽश्रमपदे शुभे ।
एते ते तापसाः सर्वे दृश्यन्ते वरवर्णिनि ॥ ८ ॥
असौ शैलवरो देवि चित्रकूटः प्रकाशते ।
अत्र मां [1]कैकयीपुत्रः प्रसादयितुमागतः ।
भरद्वाजाश्रमं पश्य दृश्यते यमुनातटे ॥ ९ ॥
एषा भागीरथी गङ्गा दृश्यते लोकपावनी ।
एषा सा दृश्यते सीते सरयूर्यूप[2]मालिनी ।
एषा सा दृश्यतेऽयोध्या प्रणामं कुरु भामिनि ॥ १० ॥
एवं क्रमेण सम्प्राप्तो भरद्वाजाश्रमं हरिः ।
पूर्णे चतुर्दशे वर्षे पञ्चम्यां रघुनन्दनः ॥ ११ ॥
भरद्वाजं[3] मुनिं दृष्ट्वा ववन्दे सानुजः प्रभुः ।
पप्रच्छ मुनिमासीनं विनयेन रघूत्तमः ॥ १२ ॥

---

९ । दृश्यते भरद्वाजाश्रम इति शेषः । रा० ।

१० । सरयूरिति । अत्युच्चदेशस्थत्वाद्विमानस्य युगपत् सर्वदर्शनम् । रा० ।

११-१२ । एवं क्रमेणेति । पञ्चम्यां चतुर्दशे वर्षे पूर्णे सति तद्दिने भरद्वाजाश्रमं प्राप्य मुनिं दृष्ट्वा तं ववन्दे । चतुर्दशवर्षगणनाप्रसङ्गेन पाश्चात्यवाल्मीकिरामायणतिलकटीकायां रामानुजः—

"अत्र युद्धदिवसगणनायां कतकतीर्थौ—'पूर्वं सुवेलारोहणदिने—

'ततोऽस्तमगमत् सूर्यः सन्ध्यया प्रतिरञ्जितः ।
पूर्णचन्द्रप्रदीप्ता च क्षपा समतिवर्त्तते ॥' ( पाश्चात्यरा० ६।३८।१३ )

इत्युक्तेस्तद्दिनं चतुर्दशीपूर्णिमान्यतरदिति स्पष्टम् । ततः कृष्णप्रतिपदि युद्धारम्भस्तस्यामेव रात्रौ नागपाशबन्धतद्विमोक्षौ । द्वितीयायां धूम्राक्षवधः । तृतीयायां वज्रदंष्ट्रस्य । चतुर्थ्यामकम्पनस्य । पञ्चम्यां प्रहस्तस्य । षष्ठ्यां रावणभङ्गः । सप्तम्यां कुम्भकर्णवधः । अष्टम्यामतिकायादेः । नवम्यामिन्द्रजितो ब्रह्मास्त्रप्रयोगः । दशम्यां दिवा निकुम्भवधः । तद्रात्रौ मकराक्षवधः । एकादश्यादित्रयोदश्यन्तदिनत्रयेणेन्द्रजिद्वधः । चतुर्दश्यां मूलबलवधः । अमायां रावणयुद्धारम्भतद्वधाविति पञ्चदशदिनानि सर्वं युद्धमिति ।' अत्रेदं वक्तव्यम्—कैयं कृष्णप्रतिपत् ? माघकृष्णस्य वा चैत्रकृष्णस्य वा ? नाद्यः ; चैत्रे पुष्यानक्षत्रेऽयोध्यातो वनं प्रति रामस्य प्रस्थानमिति स्पष्टमयोध्याकाण्डे । चैत्रे पुष्यश्च शुक्लपक्ष एव, तत्रापि नवम्यादिदिनत्रये एवेति स्पष्टमेव ज्यौतिषादौ । तत्र नवमी रिक्तात्वादभिषेकायोग्या, दशम्येव

---

1. ग-च 'कैकयी-' । 2. च '-शालिनी' । 3. क '-जमुनि' ।

[तु पूर्णत्वाद् योग्या। एवञ्च चैत्रशुक्लदशम्यां प्रस्थानम्। तत्र माघकृष्णामायां युद्धसमाप्तौ तदुत्तरपञ्चम्यां भरद्वाजाश्रमागमनम्,

पूर्णे चतुर्दशे वर्षे पञ्चम्यां लक्ष्मणाग्रजः।
भरद्वाजाश्रमं प्राप्य ववन्दे नियतो मुनिम्॥ ६।१२६।१।

इति वक्ष्यमाणत्वात्। तत्र च न चतुर्दशवर्षसमाप्तिरिति भगवतः प्रतिज्ञाहानिः। 'पूर्णे चतुर्दशे वर्षे' इत्युक्तेरसङ्गतिश्च, युद्धोत्तरं तावत्कालं लङ्कायामवस्थानस्यालाभाच्च। चैत्रशुक्लपञ्चम्यां तत्राऽऽगमनेऽपि पञ्चदिनन्यूनतैवेति तद्धानिस्तदवस्थैव, तदुत्तरद्वितीयदिने एवायोध्याप्रवेशस्य लाभात्। अमान्तमानेन चैत्रकृष्णोत्तरपञ्चम्यां तदाश्रमगतावपि चतुर्दशवर्षतो बहुदिनाधिक्येन 'चतुर्दशवर्षसमाप्तिदिनेऽयोध्यानागमे मया प्राणा देया' इति भरतप्रतिज्ञाहानिः। सा च प्रतिज्ञा चित्रकूटे रामसन्निधावित्ययोध्याकाण्डान्ते स्पष्टम्। एतेन चैत्रकृष्णप्रतिपदि युद्धारम्भस्तच्छुक्लप्रतिपदि रावणसंहार इति तीर्थोक्तश्चैत्रकृष्णस्येत्यन्त्योऽपि परास्तः। पूर्णिमान्तमानेन तिथिबद्धद्वादशमासैर्वर्षगणने पञ्चदिनानां न्यूनत्वात्। अमान्तमानेन चैत्रकृष्णग्रहणे बहुदिनाधिक्यम्। सावनमानेन षष्ट्युत्तरत्रिशतदिनैर्वर्षगणने तु तिथिबद्धवर्षात् तत्र षड्दिनाधिक्येन चतुर्दशवर्षाणाञ्चतुरशीत्यहोरात्रवृद्ध्या बहुदिनन्यूनतैव। किञ्च महाभारते युधिष्ठिरवनवासे त्रयोदशवर्षमिते किञ्चित्कालादर्वागेव तेषां प्राकट्ये दुर्योधनेन तद्समाप्तौ एषां प्राकट्येन पुनस्तावत्पर्यन्तं पुनरेतैर्वनवासः कर्त्तव्यो भविष्यतीति भीष्मं प्रत्युक्ते भीष्मवाक्यं विराटपर्वणि—

पञ्चमे पञ्चमे वर्षे द्वौ मासावुपजायतः। एषामभ्यधिका मासाः पञ्च च द्वादश क्षपाः॥
त्रयोदशानां वर्षाणामिति मे धीयते मतिः। सर्वं यथावच्चरितं यद् यदेभिः प्रतिश्रुतम्॥
एवमेतद् ध्रुवं ज्ञात्वा ततो बीभत्सुरागतः। सर्वे चैव महात्मानः सर्वे धर्मार्थकोविदाः॥
येषां युधिष्ठिरो राजा कस्माद्धर्मेऽपराध्नुयुः। (महाभा० विप० ५२।३-६) इति

एवञ्चेदृशव्यवहारे तिथिबद्धद्वादशमासैरेव वर्षगणनाऽधिकमासगणना चोचितैव। एवञ्चाधिकमासगणनायां धर्माहानौ न्याय्यत्वे च स्थिते कस्माद्रामस्तानुपेक्षेत। भरतो वा तान्न गणयेत्। एवञ्चामान्तमानेन चतुर्दशीयाश्विनकृष्णे पूर्णिमान्तमानेन कार्त्तिककृष्णे षष्ठ्यां तत्समाप्तिरित्यायाति। अन्यथा चैत्रशुक्लदशम्यामारब्धस्य वनवासस्य षष्ठ्यां चतुर्दशवर्षसमाप्तिर्न कथमप्युपपद्यते। तद्गणने तु एकादशदिनन्यूनषण्मासानां चतुर्दशवर्षेषु वृद्धावुपपद्यत एव सा। तस्माद् द्वादशसमाप्त्युत्तरं त्रयोदशे किञ्चिद्व्यतीते अरण्यकाण्डोक्तास्मद्रीत्या फाल्गुनाष्टम्यां रावणकृतसीतापहारः। ततश्चतुर्दशे किञ्चिद्व्यतीते रामस्य लङ्कासमीपगमनम्। 'वर्त्तते दशमो मासो द्वौ तु शेषौ प्लवङ्गमे'ति (पाश्चात्त्यरा० ५।३७।८) सीतोक्तिः सावनमानेन स्वहरणदिनतः कालगणनया। तत्र 'पूर्णचन्द्रप्रदीप्ता चे'ति रामोक्त्या पौषशुक्लचतुर्दश्यां पूर्णिमायां वा त्रिकूटशिखरप्राप्ती रामस्य। किञ्चहनूमतो लङ्काप्रवेशोत्तरं सीतादर्शनकाले—

'हिमव्यपायेन च शीतरश्मिरभ्युत्थितो नैकसहस्ररश्मिः'। (पाश्चात्त्यरा० ५।१६।३१)

इति वाक्येन 'द्वौ मासौ रक्षितव्यौ मे योऽवधिस्ते मया कृतः' ( पाश्चात्त्यरा० ५।२२।८ ) इति रावणवाक्येन मार्गशुक्लदशम्युत्तरं हनूमतो लङ्काप्रवेशो दिनद्वयान्तरे लभ्यते इति निरूपितं सुन्दरकाण्डे। ततो मार्गकृष्णेऽष्टम्यां राघवप्रस्थानस्यान्यत्रोक्तत्वेन पौषपूर्णिमात्वमेवोचितं तत्प्राप्तिदिनस्य। ततो दशपञ्च दिनानि सेनानिवेशदूतप्रेषणादिना गतानि। ततो युद्धारम्भस्तत्र तदारभ्य भाद्रश्रावणोभयामान्तं लङ्कापुराद् बहिः सेनयोः सङ्कुलं युद्धम्। ततो बहुराक्षसक्षयेण भीता राक्षसा लङ्कां प्रविष्टा इति तद्दिनेऽवहारः। तदुत्तरप्रतिपदि रात्राविन्द्रजित्कृतशरबन्ध इत्यादि। अत एव शरबन्धबद्धराघवदर्शनकाले सीतावाक्यम्—'तीर्त्वा सागरमक्षोभ्यं भ्रातरौ गोष्पदे हताविति'ति ( पाश्चात्त्यरा० ६।४८।१९ )। अनेन बहुदिनयुद्धेन बहुषु राक्षसेषु क्षयितेषु यूथपकतिपयरूपेऽत्यल्पावशिष्टे सैन्ये तयोः शरबन्ध इति लभ्यते। तथा 'अयं ते सुमहान् कालः शयानस्य महाबले'ति ( पाश्चात्त्यरा० ६।६२।१३ ) कुम्भकर्णं प्रति रावणोक्त्या साम्प्रतं तन्निद्रायाः षण्मासाधिकत्वप्रतीतेरप्येवमेवोचितम्। निरूपितश्चैतत् प्राक्। सेतुबन्धादि-वृत्तान्तं 'त्वं न जानीषे' इति कुम्भकर्णं प्रति रावणोक्त्या पूर्वमन्त्रकरणोत्तरं मध्ये जागरणाभावस्य प्रतीतेः। किञ्च, शरबन्धनदिनं न कृष्णप्रतिपत्। तस्याः पूर्णिमोत्तरत्वेन सम्पूर्णरात्रौ चन्द्रसत्तया 'तस्मिंस्तमसि दारुणे' ( पाश्चात्त्यरा० ६।४४।३ ) इत्याद्युक्तेरसङ्गत्यापत्तेः, अतः सा शुक्लप्रतिपद् वाच्या। एवञ्चामान्तपक्षमात्रं युद्धमित्यस्यात्यन्तमसङ्गत्यापत्तिः। यत्तु अमायामेव रावणवध इति, तत्तु न युक्तम्; इन्द्रजिद्वधोत्तरम्—

'अभ्युत्थानं त्वमद्यैव कृष्णपक्षचतुर्दशीम्।
कृत्वा निर्याह्यमावास्यां विजयाय बलैर्वृतः॥'

इति रावणं प्रति सुपार्श्वस्योक्त्या, चतुर्दश्यां रावणप्रेषितबलवधोत्तरममायां निर्गतरावणेन रामलक्ष्मणयोर्युद्धे रात्रौ लक्ष्मणस्य शक्तिघातोत्तरं रावणलङ्काप्रवेशस्योक्ततया ततो लक्ष्मण-चिकित्सोत्तरं पुना रामरावणयुद्धस्य वाल्मीकिनैव स्पष्टमुक्ततया तदसम्भवात्। किञ्च, आदित्यहृदयस्य 'आदित्यं प्रेक्ष्य जप्त्वेदं परं हर्षमवाप्तवानि'त्यनेन ( पाश्चात्त्यरा० ६।१०६।२९ ) सूर्यदर्शनोत्तरं जपस्योक्ततया रावणमरणोत्तरं 'स्थिरप्रभश्चाप्यभवद्दिवाकर' इत्युक्त्या दिवा तद्वध-प्रतीत्या च चिरकालयुद्धोत्तरं लक्ष्मणे शक्तिघातस्य तदर्थमोषधीपर्वतानयनस्य चोक्तत्वेनामारात्रौ शक्तिघातप्रतीत्या रणाद्रावणापगमस्य प्रतीत्या च तद्विरोधात्। तथा पाद्मे—

ततो जज्ञे महायुद्धं सङ्कुलं कपिरक्षसाम्। मध्याह्ने प्रथमं युद्धं प्रारब्धं प्रतिपद्यभूत्॥

प्रतिपदि शुक्लप्रतिपदीत्यर्थः, उक्तयुक्तेः।

'ततो निशि समागम्य मायावी शक्रजिद् बली।
बबन्ध नागपाशैस्तौ राघवौ च हरित्रजान्॥'

'ततः' चिरकालसङ्कुलयुद्धोत्तरम्, अन्यथा तस्यां निशीत्येव वदेत्। 'अग्रे द्वितीयेऽह्नि' 'षष्ठ्यामि'ति चोक्त्या 'दारुणे तमसी'ति रामायणोक्त्या च भाद्रश्रावणोभयामोत्तरप्रतिपद्येतदिति बोध्यम्—

इदं निर्गमनमाश्विनशुक्लप्रतिपदि ।

ततः शतमखो दिव्यं रथं हर्यश्वसंयुतम् । राघवाय स्वसूतेन प्रेषयामास भक्तिमान् ॥

तन्तु मातलिनानीतमारुह्य रथसत्तमम् । स्तूयमानः सुरगणैर्युयुधे तेन रक्षसा ॥

ततो युद्धमभूद् घोरं रामरावणयोर्महत् । सप्ताह्निकमहोरात्रं शस्त्रास्त्रैरतिभीषणैः ॥ इति ।

ततो मातलिरथागमनदिनोत्तरम् । एवञ्च नवम्यां तद्वधः । तदुक्तं कालिकापुराणे—

रामस्यानुग्रहार्थं वै रावणस्य वधाय च । रात्रावेव महादेवी ब्रह्मणा बोधिता पुरा ॥

ततस्तु त्यक्तनिद्रा सा नन्दायामाश्विनेऽसिते । जगाम नगरीं लङ्कां यत्राऽऽसीद्राघवः पुरा ॥

६०।२५-२६ ।

आगत इति शेषः । इदञ्चाऽऽगमनं रात्र्यन्ते, तदैव मातलिरथागमनम्—

तत्र गत्वा महादेवी तदा तौ रामलक्ष्मणौ । युद्धेन योजयामास स्वयमन्तर्हिताऽम्बिका ॥

राक्षसानां वानराणां जग्ध्वा सा मांसशोणितम् । रामरावणयोर्युद्धं सप्ताहं सा न्ययोजयत् ॥

व्यतीते सप्तमे रात्रे नवम्यां रावणं ततः । रामेण घातयायास महामाया जगन्मयी ॥

यावत्तयोः स्वयं देवी युद्धकेलिमुदैक्षत । तावत्तु अष्ट [सप्त] रात्राणि सर्वैर्देवैः सुपूजिता ॥

निहते रावणे वीरे नवम्यां सकलैः सुरैः । विशेषपूजां दुर्गायाश्चक्रे लोकपितामहः ॥

६०।३०-३२ ।

सकलैः सुरैरित्यस्य सहेति शेषः ।

रामरावणबाणैस्तु युद्धञ्चावेक्ष्य भीतिदम् । तृतीयायान्तु लङ्कायाः पूर्वोत्तरदिशि स्थितम् ॥

स्वातिनक्षत्रयुक्तायां भीतं सुरबलं महत् । शान्त्यर्थं वारयामास देवेन्द्रो वचनाद्धरेः ॥६०।३६।

शान्त्यर्थं भयशान्त्यर्थम् ।

ततस्तु श्रवणे नाथ दशम्यां चण्डिकां शुभाम् । विसृज्य चक्रे शान्त्यर्थं बलनीराजनं हरिः ॥

६०३७ ।

रिपुजनितभयशान्त्यर्थमित्यर्थः ।

नीराजितबलः शक्रस्तत्र रामं सलक्ष्मणम् । सम्भाष्य प्रययौ स्वर्गं सह देवैः शचीपतिः ॥

६०।३८ ।

इति वृत्तं पुराकल्पे मनोः स्वायम्भुवेऽन्तरे । पुराकल्पे यथा वृत्तं प्रतिकल्पं तथैव तु ॥

प्रवर्त्तते स्वयं देवी दैत्यानां नाशनाय वै । ६०।३९-४१ ।

स्वायम्भवमन्वन्तररूपे पुराकल्पे इत्यर्थः । प्रतिकल्पं प्रतिमन्वन्तरमित्यर्थः । जलप्लवसामान्येन तत्रापि कल्पव्यवहारात् ।

प्रतिकल्पं भवेद्रामो रावणश्चापि राक्षसः । तथैव जायते युद्धं तथैव त्रिदशागमः ॥

एवं रामसहस्राणि रावणानां तथैव च । भवितव्यानि भूतानि तेषु देवी प्रवर्त्तते ॥

तां पूजन्ति सुराः सर्वे बलं नीराजयन्ति च । तथैव च नराः सर्वे कुर्युः पूजां यथाविधि ॥

बलनीराजनं राजा कुर्याद् बलविवृद्धये । ६०।४२-४५ इति ।

इयञ्च ब्रह्मबोधिता महादेवी अग्नौ प्रविष्टा सीतैव भगवच्छक्तिरूपेति प्रतिभाति। अत एव ब्रह्मवैवर्त्ते प्रथमेंऽशविभागे प्रतिकल्पं विष्णोश्चरितं कीदृशमिति नारदप्रश्ने ब्रह्मवाक्यम्—

स एव भगवान्नूनं प्रतिमन्वन्तरं मुने। वधाय दुष्टदैत्यानां भूमिभारकृतां भुवि॥
कलिद्वापरयोः सन्धौ भविष्यति न संशयः। प्रतिकल्पं त्वेवमेव भविष्यति न संशयः॥ इति।

'सहस्रकृत्वो रामोऽपि भविता ब्रह्मणो दिने' इति ब्रह्मवैवर्त्ते प्रथमविभागस्थे राधां प्रति कृष्णवाक्ये दिने इति जातावेकवचनम्, दिनेष्वित्यर्थः, पूर्वं प्रतिमन्वन्तरमित्युक्तेः। प्रतिचतुर्युगं रामाद्यवतार इति तु न युक्तम्, चतुर्विंशतितमचतुर्युगे रामावतारस्याष्टाविंशतितमचतुर्युगे कृष्णावतारस्य हरिवंशे पुराणान्तरे च प्रसिद्धत्वादिति दिक्। आग्निवेश्यरामायणमिति प्रसिद्धग्रन्थेषु—

रामः पञ्चदशे वर्षे षड्वर्षामपि मैथिलीम्। उपयेमे त्वयोध्यायां द्वादशाब्दानुवास सः॥
सप्तविंशतिमे वर्षे वनवासमकल्पयत्। अष्टादश तु वर्षाणि सीतायास्तु तदाऽभवन्॥
त्रिरात्रमुदकाहारश्चतुर्थेऽह्नि फलाशनः। पञ्चमे चित्रकूटे तु रामो वासमकारयत्॥
अथ त्रयोदशे वर्षे पञ्चवट्यां महामनाः। रामो विरूपयामास घोरां शूर्पणखां वने॥
ततो माघे सिताष्टम्यां मुहूर्त्ते वृन्दसंज्ञके। राघवाभ्यां विना सीतां जहार दशकन्धरः॥

माघे शुक्लचतुर्दश्यामिति पाठान्तरम्।

मार्गशुक्लदशम्यान्तु वसन्तीं रावणालये। सम्पातिर्दशमे मासे आचख्यौ वानरेषु ताम्॥
एकादश्यां महेन्द्राग्रात् पुप्लुवे शतयोजनम्। तद्रात्रिशेषे सीताया दर्शनं हि हनूमतः॥
द्वादश्यां शिंशपावृक्षे हनूमान् पर्यवस्थितः। तस्यां निशायां सीताया विश्वासालापसत्कथाः॥
अक्षादिभिस्त्रयोदश्यां ततो युद्धमवर्त्तत। वधो ह्यक्षकुमारस्य वनविध्वंसनं तथा॥
ब्रह्मास्त्रेण चतुर्दश्यां बद्धः शक्रजिता कपिः। वह्निना पुच्छयुक्तेन लङ्काया दहनं तथा॥
पौर्णमास्यां महेन्द्राद्रौ पुनरागमनं कपेः। मार्गासितप्रतिपदः पञ्चभिः पथि वासरैः॥
पुनरागम्य षष्ठेऽह्नि ध्वस्तं मधुवनञ्च तैः। सप्तम्यां प्रत्यभिज्ञानदानं शुद्धिनिवेदनम्॥
अष्टम्युत्तरफल्गुन्यां मुहूर्त्ते विजयाभिधे। मध्यं प्राप्ते सहस्रांशौ प्रस्थानं राघवस्य तु॥
वासरे सप्तमेऽम्भोधौ स्कन्धावारनिवेशनम्। पौषशुक्लप्रतिपदस्तृतीयायावदम्बुधेः॥
उपस्थानं ससैन्यस्य राघवस्य बभूव ह। विभीषणश्चतुर्थ्यां वै रामेण सह सङ्गतः॥
समुद्रतरणार्थाय पञ्चम्यां मन्त्र उद्गमः। प्रायोपवेशनञ्चक्रे रामो दिनचतुष्टयम्॥
समुद्रवरलाभश्च सेतूपायप्रकीर्त्तनम्। सेतोर्दशम्यामारम्भस्त्रयोदश्यां समापनम्।
चतुर्दश्यां सुवेलाग्रे रामः सैन्यं न्यवेशयत्। पौर्णमास्यां द्वितीयान्तं त्रिदिनैः सैन्यतारणम्॥
तृतीयाया दशम्यन्तं मन्त्रो गुल्मनिवेशने। शुकसारणयोः सैन्यप्राप्तिरेकादशे दिने॥
माघे सितायां द्वादश्यां सैन्यसंख्या कृता तु वै। सारणेन कपीनान्तु सारासारोपवर्णनम्॥
त्रयोदश्याद्यमां यावल्लङ्कायां दिवसैस्त्रिभिः।

रावणः सैन्यसंख्यानं रणायोत्साहनं तथा । ययावथाङ्गदो दौत्यं माघशुक्लादिवासरे ॥
माघशुक्लद्वितीयादिदिनैः सप्तभिरेव तु । रक्षसां वानराणाञ्च युद्धमासीत् सुदारुणम् ॥
माघशुक्लनवम्यान्तु रात्राविन्द्रजिता रणे । रामलक्ष्मणयोर्नागपाशैर्बन्धो बभूव ह ॥
नागपाशविमोक्षार्थं दशम्यां गरुडोऽभ्यगात् । अत्रावहारः कथितो दशम्यादिदिनद्वयम् ॥
द्वादश्यामाञ्जनेयेन धूम्राक्षस्य वधः कृतः । त्रयोदश्यान्तु तेनैव निहतोऽकम्पनो रणे ॥
माघशुक्लचतुर्दश्यां यावत् कृष्णादिवासरम् । त्रिदिनेन प्रहस्तस्य नीलेन विहितो वधः ॥
माघासितद्वितीयायाश्चतुर्थ्यन्तस्त्रिभिर्दिनैः । रामेण तुमुले युद्धे रावणो द्रावितो रणात् ॥
पञ्चम्यास्त्वष्टमीयावद्रावणेन प्रबोधितः । कुम्भकर्णः समुत्तस्थावत्रायुद्धश्चतुर्दिनम् ॥
कुम्भकर्णो दिनैः षड्भिर्नवम्यास्तु चतुर्दशीम् । रामेण निहतो युद्धे बहुवानरभक्षकः ॥
अमावास्यादिने शोकादवहारो बभूव ह । फाल्गुनादिप्रतिपदश्चतुर्थ्यन्तदिनैस्ततः ॥
नरान्तकप्रभृतयो निहताः पञ्च राक्षसाः । पञ्चम्याः सप्तमीयावदतिकायवधस्त्र्यहात् ॥
अष्टम्या द्वादशी यावन्निहतौ दिनपञ्चकात् । निकुम्भकुम्भावूर्द्ध्वन्तु मकराक्षश्चतुर्दिनैः ॥
फाल्गुनस्य द्वितीयायां कृष्णे शक्रजिता जितम् । तृतीयायास्तु सप्तम्यां हरयः पञ्चवासरात् ॥
ओषध्यानयने व्यग्रास्तदासीदवहारकः । तत्र त्रयोदशीं यावद्दिनैः षड्भिस्तु शक्रजित् ॥
लक्ष्मणेन हतो युद्धे विघ्नितोऽभिचरन् क्रमात् । चतुर्दश्यां दशग्रीवरणदीक्षाविधिः क्रमात् ॥
अमावास्यां ययौ वीरो युद्धाय दशकन्धरः । चैत्रशुक्लप्रतिपदः पञ्चमीदिनपञ्चकैः ॥
रावणस्य प्रधानानां युध्यतामभवत् क्षयः । चैत्रषष्ठ्यष्टमीयावन्महापार्श्वादिमारणम् ॥
चैत्रशुक्लनवम्यान्तु सौमित्रेः शक्तिभेदनम् । द्रोणाद्रिराञ्जनेयेन लक्ष्मणार्थमुपाहृतः ॥
दशम्यामवहारोऽभूद्रात्रौ युद्धं नृरक्षसोः । एकादश्यान्तु रामाय रथो मातलिसारथिः ॥
अष्टादशदिनै रामो द्वैरथे रावणं वधीत् । द्वादश्याः शुक्लपक्षस्य यावत् कृष्णचतुर्दशीम् ॥
माघशुक्लद्वितीयायाश्चैत्रकृष्णचतुर्दशीम् । अष्टाशीतिदिनं युद्धं मध्ये पञ्चदशाहकम् ॥
युद्धावहारं संग्रामस्त्रिसप्ततिदिनान्यभूत् । संस्कारो रावणादीनाममावास्यादिनेऽभवत् ॥
वैशाखादितिथौ रामः सुवेलं पुनरागतम् । अभिषिक्तो द्वितीयायां लङ्काराज्ये विभीषणः ॥
सीताशुद्धिस्तृतीयायां देवेभ्यो वरलम्भनम् । वैशाखस्य चतुर्थ्यान्तु रामः पुष्पकमास्थितः ॥
पूर्णे चतुर्दशे वर्षे पञ्चम्यां माधवस्य तु । भरद्वाजाश्रमं रामः ससीतः पुनरागमत् ॥
नन्दिग्रामे तु षष्ठ्यां वै भरतेन समागतः । सप्तम्यामभिषिक्तोऽसावयोध्यायां रघूत्तमः ॥
जानकी रामसहिता रावणस्य निवेशने । मनुमासान् स्थिता पञ्चदशवासरसंयुतान् ॥ इति ।

'तत्तु सर्वांशे अनिश्चितप्रामाण्यम्, कालिकापुराणादिविरोधात् । इदं कल्पान्तरविषयमिति न युक्तम्, तद्विरोधादेव । तस्मात् क्रियाविरोधे पुराणेषु उपसंहार एव न्याय्यः, शाखान्तरोक्ताङ्गोपसंहारवत् । यथा कुम्भकर्णवधोऽत्र रामेणोक्तः भारते लक्ष्मणेन, तादृशे विषये न तु कल्पभेदेन व्यवस्था, जन्मविषये एव तु हरिवंशोक्ता सेति बोध्यम् ।' इति ।

शृणोषि कच्चिद्भरतः कुशल्यास्ते सहानुजः ।
सुभिक्षा वर्त्ततेऽयोध्या जीवन्ति [1]मम मातरः ॥ १३ ॥
श्रुत्वा रामस्य वचनं भरद्वाजः प्रहृष्टधीः ।
प्राह सर्वे कुशलिनो भरतस्तु महामनाः ॥ १४ ॥
फलमूलकृताहारो जटावल्कलधारकः ।
पादुके सकलं न्यस्य राज्यं त्वां [2]सुप्रतीक्षते ॥ १५ ॥
यद् यत् कृतं त्वया कर्म दण्डके रघुनन्दन[3] ।
राक्षसानां विनाशश्च सीताहरणपूर्वकम् ।
सर्वं ज्ञातं मया राम तपसा ते प्रसादतः ॥ १६ ॥
त्वं ब्रह्म परमं साक्षादादिमध्यान्तवर्जितः ।
त्वमग्रे सलिलं सृष्ट्वा तत्र सुप्तोऽसि भूतकृत् ॥ १७ ॥
नारायणोऽसि विश्वात्मन् नराणामन्तरात्मकः ।
[4]त्वन्नाभिकमलोत्पन्नो ब्रह्मा लोकपितामहः ॥ १८ ॥

---

१५ । नरो० । पादुके पुरस्कृत्येति शेषः । सकलं राज्यं न्यस्य अर्थात्तयोः ।

१७ । नरो० । ननु परमेश्वरानुगृहीतेनैव सर्वं ज्ञायते दशरथपुत्रस्य ममानुग्रहात् कथं त्वया सर्वं ज्ञातमित्यत आह—त्वं ब्रह्म इत्यादि । यद्वा श्रीरामं दृष्ट्वात्मानं कृतकृत्यं मन्यमानस्तं स्तौति—'त्वं ब्रह्म परममि'त्यादि'भुवनं यशसा पूरयिष्यसी'त्यन्तेन । ननु ब्रह्मज्ञानाज्जीवस्यापि ब्रह्मत्वं भवतीति न तत्र चित्रमित्यत आह—परममिति । ननु षट् प्रमाणानि विद्यन्ते तत्र केन मम ब्रह्मत्वं सिद्धमित्यत आह—साक्षादिति, प्रत्यक्षत इत्यर्थः । कुत इत्यपेक्षायामाह—आदिमध्यान्तवर्जित इति, जन्मजीवनविनाशरहित इत्यर्थः ।

१८ । नरो० । नारा आपः अयनमाश्रयोऽस्य इति नारमयनमस्येति चात्र व्युत्पत्तिः करणीया । नृणां वृन्दं नारम् अयनम् अन्तरात्मस्वरूपं यस्य स तथा ।

---

१३ । सुभिक्षा अन्नसमृद्धिपरिपूर्णा । मातरः कौशल्यादयो जीवन्ति किमिति प्रश्नः ।

१७ । यदादिमध्यान्तवर्जितं ब्रह्म तत्त्वमेव ।

आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः ॥

इति व्युत्पत्तिं नारायणपदस्य दर्शयति—त्वमिति । रा० ।

१८ । नारं जीवसमूहस्तत्स्थानकत्वात् नारायण इति व्युत्पत्त्यन्तरमाह—नराणामिति । रा० ।

---

1. क-ख-घ 'च हि', छ 'हि च' । 2. ग-च-छ 'सम्र-' । 3. ग '-न.' । 4. ग 'यन्ना-' ।

अतस्त्वं जगतामीशः सर्वलोकनमस्कृतः ।
त्वं विष्णुर्जानकी लक्ष्मीः शेषोऽयं लक्ष्मणाभिधः ॥ १९ ॥

आत्मना सृजसीदं त्वमात्मन्येवाऽऽत्ममायया ।
न [1]सज्जसे नभोवत्त्वं चिच्छक्त्या सर्वसाक्षिकः ॥ २० ॥

---

१९ । नरो० । सर्वलोकनमस्कृत इत्यनेन ममापि त्वं नमस्कार्य इति सूचितम् ।

२० । नरो० । आत्मना स्वयम् । तर्हि किमन्यवत् लिप्तोऽहमिति चेत्तत्राऽऽह—न सज्जसे इत्यादिना । सज्जसे न लिप्तो भवसीत्यर्थः । नभोवदाकाशवत् ।

---

[ नारं जलम् अयनम् आश्रयो यस्य स नारायणः । यदुक्तम्—

आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥ मनु० १।१० ।

इति । नारायणात् नारायणपदस्यार्थमुक्त्वा प्रकारान्तरेणाऽऽह—नराणामन्तरात्मक इति । नराणां जीवानाम् अन्तरात्मकः । एतेन नराणां वृन्दमन्तर्यामितया जानासीति नारायणः । विश्वात्मन् सर्वस्वरूप । एतेन कार्यकारणकर्ता सर्व एव त्वमित्युक्तम् । अतो लोकपितामहस्य ब्रह्मणोऽपि जनकत्वम् । गो० ]

१९ । [ ननु वैराजपुरुषस्य शेषासनस्य नाभिपद्मे ब्रह्मा बभूवेति प्रसिद्धिः, कुतो मन्नाभिकमलाद् ब्रह्मणो जन्म इत्याह—त्वं विष्णुरिति । गो० ]

२० । त्वमात्मना इदं सृजसि, आत्मनि अधिष्ठाने एवं सर्वं सृष्ट्वा तत्र त्वं न सज्जसे आसक्तो न भवसि, इतरजनवत् । असङ्गे दृष्टान्तः—नभोवत् चिच्छक्त्या सर्वस्य साक्षिकः । स्वार्थे कः । रा० ।

[ ननु जगद् बहुकारकसाध्यं कथमहमेक एव स्रष्टा, सति साधनान्तरे वा द्वैतसिद्धौ कथमद्वितीयब्रह्मत्वं तत्राऽऽह—आत्मनेति । त्वं कर्त्ता आत्मना साधनेन आत्मनि अधिकरणे सृजसि । ननु कथमेकस्य नानात्वमिति तत्राऽऽह—आत्ममाययेति । सृजसीति कर्तृत्वोक्त्या किमासक्तिं मम वदसि, नहि नहि इत्याह—त्वं न सज्जसे आसक्तो भवसि, असङ्गत्वात् । तथाच श्रुतिः—'असङ्गो ह्ययं पुरुषः' ( बृहदा० ४।३।१५ ) इति । नभोवत् आकाश इव, यथा नभो बहिरन्तश्च सर्वगतमपि क्वचिदपि आसक्तं न भवति तथा । तत्र हेतुः—यतश्चिच्छक्त्या ज्ञानशक्त्या सर्वस्य साक्षी द्रष्टा । नहि सर्वपालनकर्ता तत्र सज्जते । गो० ]

---

* 1. क 'त्वं जगन्नभोवद्धि' ।

बहिरन्तश्च भूतानां त्वमेव रघुनन्दन ।
[1]पूर्णोऽसि मूढदृष्टीनां विच्छिन्न इव लक्ष्यसे ॥ २१ ॥
जगत्त्वं जगदाधारस्त्वमेव परिपालकः ।
त्वमेव सर्वभूतानां भोक्ता भोज्यं जगत्पते ॥ २२ ॥
दृश्यते श्रूयते यद् यत् स्मर्यते वा रघूत्तम ।
त्वमेव सर्वमखिलं [2]त्वद्विनाऽन्यन्न किञ्चन ।
[3]त्वदज्ञानात् सर्वमिदं त्वज्ज्ञानान्नास्ति किञ्चन ॥ २३ ॥
माया सृजति लोकांश्च स्वगुणैरहमादिभिः ।
त्वच्छक्तिप्रेरिता राम तस्मात्त्वय्युपचर्यते ॥ २४ ॥

---

२१ । नरो० । पूर्णोऽखण्डरूपः । मूढा खण्डाखण्डविवेकशून्या दृष्टिश्चित्तं येषां तेषां तथा । विच्छिन्न इव घटमठाद्याकाशवत् खण्डरूप इवेत्यर्थः ।

२२ । नरो० । सर्वभूतमयत्वाद् भोक्ता । अन्नादिमयत्वाद् भोज्यम् ।

२३ । नरो० । सर्वमखिलम् अन्यद् जगदित्यर्थः । त्वदज्ञानात् सर्वमिदं त्वज्ज्ञानान्नास्ति किञ्चनेति । यावत् त्वद्विषयकं ज्ञानं न जातं तावत् सर्वमिदं व्यवहार्यं भवति, जाते तु त्वद्विषयकज्ञाने किञ्चिदपि व्यवहार्यं न भवतीत्यर्थः ।

२४ । नरो० । अहमादिभिरहङ्कारादिभिः । यतस्त्वच्छक्तिप्रेरिता माया सृजति तस्मादिति योजना । उपचर्यते अर्थाज्जगत् ।

---

२१ । तदेवोपपादयति—बहिरिति । विच्छिन्न इव । रा० ।

[ पालकत्वमाह—बहिश्च कालरूपेण अन्तश्च प्राणरूपेण जीवरूपेण वा त्वमेव परिपालकः । गो० ]

२२ । इदानीं भगवतो रामस्य सार्वात्म्यमाह—जगदिति । जगत्त्वम्, त्वद्विवर्त्तत्वाज्जगत इति भावः । भोक्ता भोज्यम् अत्ता अन्नमुभयमपि त्वमेवेति भावः । रा० ।

[ भोक्ता भोज्यमपि त्वमेवेत्याह—त्वमेवेति । सर्वभूतानां भौतिकानां त्वमेव भोक्ता जीवकरूपेण भोज्यञ्च त्वमेव । गो० ]

२३ । [ दृश्यते यत् पृथिव्यादि, श्रूयते देवादि, स्मर्यते वासनाविषयं स्वर्गलोकादि, ध्येयं वा अखिलं समस्तं सर्वं तत्तत् त्वमेव, बहुना किम् अन्यत् किञ्चन नास्ति । गो० ]

२४ । ननु तत् किं स्रष्टृत्वादिकमपि मयि वास्तवम् ? नेत्याह—मायेति । अहमादयोऽहङ्कारादयस्त्वच्छक्त्या त्वदृष्ट्या । स्रष्टृप्रेरकत्वेन त्वयि स्रष्टृत्ववद्व्यवहार इति भावः । रा० ।

---

1. च 'पूर्णोऽपि' । 2. छ 'त्वां विना-' । 3. क-ख-घ-ङ-पुस्तकेषु इदमर्धं नास्ति ।

यथा चुम्बकसान्निध्या[1]च्चलन्त्येवाचलादयः ।
जडा तथा त्वया दृष्टा माया सृजति वै जगत् ॥ २५ ॥
देहद्वयमदेहस्य तव विश्वं रिरक्षिषोः ।
विराट् [2]स्थूलं शरीरं ते सूत्रं सूक्ष्ममुदाहृतम् ॥ २६ ॥
विराजः सम्भवन्त्येते अवताराः सहस्रशः ।
कार्यान्ते प्रविशन्त्येव विराजं रघुनन्दन ॥ २७ ॥

---

२५। नरो०। किञ्च यथा चुम्बकसान्निध्यादचलादयश्चलन्त्येव तथा त्वया दृष्टा प्रेरिता अधिष्ठिता वा माया जगत् सृजति। चुम्बकसान्निध्यात् चलस्फटिकसान्निध्यात्। एव-शब्द इवार्थे वर्त्तते। आत्मना सृजसीदं त्वमात्मन्येवाऽऽत्ममाययेत्याद्युक्तम् शक्तिद्वयवदज्ञानोपहित-चैतन्यस्य स्वोपाधिप्रकृतिप्रधानतया उपादानत्वाभिप्रायेण, मायेत्याद्युक्तिस्तु तस्य स्वप्रधान-तया निमित्तत्वाभिप्रायेण इति नास्ति विरोधः।

२६। नरो०। सूत्रं महत्तत्त्वम्।

२७। नरो०। कार्यान्ते स्वस्वकार्यसमाप्तौ।

---

[ मायेति, त्वच्छक्तिस्तव चैतन्यशक्तिः, तया प्रेरिता सचेतनीकृता सती माया स्वगुणैः स्वगुणकार्यैरहमादिभिः कृत्वा लोकान् सृजति। यद्वा अहमादिभिः कृत्वा स्वगुणैः सत्त्व-रजस्तमोभिरुपलक्षितान् देवमानुषतिर्यगादिलोकान् देहोपलक्षितान् सृजति। यतस्तस्मात् त्वयि निर्विकारे निष्क्रिये उपचर्यते त्वदाश्रयत्वात्, भृत्यकृत्यं राजनीव। अतो लोकानां मायि-कत्वान्मिथ्यात्वं तवाप्यकर्तृत्वम्। गो० ]

२५। [पुनस्तदेव सदृष्टान्तमाह—यथेत्यादि। चुम्बकम् अयस्कान्तमणिः। तत्सान्निध्याद् यथा अचलादयो लोहादयोऽचला अपि चरन्ति चलन्ति तथा जडाऽपि माया त्वया दृष्टा जगत् सृजति। वै निश्चये। गो० ]

२६। देहद्वयं स्थूलं सूक्ष्मञ्च, सूत्रं हिरण्यगर्भः। रा०।

[ देहद्वयमिति। अदेहस्य देहरहितस्य विश्वं रिरक्षिषो रक्षितुमिच्छोस्तव देहद्वयं मायिकमिति शेषः। द्वैविध्यमाह—स्थूलशरीरं विराट्, सूत्रं वैराजं सूक्ष्ममुदाहृतं वेदेनोक्त-मित्यर्थः। तथाच श्रुतिः—'ततो विराडजायत विराजोऽधिपुरुषः' (पुरुषसू० ९) इत्याद्या। गो० ]

२७। विराज एवावतारकर्त्तृत्वमाह—विराज इति। यतः सम्भवस्तत्रैव लय इति भावः। रा०।

---

1. ख-घ-ङ '-चलन्त्येवाय आ-', क '-चरन्त्येवायसा-'। 2. ग-च 'स्थूलम-'।

अवतार[1]कथां लोके ये गायन्ति [2]गृणन्ति च।
[3]अनन्यमनसो मुक्तिस्तेषामेव रघूत्तम ॥ २८ ॥
[4]त्वं ब्रह्मणा पुरा भूमेर्भारहाराय राघव।
प्रार्थितस्तपसा तुष्टस्त्वं जातोऽसि रघोः कुले ॥ २९ ॥
देवकार्यमशेषेण कृतं ते राम दुष्करम्।
बहुवर्षसहस्राणि मानुषं [5]देहमाश्रितः ॥ ३० ॥
कुर्वन् दुष्करकर्माणि लोकद्वयहिताय च।
पाप[6]हारीणि भुवनं यशसा पूरयिष्यसि ॥ ३१ ॥
प्रार्थयामि [7]जगन्नाथ पवित्रं कुरु मे गृहम्।
[8]स्थित्वाऽद्य भुक्त्वा सबलः श्वो गमिष्यसि पत्तनम् ॥ ३२ ॥
तथेति राघवोऽतिष्ठत्तस्मिन्नाश्रम उत्तमे।
ससैन्यः पूजितस्तेन सीतया लक्ष्मणेन च ॥ ३३ ॥

---

[ वैराजात्ते सर्वे प्रादुर्भवन्तीत्याह—विराज इति, अभेदाद विराट्पदेन वैराज इत्युच्यते। एते मीनाद्या॰ सहस्रशोऽवतारा विराजो वैराजात् सम्भवन्ति। कार्यान्ते यदर्थमवतरन्ति तस्य समाप्तौ विराजमेव प्रविशन्ति। तदुक्तं श्रीभागवते—'एतन्नानावताराणां निधानं बीजमव्ययम्' ( १।३।५ ) इति। एतेन सकलावतारनिर्गमलयस्थानभूतं वैराजं तव सूक्ष्मशरीरमित्युक्त्वा श्रीरामस्य पूर्णब्रह्मत्वमुक्तम्। गो॰ ]

२८। [ ननु यदि ईश्वरोऽहं तर्हीच्छामात्रेण समस्तकार्यसिद्धौ किं मीनादिकुत्सितशरीरग्रहणेनेत्याह—अवतारेत्यादि। लोके ये अवतारकथां गायन्ति गृणन्ति कथयन्ति श्रद्धया शृण्वन्ति ते नराः आशु विमुच्यन्ते भुवः कर्मक्षेत्रत्वात्; एतेन लोकहितार्थमेव नानावतारं करोषीत्यर्थः। गो॰ ]

३१। जनानां पापहारीणि, अत एव तेषां लोकद्वये इहलोके परलोके च हितायान्यैर्दुष्कराणि कर्माणि कुर्वन् भुवनं चतुर्दशसंख्याकं यशसा पूरयिष्यसि। रा॰।

३३। अत्रापि वानराणामर्थे भरद्वाजसकाशे रामस्य काचिद्द् वरप्रार्थना वाल्मीकीये।

---

1. ग-घ-ङ'-कथा'। 2 क 'शृण्वन्ति च'। 3 ग-च 'शृण्वन्ति श्रद्धया ये तु मुच्यन्ते ते नरा भुवि'। 4 ग-च-पुस्तकयोरस्य श्लोकस्य स्थाने 'ब्रह्मणा प्रार्थितस्त्वन्तु भूमेर्भारापनुत्तये। तपसा तोषितः पूर्वं जातो दशरथात्मज॰ ॥' इति पाठ। 5 ग-च 'वपुराश्रित॰'। 6. च-क 'हारी विभु'। 7. ग-च 'रघुश्रेष्ठ'। 8. ग-च 'स्थित्वा भुक्त्वाऽद्य' क 'स्थित्वा भुक्त्वा च'।

ततो रामश्चिन्तयित्वा मुहूर्त्तं प्राह मारुतिम् ।
[1]इतो गच्छ हनूमंस्त्वमयोध्यां प्रति सत्वरः ॥ ३४ ॥

जानीहि कुशली [2]कच्चिज्जनो नृपतिमन्दिरे ।
शृङ्गवेरपुरं गत्वा ब्रूहि मित्रं गुहं मम ।
जानकीलक्ष्मणोपेतमागतं मां निवेदय ॥ ३५ ॥

नन्दिग्रामं ततो गत्वा भ्रातरं भरतं मम ।
दृष्ट्वा ब्रूहि सभार्यस्य सभ्रातुः कुशलं मम ॥ ३६ ॥
[3]सीतापहरणादीनि रावणस्य [4]वधादिकम् ।
ब्रूहि क्रमेण मे भ्रातुः सर्वं तत्र विचेष्टितम् ॥ ३७ ॥

---

सा च— तस्य तच्छिरसा वाक्यं प्रतिगृह्य तु राघवः ।
बाढमित्येव संहृष्ट इमं वरमयाचत ॥

अकाले फलिता वृक्षाः सर्वतश्च मधुच्युतः ।
भवन्तु भगवन्नित्यं वानराणां कृते मम ॥

निष्फलाः सन्तु फलदा अपुष्पाः पुष्पशोभिताः ।
शुष्काश्चैव सपत्राः स्युर्विस्रवेयुर्मधूनि च ॥ इति ६।१०९।१९-१७ ।

भरद्वाजस्यापि रामप्रार्थनापूरणम् । तथाच—
रामेणोदाहृतं श्रुत्वा भरद्वाजो महातपाः ।
एवमस्त्विति चोवाच वरस्ते भुवि दुर्लभः ॥ इति ६।१०९।१८ ।

३४ । पञ्चम्यां चतुर्दशवर्षस्य पूर्णत्वाद् भरद्वाजाश्रमे विलम्बस्य प्राप्तत्वा'च्चतुर्दशवर्ष-समाप्तौ यदि त्वां न पश्यामि तदा हुताशनं प्रवेक्ष्यामि' इति भरतोक्तेर्भरतस्य स्वागमन-निवेदनाय हनूमत्प्रेषणमिति पाश्चात्यवाल्मीकिटीकायां रामानुजः । यथा क्षिप्रमयोध्या प्राप्यते तथा सत्वरः सन् अयोध्यां गच्छ ।

३६ । ततो गुहाय वार्तानिवेदनानन्तरम् । भ्रातरं भरतं दृष्ट्वा आकृतिदर्शनेन तस्य हृद्गतभावं विज्ञाय स मां प्रत्युन्मुखो विमुखो वा इति विचार्य इत्याशयः, भरतस्य विचेष्टितं ज्ञात्वेति वक्ष्यमाणेन अस्यार्थस्यैव निर्देशात् ।

---

1. क-ख 'ततो', ग-च 'मारुते गच्छ शीघ्रं त्वमयोध्यां भरत प्रति' । 2. ग-छ 'कश्चि-' ।
3. ग-च-छ 'सीताया हरणादीनि' । 4. ग-च 'वधं रणे' ।

हत्वा शत्रुगणान् सर्वान् सभार्यः सहलक्ष्मणः ।
[1]उपयाति [2]समृद्धार्थः सह [3]ऋक्षहरीश्वरैः ॥ ३८ ॥
इत्युक्त्वा तत्र वृत्तान्तं भरतस्य विचेष्टितम् ।
सर्वं ज्ञात्वा पुनः शीघ्रमागच्छ मम सन्निधिम् ॥ ३९ ॥
[4]तथेति हनुमांस्तत्र मानुषं वपुरास्थितः ।
नन्दिग्रामं ययौ तूर्णं वायुवेगेन मारुतिः ।
[5]गरुत्वानिव वेगेन जिघृक्षन् भुजगोत्तमम् ॥ ४० ॥
शृङ्गबेरपुरं प्राप्य गुहमासाद्य मारुतिः ।
उवाच मधुरं वाक्यं प्रहृष्टेनान्तरात्मना ॥ ४१ ॥
रामो दाशरथिः श्रीमान् सखा ते सह सीतया ।
सलक्ष्मणस्त्वां धर्मात्मा क्षेमी कुशलमब्रवीत् ॥ ४२ ॥
अनुज्ञातोऽद्य मुनिना भरद्वाजेन राघवः ।
आगमिष्यति [6]तं देवं द्रक्ष्यसि त्वं रघूत्तमम् ॥ ४३ ॥
एवमुक्त्वा महातेजाः सम्प्रहृष्टतनू[7]रुहः ।
उत्पपात महावेगो वायुवेगेन मारुतिः ॥ ४४ ॥
सोऽपश्यद्रामतीर्थञ्च सरयूञ्च महानदीम् ।
तामतिक्रम्य हनुमान्नन्दिग्रामं ययौ मुदा ॥ ४५ ॥

---

४० । नरो० । जिघृक्षन् ग्रहीतुमिच्छन्नित्यर्थः ।

४१ । नरो० । अन्तरात्मना मनसा ।

४५ । नरो० । रामतीर्थं परशुरामतीर्थम् ।

---

३९ । तत्र तस्मिन् स्थाने भरतसन्निधावेव ।

४० । मानुषमिति । वाल्मीकीयेऽपि—

मानुषं धारयन् रूपं शृङ्गबेरपुरं ययौ । इति ६।१०९।४२ ।

नन्दिग्रामं ययौ नन्दिग्रामगमनार्थं ययावित्यर्थः, अन्यथा 'शृङ्गबेरपुरं प्राप्य' इत्यादि-वक्ष्यमाणेन विरोधः स्यात् ।

४५ । रामतीर्थं परशुरामतीर्थमिति रामानुजोऽपि ।

---

1. च 'उपायाति' । 2. छ 'समृद्धार्थं' । 3. छ 'ऋचैर्ह-' । 4. ग-छ-पुस्तकयोरिदमर्द्धं नास्ति । 5. क ख-घ 'मरुता-' । 6. ग-च 'धर्मात्मा तं द्रक्ष्यसि', छ 'ते' । 7. ख-घ '-रुहम्' ।

क्रोश[1]मात्रे त्वयोध्यायाश्चीरकृष्णाजिनाम्बरम् ।
ददर्श भरतं दीनं कृशमाश्रमवासिनम् ॥ ४६ ॥
मलपङ्कवि[2]दिग्धाङ्गं जटिलं [3]वल्कलाम्बरम् ।
फलमूलकृताहारं रामचिन्तापरायणम् ।
पादुके [4]ते पुरस्कृत्य शासयन्तं वसुन्धराम् ॥ ४७ ॥
मन्त्रिभिः पौरमुख्यैश्च काषायाम्बरधारिभिः ।
[5]वृतदेहं मूर्त्तिमन्तं साक्षाद्धर्ममिव स्थितम् ।
उवाच प्राञ्जलिर्वाक्यं हनूमान् [6]मारुतात्मजः ॥ ४८ ॥
यं त्वं चिन्तयसे रामं तापसं दण्डके स्थितम् ।
अनुशोचसि काकुत्स्थः[7] स त्वां कुशलमब्रवीत् ॥ ४९ ॥
प्रियमाख्यामि ते [8]देव शोकं त्यज सुदारुणम् ।
अस्मिन् मुहूर्त्ते भ्रात्रा त्वं रामेण सह सङ्गतः ॥ ५० ॥
समरे रावणं हत्वा रामः सीतामवाप्य च ।
[9]उपयाति [10]समृद्धार्थः ससीतः[11] सहलक्ष्मणः ॥ ५१ ॥

---

४६ । नरो० । चीरञ्च वस्त्रखण्डं कृष्णाजिनञ्च कृष्णसारस्य चर्म ते अम्बरे वस्त्रे यस्य तं तथा ।

४७ । नरो० । मल एव पङ्कस्तेन विदिग्धानि लिप्तानि अङ्गानि यस्य तं तथा । फलमूलैः कृत आहारो येन तं तथा । रामचिन्ता परं केवलम् अयनम् आश्रयो यस्य तं तथा ।

---

४७ । ते चित्रकूटे भगवता रामेण दत्ते । रा० ।

[ पादुके ते पुरस्कृत्य इति । ते प्रसिद्धे श्रीरामस्य पादुके पुरस्कृत्य अग्रे निधाय शासयन्तं पालयन्तम् । गो० ]

४८ । काषायाम्बरधारिभिः प्रभुसमानशीलत्वस्यान्येषामौचित्येन मन्त्रयादीनां तत्त्वम् । तादृशैर्मन्त्रिभिः वृतः परिवृतो देहो यस्य तम् । रा० ।

४९ । यं रामं त्वं चिन्तयसे अनुशोचसि च स काकुत्स्थस्त्वां कुशलमब्रवीत् । रा० ।

५० । अस्मिन् मुहूर्त्ते अचिरादित्यर्थः । सङ्गतो भविष्यसीति शेषः । इति पाश्चात्त्यवाल्मीकिटीकायां रामानुजः ।

---

1. च '-मात्रमयो-' । 2. च '-दग्धा-' । 3. च 'मलिना-' । 4. छ 'वै परिष्कृत्य' । 5. च-छ 'धृत-' । 6. च 'पवना-' । 7. ग-च-छ '-स्थ' । 8. ग-च 'वीर त्यज शोकं' । 9. ग-च 'उपायाति' । 10. छ 'समृद्धार्थ' । 11. ग-च '-तश्च सलक्ष्मणः' ।

एवमुक्तो[1] महातेजा भरतो हर्षमूर्च्छितः ।
पपात भुवि [2]चास्वस्थः [3]कैकेयीप्रिय[4]नन्दनः ॥ ५२ ॥
[5]आलिङ्ग्य भरतः शीघ्रं मारुतिं प्रियवादिनम् ।
आनन्दजैरश्रुजलैः सिषेच भरतः कपिम् ॥ ५३ ॥
देवो वा मानुषो वा त्वमनुक्रोशादिहाऽऽगतः ।
प्रियाख्यानस्य ते सौम्य ददामि [6]ब्रुवतः प्रियम् ॥ ५४ ॥
गवां शतसहस्रञ्च [7]ग्रामाणाञ्च शतं [8]वरम् ।
सर्वाभरणसम्पन्ना मुग्धाः कन्यास्तु[9] षोडश ॥ ५५ ॥

---

५२ । नरो० । हर्षमूर्च्छितः हर्षेण कर्त्तव्याकर्त्तव्यविवेकशून्यः, विह्वलो वा ।

५४ । नरो० । अनुक्रोशात् कृपायाः ।

५५ । नरो० । मुग्धाः...नन्दं प्राह इति शेषः (?) ।

---

५२ । अस्वस्थः प्राप्तमोह इत्यर्थः, वाल्मीकीयानुमतत्वात् । तथाच—

एवमुक्तो हनुमता भरतः केकयीसुतः ।
उत्पपात तदा हृष्टो हर्षान्मोहं जगाम च ॥ इति ६।१०९।६३ ।

५३ । रामसंवादश्रवणानन्तरं भरतस्यानुष्ठानमाह वाल्मीकीये—

ततो मुहूर्त्तादुत्थाय भरतो भ्रातृवत्सलः ।
प्रत्युवाच हनूमन्तं भरतप्रियवादिनम् ॥
अशोकजैः प्रीतिमयैः प्रियावेदनसम्भवैः ।
सिषेच कपिमुख्यस्य गात्रमेवाश्रुबिन्दुभिः ॥
देवो वा मानुषो वा त्वमनुक्रोशादिहाऽऽगतः ।
प्रियाख्यानस्य ते सौम्य ददामि ब्रुवतो वरम् ॥ इत्यादि ६।१०९।६४-६६ ।

५४ । सौम्य सोमवत् प्रियदर्शन, प्रियं ब्रुवतस्ते प्रियाख्यानस्य प्रतिप्रियं ददामीति शेषः । रा० ।

[ अनुक्रोशादिति । अनुक्रोशात् कारुण्यात् । गो० ]

५५ । मुग्धाः कन्यास्तु षोडश इति । अत्र वाल्मीकीये—

सत्कुलाः सुशुभाचारा भार्याः कन्याश्च षोडश । इति ६।१०९।६७ ।

---

1. च '-क्तो हनुमता', छ '-क्तोऽथ भरतो हर्षशोकविमू-' । 2. क 'च स्वस्थः', ग-च 'चाऽऽश्वस्तः' ।
3. च 'कैकयी-' । 4. ग '-दर्शन.' । 5. क-पुस्तके इदमर्द्धं नास्ति । 6. च 'प्रियमुत्तमम्' ।
7. छ 'प्राणिनाञ्च-' । 8. ग 'परम्' । 9. ग-च-छ '-श्च' ।

एवमुक्त्वा पुनः प्राह भरतो मारुतात्मजम् ।
[1]बहूनीमानि वर्षाणि गतस्य सुमहद्वनम् ।
शृणोम्यहं प्रीतिकरं मम नाथस्य कीर्त्तनम् ॥ ५६ ॥
कल्याणी [2]बत गाथेयं लौकिकी प्रतिभाति मे ।
[3]एति जीवन्तमानन्दो नरं वर्षशतादपि ॥ ५७ ॥
राघवस्य हरीणाञ्च कथमासीत् समागमः ।
[4]तत्त्वमाख्याहि भद्रं ते विश्वसेयं वचस्तव ॥ ५८ ॥
एवमुक्तोऽथ हनुमान् भरतेन महात्मना ।
आचच[5]क्षेऽथ रामस्य चरितं [6]कृत्स्नशः क्रमात् ॥ ५९ ॥
श्रुत्वा तु परमानन्दं भरतो मारुतात्मजात् ।
आज्ञापय[7]च्छत्रुहनं मुदा युक्तं मुदाऽन्वितः ॥ ६० ॥
दैवतानि च यावन्ति नगरे रघुनन्दन ।
नानोपहारबलिभिः पूज[8]यन्तु [9]महाधियः ॥ ६१ ॥
सूता वैतालिकाश्चैव वन्दिनः स्तुतिपाठकाः ।
वारमुख्याश्च शतशो निर्यान्त्वद्यैव सङ्घशः ॥ ६२ ॥

---

६२ । नरो० । सूताः सारथयः । वैतालिका निशान्ते बोधकाः । वन्दिन इत्यस्यार्थं व्याकरोति—स्तुतिपाठका इति । वारमुख्या वेश्याः ।

---

५७ । [ लौकिकी प्रतिभाति मे केवलं मत्प्रीतिकरी, न तु यथार्था । अत्यन्तदुःर्लभत्वात् पुनः सम्भावयति—एतीति । जीवन्तं जनं वर्षशतादपि वर्षशतमतिक्रम्यापि आनन्दजनकः प्रिय एति आगच्छति, विधिविधानस्य दुर्ज्ञेयत्वात् । गो० ]

इयं लौकिकी गाथा कल्याणीति मे प्रतिभाति । बतेति हर्षे । तां गाथामाह—एतीति । आनन्दो वर्षशतादपि जीवन्तं नरम् एति । यदि दीर्घजीवी भवेत् तदा दुःखगतेन निर्दग्धस्यापि जनस्य सुखागमो भवेदेव, सुखदुःखयोः पर्यायपातित्वादित्याशयः ।

५८ । [ असम्भावनान्तरं पृच्छति—राघवस्येति । नरवानराणां संसर्गस्यासम्भवत्वात् । गो० ]

६० । शत्रुहनं शत्रुघ्नं रामकुशलश्रवणेन मुदा युक्तम्, तेनैव च स्वयं मुदाऽन्वितः । रा० ।
परमानन्दं परमानन्दजनकं तद्वृत्तान्तं श्रुत्वेत्यर्थः ।

६१ । किमाज्ञापयत्तदाह—दैवतानि चेति । रा० ।

---

1. 10. च 'बहूनि नाम' । च 'तव वार्त्तेयं', छ 'तव' । 2. च 'पाति' । 3. च 'त त्वमाख्याहि ते भद्रं' । 4. च '-क्षे तु', छ '-क्षे च' । 5. च 'कृत्स्नमादरात्' । 6. ग-च 'यति शत्रुघ्न' । 7. छ '-यन्तो' । 8. ग-च 'महर्षयः' ।

राजदारास्तथाऽमात्याः सेना हस्त्यश्वपत्तयः ।
ब्राह्मणाश्च तथा पौरा राजानो ये समागताः ।
निर्यान्तु राघव[1]स्याद्य द्रष्टुं शशिनिभाननम् ॥ ६३ ॥
भरतस्य वचः श्रुत्वा शत्रुघ्नपरि[2]चोदिताः ।
अलञ्चक्रुश्च नगरीं मुक्तारत्नमयोज्ज्वलैः ॥ ६४ ॥
तोरणैश्च पताकाभिर्विचित्राभिरने[3]कधा ।
अलङ्कुर्वन्ति [4]वेश्मानि [5]नानाबलिविचक्षणाः ।
नि[6]र्यान्ति वृन्दशः सर्वे रामदर्शनलालसाः ॥ ६५ ॥
[7]हयानां शतसाहस्रं गजानामयुतं तथा ।
रथानां दशसाहस्रं स्वर्णसूत्रविभूषितम् ॥ ६६ ॥
पार[8]मेष्ठीन्युपादाय द्रव्याण्युच्चावचानि च ।
ततस्तु शिविकारूढा निर्ययू राजयोषितः ॥ ६७ ॥
भरतः पादुके न्यस्य शिरस्येव कृताञ्जलिः ।
शत्रुघ्नसहितो रामं पादचारेण निर्ययौ ॥ ६८ ॥
[9]तदैव दृश्यते दूराद् विमानं चन्द्रसन्निभम् ।
पुष्पकं सूर्यसङ्काशं मनसा ब्रह्मनिर्मितम् ॥ ६९ ॥
एतस्मिन् [10]भ्रातरौ वीरौ वैदेह्या रामलक्ष्मणौ ।
सुग्रीवश्च कपिश्रेष्ठो मन्त्रिभिश्च विभीषणः ।
[11]दृश्यन्ते पश्यत जना इत्याह पवनात्मजः ॥ ७० ॥

---

६४ । अलञ्चक्रुः प्रकृतय इति शेषः ।

६७ । [ पारमेष्ठीनि राजयोग्यानि । गो० ]

'पारमेष्ठ्यान्युपादाय' इति भागवतोक्तः पाठः । पारमेष्ठ्यानि राजार्हाणि छत्रचामरादीनि इति तट्टीकायां स्वामिपादाः । राजयोषितः कौशल्यादयः । तासां निर्गमनक्रममाह वाल्मीकीये—

कौशल्यां प्रमुखे कृत्वा सुमित्राञ्चैव निर्ययुः । इति ६।११०।१७ ।

६८ । रामम् अवलोकयितुमिति शेषः । रा० ।

६९ । तदैव तस्मिन्नेव काले भरतयात्राकाले, 'इत्याह पवनात्मज' इत्यनेनान्वयः । यदुक्तं वाचा तदाह—दृश्यन्ते इत्यादि । रा० ।

---

1. ग-च-छ '-स्यास्य' । 2. ग '-नोदिताः' । 3. छ '-कश' । 4. छ 'नगरी' । 5. च 'नगराणि वि-' । 6. ग-छ '-र्यान्तु' । 7. छ 'अश्वाना' । 8. ग-च '-मेष्ठा-' । 9. ग-च-छ 'तथैव' । 10. ग-च 'अन्तरे' । 11. क-ख-घ छ 'दृश्यते' ।

ततो हर्षसमुद्भूतो निस्वनो दिवमस्पृशत् ।
स्त्रीबालयुववृद्धानां रामोऽयमिति [1]कीर्त्तनात् ॥ ७१ ॥
रथकुञ्जरवाजिस्था[2] अवतीर्य महीं गताः ।
ददृशुस्ते विमानस्थं जनाः सोम[3]मिवाम्बरे ।
प्राञ्जलिर्भरतो भूत्वा प्रहृष्टो राघवोन्मुखः ॥ ७२ ॥
ततो विमानाग्रगतं भरतो राघवं मुदा ।
ववन्दे प्रणतो रामं मेरुस्थमिव भास्करम् ॥ ७३ ॥
ततो रामाभ्यनुज्ञातं विमानमपतद्भुवि ।
आरोपितो विमानं तद्भरतः सानुजस्तदा ।
राममासाद्य मुदितः पुनरेवाभ्यवादयत् ॥ ७४ ॥
समु[4]त्थाप्य चिराद् दृष्टं भरतं रघुनन्दनः ।
भ्रातरं स्वाङ्कमारोप्य मुदा तं परिषस्वजे ॥ ७५ ॥
[5]ततो लक्ष्मणमासाद्य वैदेहीं नाम कीर्त्तयन् ।
अभ्यवादयत प्रीतो भरतः प्रेमविह्वलः ॥ ७६ ॥

---

७२ । जनाः ददृशुः, राघवोन्मुखः प्राञ्जलिर्भूत्वा भरतोऽपि तं ददर्श इति शेषः ।

७३ । अत्यानन्दवतो भरतस्य वर्णने कवेरपि तन्मयभावेनाऽऽनन्दमग्नतया भरतपदपौन-रुक्त्यं (?) न दोषाय । रा० ।

विमानगतं रामं विशिनष्टि भागवते—

पुष्पकस्थो नुतः स्त्रीभिः स्तूयमानश्च वन्दिभिः ।
विरेजे भगवान् राजन् ग्रहैश्चन्द्र इवोदितः ॥ इति ९।१०।४४ ।

७६ । ततो लक्ष्मणमासाद्याभ्यवादयतेत्यन्वयः । अनयोः शास्त्रोक्तविधिना नामगोत्रो-च्चारणपूर्वकमभिवादनम्, वैदेह्यास्तु स्त्रीत्वात् स्वनाममात्रकीर्त्तनपूर्वकमभिवादनमित्याह—नाम कीर्त्तयन्निति । भरतोऽहमभिवादये मैथिलीति । रामस्य तु भरतवर्मा अमुकगोत्रोऽहं त्वामभि-वादये इत्येवमिति शेषः । यद्यपि लक्ष्मणो भरतात् कनिष्ठो वयसा, स्पष्टं चेदं जन्मप्रकरणे, तथाऽपि ज्येष्ठानुवर्त्तनेन स्वापेक्षयाऽधिकगुणत्वेन व्यवहारेण 'ज्येष्ठानुवृत्तिरेवं कर्त्तव्ये'ति भरतं प्रत्युपदेश-दानेन च गुरुत्वबुद्ध्या तस्य नतिरुचितैव । किञ्च कौशल्यायै प्रथमं दत्तपायसांशत्वाल्लक्ष्मणस्य ज्येष्ठत्वम्, ततो हि कैकेय्यै पायसार्द्धदानं तदंशजश्च शत्रुघ्न इति स एव भरतात् कनिष्ठः । अत एव

---

1. च 'कीर्त्तनम्', ङ 'कीर्त्तयते' । 2. ङ '-स्था' । 3. ङ '-मिवापरम्' । 4. ग-ङ '-त्थाय' ।
5. क-पुस्तके अयं श्लोको नास्ति ।

सुग्रीवं जाम्बवन्तञ्च युव[1]राजं तथाऽङ्गदम् ।
[2]मैन्दद्विविदनीलांश्च ऋषभ[3]ञ्चैव सस्वजे ॥ ७७ ॥
सुषेणञ्च नलञ्चैव गवाक्षं गन्धमादनम् ।
शरभं पनसं चैव भरतः परिषस्वजे ॥ ७८ ॥
सर्वे ते मानुषं रूपं कृत्वा भरतमादृताः ।
पप्रच्छुः कुशलं सौम्याः प्रहृष्टाश्च प्लवङ्गमाः ॥ ७९ ॥
ततः सुग्रीवमालिङ्ग्य भरतः प्राह भक्तितः ।
त्वत्सहायेन रामस्य जयोऽभूद्रावणो हतः ।
त्वमस्माकं चतुर्णां तु भ्राता सुग्रीव पञ्चमः ॥ ८० ॥
शत्रुघ्नश्च तदा राममभिवाद्य सलक्ष्मणम् ।
सीतायाश्चरणौ पश्चाद् ववन्दे विनयान्वितः ॥ ८१ ॥
रामो मातरमासाद्य विवर्णां शोक[4]विह्वलाम् ।
जग्राह प्रणतः पादौ मनो मातुः प्रसादयन् ।
कैकेयीञ्च सुमित्राञ्च ननामेतर[5]मातरः ॥ ८२ ॥
भरतः पादुके ते [6]तु राघवस्य सुपूजिते ।
योजयामास रामस्य पादयोर्भक्तिसंयुतः ॥ ८३ ॥
राज्यमेतन्न्यासभूतं मया [7]निर्यातितं [8]तव ।
अद्य मे सफलं जन्म फलितो मे मनोरथः ।
यत् पश्यामि समा[9]यातमयोध्यां त्वामहं प्रभो ॥ ८४ ॥

---

वैदेहीं इति चकारस्वरसः सङ्गच्छते, अत एव च शत्रुघ्नकृतो लक्ष्मणनमस्कार उपपद्यते तयोर्युगपदुत्पन्नत्वादित्याहुः । रा० ।

तत इति, अत्र लक्ष्मणस्य केवलमासादनमेव नत्वभिवादनमपि, वैदेह्यास्त्वभिवादनम् ; एवञ्च भरतस्य ज्यैष्ठ्यरक्षायै प्रयासोऽपि नास्थेयः । अत एवाभिवादने लक्ष्मणस्यान्वयार्थमपेक्षितोऽनुक्तसमुच्चायकश्चकारो न्यून इत्यपि परास्तम् । दर्शितश्चायं प्रकारो मल्लिनाथेन 'सौमित्रिणा तदनु संससृजे स चैनम्' इत्यादिरघुवंशीयश्लोकव्याख्यायाम् ( १३।७३ ) ।

८४ । [ राज्यमेतन्न्यासभूतमिति । तव एतद्राज्यं न्यासभूतं मयि स्थाप्यरूपं मया निर्यापितं पुनस्त्वय्येव समर्पितम् । गो० ]

---

1. च '-राजाङ्गदस्तथा' । 2. क 'मैन्दं द्विविदं नीलञ्च' । 3. च '-ञ्चापि' । 4. ग-च '-कर्षिताम्' । 5. क '-तरी' । 6. च 'च' । 7. ग-च-क 'निर्यापितं' । 8. क 'पुरा' । 9. ग-च-क 'यान्त-' ।

कोष्ठागारं बलं कोषं कृतं दशगुणं मया ।
त्वत्तेजसा जगन्नाथ पालयस्व [10]पुरं स्वकम् ॥ ८५ ॥
इति ब्रुवाणं भरतं दृष्ट्वा सर्वे कपीश्वराः ।
मुमुचुर्नेत्रजं तोयं प्रशशंसुर्मुदाऽन्विताः ॥ ८६ ॥
ततो रामः प्रहृष्टात्मा भरतं [1]स्वाङ्कगं मुदा ।
ययौ तेन विमानेन भरतस्याऽऽश्रमं [2]तदा ॥ ८७ ॥
अवरुह्य तदा रामो विमानाग्रान्महीतलम् ।
अब्रवीत् पुष्पकं [3]देवो गच्छ वैश्रवणं [4]वह ।
अनुगच्छानुजानामि कुबेरं[5] धनपालकम् ॥ ८८ ॥
रामो वशिष्ठस्य गुरोः पदाम्बुजं नत्वा यथा देवगुरोः शतक्रतुः ।
दत्त्वा महार्हासनमुत्तमं गुरोरुपाविवेशाथ [6]गुरोः समीपतः ॥ ८९ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे लङ्काकाण्डे
चतुर्दशोऽध्यायः ॥ १४ ॥

---

८९ । नरो० । देवगुरोर्बृहस्पतेः । शतक्रतुरिन्द्रः ।

[ लङ्काकाण्डे चतुर्दशाध्यायव्याख्या समाप्ता ॥ १४ ॥ ]

---

८५ । त्वत्तेजसेति पूर्वान्वयि । रा० ।

[ न केवलं राज्यमात्रं कोष्ठागारादिकञ्च निर्यापितम् । तव न्यासभूतं तत्तु कोष्ठागारादिकं मया दशगुणं कृतं तदपि त्वत्तेजसैव नतु स्वशक्त्या । गो० ]

८६ । नेत्रजं तोयं मुमुचुः, एवं सौभ्रात्रं किलानयोरिति हर्षात् स्वस्य तद्वैपरीत्येन शोकाच्च । रा० ।

८७ । भरतं स्वाङ्कगं कृत्वेति शेषः । भरतस्याऽऽश्रमं नन्दिग्राममित्यर्थः ।

८८ । देवो रामः । यद्वा देव इति पुष्पकसम्बोधनम्, तथात्वे आर्षत्वाद् विसर्गस्थितिः । निर्विसर्गो वा पाठः । धनपालकं कुबेरम् अनुगच्छ अनुवर्त्तस्व एवमहमनुजानामि अनुमन्ये ।

---

1. च 'स्वकं पुरम्' । 2. च 'सखने मुदा', छ 'स्वाङ्कमागतम्' । 3. छ 'प्रति' । 4. ग 'देव' । 5. ब 'प्रभुं' । 6. म '-रधन-' । 7. च 'मुनेः' ।

# पञ्चदशोऽध्यायः

——:०:——

[1]श्रीमहादेव उवाच—

ततस्तु [2]कैकयीपुत्रो भरतो भक्तिसंयुतः।
शिरस्यञ्जलि[3]माधाय ज्येष्ठं भ्रातरमब्रवीत् ॥ १ ॥
[4]माता [5]मेऽसत्कृता राम दत्तं राज्यं त्वया मम।
ददामि तत्ते [6]च पुनर्यथा त्वमददा मम ॥ २ ॥
इत्युक्त्वा पादयोर्भक्त्या साष्टाङ्गं प्रणिपत्य च।
बहुधा प्रार्थयामास [7]कैकेय्या गुरुणा सह ॥ ३ ॥

---

२। नरो०। मे मया असत्कृता यतो मम मया राज्यं दत्तम् (?)। यथा त्वं ममाददाः पुनस्तथा तुभ्यञ्च ददामि।

३। नरो०। गुरुणा वशिष्ठेन।

---

२। सत्कृता मत्पुत्राय राज्यदानपूर्वकं वनवासं कुर्विति तद्वाक्यपालनेन सत्कृता। रा०।

[ माता मेऽसत्कृता असत् कृतं कर्म यस्याः सा। न तु ममैतन्मतम् इति भावः। यद्वा मे मम माता असत्कृता प्रागेव। त्वया मम सम्बन्धे दत्तं न्यासरूपेण मयि स्थापितमित्यर्थः। दत्तं त्वया मयि पुनस्तथैव (?) ददामि यथा त्वं मम सम्बन्धे अददाः दत्तवानसि अर्पितवानसि। एतेन सर्वैवैतद्राज्यं त्वया मयि एतावन्तं कालं स्थापितम् इदानीं मया तत्तथैवाखण्डितरूपं समर्पितं गृहाणेति वाक्यार्थः। गो० ]

वाल्मीकीयेऽपि—

शिरस्यञ्जलिमाधाय कैकेय्या नन्दिवर्धनः।
बभाषे भ्रातरं ज्येष्ठं रामं सत्यपराक्रमम् ॥
पूजिता मामकी माता दत्तं राज्यमिदं मम।
तद्ददामि पुनस्तुभ्यं यथा मह्यं भवान् ददौ ॥ इति ६।११२।४-९।

३। इत्युक्त्वा रामपादयोर्भक्त्या प्रणम्य मातृत्वाद् गुरुणा कैकेय्या सह प्रार्थयामास, मद्वाक्यपालनेनाहं सन्तुष्टा अतः परं स्वेच्छया पुनस्तद्ददामीति तत् सर्वथा गृहाणेति प्रार्थयामास। रा०।

[ गुरुणा वशिष्ठेन सह। गो० ]

---

1. क-ख-पुस्तकयोः 'श्रीमहादेव उवाच' इति नास्ति। 2. क-ख-घ 'कैके-'। 3. ग-च '-मादाय'। 4. ग-च 'माता'। 5. क-घ 'मे सत्कृता', च 'मे यत् कृत'। 6. ग-च-ङ 'दत्तश्च य-'। 7. च 'कैकेयी'।

तथेति प्रतिजग्राह भरताद्राज्यमीश्वरः ।
मायामाश्रित्य सकलां[1] नरचेष्टामुपागतः ॥ ४ ॥
[2]स्वाराज्यानुभवो यस्य सुखज्ञानैकरूपिणः ।
निरस्तातिशयानन्दरूपिणः परमात्मनः ।
मानुषेण तु राज्येन किं तस्य जगदीशितुः ॥ ५ ॥
यस्य भ्रूभङ्गमात्रेण त्रिलोकी नश्यति[3] क्षणात् ।
यस्यानुग्रहमात्रेण भवन्त्याखण्डलश्रियः ।
लीला[4]सृष्ट[5]महासृष्टेः कियदेतद्रमापतेः ॥ ६ ॥

---

६ । नरो० । आखण्डलश्रिय इन्द्रश्रियः । लीलया अनायासेन सृष्टा महासृष्टिर्येन तस्य तथा ।

---

४ । मायामाश्रित्येति अन्यथा सच्चिदानन्दरूपस्य भगवतो दानप्रतिग्रहयोरनुपपत्तेरिति भावः । सकलं राज्यं जग्राहेत्यन्वयः । रा० ।

राज्यं प्रतिजग्राह राज्यप्रतिरूपकं राजासनमलञ्चकार इत्यर्थः । तथाच वाल्मीकीये—

भरतस्य वचः श्रुत्वा रामः सत्यपराक्रमः ।
तथेति संप्रतिश्रुत्य आसने समुपाविशत् ॥ इति ६।११२।१९ ।

५ । मायाश्रयणे हेतुमाह—स्वाराज्येति । स्वाराज्यमात्मनः सुखरूपता । निरस्तोऽतिशय इतराभिभावकतारूपो यस्मात्तादृशानन्दरूपस्य । आनन्दवल्ल्यां मनुष्यानन्दादुत्तरोत्तरशतगुणानन्दक्रमेणाऽऽनन्दकथनस्य ब्रह्मानन्दे समाप्तेस्तदभिभावकत्वरूपातिशयस्य क्वाप्यभावादिति भावः । रा० ।

[ ननु राजसुखभोगेच्छया आनन्दमूर्तेः श्रीपतेर्मानुषभोग्यराज्येन किमिति प्रश्ने नरलीलामात्रमित्याह—स्वाराज्येत्यादि । स्वाराज्यानुभवः निजसुखानुभवः । सुखञ्च ज्ञानञ्च एकं केवलं रूपमस्यास्ति तस्य । निरस्तः अतिशयो यस्मात् तच्च तत् आनन्दश्च रूपमस्यास्ति तस्य । तत्र हेतुः परमात्मन इति । मानुषेण मानुषभोग्येण । गो० ]

६ । भ्रूभङ्गमात्रेण त्रिलोकी नश्यतीत्युक्त्याऽस्य जगतो सृष्टिपालननाशकत्वं ध्वनितम् ।

[ तस्य रावणादिशत्रुनाशो न चित्रमित्याह—यस्य भ्रूभङ्गमात्रेणेति । गो० ]

६ । लीलया सृष्टा महासृष्टिरनेककोटिब्रह्माण्डात्मिका येन तस्य । एतदयोध्याराज्यम् । रा० ।

---

1. क '-लं' । 2. च-छ 'स्वरा-' । 3. ग '-ते' । 4. च '-सृष्टिर्महा-' । 5. छ '-महत्-' ।

तथाऽपि भजतां नित्यं काम[1]पूरविधित्सया।
[2]मायामानुषदेहेन सर्वमप्यनुवर्त्तते ॥ ७ ॥
ततः शत्रुघ्नवचनान्निपुणाः[3] श्मश्रुकृन्तकाः।
सम्भाराश्चाभिषेकार्थमानीता राघवस्य हि ॥ ८ ॥
पूर्वं तु भरते स्नाते लक्ष्म[4]णे च महात्मनि।
सुग्रीवे वानरेन्द्रे च राक्ष[5]सेन्द्रे विभीषणे ॥ ९ ॥
विशोधितजटः स्नातश्चित्रमाल्यानुलेपनः।
महार्हवसनोपेतस्तस्थौ तत्र श्रिया ज्वलन् ॥ १० ॥

---

७। नरो०। अनुवर्त्तते अनुसरति।

८। नरो०। श्मश्रुकृन्तका नापिताः। सम्भाराः साधनानि।

१०। नरो०। महार्हवसनोपेतः अमूल्यवस्त्रोपेतः।

---

७। भजतां भक्तानां कामपूरस्याभिलाषसमूहस्य विधित्सया पूरणेच्छया लीलया गृहीतमानुषदेहेन सर्वमपि मानुषव्यवहारमनुवर्त्तते लोकशिक्षणाय करोति। रा०।

[ तथाऽपि भजतामिति। एवमपि भक्तानां कामपूरणविधानेच्छया सर्वं राज्यादिकमपि अनुवर्त्तते अनुकरोति। गो० ]

९। निपुणः श्मश्रुकृन्तकः नापितस्तस्य केशसंस्कारादिकमकरोदिति शेषः। सम्भारा आनीता भृत्यादिभिरिति शेषः। अत्र प्राच्यवाल्मीकीये—

ततः शत्रुघ्नवचनान्निपुणाः श्मश्रुवर्द्धकाः।
सुखहस्ताश्च शीघ्राश्च राघवं पर्युपाविशन् ॥ ६।११९।१६

इत्यादिना श्मश्र्वादिकर्त्तनमेव तेषामभिप्रेतमिति बुध्यते। पाश्चात्त्येऽपि—

ततः शत्रुघ्नवचनान्निपुणाः श्मश्रुवर्द्धनाः।
सुखहस्तास्तु शीघ्राश्च राघवं पर्यवारयन् ॥ ६।१३०।१३

श्मश्रुवर्द्धनास्तच्छेदका नापिता इत्यर्थः। 'वर्द्धनं छेदनेऽथ द्वे आनन्दनसभाजने' इत्यमरः। इति एतट्टीकोक्तरीत्याऽपि केशच्छेदनार्थमेव नापितानामागमनमित्यर्थतः प्रतिभाति।

९। स्नाते केशसंस्कारोद्वर्त्तनादिपूर्वककृतस्नाने। रा०।

अत्र भरतलक्ष्मणयोः स्नानाद्यभिधानकाले शत्रुघ्नस्य तदनभिधानन्तु स्नानकारयितृत्वात्, उपलक्षणं वा इति पाश्चात्त्यवाल्मीकिटीकायां रामानुजः।

१०। विशोधितजटः केशरूपतां प्रापितजटः। महार्हवसनोपेतः धृतबहुमूल्यवस्त्रः। रा०।

---

1. क '-कार-'। 2. ग-घ-च-छ 'लीला-'। 3. क-ख-घ '-णाः श्मश्रुकृन्तकाः'। 4. छ '-णेन म-'। 5. ग-च-छ '-से च'।

प्रतिकर्म च रामस्य लक्ष्म[1]णस्य महामतिः ।
कारयामास भरतः [2]सीताया राजयोषितः ।
महार्हवस्त्राभरणैरलञ्चक्रुः सुमध्य[3]माम् ॥ ११ ॥
ततो वानरपत्नीनां सर्वासामेव शोभनाम्[4] ।
अकारयत कौशल्या सन्तुष्टा पुत्रवत्सला ॥ १२ ॥
ततः स्यन्दनमादाय शत्रुघ्नवचनात् सुधीः ।
[5]सुमन्त्रः सूर्यसङ्काशं योजयित्वाऽग्रतः स्थितः ॥ १३ ॥
आरुरोह रथं रामः सत्यधर्म[6]परायणः ।
सुग्रीवो युवराजश्च हनूमांश्च विभीषणः ।
[7]स्नात्वा दिव्याम्बरधरा दिव्याभरणभूषिताः ॥ १४ ॥
राम[8]मन्वीयुरग्रे च रथाश्वगजवाहनाः ।
सुग्रीवपत्न्यः सीता च ययुर्यानैः पुरं महत् ॥ १५ ॥

---

११ । नरो० । प्रतिकर्म वेशम् ।
१२ । नरो० । शोभनां वेशरचनामिति शेषः ।
१४ । नरो० । सत्यञ्च धर्मश्च परमयनं यस्य स तथा ।

---

[ विशोधितजट इति । विशोधिता उन्मोचिता जटा यस्य सः । गो० ]

११ । [ प्रतिकर्म अङ्गसंस्कारः । राजयोषितः कौशल्यादयः सीतायाः प्रतिकर्म चक्रुः । महार्हवस्त्राभरणैः सुमध्यमां ताम् अलञ्चक्रुः । गो० ]

महामतिर्भरतो रामस्य लक्ष्मणस्य च प्रतिकर्म प्रसाधनं कारयामास पुरवासिभिरिति शेषः । राजयोषितः कौशल्यादयः सीतायाः प्रतिकर्म कारयामास पुरस्त्रीभिरिति शेषः । सुमध्यमां सीतामित्यर्थः । अलञ्चक्रुः पौरनार्य इति शेषः ।

१२ । ततः सीताप्रसाधनानन्तरमित्यर्थः, पुत्रवत्सला सा कौशल्या सन्तुष्टा सती सुतस्य विपदि तथाविधं साहायकं कुर्वतां तेषां हरीणां पत्नीष्वपि प्रसन्ना तासां प्रतिकर्म अकारयत इति भावः ।

१३ । योजयित्वा स्यन्दने अश्वानिति शेषः । आरुरोह अयोध्यागमनार्थमिति शेषः, वाल्मीकीये अतः परमयोध्यागमनस्य श्रुतत्वात् । तथाच—

एवं संकथयन्नेव रामो वानरसंवृतः ।
हृष्टपुष्टजनाकीर्णामयोध्यां प्रविवेश ह ॥ इति ६।११२।४१ ।

---

1. क-ख-घ '-णस्य' । 2. क 'सीतया' । 3 च '-मा:' । 4. क-घ '-नां' । 5. च 'सुमन्तुः' । 6. ङ '-पराक्रमः' । 7. ङ 'स्नाता' । 8. ङ '-मन्वयु-' ।

वज्रपाणिर्यथा देवैर्हरिताश्वरथे स्थितः ।
प्रययौ रथमास्थाय तथा रामो महत् पुरम् ॥ १६ ॥
सारथ्यं भरतश्चक्रे रत्नदण्डं महा[1]द्युतिः ।
श्वेतातपत्रं शत्रुघ्नो लक्ष्मणो व्यजनं [2]दधे ॥ १७ ॥
चामरञ्च समीपस्थो न्यवीजयदरिन्दमः[3] ।
शशिप्रकाशं त्वपरं जग्रा[4]हासुरनायकः ॥ १८ ॥
दिविजैः सिद्धसङ्घैश्च ऋषिभिर्दिव्यदर्शनैः ।
स्तूयमानस्य रामस्य शुश्रुवे मधुरध्वनिः ॥ १९ ॥

---

१६ । नरो० । उपमामाह—वज्रपाणिरिति । वज्रपाणिरिन्द्रः । हरिता अश्वा यस्य स चासौ रथश्चेति तस्मिन् तथा ।

१८ । नरो० । असुरनायको विभीषणः ।

---

१६ । महत् पुरमयोध्यामित्यर्थः । अयोध्यां विशिनष्टि वाल्मीकिः—

पताकमालाभरणां सिक्तरथ्यान्तरापणाम् ।
पुष्पचित्रपथां रम्यां बालवृद्धनिरन्तराम् ॥
हर्म्यप्रासादविवृतामुद्यानवनशोभिताम् । इति ६।११२।४२-४३ ।

१७ । रत्नदण्डमिति श्वेतातपत्रव्यजनचामराणां विशेषणम् । रा० ।

सारथ्यमिति । अत्राऽऽह वाल्मीकिः—

जग्राह भरतो रश्मीन् शत्रुघ्नश्छत्रमाददे ।
लक्ष्मणो व्यजनं गृह्य राघवं पर्यवीजयत् ॥ इति ६।११२।२९ ।

अत्र भागवते नवीनं किञ्चिद्वस्तु दृश्यते—

पादुके भरतोऽगृह्णाच्चामरव्यजनोत्तमे ।
विभीषणः ससुग्रीवः श्वेतच्छत्रं मरुत्सुतः ॥
धनुर्निषङ्गाच्छत्रुघ्नः सीता तीर्थकमण्डलुम् ।
अबिभ्रदङ्गदं खड्गं हैमं चर्मर्क्षराड् नृप ॥ इति ९।१०।४२।४३ ।

१८ । अरिन्दमः सुग्रीवः । असुरनायको विभीषणः । रा० ।

असुरनायक इत्यत्र सुरनायक इति पठित्वा केचित् सुरनायक इन्द्र इति व्याचक्षते । तन्न समीचीनम्, अप्रासङ्गिकत्वाद् इन्द्रस्य तत्रासान्निध्याच्च ।

१९ । स्तूयमानस्य रामस्य स्तुतिवाक्यानामिति शेषः । रा० ।

---

1. क '-द्युतिम्' । 2. क 'दधौ' । 3. ग-च '-मम्' । 4. ग-च '-ह सुर-' ।

मानुषं रूपमास्थाय वानरा गजवाहनाः ।
भेरीशङ्खनिनादैश्च मृदङ्गपणवानकैः ॥ २० ॥
प्रययौ राघवश्रेष्ठस्तां पुरीं समलङ्कृताम् ।
ददृशुस्ते समायान्तं राघवं पुरवासिनः ॥ २१ ॥
दूर्वादलश्यामतनुं महार्हकिरीटरत्नाभरणा[1]चिताङ्गम् ।
आरक्तकञ्जायतलोच[2]नान्तं दृष्ट्वा ययुर्मोदमतीवपुण्याः ॥ २२ ॥
विचित्ररत्नाञ्चितसूत्रनद्धपीताम्बरं पीनभुजान्तरालम् ।
अनर्घ्यमुक्ता[3]फलदिव्यहारैर्विरोचमानं रघुनन्दनं प्रजाः ॥ २३ ॥

---

२३ । नरो० । विचित्राणि नानारूपाणि यानि रत्नानि तैरञ्चितं सूत्रं मङ्गलसूत्रं यस्य स चासौ नद्धपीताम्बरश्चेति तं तथा । पीनं भुजान्तरालं वक्षो यस्य तं तथा ।

---

अत्र वाल्मीकिः—

ऋषिसङ्घैस्तदाकाशे देवैश्च समरुद्गणैः ।
स्तूयमानस्य रामस्य शुश्रुवे मधुरध्वनिः ॥ इति ६।११२।२६ ।

२० । वानरा इत्यस्य प्रययुरिति शेषः । रा० ।

मानुषं रूपमास्थाय इति । वाल्मीकीयेऽपि—

नागश्रेष्ठसहस्राणि ययुरास्थाय वानराः ।
मानुषं विग्रहं कृत्वा सर्वाभरणभूषिताः ॥ इति ६।११२।२८ ।

रामानुगमनव्यग्राणां मङ्गलचिह्नसमालम्भनं वाल्मीकीये—

आशीर्भिर्मधुराभिश्च तथा स्वस्तिकपाणिभिः ।
प्रत्याहरद्भिर्मुदितैर्मङ्गलार्थमभिष्टुतः ॥
अक्षता जातरूपञ्च गावः कन्यास्तथा द्विजाः ।
नरा मोदकहस्ताश्च रामस्य पुरतः स्थिताः ॥ इति ६।११२।३७-३८ ।

२१ । ते पुरवासिनः, ये वनगमनकाले दुःखिता बभूवुस्ते इत्यर्थः । रा० ।

२२ । आचिताङ्गं व्याप्ताङ्गम् । कञ्जं कमलम् । पुण्याः पुण्यवन्तः । अर्श-आद्यजन्तः । आययुः प्रापुः । रा० ।

२३ । विचित्रै रत्नैरञ्चितं युक्तं यत् सूत्रं स्वर्णमयं कटिसूत्रं तेन नद्धं पीताम्बरं यस्य तम्, अमूल्यमुक्ताफलकृतैर्दिव्यैर्हारैः । रा० ।

---

1. च-छ '-चिंता-' । 2. ग-च '-नं तं' । 3. क '-च्छल-' ।

सुग्रीवमुख्यैर्हरिभिः प्रशान्तैर्निषेव्यमाणं रवितुल्यभासम् ।
कस्तूरिकाचन्दनलिप्तगात्रं निवीतकल्पद्रुमपुष्पमालम् ॥ २४ ॥
श्रुत्वा स्त्रियो राममुपागतं [1]मुदा प्रहर्षवेगोत्कलिताननश्रियः ।
अपास्य सर्वं गृह[2]कार्यमाहितं हर्म्याणि चैवाऽऽरुरुहुः स्वलङ्कृताः ॥ २५ ॥
दृष्ट्वा हरिं सर्वदृगुत्सवाकृतिं पुष्पैः किरन्त्यः स्मितशोभिताननाः ।
[3]दृग्भिः पुनर्नेत्रमनोरसायनं स्वानन्दमूर्त्तिं मनसाऽभि[4]रेभिरे ॥ २६ ॥
[5]रामः स्मितस्निग्धदृशा प्रजास्तथा पश्यन् प्रजानाथ इवापरः प्रभुः ।
शनैर्जगामाथ पितुः स्वलङ्कृतं गृहं महेन्द्रालयसन्निभं हरिः ॥ २७ ॥

---

२६ । नरो० । सर्वेषां दृशाम् उत्सवो यस्यास्तादृशी आकृतिर्यस्य तं तथा । नेत्रमनोरसायनमिति नेत्रमनःसुखदमित्यर्थः । स्वानन्दमूर्त्तिम् अतिशयानन्दरूपम् ।

२७ । नरो० । उत्प्रेक्षते प्रजानाथ इवापरः प्रभुरिति । प्रजानाथो ब्रह्मा ।

---

विरोचमानं विराजमानं भासमानमिति यावत् । प्रजाः ददृशुः दृष्ट्वा च मोदं ययुरिति पूर्वेणान्वयः ।

२४ । हरिभिर्वानरैः । रवितुल्यभासं तत्तुल्यकान्तिम् । निवीता कण्ठमध्यधृता कल्पद्रुमपुष्पमाला येन तम् । रा० ।

२५ । प्रहर्षवेगेणोत्कलिता अतिप्रवृद्धा आननश्रीर्यासां ताः । आहितमत्यावश्यकमपि गृहकार्यम् अपास्येत्यर्थः । रा० ।

प्रकृष्टो हर्षः प्रहर्षः, तस्य वेग उच्छ्वास इत्यर्थः, तेन उत्कलिता उत्फुल्ला आननानां श्रीर्यासां ताः । आहितम् आरब्धम् । हर्म्याणि हर्म्याग्राणीत्यर्थः । आरुरुहुः रामदर्शनार्थमिति शेषः । स्वलङ्कृता इति नारीणामलङ्करणस्य प्रकृतिसिद्धत्वेन न तादृशत्वरायामपि तस्य व्याघातः ।

२६ । सर्वदृशामुत्सवभूता आकृतिर्यस्य तम्, नेत्रमनसोः रसायनभूतमत्यानन्दकरत्वात्तादृशं रामं दृग्भिर्दर्शनव्यापारैर्मनसा चाभिरेभिरे आलिङ्गितवत्यः । रा० ।

पुष्पैः किरन्त्यः पुष्पवर्षेण वेष्टयन्त्यः । नेत्रमनोरसायनं तं दृग्भिः पिबन्त्य इव इति शेषः । मनसा अभिरेभिरे कामयामासुरित्यर्थः ।

२७ । स्मितयुक्तया अत एव स्निग्धया दृशा प्रजाः पश्यन् दर्शनेन सर्वसंमाननं कुर्वन् प्रजानाथ इव ब्रह्मेव । रा० ।

---

1. क 'पुरात्' । 2. च '-कर्म कल्पितं' । 3. ग 'दृष्टः' । 4. ग-च-छ '-रेमिरे' । 5. क 'रामं', ग-च 'रामश्च सुस्निग्ध-' ।

प्रविश्य वेश्मान्तरसंस्थितो[1] मुदा रामो ववन्दे [2]चरणौ स्वमातुः ।
क्रमेण सर्वाः पितृयोषितः प्रभुर्ननाम भक्त्या रघुवंशकेतुः ॥ २८ ॥

ततो भरतमाहेदं रामः सत्यपराक्रमः ।
सर्वसम्पत्समायुक्तं मम मन्दिरमुत्तमम् ॥ २९ ॥
मित्राय वानरेन्द्राय सुग्रीवाय प्रदीयताम् ।
सर्वेभ्यः सुख[3]वासार्थं मन्दिराणि प्रकल्पय ॥ ३० ॥
रामे[4]णैवं समादिष्टो भरतश्च तथाऽकरोत् ।
उवाच च महातेजाः सुग्रीवं राघवानुजः ॥ ३१ ॥
राघवस्याभिषेकार्थं चतुःसिन्धुजलं शुभम् ।
आनेतुं प्रेषयस्वाऽऽशु दूतांस्त्वरितविक्रमान् ॥ ३२ ॥

---

[ प्रजानाथ इवापर इति। प्रजानाथः प्रजापतिरिव। हरिर्विष्णुः, यद्वा हरिरिन्द्र इव। गो० ]

पितुर्गृहमयोध्यामित्यर्थः ।

२८। स्वमातुश्चरणौ ववन्दे। अनेनाग्रे सर्वमातृप्रवेशानन्तरं सर्वप्रजासंमाननविलम्बेन पश्चाद् भगवत्प्रवेश इति सूचितम्। रा०।

२९। वासभवनमवलम्ब्य वाल्मीकीये—

अथाब्रवीद्राजपुत्रं भरतं धर्मचारिणम् ।
अर्थसंहितया वाचा धर्म हेत्वर्थयुक्तया ॥
यच्च तद्भवनश्रेष्ठमशोकवनिकं महत् ।
वैदूर्यकनकास्तीर्णं सुग्रीवस्तत्र मोदतु ॥
यच्च तत् सुमहद्दिव्यमुपस्थानगृहं शुभम् ।
विभीषणाय तत् सौम्य दीयतां सुविभूषितम् ॥
तथैव वानरेन्द्राणां यथाक्रमविहारिणाम् ।
दीयन्तां क्षिप्रमावासा यथेप्सितमरिन्दम ॥ इति ६।११२।९२-९९।

३०। सर्वेभ्यः अन्येभ्यो वानरविभीषणादिभ्यः। रा०।

प्रदीयतां वासायेत्यर्थः।

३१। राघवानुजो भरतः रामेण एवं समादिष्टस्तथा सुग्रीवादिवासभवनप्रदानमकरोत् सुग्रीवमुवाच चेत्यन्वयः।

---

1. क '-तं मु-'। 2. क 'चरणं'। 3. ग-च-क '-वासाय'। 4. ख-छ '-णैव'।

प्रेषयामास सुग्रीवो जाम्बवन्तं मरुत्सुतम् ।
अङ्गदश्च सुषेणश्च ते गत्वा वायुवेगतः ।
जलपूर्णाञ्छात[1]कुम्भकलशांश्च समानयन् ॥ ३३ ॥
आनीतं तीर्थसलिलं शत्रुघ्नो मन्त्रिभिः सह ।
राघवस्याभिषेकार्थं [2]वशिष्ठाय न्यवेदयत्[3] ॥ ३४ ॥
तत[4]स्तु प्रयतो [5]वृद्धो वसिष्ठो ब्राह्मणैः सह ।
रामं रत्नमये पीठे ससीतं संन्यवेशयत् ॥ ३५ ॥
वसिष्ठो वामदेवश्च जावालिर्गौतमस्तथा ।
वाल्मीकिश्च [6]तथा चक्रुः सर्वे रामाभिषेचनम् ॥ ३६ ॥

---

३३ । शातकुम्भं जम्बुस्वर्णम् । रा० ।

सागरजलानयनार्थं प्रेषितानां वानराणां पृथक्त्वं वाल्मीकीये । तथाच—

जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः ।
ऋषभश्च महाबाहुश्चत्वारोऽपि वनौकसः ॥ इति ६।११२।६३ ।

पाश्चात्ये पुनः—

जाम्बवांश्च हनूमांश्च वेगदर्शी च वानरः ।
ऋषभश्चैव कलसाञ्जलपूर्णांस्तथानयत् ॥ ६।१३०।५२ ।

अस्य रामायणतिलकटीकायाम्—'अत्र चकारैः सुषेणगवयादिपञ्चशतवानरपरिग्रहः । तद्वक्ष्यति—नदीशतानां पञ्चानाम् (६।१३०।५३) इति । अत एव सुषेणगवयोः समुद्रजलाहर्तृत्वेन वक्ष्यमाणेन न विरोधः' । इति । जलानयने समुद्राणाम् आधारविशेषाणाञ्च वैशिष्ट्यं वाल्मीकीये—

ऋषभो दक्षिणात्तूर्णं समुद्राज्जलमानयत् ।
रक्तचन्दनशाखाभिः संवृते काञ्चने घटे ॥
जाम्बवान् पश्चिमात्तोयमाजहार स सागरात् ।
रत्नकुम्भेन महताऽगुरुपल्लवशोभिना ॥
वेगदर्शी परिक्रान्त उत्तरादुदधेर्जलम् ।
शोभितं फुल्लशाखाभिरचिरादानयच्छिवम् ॥
सुषेणोऽङ्गदकेयूरैर्मण्डितं कलसं तथा ।
पानीयमानयत् तत्र समुद्रादितरात् त्वरन् ॥ इति ६।११२।६५—६८ ।

३६ । अभिषेककर्तृणां नामविनिर्णये वाल्मीकिः—

---

1. ग छ '-कुम्भान् क-' । 2. ग 'चतुःसिन्धुजलं शुभम्' । 3. अतः परं ग-पुस्तके 'आनाय्य सकलं वस्तु वसिष्ठाय न्यवेदयत् ।' इत्यधिकम् । 4. च '-श्च' । 5 च 'भूत्वा' । 6. च 'भृगुश्चक्रुः' ।

कुशाग्रतुलसीयुक्तपुण्यगन्धजलैर्मुदा ।
अभ्यषिञ्चन् रघुश्रेष्ठं [1]वासवं वसवो यथा ॥ ३७ ॥
ऋत्विग्भिर्ब्राह्म[2]णैः श्रेष्ठैः कन्याभिः सह मन्त्रिभिः ।
सर्वौ[3]षधिरसैश्चैव दैवतैर्नभसि स्थितैः ।
चतुर्भिर्लोकपालैश्च स्तुवद्भिः सगणैस्तथा ॥ ३८ ॥
छत्रञ्च तस्य जग्राह शत्रुघ्नः [4]पाण्डरं शुभम् ।
सुग्रीवराक्षसेन्द्रौ तौ दधतुः श्वेतचामरे ।
मालाञ्च काञ्चनीं वायुर्ददौ वासवचोदितः ॥ ३९ ॥

---

वसिष्ठो वामदेवश्च जावालिर्विजयस्तथा ।
काश्यपो गौतमश्चापि तथा कात्यायनो द्विजः ॥
विश्वामित्रश्च तेजस्वी तथाऽन्ये द्विजपुङ्गवाः ।
अभ्यषिञ्चन्नरवरं प्रसन्नेन सुगन्धिना ॥ इति ६।११२।७३-७४ ।

पाश्चात्ये विश्वामित्रस्याऽऽख्यानं न दृश्यते । नामविनिर्देशे पद्मपुराणीयमतम्—

वशिष्ठो वामदेवश्च जावालिरथ काश्यपः ।
मार्कण्डेयश्च मौद्गल्यः पर्वतो नारदस्तथा ॥
एते महर्षयस्तत्र जपहोमपुरःसरम् ।
अभिषेकं शुभं चक्रुर्मुनयो राजसत्तमम् ॥ इति । उत्तरख० २४३।२-३ ।

३७ । कुशाग्रेति । अत्र पद्मपुराणे दूर्वाग्रेति । तथाच—

दूर्वाग्रतुलसीपत्रपुष्पगन्धसमन्वितैः ।
मन्त्रपूतजलैः शुद्धैर्मुनयः संशितव्रताः ॥ इति । उत्तरख० २४३।६ ।

३८ । सर्वौषधिरसैः अभ्यषिञ्चन्नित्यन्वयः । नभःस्थितैर्दैवतैः सह स्तुवद्भिर्लोकपालैश्च सह वसिष्ठादयोऽभ्यषिञ्चन्नित्यन्वयः । रा० ।

ऋत्विग्भिरित्यादि । अत्र वसिष्ठादयः प्रयोजककर्त्तारः । कन्याभिः षोडशसंख्याभिः । इति पाश्चात्यरामायणस्य रामायणतिलकटीका ।

३९ । व्यजनधारणमवलम्ब्य वाल्मीकीये—

शुक्लञ्च बालव्यजनं सुग्रीवो वानरेश्वरः ।
अपरं चन्द्रसङ्काशं बालव्यजनमुत्तमम् ॥
हृष्टो रामस्य जग्राह राक्षसेन्द्रो विभीषणः । इति ६।११२।७८-७९ ।

---

1. ग-च छ 'वसवो वासवं' । 2. ग '-णाग्रे-' । 3. ख-च '-षधी-' । 4. क-ख घ 'पाण्डुर', च 'शक्रवापम्' ।

सर्वरत्नसमायुक्तं मणिकाञ्चनभूषितम् ।
ददौ हारं नरेन्द्राय स्वयं शक्रस्तु भक्तितः ॥ ४० ॥
प्रजगुर्देवगन्धर्वा ननृतुश्चाप्सरोगणाः ।
[1]देवदुन्दुभयो नेदुः पुष्पवृष्टिः पपात [2]खात् ॥ ४१ ॥
नवदूर्वा[3]दलश्यामं पद्मपत्रायतेक्षणम् ।
रविकोटीप्रभा[4]युक्तकिरीटेन विराजितम् ॥ ४२ ॥

---

४१ । नरो० । खादाकाशात् ।

---

अत्र पद्मपुराणीयमतम्—

छत्रञ्च चामरं दिव्यं धृतवाँल्लक्ष्मणस्तदा ।
पार्श्वे भरतशत्रुघ्नौ तालवृन्तौ विरेजतुः ॥
दर्पणं प्रददौ श्रीमान् राक्षसेन्द्रो विभीषणः ।
दधार पूर्णकलसं सुग्रीवो वानरेश्वरः ॥
जाम्बवांश्च महातेजाः पुष्पमालां मनोहराम् ।
बालिपुत्रस्तु ताम्बूलं सकर्पूरं ददौ हरेः ॥
हनूमान् दीपकान् दिव्यान् सुषेणश्च ध्वजं शुभम् ॥ इति । उत्तरख०२४३।१० ।

वायुप्रदत्तां मालां विशिनष्टि वाल्मीकिः—

मालां ज्वलन्तीं वपुषा काञ्चनीं शतपुष्कराम् ॥
राघवाय ददौ वायुर्वासवेन प्रदेशितः । इति ६।११२।८०-८१ ।

४० । हारं मुक्ताहारम्, तञ्च वासवप्रचोदितोऽन्य एव ददौ, न तु स्वयं वासवः । तथाच—

सर्वरत्नसमायुक्तं मणिभिश्च विभूषितम् ।
मुक्ताहारं नरेन्द्राय ददौ शक्रप्रचोदितः ॥ ६।१३०।७०

इति पाश्चात्त्यरामायणे । यद्यपि रामायणतिलके 'शक्रप्रचोदित इति वायुरित्यनुकृष्यते, वायुद्वारा दिव्यां स्वीयां काञ्चनमालां मुक्ताहारञ्च भगवान् महेन्द्रो ददावित्यर्थः' एवमुक्तम्, तथाऽपि

यक्षाध्यक्षः समागम्य मणिरत्नसमायुतम् ॥
मुक्ताहारञ्च रामाय ददौ शक्रप्रदेशितः । ६।११२।८०-८१

इति प्राच्यरामायणवचनेन यक्षाध्यक्षेण प्रदानं व्यक्तं दृश्यते इत्येकवाक्यतानुरोधाद् यक्षाध्यक्षेण दानमतमेव सुसमीचीनं मन्यते । वासवेन स्वयंप्रदानन्तु उभयोरेवासम्मतमिति तदेतद् ग्रन्थकर्त्तुः स्वकपोलकल्पितम् ।

---

1. ख 'दिवि' । 2. छ 'ह्' । 3. छ '-दलं श्या-' । 4. ग-छ '-युक्तं कि-' ।

कोटिकन्दर्पलावण्यं पीताम्बरसमावृतम् ।
दिव्याभरणसम्पन्नं दिव्यचन्दन[1]लेपनम् ।
अयुतादित्यसङ्काशं द्विभुजं रघुनन्दनम् ॥ ४३ ॥
वामभागे समासीनां सीतां काञ्चनसन्निभाम् ।
[2]सर्वाभरणसम्पन्नां वामाङ्के समुपस्थिताम् ॥ ४४ ॥
रक्तोत्पलकराम्भोजां [3]वामेनाऽऽलिङ्ग्य संस्थि[4]ताम् ।
सर्वातिशयशोभाढ्यां[5] दृष्ट्वा भक्तिसमन्वितः ॥ ४५ ॥
उमया सहितो देवः शङ्करो रघुनन्दनम् ।
[6]सर्वदेवगणैर्युक्तः स्तोतुं समुपचक्रमे ॥ ४६ ॥

[7]श्रीमहादेव उवाच—

नमोऽस्तु रामाय सशक्तिकाय नीलोत्पलश्यामलकोमलाय ।
किरीटहाराङ्गदभूषणाय सिंहासनस्थाय महाप्रभाय ॥ ४७ ॥
त्वमादिमध्यान्तविहीन [8]एकः सृजस्यवस्यत्सि च लोक[9]नाथ ।
स्वमायया तेन न लिप्यसे त्वं [10]यत् स्वे सुखेऽजस्ररतोऽनवद्यः ॥ ४८ ॥

---

४५ । नरो० । सर्वातिशयशोभाढ्यां सर्वेषां करचरणादीनां या अतिशयशोभा तया सम्पन्नामित्यर्थः । सर्वाभ्योऽतिशयशोभासम्पन्नामित्यर्थो वा ।

४७ । नरो० । सशक्तिकाय ससीताय । श्यामलश्चासौ कोमलश्चेति श्यामलकोमलः, नीलोत्पलमिव श्यामलकोमलस्तस्मै तथा । किरीटहाराङ्गदानि भूषणानि यस्य तस्मै तथा ।

४८ । नरो० । ननु महादेवस्त्वं दशरथपुत्रं मानुषं मां कथं नमस्करोषीत्यत आह—

---

४५-४६ । ईदृशीं सीतां वामेन करेणाऽऽलिङ्ग्य संस्थितं दृष्ट्वा शिवः स्तोतुमुपचक्रमे इत्यन्वयः । रा० ।

४७ । सशक्तिकाय मायाशक्त्यवतारसीतासहिताय । रा० ।

[ अभिषिक्तं ससीतं श्रीराममवलोक्य कन्दलितपरमानन्दसन्दोहाः श्रीशिवादयः स्तोतुम् उपचक्रमिरे । तत्र प्राधान्यात् श्रीशिवः प्रथमं स्तौति—नमोऽस्त्वित्यादिना । रामाय नमोऽस्तु । एतेन वैपरीत्यक्रमेण प्रथमं पञ्चाक्षरो महामन्त्र उक्तः । सशक्तिकाय सीतासहिताय । शक्तिर्मूलप्रकृतिः । गो० ]

४८ । आद्यन्तौ उत्पत्तिनाशौ, तद्राहित्यादेव मध्यहीनः । यतो मायया सृजसि, अत एव

---

1. च '-चर्चितम्' । 2. ग-छ 'दिव्या-' । 3. च 'चन्द्राननविराजिताम्' । 4. ख-घ '-तम्' । 5. ख-घ '-ढ्यं' । 6. ग-छ 'सर्वैर्दे-' । 7. छ 'शङ्कर उवाच' । 8. छ 'एव' । 9. क-ख-ग-घ '-जातम्', च '-नाथः' । 10. ग-च-छ 'यतः' ।

लीलां विधत्से गुणसंवृतस्त्वं प्रपन्नभक्तानुविधान[1]हेतोः ।
नानावतारैः सुरमानुषाद्यैः प्रतीयसे ज्ञानिभिरेव नित्यम् ॥ ४६ ॥

---

त्वमादिमध्यान्तविहीन इत्यादि । हे लोकनाथ, एक आदिमध्यान्तविहीनो यस्त्वं स्वमायया सृजसि अवसि अत्सि च । अनवद्यस्त्वं ( चेद् यदि स्वे सुखे श्रयते अर्थान्मायां, तदा तेन सृष्ट्यादिना न लिप्यसे इत्यन्वयः । आदिमध्यान्तहीनो जन्मजीवननाशरहित इत्यर्थः । एतेन नित्यत्वं सूचितम् । यद्वा...वन्ता ? ) मध्यावस्थारहित इत्यर्थः । एतेन सदा नूतनत्वं सूचितम् ।

४९ । नरो० । तर्हि एतादृशः सन् किमर्थमहं कर्माऽऽचरामीत्यपेक्षायामाह—लीलामित्यादि । विधत्से करोषि । गुणसंवृतः सत्त्वादिगुणसंवृतः शब्दादिगुणसंवृ........ । प्रपन्नभक्तानुविधानहेतोरिति प्रपन्नभक्तानुकरणादित्यर्थः । प्रपन्नलोकानुवृत्त्यर्थं तव कर्माचरणं न तु फलार्थमिति भावः । तथाच भगवद्गीतायाम्—

यद् यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत् प्रमाणं कुरुते लोकस्तदनुवर्त्तते ॥
न मे पार्थास्ति कर्त्तव्यं त्रिषु लोकेषु किञ्चन ।
नानवाप्तमवाप्तव्यं वर्त्त एव च कर्मणि ॥
यदि ह्यहं न वर्त्तेऽयं जातु कर्मण्यतन्द्रितः ।
मम वर्त्मानुवर्त्तन्ते मनुष्याः पार्थ सर्वशः ॥
उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
सङ्करस्य च कर्त्ता स्यामुपहन्यामिमाः प्रजाः ॥ इति । ३।२२—२४

तर्हि परमेश्वरत्वेनाहं लोकैः किमिति प्रतीये इत्यत आह—नानावतारैरित्यादि । नानावतारैरनेकावतारैः । ज्ञानिभिर्विवेकिभिः । एवकारेण अज्ञव्यवच्छेदः ।

---

न लिप्यसे तन्नाशादिकृतदोषभाग् न भवसीत्यर्थः । न ह्यन्द्रजालिकः स्वमायानिर्मितजीवादिनाशेऽपि तद्वधभाग् भवति । रा० ।

[प्रथमं हर्षभरेण ब्रह्मस्वरूपतां विस्मृत्य यथादृष्टं स्तुत्वा स्वरूपानुवादेन स्तौति—त्वमादि इत्यादि । आदिर्जन्म, मध्यं बाल्ययौवनादि, अन्तो नाशस्तैर्विहीनमक्रियत्वात् । एकोऽसहायः अद्वितीय इति यावत् । सृजसि जगज्जनयसि, अवसि पालयसि, अत्सि भक्षयसि संहरसीत्यर्थः । ननु सृष्टिकर्तृत्वाद्युक्त्वा किं सक्रियत्वेन सगुणत्वमापादयसि ? नेत्याह—स्वमाययेति । तदपि स्वमायया स्वाधीनमायाशक्त्या । ननु तर्हि मायासङ्गादासक्तः ? नेत्याह—तेनेति । तेन सृष्ट्यादिना न लिप्यसे । तत्र हेतुः—अनवद्यः रूपादिहीनः । तत् कुतः ? यतः स्वे सुखे स्वरूपभूतपरमानन्दे अजस्ररतः परिपूर्णश्च । गो० ]

४९ । गुणसंवृतः गुणसमूहया मायया संवृतः । गुणशब्दोऽत्र तत्समूहमायापरः । प्रपन्नाः

---

1. ख '-हेतो' ।

स्वांशेन लोकं सकलं विधाय [1]तं बिभर्षि च त्वं तदधः फणीश्वरः ।
[2]उपर्यथोताननिलोडुपौ[3]षधीप्रवर्षरूपोऽवसि नैकधा जगत् ॥ ५० ॥
[4]त्वमिह देहभृतां शिखिरूपः पचसि [5]भुक्तमशेषमजस्रम् ।
पवनपञ्चकरूपसहायो जगदखण्डमनेन बिभर्षि ॥ ५१ ॥

---

५० । नरो० । लोकस्रष्टृलोकधारकौ विहाय कथं मां स्तौषीति चेत्तत्राऽऽह—स्वांशेनेत्यादि । स्वांशेन प्रजापतिना । न केवलमधःस्थितः सन् जगदवसि किन्तु उपरि स्थितोऽपीत्याह—उपर्यथो तानित्यादिना । तान् लोकान् । अनिलश्च उडुपश्च चन्द्रः ओषधी च प्रवर्षश्च एतानि रूपाणि यस्य स तथा । अत एव न एकधा जगदवसि ।

५१ । नरो० । किञ्च त्वमिह जठराग्निर्भूत्वा देहभृतां भुक्तमशेषं पक्त्वा जगदवसीत्याह—

---

शरणागता ये भक्तास्तेषां यदनुविधानं मोक्षस्तन्निमित्तमित्यर्थः । त्वदवतारलीलाश्रवणादिभिस्तेषां पापक्षयद्वारा मोक्षो भवतीत्याशयः । सुरमानुषादिरूपैर्नानावतारैर्लीलां विधत्से इत्यन्वयः । सुरावतारा उपेन्द्राद्याः, मानुषा रामकृष्णाद्याः । एवम्भूतस्त्वं ज्ञानिभिरेव नित्यं प्रतीयसे न त्वन्यैः, ते तु मनुष्योऽयं कश्चिदित्येवं प्रतियन्ति । रा० ।

[ ननु यदि नित्यानन्दमयः सः, तर्हि तस्य सृष्ट्यादौ किं प्रयोजनमिति चेदाह—अगुणसंवृतोऽपीति । त्वमगुणसंवृतोऽपि, ये प्रपन्नास्तेषामर्थः प्रयोजनम्, तस्य विधानहेतोः सुरमानुषाद्यैर्नानाभावैर्लीलां विधत्से करोषि । अयमर्थः—सृष्ट्यादि विना न असुराद्युत्पत्तिः, तया विना न चावतारप्रसङ्गः, तेन विना च न भक्तार्थसाधनमिति सर्वमेव लीलाकारणमित्याशयः । ननु कुत एतज्ज्ञातमिति चेत्तत्राऽऽह—ज्ञानिभिरेवेति । ज्ञानिभिस्तत्त्वज्ञानिभिर्नित्यं त्वमेवं प्रतीयसे ज्ञायसे मदनुभव एवायं प्रमाणमिति भावः । गो० ]

५० । सकललोकं स्वांशेन विधाय तं लोकं तदधःफणीश्वरो भूत्वा त्वं बिभर्षि । भानुः सूर्यः, अनिलो वायुः, उडुपश्चन्द्रः, ओषध्यो व्रीह्याद्याः, प्रवर्षो मेघः । नैकधा अनेकप्रकारेण । रा० ।

[ नानारूपेण त्वमेव जगत् पालयसीत्याह—स्वांशेन ब्रह्मरूपेण लोकं सकलं भुवनं विधाय तदधः पाताले फणीश्वरः सन् सततं सकलं लोकं बिभर्षि धारयसि । अथ चार्थे । उपरि च अनिलः प्राणादिवायुः, उडुपश्चन्द्रः, ओषध्यो यवादयः, प्रवर्षो वर्षणं (?) मेघो वा, ते रूपाणि यस्य तथाभूतः सन् सकलं समग्रं यथा स्यात्तथा अनेकधा बहुप्रकारेण जगज्जगल्लोकान् अवसि पालयसि । गो० ]

५१ । प्रकारान्तरेणापि रक्षकत्वमाह—त्वमिति । शिखिरूपो जाठराग्निरूपः । पवनपञ्चकं प्राणापानसमानोदानव्यानाः । तदुक्तं गीतायाम्—

---

1. क 'तद', च-पुस्तके 'तं' -इति नास्ति । 2. क-ख-ग-घ-च 'उपर्य्यधो भान्व-' । 3. क-ख-ग-छ '-षधि-' । 4. क 'लयीह' । 5. क-ख-ग-च 'भक्त-' ।

चन्द्रसूर्यशिखिमध्यगतं [1]यत् तेज ईश चिदशेषतनूनाम्।
[2]प्राभवत्तनुभृतामिह धैर्यं शौर्यमायुरखिलं तव सत्त्वम् ॥ ५२ ॥
[3]त्वं विरिञ्चि[4]शिवविष्णुविभेदात् कालकर्मशशिसूर्य[5]विभागात्।
वादिनां पृथगिवेश विभासि ब्रह्मनिश्चितमनन्य[6]दिहैकम् ॥ ५३ ॥

---

त्वमित्यादिना। त्वमिह शिखिरूपः। पवनपञ्चकरूपं सहायो यस्य स तथा। तथाच भगवद्गीता—

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ इति १५।१४।

५२। नरो०। चन्द्रसूर्यशिखिमध्यगतं यत्तव सत्त्वं तेन तेजसा चिदशेषतनूनां तनुभृतामिह अखिलं धैर्यं शौर्यमायुश्च प्राभवदित्यन्वयः। चिदश्च ता अशेषतनवश्चेति तासां तथा। धैर्यं धृतिः। शौर्यं पराक्रमः।

५३। नरो०। ननु तर्हि मम ब्रह्मत्वं न स्यात्। तथा चोक्तम्—

---

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ इति। रा०।

[ जठराग्निरूपेण पालयसीत्याह—त्वमिहेति। इह जगति शिखिरूपो जठराग्निरूपः सन् देहभृतां प्राणिनां चतुर्विधं भक्तमन्नं पवनपञ्चकरूपसहायः सन्, पञ्चकं प्राणादिपञ्चसंख्यं रूपं यस्य स चासौ पवनश्चेति स सहायो यस्य तथाभूतः सन् अजस्रं पचसि, अनेनैव प्रकारेण समग्रं जगद् बिभर्षि पालयसि। गो० ]

५२। हे ईश, चन्द्रादिगतं यत्तेजो यच्चाशेषशरीरिणां चिच्चैतन्यं यच्च तनुभृतां शौर्यं धैर्यमायुश्च तदखिलं तव सत्त्वं त्वद्रूपा सत्तैव प्राभवत् तत्तद्रूपेण प्रादुर्भूतेत्यर्थः। रा०।

[ चन्द्रश्च सूर्यश्च शिखी अग्निश्च तेषां मध्यगतं यत्तेजः, हे ईश तत्त्वमेव। तदुक्तं गीतायाम्—

यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ १५।१२

इति। न केवलमेतावत्, किञ्च तनुभृतां जीवानामशेषा यास्तनवो द्विपदचतुष्पदाद्यास्तासां यत्तेजो बलं प्राभवत्, यच्च धैर्यं शौर्यं शूरत्वम्, यच्च आयुस्तदखिलं समस्तमेव त्वमिति भावः। गो० ]

५३। विरिञ्चिर्ब्रह्मा। विभागो भेदः हे ईश, वादिनां तत्तद्भक्तत्वेन तत्र तत्रेश्वरत्वाभि-

---

1. छ 'तत्'। 2. ग 'प्राणभृ-'। 3. च 'त्वा', छ-पुस्तके 'त्वं' इति नास्ति। 4. च '-भव-'। 5. च '-भेदतः'। 6. ग-च '-मिहेश्वम्'।

मत्स्यादिरूपेण यथा त्वमेकः श्रुतौ पुराणेषु च लोकसिद्धः ।
तथैव सर्वं सदसद्विभागस्त्वमेव नान्यद्भवतो विभाति ॥ ५४ ॥
यद् यत् समुत्पन्नमनन्त[1]सृष्टौ उत्पत्स्यते यच्च भवच्च यच्च ।
न दृश्यते स्थावरजङ्गमादौ त्वया विनाऽतः परतः परस्त्वम् ॥ ५५ ॥

---

अव्यावृत्तानलुगतं वस्तु ब्रह्मेति भण्यते ।
ब्रह्मार्थो दुर्लभस्तस्माद् द्वितीये सति वस्तुनि ॥

इत्यत आह—त्वं विरिञ्चिशिवविष्णुविभेदादित्यादि। वादिनां विप्रतिपन्नानाम् अविद्यमानमन्यद् यस्मात् तत्। एकं केवलं निर्धर्मकमिति यावत्।

५४। नरो०। तदेव सदृष्टान्तमाह—मत्स्यादिरूपेणेति पद्येन। सर्वंत्वमेव विवृणोति—सदसद्विभाग इति। सत् कार्यम् असत् कारणम्।

५५। नरो०। पूर्वोक्तमुपसंहरति—यद यदिति पद्येन। परतो हिरण्यगर्भात् परो विलक्षणः।

---

भानवतां तत्तद्रूपेण परस्परस्माद्भिन्न इव भासि। तत्त्वमाह—अनन्यद् भेदशून्यमत एवैकमीदृशं ब्रह्मैव त्वं त्वमेव च ब्रह्मादयः, अतो नैषां भेद इति भावः। रा०।

[नन्वस्य जगतः स्रष्टा ब्रह्मा, संहर्त्ता त्वम्, पालको विष्णुः, परिणामहेतुः कालः, कर्म निमित्तम्, शशिसूर्ययोः प्रकाशकता इति प्रसिद्धं तत् कथमहं सर्वमित्यत आह—त्वमित्यादि। त्वमेव विरिञ्च्यादिभेदात् कालादिविभागाच्च विभासि, वादिनां केवलं वादरूपाणां पृथग् विभासि न वस्तुतः। अत्र हेतुः—यतस्त्वमिह नानाभेदविषयेऽपि एकम् एकरूपं ब्रह्मैव इति निश्चितम्। श्रुतौ निर्णीतम् अतोऽनन्यम्, न विद्यते अन्यद् यस्मात् तदनन्यम्। गो० ]

५४। प्रकारान्तरेणापि सर्वस्य ब्रह्मरूपतां स्थापयति—मत्स्यादीति। एकस्यैव यथा दशरूपत्वं तथैकस्यैव सदसद्विभागरूपता। सद् ब्रह्म विश्वादिकम्, असत् तदितरत् सर्वम्। स एकस्त्वमेव यतो भवतोऽन्यन्न विभाति, बहुशः पर्यालोचनेऽपि न ज्ञानविषयो भवतीत्यर्थः। रा०।

[ अनन्यत्वं सदृष्टान्तमाह—मत्स्यादिरूपेणेति। यथा मत्स्यादिरूपेण त्वम् एक एव श्रुतौ वेदे पुराणेषु च लोकसिद्धः लोकेषु प्रसिद्धः, तथैव सत् कारणम्, असत् कार्यं तद्रूपेण विभागः, सर्वं त्वमेव न भवतोऽन्यद् विभाति। गो० ]

५५। अनन्तसृष्टौ अन्तरहितायां सृष्टौ। तदुक्तं पातञ्जले—'सर्वथा सृष्ट्याद्युच्छेदो नैव कृतार्थमुक्तं प्रत्येव तु तन्निवृत्तिः' इति,

अनादिर्भगवान् कालो नान्तोऽस्य द्विज विद्यते।
अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः ॥ इति स्मृतिश्च।

---

1. क '-सृष्टा'।

तत्त्वं न जानन्ति परात्मनस्ते जनाः समस्तास्तव माय[1]याऽतः ।
त्वद्भ[2]क्तिसेवामलमानसानां विभाति तत्त्वं परमेक[3]मैशम् ॥ ५६ ॥

---

५६ । नरो० । तर्हि जनाः कथं मां मानुषं मन्यन्ते इत्यत आह—तत्त्वमित्यादि । परमात्मनस्ते तव । तर्हि केषाञ्चिदपि मुक्तिर्न स्यादित्यत आह—त्वद्भक्तीत्यादि । तव या भक्त्या सेवा तया अमलं रागादिदोषरहितं मानसमन्तःकरणं येषां तेषां तथा । विभाति स्फुरति । परं परमम् । एकमद्वितीयम् ।

---

तादृश्यां सृष्टौ तज्जातं यद्भावि यच्च वर्त्तमानं तत्त्वया विना न दृश्यते । सर्वं त्वद्रूपमेव दृश्यते अतस्त्वं परतः सर्वोत्कृष्टाद्धिरण्यगर्भादपि पर इत्यर्थः । रा० ।

[ अनन्तसृष्टौ अशेषसृष्टौ यद् यत् समुत्पन्नं जातम्, यद् यदुत्पत्स्यते भविष्यति, यच्च यच्च भवच्च विद्यमानं स्थावरजङ्गमादौ त्वया विना न दृश्यते, किन्तु सर्वं त्वमेव दृश्यते इत्यर्थः । तथाच श्रुतिः—'पुरुष एवेदं सर्वं यद् भूतं यच्च भाव्यम्' ( ऋग्वेद० पुरुषसू० १०म०।९० ) इत्यादि । ननु यद्यहं सर्वं तर्हि सर्वस्य विकारित्वे ममापि विकारित्वं स्यात्तत्राऽऽह—अतः सर्वस्मात् परतोऽपि त्वम् । तत्र हेतुः—यतः परः सर्वातीतः । तथाच श्रुतिः—'पुरुषान्न परं किञ्चित सा काष्ठा सा परा गतिः' (कठ० ३।११) इति । यद्वा ननु प्रकृतिपुरुषात्मकमेव सर्वं जगदिति प्रसिद्धं कार्यस्य कारणाभिन्नत्वात् कुतोऽहमेव सर्वमित्यत आह—अतः परत इति । अतः कार्यरूपाज्जगतः परतः परयोरपि प्रकृतिपुरुषयोस्त्वं परः कारणम्, अतः परमकारणात्मकस्त्व-मित्यर्थः । गो० ]

५६ । नन्वेवंरूपं मां सर्वे जनाः किमिति न जानन्ति तत्राऽऽह—तत्त्वमिति । परमात्मनस्ते एतत्तत्त्वमेते समस्ता जनास्तव मायया संवृता इति शेषः, अतो न जानन्ति । तर्हि सर्वथा मामेवं केऽपि न जानन्ति ? नेत्याह—त्वद्भक्तेति । ते तवैशं तत्त्वं जानन्तीत्यर्थः । रा० ।

[ ननु यद्यहमेवम्भूतस्तर्हि कथं मां दाशरथिमिति वदन्ति तत्राऽऽह—तत्त्वमित्यादि । ते जनास्ते तव तत्त्वं याथार्थ्यं न जानन्ति । परात्मनः परमात्मनस्तव । अज्ञाने हेतुमाह—तव माययेति । त्वन्मायया मुग्धत्वात् । यद्येवं तर्हि सर्वेषां मायावृतत्वान्ममाज्ञाने अनिर्मुक्ति-प्रसङ्गः स्यात् 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' ( श्वेताश्व० ३।८ ) इति श्रुतेरित्यत आह—त्वद्भक्तिसेवेति । त्वद्भक्तेः सेवाऽनुशीलनम्, त्वद्भक्तसेवेति पाठे त्वद्भक्तानां सेवया अमलं मानसं येषां ते, तेषां सम्बन्धे ते तव एकं निर्भेदम् ऐशं परं तत्त्वं विभाति स्फुरद्रूपं प्रकाशते । अतस्त्वद्भक्त्यैव त्वज्ज्ञानान्मुक्तिः सुलभेत्यर्थः । गो० ]

---

1. ग-च-छ '-या ते' । 2 क-ख-ग-घ-छ '-क्तसे-' । 3. च '-मीशम्' ।

ब्रह्मादयस्ते न विदुः स्वरूपं चिदात्मतत्त्वं बहिरर्थभावाः ।
[1]ततो बुधस्त्वामिदमेवरूपं भक्त्या भजन्मुक्तिमु[2]पैत्यदुःखम् ॥ ५७ ॥
अहं भवन्नाम गृणन् कृतार्थो वसामि का[3]श्यामनिशं भवान्या ।
मुमू[4]र्षमाणस्य विमुक्तयेऽहं दिशामि मन्त्रं तव राम नाम ॥ ५८ ॥
इमं स्तवं नित्यमनन्यभक्त्या शृण्वन्ति गायन्ति लिखन्ति ये वै ।
ते सर्वसौख्यं परमञ्च लब्ध्वा भवत्पदं [5]यान्तु भवत्प्रसादात् ॥ ५९ ॥

---

५७ । नरो० । ब्रह्मादयस्ते चिदात्मतत्त्वं स्वरूपं ज्ञातुं न समर्था इत्याह—ब्रह्मादय इत्यादिना । सगुणरूपमपि स्वरूपं भवतीति चेदात्मतत्त्वमित्युक्तम् । ज्ञानाभावे हेतुर्बहिरर्थभावा इति । बहिरर्थे बहिःपदार्थे भावो मनो येषां ते तथा । उपसंहरति—तत इति । अदुःखमनायासमित्यर्थः ।

---

५७ । ते तव चैतन्यरूपमात्मतत्त्वं ब्रह्मादयोऽपि न विदुः, यतस्ते बहिरर्थेषु भावश्चित्तं येषां तादृशाः । ततोऽबुधस्त्वद्रूपज्ञानासमर्थोऽपि इदंरूपमेव त्वां प्रकृतदृश्यमानरूपमेव त्वां भजन् ध्यायन् अदुःखो निवृत्तसकलदुःखः सन् मुक्तिमुपैति । रा० ।

[ आस्तां प्रकृतजनानां वार्ता ब्रह्मादयोऽपि तव तत्त्वं न जानन्तीत्याह—ब्रह्मादय इति । तव चित्स्वरूपम् आत्मतत्त्वं स्वरूपम्, यद्वा चिच्चासावात्मा चेति तत्तत्त्वमेव स्वरूपं न विदुः । यतो बहिर्देहादौ अर्थभावा भावना येषां तैः, अतो बहिर्मानसत्वात् सर्वप्रत्यक् तव स्वरूपं न विदुः । यतः स्वरूपं दुर्ज्ञेयम् अतो बुधो ज्ञानी इदमेवरूपं नराकारं त्वां भजन् अदुःखः मुक्तिमुपैति । गो० ]

५८ । अपरमपि सुलभं साधनं स्वानुष्ठितत्वेनात्युपादेयताञ्च तत्र सूचयन्नाह—अहमिति । अनिशं गृणन् उच्चारयन् मरणसमये जन्तूनां मुक्तये हे राम, तव नामरूपं मन्त्रं दिशामि उपदिशामि । रा० ।

[ तत्राहमेव प्रमाणमित्याह—अहमित्यादि । हे राम, अहं भवतो नामैव गृणन् वदन् सन् कृतार्थः कृतसमस्तध्यानादिकर्मा, नाम्नैव समस्तार्थसिद्धेः । भवान्या सह काश्यामनिशं वसामि, त्वन्नाममन्त्रदानेनान्यानपि कृतार्थयितुमित्यर्थः । भवान्या स्वपत्न्या सहितः, एतेन त्यागाभाव उक्तः । भवन्नाम गृणन् इत्यनेन ध्यानधारणाद्यभाव उक्तः । एवमपि तव नाम्नैव स्वयं कृतार्थ एवम् अन्यानपि तेनैव तारयामि । काश्यां निरन्तरवासस्य प्रयोजनमाह—मुमूर्षमाणस्य मर्तुमिच्छोर्जनस्य विमुक्तये तव नामरूपं मन्त्रं दिशामि । गो० ]

---

1. क 'अतो', घ 'ततोऽबु-' । 2. क-ख-ग-घ-च-छ '-पैत्यदुःखः' । 3. छ '-श्यां सहितो भ-' । 4. च-छ '-र्षुमुद्दिश्य' । 5. च 'यान्ति' ।

इन्द्र उवाच—

रक्षोऽधिपेनाखिलदेवसौख्यं [1]हृतञ्च [2]मे ब्रह्मवरेण देव ।
पुनश्च सर्वं भवतः प्रसादात् प्राप्तं हतो राक्षसदुष्टशत्रुः ॥ ६० ॥

देवा ऊचुः—

हृता यज्ञभागा [3]धरादेवदत्ता मुरारे खलेनाऽऽदिदैत्येन [4]विष्णो ।
[5]हताऽद्य [6]त्वया नो वितानेषु भागाः पुरावद्भविष्यन्ति युष्मत्प्रसादात् ॥६१॥

पितर ऊचुः—

[7]हतोऽद्य त्वया दुष्टदैत्यो महात्मन् गयादौ नरैर्दत्तपिण्डादिकान्नः ।
बलादत्ति हत्वा गृहीत्वा समस्तानिदानीं पुनर्लब्ध[8]सत्त्वा भवामः ॥ ६२ ॥

यक्षा ऊचुः—

सदा [9]विष्टिकर्मण्यनेनाभियुक्ता वहामो दशास्यं बलाद् दुःखयुक्ताः ।
[10]दुरात्मा हतो रावणो राघवेश [11]त्वया ते वयं दुःखजाताद्विमुक्ताः ॥ ६३ ॥

---

६१ । नरो० । धरादेवा ब्राह्मणास्तैर्दत्ता धरादेवदत्ताः । वितानेषु यज्ञेषु ।

६३ । नरो० । दुःखजाताद् दुःखसमूहात् ।

---

६० । अखिलदेवसौख्यमखिलदेवराज्यरूपसौख्यं यतस्त्वया राक्षसरूपोऽस्माकं दुष्टशत्रुर्हतः । रा० ।

६१ । धरादेवा भूदेवा विद्वांसस्तैर्यज्ञेषु दत्ता यज्ञभागा येन खलेन हृताः स त्वया हतस्तेन ते भागा नोऽस्माकं पुरावद् रावणोत्पत्तिप्राक्काल इव भविष्यन्ति । रा० ।

६२ । लब्धसत्त्वास्तत्पिण्डप्राप्तया लब्धबलाः । रा० ।

[ पितरस्तु प्राप्तपिण्डतर्पणाद्या हर्षभरेण स्तुवन्ति—हत इत्यादि । हे महात्मन्, यो दैत्यो गयादौ नरैर्दत्तं पिण्डादिकं नोऽस्मान् समस्तान् हत्वा बलाद् गृहीत्वा अत्ति भक्षयति, त्वया स दैत्यो हतः । इदानीं पुनर्लब्धसत्त्वा अर्थात् पिण्डादिकं भुक्त्वा प्राप्तबला भवामः । गो० ]

६३ । विष्टिकर्मणि वेतनदानं विना बलात् कर्मकरणं विष्टिस्तत्कर्मणि अभियुक्ताः प्रेरिताः दशास्यं वहामः, तदीयपल्यङ्क्यादिवहनेनेति शेषः । दुःखजाताद् दुःखसमूहात् । रा० ।

[ यक्षास्तु रावणवधेन मुक्ता अतिहृष्टाः स्तुवन्ति—सदेत्यादि । अनेन रावणेन बलाद्

---

1. च 'कृत बलाद्' । 2. क 'नो' । 3. क 'पुरा देव-' । 4. क 'विष्णोः' । 5. ख-च 'हतोऽद्य', घ 'हतोऽद्य' । 6. च 'त्वयाऽरिस्तसौ नः स्वभागाः' । 7. क 'हतो यस्त्वया दुष्ट-' । 8. क '-तत्त्वा' । 9. च 'दुष्टक-' । 10. क 'दुरापो' । 11. च 'त्वयाऽसौ' ।

गन्धर्वा ऊचुः—

वयं सङ्गीतनिपुणा गायन्तस्ते कथामृतम् ।
आनन्दामृतसन्दोहयुक्ताः पूर्णाः स्थिताः [1]पुरा ॥ ६४ ॥

पश्चाद् दुरात्मना राम रावणेना[2]भिविद्रुताः ।
[3]तमेव गायमानाश्च तदाराधनतत्पराः ।
स्थितास्त्वया परित्राता [4]हतोऽयं दुष्टराक्षसः ॥ ६५ ॥

एवं महोरगाः सिद्धाः किन्नरा [5]मरुतस्तथा ।
वसवो मुनयो गावो गुह्यकाश्च पतत्रिणः ॥ ६६ ॥

सप्रजापतय[6]श्चैते तथा चा[7]प्सरसां गणाः ।
सर्वे रामं समासाद्य दृष्ट्वा नेत्रमहोत्सवम् ॥ ६७ ॥

स्तुत्वा पृथक् पृथक् सर्वे राघवेणाभि[7]वन्दिताः ।
[8]ययुः स्वं स्वं पदं सर्वे ब्रह्मरुद्रादय[9]स्तथा ॥ ६८ ॥

प्रशंसन्तो मुदा रामं गाय[10]न्तस्तस्य चेष्टितम् ।
ध्याय[11]न्तस्त्वभिषेका[12]र्द्रं सीतालक्ष्मणसंयुतम् ।
सिंहासनस्थं राजेन्द्रं [13]ययुः सर्वे हृदि स्थितम् ॥ ६९ ॥

---

६५ । नरो० । तदाराधनतत्परा रावणाराधनसक्ताः ।

[ पञ्चदशाध्यायव्याख्या समाप्ता ॥ १५ ॥ ]

---

विष्टिकर्मणि अभियुक्ता नियुक्ता वयं दुःखयुक्ताः सन्तो दशास्यं सदा वहामः । राघवेण त्वया दुरात्मा रावणो हतः, अतो वयं दुःखजाताद् दुःखकदम्बात् त्वया विमुक्ता मोचिताः । गो० ]

६४ । पुरा रावणजयात् पूर्वम् । रा० ।

६६ । यतोऽयं हतोऽत एवं स्थितास्त्वया तद्दुःखमोचनेन परित्राताः । रा० ।

६९ । हृदि अन्तर्यामितया स्थितमेव राजेन्द्रं दृश्यमानराजेन्द्ररूपं ध्यायन्तो ययुरित्यन्वयः । रा० ।

---

1. च 'पुरः' । 2. ग '-तिवि-' । 3. च 'त्वामेव' । 4. च 'हतो यद्द दुष्ट-' । 5. च 'मारुता-' । 6. ग-च-छ '-श्चैव' । 7. ग-च-छ '-नन्दिताः' । 8. च 'ययुर्मुदा पदं स्वं स्व' । 9. च '-स्सदा' । 10. च '-न्तोऽस्य च' । 11. ग '-न्तः स्वाभि-', छ '-न्तश्चाभि-' । 12. ख '-र्द्रं सीता-' । 13. ग 'ध्यायन्तस्तं' ।

# षोडशोऽध्यायः

—:०:—

श्रीमहादेव उवाच—

रामेऽभिषिक्ते राजेन्द्रे सर्व[1]लोकसुखावहे।
वसुधा शस्यसम्पन्ना फलवन्तो महीरुहाः।
गन्धहीनानि पुष्पाणि गन्धवन्ति चकाशिरे॥ १॥
सहस्रशतमश्वानां धेनूनाञ्च गवां तथा।
ददौ [2]शतवृषान् पूर्वं द्विजेभ्यो रघुनन्दनः॥ २॥
त्रिंशत्कोटिं[3] सुवर्णस्य ब्राह्मणेभ्यो ददौ पुनः।
वस्त्राभरणरत्नानि ब्राह्मणेभ्यो [4]मुदा तथा॥ ३॥
सूर्यकान्तिसमप्रख्यां सर्वरत्नमयीं स्रजम्।
सुग्रीवाय ददौ प्रीत्या राघवो भक्तवत्सलः।
अङ्गदाय ददौ दिव्ये ह्यङ्गदे रघुनन्दनः॥ ४॥

---

१। वसुधा शस्यसम्पन्ना अभवत् महीरुहा वृक्षाः फलवन्तोऽभवन्निति च शेषः। अत्र तत्रभवतो वाल्मीकेर्नवीनता—

अभिषेके प्रवृत्ते तु तदा रामस्य धीमतः।
मही शस्यवती चैव रसवन्ति फलानि च॥
गन्धवन्ति च माल्यानि...... । इति ६।११२।८३-८४।

२। शतवृषानित्यत्र शतशब्दोऽनन्तवाची। रा०।

पूर्वं शतवृषान् ददौ ततश्च अश्वान्, धेनूः गाश्च ददावित्यर्थः। ब्राह्मणेभ्यो दानमधिकृत्य वाल्मीकिः—

ददौ सहस्रं धेनूनां सहस्रगुणितं तथा।
शतं शतगुणञ्चैव वृषाणां ब्राह्मणेषु च॥
त्रिंशत्कोटीर्हिरण्यस्य ब्राह्मणेभ्यो ददौ पुनः।
यानाभरणवस्त्राणि शयनान्यासनानि च॥
ब्राह्मणेभ्यो ददौ हृष्टो ग्रामांश्च बहुशो बहून्। इति ६।११२।८४-८६।

---

1. च '-लोकः सुखावहः'। 2. च 'शतं वृषाणाञ्च'। 3. च '-टिसुवर्णञ्च', छ '-टिसु-'। 4. च 'ददौ तथा', छ 'ददौ मुदा'।

चन्द्रकोटिप्रतीकाशं मणिरत्नविभूषितम् ।
सीतायै प्रददौ हारं प्रीत्या रघुकुलो[1]त्तमः ॥ ५ ॥

अवमुच्याऽऽत्मनः कण्ठा[2]द्धारं जनकनन्दिनी ।
अवैक्षत हरीन् सर्वान् भर्तारञ्च मुहुर्मुहुः ॥ ६ ॥

रामस्तामाह वैदेहीमिङ्गि[3]तज्ञो विलोकयन् ।
वैदेहि यस्य तुष्टाऽसि देहि तस्मै वरानने ॥ ७ ॥

हनूमते ददौ हारं पश्यतो राघवस्य च ।
तेन हारेण शुशुभे मारुतिर्गौरवेण च ॥ ८ ॥

रामो[4]ऽपि मारुतिं दृष्ट्वा कृताञ्जलिमुपस्थितम् ।
भक्त्या परमया तुष्ट इदं वचनमब्रवीत् ॥ ९ ॥

---

६ । सर्वान् हरीन् भर्त्तारं रामञ्च मुहुर्मुहुर्वारं वारं यथा स्यात्तथा अवैक्षत । एतेन हरिषु कस्मैचिद् हारदानस्पृहेति इङ्गितेन भर्त्तरि विनिवेदितमिति ध्वनितम् ।

७ । इङ्गितज्ञो रामस्तां वैदेहीं विलोकयन् आह—हे वैदेहि, त्वं यस्य यस्मिन्नित्यर्थः, तुष्टा असि, तस्मै देहि हारमिति शेषः ।

वाल्मीकीयेऽपि—

तानीङ्गितानि संप्रेक्ष्य बभाषे राघवः प्रियाम् ।
प्रयच्छ सुभगे हारं यस्य तुष्टाऽसि मैथिलि ॥ इति । ६।११२।९२ ।

८ । अत्रान्येषां सर्वेषामेव वानरराक्षसर्क्षाणाम् अलङ्करणादिदानेन रामेण सन्तोषविधानं वाल्मीकीये । तथाच—

ततो द्विविदनीलाभ्यां मैन्दाय पनसाय च ।
सर्वकामगुणान् देयान् प्रददौ वसुधाधिपः ॥
सर्ववानरवृद्धेभ्यो ये चान्ये वानरेश्वराः ।
स तेभ्यः प्रददौ रामो भूषणानि यथार्हतः ॥
एवन्ते पूजिताः सर्वे कामै रत्नैश्च पुष्कलैः ।
उषित्वा वानरा वासं राक्षसर्क्षास्तथैव च ॥ इति ६।११२।९५—९७ ।

९ । कृताञ्जलिमुपस्थितमित्युक्त्या हनूमतः काचित् प्रार्थना वर्त्तते इति ध्वनितम् । वरप्रदानमिदं प्रस्थानावसरे वाल्मीकीये—

---

1, ग-च '-द्वहः' । 2. क '-त् सीता' । 3. च '-तज्ज्ञो', क '-तज्ञा' । 4. ग-च-क '-ऽथ' ।

हनूमंस्ते प्रसन्नोऽस्मि वरं वरय काङ्क्षितम् ।
दास्यामि देवैरपि यद् दुर्लभं भुवनत्रये ॥ १० ॥

हनूमानपि तं प्राह नत्वा रामं प्रहृष्टधीः ।
त्वन्नाम स्मरतो राम न तृप्यति मनो मम ।
अतस्त्वन्नाम सततं स्मरन् स्थास्यामि भूतले ॥ ११ ॥

---

प्रस्थितन्तु हनूमन्तमुवाच रघुनन्दनः ।
हनूमंस्त्वं मया नातिसत्कृतो हरिपुङ्गव ॥
तस्माद् वरं वृणीष्वाद्य महत कर्म कृतं त्वया । इति ६।११२।९९-१०० ।

१० । यद्वस्तु देवैरपि दुर्लभं तदपि तव वररूपं दास्याम्येवेत्यर्थः । रा० ।

११ । उक्तञ्चान्यत्र—
राज्योत्सवागतजनाय रघुप्रवीरः प्रीत्या त्वनेकमणिरत्नविभूषणानि ।
दत्त्वाऽनिलात्मजमपास्य विदेहजायै मालां ददौ रघुपतिः परमादरेण ॥
तया हनूमते दत्ता सैव माला ह्यमूलिका ।
दशनैः शकलीकृत्य त्यक्ता तेन जलाशये ॥
हा हेति जल्पितं सर्वैस्तदा ससुरवानरैः ।
स्वजातीयमरे कर्म त्वया कृतमरिन्दम ।
रामस्ततो मारुतिमत्युदारमाहूय चाऽऽरादभिवर्त्तमानम् ।
पप्रच्छ कस्मान्महती सुमाला त्यक्ता त्वया ब्रूहि विदेहजार्पिता ॥
ब्रह्मेति यद् ब्रह्मविदो वदन्ति ह्यात्मेश्वरश्चेति वदन्ति सन्तः ।
सीतापते त्वं तदसीति बुद्ध्या त्यक्ता मयेयं सकलार्त्तिरूपा ॥
हनूमन् यदि मत्तस्त्वं वरं किमपि नेच्छसि ।
तवेच्छां तर्हि निर्मुक्तां करिष्यामि च निष्फलाम् ॥
श्रीरामश्रवणे दास्ये ममास्तु सफला स्पृहा ।
तस्या विरोधिनी या तु निर्मूलां कुरु तां प्रभो ॥
मम स्वान्ते सदैव त्वं सीतया सह तिष्ठसि ।
अद्यैव सर्वे पश्यन्तु स्थितं त्वां जानकीपते ॥
विदीर्य वक्षःस्थलमञ्जनीसुतः प्रदर्शयामास च राममद्वयम् ।
हृदम्बुजे संस्थितमब्जलोचनं महीसुताराधितपादपङ्कजम् ॥
मारुतेर्वैभवं दृष्ट्वा सर्वे सन्तोषमागताः ।
रामेणाऽऽलिङ्गितः श्रीमान् हनूमानञ्जनीसुतः ॥

यावत् स्थास्यति ते नाम लोके तावत् कलेवरम् ।
मम तिष्ठतु राजेन्द्र वरोऽयं मेऽभिकाङ्क्षितः ॥ १२ ॥
रामस्तथेति तं प्राह मुक्तस्तिष्ठ यथासुखम् ।
कल्पान्ते मम सायुज्यं प्राप्स्यसे नात्र संशयः ॥ १३ ॥
[1]तमाह जानकी [2]प्रीता यत्र कुत्रापि मारुते ।
स्थितं त्वामनु[3]यास्यन्ति भोगाः सर्वे ममाऽऽज्ञया ॥ १४ ॥
इत्युक्तो मारुतिस्ताभ्यामीश्वराभ्यां प्रहृष्टधीः ।
आनन्दाश्रुपरीताक्षो भूयो भूयः प्रणम्य तौ ।
कृच्छ्राद् ययौ तपस्तप्तुं हिमवन्तं महामतिः ॥ १५ ॥

---

१५ । नरो० । आनन्दाश्रुणा परीते व्याप्ते अक्षिणी यस्य स तथा । कृच्छ्रात् कष्टं प्राप्येत्यर्थः । तप्तुमर्जयितुम् ।

---

जयशब्दो महानासीत् तदा राघवमण्डपे ।
सीता प्रमुदिता तस्मै वरानभयदान् ददौ ॥
रामलीलामृतश्चैतत् परमानन्ददायकम् ।
श्रोतॄणां चाथ गृणतां पापसंघविघातकम् ॥ इति ।

१३ । हनूमते रामस्य वरप्रदानं वाल्मीकीये—

एवं तस्य वचः श्रुत्वा रामो वचनमब्रवीत् ।
एवं भवतु भद्रं ते यावद्भूमिर्धरिष्यति ॥
पर्वताश्च समुद्राश्च तावदायुरवाप्नुहि ।
बलवान् नीरुजश्चैव तरुणो न जरान्वितः ॥ इति ६।११२।१०२—१०३।

१४ । जानक्या वरप्रदानमपि तत्रैव—

मैथिल्यपि तदा चैनमुवाच वरमुत्तमम् ।
उपस्थास्यन्ति भोगास्त्वां स्वयमेवेह मारुते ॥
देवदानवगन्धर्वास्तथैवाप्सरसां गणाः ।
यत्र तिष्ठसि तत्र त्वां सेविष्यन्ते यथाऽमरम् ॥
फलान्यमृतकल्पानि तोयानि विमलानि च ।
उत्पत्स्यन्ति यथाकामं स्मरणेन तवानघ ॥ इति ।६।११२।१०४-१०६।

१५ । कृच्छ्रादिति । रामदर्शनवियोगतः कृच्छ्रम् । रा० ।

---

1. क 'तमाऽऽह' । 2. क 'प्रीत्या' । 3. च '-गच्छन्तु' ।

ततो गुहं समासाद्य रामः प्राञ्जलिमब्रवीत् ।
सखे गच्छ पुरं रम्यं शृङ्गबेरमनुत्तमम् ॥ १६ ॥
मामेव चिन्तयन्नित्यं [1]भुङ्क्ष्व भोगा[2]न्निजार्जितान् ।
[3]अन्ते ममैव सारूप्यं प्राप्स्यसे त्वं न संशयः ॥ १७ ॥
इत्युक्त्वा प्रददौ तस्मै दिव्यान्याभरणानि च ।
राज्यञ्च विपुलं दत्त्वा विज्ञानञ्च ददौ [4]विभुः ॥ १८ ॥
रामेणाऽऽलिङ्गितो हृष्टो ययौ स्वभवनं गुहः ।
ये चान्ये वानराः श्रेष्ठा अयोध्यां समुपागताः ।
अमूल्याभरणैर्वस्त्रैः पूजयामास राघवः ॥ १९ ॥
सुग्रीवप्रमुखाः सर्वे [5]वानराः सविभीषणाः ॥
[6]यथार्हं पूजितास्तेन रामेण परमात्मना ॥ २० ॥
[7]प्रहृष्टमनसः सर्वे जग्मुरेव यथागतम् ।
सुग्रीवप्रमुखाः सर्वे किष्किन्ध्यां प्रययुर्मुदा ॥ २१ ॥
विभीषणस्तु संप्राप्य राज्यं निहतकण्टकम् ।
रामेण पूजितः प्रीत्या ययौ लङ्कामनिन्दि[8]तः ।
[9]राघवो राज्यमखिलं शशासाखिलवत्सलः ॥ २२ ॥
अनिच्छन्नपि रामेण यौवराज्येऽभिषेचितः ।
लक्ष्मणः परया भक्त्या रामसेवापरो[10]ऽभवत् ॥ २३ ॥

---

२२ । नरो० । निहतकण्टकं निहतशत्रुम् ।

---

१६ । अविद्यमानमुत्तमं यस्मात् तत्तथा । रा० ।
१७ । मामेव चिन्तयन् इत्यनेन भोगेष्वनासक्तो भवेति सूच्यते । रा० ।
१८ । विद्यमानराज्यादधिकदेशराज्यम् । विज्ञानमात्मतत्त्वज्ञानम् । रा० ।
१९ । आलिङ्गितः बहिःशरीरेण सर्वदा स्वानुसन्धानदानेनान्तश्चाऽऽलिङ्गितः । रा० ।
२१ । सर्वे सुग्रीवप्रमुखा वानरा यथागतं तथैव किष्किन्ध्यां प्रययुरित्यन्वयः ।
२३ । यौवराज्ये लक्ष्मणाभिषेको वाल्मीकीयविरोधी । तथाच पाश्चात्त्ये—
आतिष्ठ धर्मज्ञ मया सहेमां गां पूर्वराजाध्युषितां बलेन ।
तुल्यं यथा त्वं पितृभिः पुरस्तात् तैर्यौवराज्ये धुरमुद्वहस्व ॥

---

1. च 'भुक्त्वा' । 2. छ '-ननुत्तमान्' । 3. च 'अन्ते च मम', छ 'ततो' । 4. ग 'प्रभु' । 5. च-छ 'किष्किन्ध्या प्रययुर्मुदा' । 6. छ-पुस्तके इतोऽर्धद्वितयं नास्ति । 7. च-पुस्तके अयं श्लोको नास्ति । 8. च-छ '-ताम्' । 9. च 'रामोऽपि' । 10. छ 'भवेत्' ।

रामस्तु परमात्माऽपि कर्माध्यक्षोऽपि निर्मलः ।
कर्त्तृत्वादिविहीनोऽपि निर्विका[1]रोऽपि सर्वदा ॥ २४ ॥
स्वानन्देना[2]पि तुष्टः सँल्लोकानामुपदेशकृत् ।
अश्वमेधादियज्ञैश्च सर्वैर्विपुलदक्षिणैः ॥
अयजत् परमानन्दो मानुषं वपुरा[3]श्रितः ॥ २५ ॥

---

२४। नरो०। ततः श्रीरामः किं कृतवानित्यपेक्षायामाह—रामस्त्वित्यादि। कर्माध्यक्षोऽपीति। 'प्रत्यक्षेऽधिकृतेऽध्यक्षः' इत्यमरः। निर्मलो रागादिदोषरहितः। निर्विकारो देहेन्द्रियादिशून्यः।

२५। नरो०। तुष्टो निराकाङ्क्षः परमात्मत्वादिविशिष्टोऽपि रामो मानुषं वपुराश्रितः सन् सर्वैर्विपुलदक्षिणैरश्वमेधादिभिरयजत्, यतो लोकानामुपदेशकृदिति योजना।

---

सर्वात्मना पर्यनुनीयमानो यदा न सौमित्रिरुपैति योगम्।
नियुज्यमानो भुवि यौवराज्ये ततोऽभ्यषिञ्चद् भरतं महात्मा ॥

इति ६।१३०-९२-९३।

'सर्वात्मना पर्यनुनीयमानः ज्येष्ठे भरते विद्यमानेऽहं यौवराज्यानर्ह इति निषेधे क्रियमाणेऽपि पुनः पुनरनुनीयमान इत्यर्थः। नियुज्यमानोऽपि न्यायप्राप्तस्वीययौवराज्येन भरतेनानुनीयमानोऽपि योगं यौवराज्यसंसर्गं नोपैति नेच्छति स्म, ततो भरतं यौवराज्येऽभ्यषेचयत्।' इति रामायण-तिलकटीकायाम्। एतेन व्यक्तमेव लक्ष्मणस्य यौवराज्याग्रहणं प्रतीयते। अथ यद्येकवाक्य-तायामाग्रहस्तदा 'भरतो यौवराज्ये अभिषेचितः सन् युवराजोचितकार्यं चकार इति शेषः। यौवराज्यम् अनिच्छन् लक्ष्मणः परया भक्त्या रामसेवापरोऽभवत्।' कष्टेनैवमर्थः करणीयः।

२४। कर्माध्यक्षः सर्वकर्मसाक्षी। कर्त्तृत्वादिविहीनो निरभिमानत्वात्। अत एव निर्विकारः। रा०।

२५। स्वानन्देन तुष्ट इत्यनेन लौकिकानन्दसामग्रीनिरपेक्षत्वमुक्तम्। लोकानामुप-देशकृद् अनेन लोकोपदेश एव यज्ञाद्यनुष्ठानप्रयोजनमुक्तम्। रा०।

अश्वमेधादियज्ञैश्चेत्यादि। वाल्मीकीयेऽत्र—

स राज्यमखिलं प्राप्य निहतारिर्महायशाः।
ईजे बहुविधैर्यज्ञैर्महद्भिश्चाऽऽप्तदक्षिणैः ॥
दशाश्वमेधानाजह्रे जारूथ्यान् भूरिदक्षिणान्।
पुण्डरीकाश्वमेधाभ्यां वाजपेयेन चासकृत् ॥ इति ६।११३।९-१०।

---

1. छ '-रो निरञ्जन'। 2. छ '-नाभिसन्तुष्टो लोका-'। 3. च-छ '-स्थितः'।

न पर्यदेवन् विधवा न च व्यालकृतं भयम् ।
न व्याधिजं भयं चाऽऽसी[1]द्रामे राज्यं प्रशासति ।
लोके दस्युभयं नासी[2]दनर्थो नास्ति कश्चन ॥ २६ ॥

वृद्धेषु सत्सु बालानां नाऽऽसीन्मृत्युभयं तथा ।
रामपूजापराः सर्वे [3]सर्वे राघवचिन्तकाः ॥ २७ ॥

ववृषुर्जलदास्तोयं [4]यथाकालं यथारुचि ।
प्रजाः स्वधर्मनिरता वर्णाश्रम[5]गुणान्विताः ॥ २८ ॥

---

२६ । नरो० । अनर्थोऽकार्यः ।

२७ । नरो० । रामपूजा एव परः पुरुषार्थो येषां ते तथा ।

२८ । नरो० यथाकालं कालानतिक्रमेण । यथारुचि अर्थात् प्रजानाम् ।

हृष्टः प्रमुदितो लोकस्तुष्टः पुष्टः सुधार्मिकः ।
निरामयो विशोकश्च दुर्भिक्षायासवर्जितः ॥

न पुत्रमरणं केचित् पश्यन्ति स्म नराः क्वचित् ।
नार्यश्चाविधवा नित्यं पतिशुश्रूषणे रताः ॥

न वातजं भयं किञ्चिन्नाप्सु मज्जन्ति जन्तवः ।
न चाग्निजं भयं किञ्चिद् यथा कृतयुगे तथा ॥

न तस्य राज्ये बधिरा नानाथास्तत्र नाबुधः ।
न दुर्गतो न कृपणो न व्याध्यार्त्तोऽभवन्नरः ॥ इति १।१।९७-१००।

---

२६ । विधवा न पर्यदेवन् रामराज्ये अकालवैधव्यस्यादर्शनात् पतिशोकपरायणा रमण्यो नाऽऽसन्निति भावः । व्यालकृतं सर्पकृतं व्याघ्रादिहिंस्रजन्तुकृतञ्चेत्यर्थः । लोके जने भुवने च । अनर्थः अनिष्टपातः अर्थाभावश्च ।

२७ । वृद्धेषु सत्सु बालानां मृत्युभयं नास्तीत्युक्त्या तत्र अकालमृत्योरभावः सूचितः । इममेवार्थमवलम्ब्य वाल्मीकीये—

अग्रेऽपि—

न चापि वृद्धा बालानां प्रेतकार्याणि कुर्वते ॥ इति ६।११।३।

---

1. क '-दनर्थो नास्ति कश्चन' । 2. क '-द्रामे राज्यं प्रशासति' । 3. च 'तदा' । 4. च 'जनाः सर्वे मुदाऽन्विताः' । 5. घ '-मया-' ।

औरसानिव रामोऽपि जुगोप पितृवत् प्रजाः ।
सर्वलक्षणसं[1]युक्ताः सर्वधर्मपरायणाः ।
[2]दशवर्षसहस्राणि रामो राज्यमुपास्त सः ॥ २९ ॥
इदं रहस्यं धनधान्यऋद्धिमद्दीर्घायुरारोग्यकरं सुपु[3]ण्यदम् ।
पवित्र[4]मध्यात्मकसंज्ञितं पुरा रामायणं भाषितमादिशम्भुना ॥ ३० ॥
शृणोति भक्त्या मनुजः समाहितो भक्त्या [5]पठेद् वा परितुष्टमानसः ।
सर्वाः समाप्नोति मनोगताशिषो विमुच्यते पातककोटिभिः क्षणात् ॥ ३१ ॥
रामाभिषेकं प्रयतः शृणोति [6]यो धनाभिलाषी लभते महद्धनम् ।
पुत्राभिलाषी सुतमार्यसम्मतं प्राप्नोति रामायणमादितः पठन् ॥ ३२ ॥

---

३१ । नरो० । मनोगताशिषो मनोगतकामनाः ।

३२ । नरो० । आदितः प्रथममधिकृत्य इत्यर्थः ।

---

२९ । औरसानिव स्वस्मिन् प्रीतिमतीः प्रजा रामः पितृवज्जुगोप । पितरि पुत्राणामिव प्रजानां रामे स्नेहः, पितुः पुत्रेष्विव प्रजासु रामस्येति बोधितम् । रा० ।

दशवर्षसहस्राणीति । वार्त्तेयं पाश्चात्त्यवाल्मीकीयानुसारिणी । तथाच—

दशवर्षसहस्राणि रामो राज्यमकारयत् । इति ६।१३०।१०४।

प्राच्ये पुनः—

दशवर्षसहस्राणि दशवर्षशतानि च ।
रामो राज्यमुपास्यासौ विष्णुलोकं गमिष्यति ॥ इति १।१।१०३।

'दशवर्षसहस्राणि दशवर्षशतानि च एकादशसहस्रवत्सरान् ।' इति एतट्टिप्पन्यां श्रीमदमरेश्वरवेदान्तशास्त्रिणः । एतेन वर्षसहस्रस्य पार्थक्यं प्राच्यपाश्चात्त्ययोरिति सुधीभिः समाधेयम् ।

३० । धनधान्यऋद्धिमत् तद्युक्तं यद्दीर्घमायुरारोग्यं च तयोः कारकम् । आत्मानमधिकृत्य भवमाध्यात्मिकम् । रा० ।

अध्यात्ममेवाध्यात्मकं अध्यात्मकमिति संज्ञा जाताऽस्येत्यर्थः ।

३१ । समाहितस्तदेकचित्तः परितुष्टमानसः, भगवत्कथापाठनजानन्देनेति भावः । मनोगताशिषः मनसा आशास्यमानानर्थान् । रा० ।

३२ । रामाभिषेकं रावणजयपूर्वकं प्राप्तम् । आर्यसम्मतं शिष्टसंमतं तेन स्वयं शिष्ट इति यावत् । रा० ।

---

1. ग-घ-च '-युक्तः सर्वधर्मपरायणः', क '-युक्त सर्वकर्मपरायणः' । 2. अस्याङ्कस्य स्थाने ग-च-पुस्तकयोः 'दशवर्षसहस्राणि दशवर्षशतानि च । रामो राज्यमुपास्यैव स्वर्लोकं प्राप्तवान् पुन. ॥' इति पाठः । 3. क '-ण्यम' । 4. क-ख-घ '-माध्यात्मिक-' । 5. क 'पठिला' । 6. क-पुस्तके 'यो' नास्ति ।

श्रृणोति योऽध्या[1]त्मिकरामसंहितां प्राप्नोति राज्यं भुवमृद्धसम्पदम् ।
शत्रून् विजित्यारिभिरप्रधर्षितो व्यपेतदुःखो विजयी भवे[2]न्नृपः ॥ ३३ ॥
स्त्रि[3]योऽपि श्रृण्वन्त्यधिरामसंहितां भवन्ति ता जीवसुताश्च पूजिताः ।
वन्ध्याऽपि पुत्रं लभते सुरूपिणं कथामिमां भक्ति[4]युता श्रृणोति या ॥ ३४ ॥
श्रद्धान्वितो यः श्रृणुयात् पठेन्नरो विजित्य कोपञ्च तथा विमत्सरः ।
दुर्गाणि सर्वाणि विजित्य निर्भयो भवेत् [5]सुखी राघवभक्तिसंयुतः ॥ ३५ ॥
सुराः समस्ता अपि यान्ति तुष्टतां विघ्नाः समस्ता [6]अपयान्ति श्रृण्वताम् ।
अध्यात्मरामायणमादितो नृणां भवन्ति सर्वा अपि सम्पदः पराः ॥ ३६ ॥
रजस्वला वा यदि रामतत्परा श्रृणोति रामायणमेतदा[7]दितः ।
पुत्रं प्रसूते ऋषभञ्चिरायुषं पतिव्रता लोकसुपूजिता भवेत् ॥३७ ॥

पूजयित्वा तु ये भक्त्या नमस्कुर्वन्ति नित्यशः ।
[8]सर्वैः पापैर्विनिर्मुक्ता विष्णोर्यान्ति परं पदम् ॥ ३८ ॥
अध्यात्मरामचरितं कृत्स्नं श्रृण्वन्ति [9]भक्तितः ।
पठन्ति वा[10] स्वयं [11]वक्तॄस्तेषां रामः प्रसीदति ॥ ३९ ॥
राम एव परं ब्रह्म तस्मिंस्तुष्टेऽखिलात्मनि ।
धर्मार्थकाममोक्षाणां यद् यदिच्छति तद् भवेत् ॥ ४० ॥
श्रोतव्यं नियमे[12]नैतद्रामायणमखण्डितम् ।
आयुष्यमारोग्यकरं कल्पकोट्यघनाशनम् ॥ ४१ ॥

---

३३ । नरो० । ऋद्धया सम्पद् यत्र तां तथा ।

३७ । नरो० । रामतत्परा रामासक्ताः । ऋषभं श्रेष्ठम् ।

---

३५ । कोपमित्युपलक्षणं कामादीनाम् । विमत्सरः अनीर्ष्यः । सर्वाणि दुर्गाणि दुःखस्थानानि । रा० ।

३७ । रामतत्परा रामैकचित्ता । रजस्वलायाः श्रवणं चतुर्थेऽहन्यारभ्य द्वादशरात्रान्तम् । रा० ।

रजस्वलेति । तथाच पाश्चात्त्ये—

स्त्रियो रजस्वलाः श्रुत्वा प्रसूयन्ते सुतान् शुभान् । इति ६।१३०।११४।

'स्त्रियो रजस्वलाः शुद्धाः स्नानानन्तरं षोडशदिनावधि' इति एतट्टीकायाम् ।

---

1. क '-त्मक-' । 2. क '-न्नरः' । 3. ग-च '-यश्च' । 4. च '-युता' । 5. क 'सुधी' । 6. ग-च 'अपि या-' । 7. च '-हता' । 8. च 'सर्वपापैर्वि-' । 9. ग 'यत्नतः' । 10. च 'वापि वै भक्त्या' । 11. ग-क 'भक्त्या तेषां' । 12. ग '-नैव रामा-' ।

देवाश्च सर्वे तुष्यन्ति ग्रहाः सर्वे महर्षयः ।
रामायणस्य श्रवणे तुष्यन्ति पितरस्तथा ॥ ४२ ॥
अध्यात्मरामायणमेतदद्भुतं वैराग्यविज्ञानयुतं [1]पुरातनम् ।
पठन्ति शृण्वन्ति लिखन्ति ये नरास्तेषां भवेऽस्मिन्न पुनर्भवो भवेत् ॥ ४३ ॥
आलोड्याखिल[2]वेदराशिमसकृद् यत्तारकं ब्रह्म तद्
रामो विष्णुरहस्यमूर्त्तिरिति यो विज्ञाय भूतेश्वरः ।
उद्धृत्याखिलसारसंग्रहमिदं संक्षेपतः प्रस्फुटं
श्रीरामस्य निगूढतत्त्वमखिलं प्राह प्रियायै भवः ॥ ४४ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे लङ्काकाण्डे
षोडशोऽध्यायः ॥ १६ ॥

---

४३ । नरो० । अस्मिन् भवे अस्मिन् संसारे । भवो जन्म ।

४४ । नरो० । अखिलवेदराशिम् असकृद् शश्वदालोड्य मथित्वा । तत्तारकं ब्रह्म । तद्रामो विष्णुरहस्यमूर्त्तिरिति विज्ञाय यो भूतेश्वरो भवः अखिलसारसंग्रहमिदम् उद्धृत्य अर्थात् अखिलवेदराशेः, श्रीरामस्य अखिलं निगूढं प्रस्फुटं यथा स्यात्तथा प्रियायै प्राहेत्यन्वयः ।

[ लङ्काकाण्डे षोडशाध्यायव्याख्या समाप्ता ॥ १६ ]

---

४४ । यो भूतेश्वरो भवः शिवः असकृदखिलवेदराशिमालोड्य यत्तारकं ब्रह्म तदेव रामः विष्णुरस्य मूर्त्तिषु अत्यन्तरहस्यमूर्त्तिः मुख्या मूर्त्तिरिति विज्ञायाखिलवेदानां सारभूता उपनिषदस्तदर्थसंग्रहमुद्धृत्य सङ्क्षेपत इदं रामस्य निगूढतत्त्वं प्रियायै प्राह । तस्मै नम इति शेषः । अयं श्लोकस्तत्र श्रोतुः शिवशिष्यस्येति बोध्यम् । रा० ।

## लङ्काकाण्डं समाप्तम् ॥ ६ ॥

---

1. क 'पुराणम्' । 2. च '-शास्त्र-' ।

# अध्यात्मरामायणम्

## उत्तरकाण्डम्

### प्रथमोऽध्यायः

—:*:—

[1]श्रीपार्वत्युवाच—

अथ रामः किमकरोत् कौशल्या[2]नन्दिवर्धनः ।
हत्वा मृधे रावणादीन् राक्षसान् भीमविक्रमः[3] ॥ १ ॥

अभिषिक्तस्त्वयोध्यायां सीतया सह राघवः ।
मायामानुषतां प्राप्य कति वर्षाणि भूतले ।
स्थितवाँल्लीलया देवः परमात्मा सनातनः ॥ २ ॥

---

१ । नरो० । अथेति । कौशल्यानन्दिवर्धन इति 'स्यान्नन्दिवर्धनः पुत्रः' इति कोषान्तरात् कौशल्यापुत्र इत्यर्थः, कौशल्यानन्दवर्धक इत्यर्थो वा ।

---

१ । [ राज्यप्राप्त्यनन्तरं रामस्य वृत्तान्तं पार्वती पृच्छति—अथेति । अथ राज्यप्राप्तेरनन्तरम् । अयं भावः—किं विषयाभिनिवेशाद् विस्मृतनिजतत्त्वो भोगासक्तोऽभूत, अथ वा निर्लेप एव तस्थाविति । गो० ]

२ । भूतले स्थितवान् इत्यन्वयः । लीलया स्वेच्छामात्रेणेत्यर्थः । एतेन सर्वकर्त्तुस्तस्य गमनावस्थितिप्रभृतीनि स्वाधीनानीति ध्वनितम् ।

---

1. इतः पूर्वं क-ख-घ-पुस्तकेषु 'जयति रघुवंशतिलकः कौशल्याहृदयनन्दनो रामः । दशवदननिधनकारी दाशरथिः पुण्डरीकाक्षः ॥' इत्यधिकम् । 2. ख-घ-च '-नन्द-' । 3. च '-मान्' ।

अत्यजन्मानुषं लोकं कथमन्ते रघूद्वहः ।
एतदाख्याहि भगवन् श्रद्दधत्या मम प्रभो ॥ ३ ॥
कथापीयूषमास्वाद्य तृष्णा [1]मेऽतीव वर्धते ।
रामचन्द्रस्य [2]भगवन् ब्रूहि विस्तरशः [3]कथाम् ॥ ४ ॥

श्रीमहादेव उवाच—

राक्षसानां वधं कृत्वा [4]राज्यं राम उपस्थिते ।
आययुर्मुनयः सर्वे श्रीराममभि[5]नन्दितुम् ॥ ५ ॥
विश्वामित्रोऽसितः [6]कण्वो दुर्वासा भृगुरङ्गिराः ।
[7]कश्यपो वामदेवोऽत्रिस्तथा सप्तर्ष[8]योऽमलाः ॥ ६ ॥

---

५ । नरो० । अभिनन्दितुं प्रशंसितुम् ।

---

३ । श्रद्दधत्या एतच्छ्रवणे श्रद्धावत्याः । कथामृतमास्वाद्य मे मम तदास्वादनविषया तृष्णा अत्यन्तं वर्धते । रा० ।

कथं केन प्रकारेण कां लीलामाश्रित्येत्यर्थः ।

५ । रामे राज्यमुपस्थिते राज्यं प्राप्तवतीत्यर्थः । अभिवन्दितुं नन्तुं स्तोतुञ्च । रा० ।

६ । मुनीनामभिधाननवीनता प्राच्ये पाश्चात्त्ये च वाल्मीकीये । तथाच प्राच्ये—

कौशिकोऽथ यवक्रीतो वैश्वश्च्यवन एव च ।
कण्वो मेधातिथेः पुत्रः पूर्वां ये संश्रिता दिशम् ॥
स्वस्त्यात्रेयोऽथ भगवान् मुमुचुः प्रमुचुस्तथा ।
आजग्मुस्ते महात्मानो ये श्रिता दक्षिणां दिशम् ॥
उषद्गुः कमठो धौम्यो रौद्राश्वश्च महातपाः ।
तेऽप्याजग्मुः सशिष्या वै प्रतीचीं ये श्रिता दिशम् ॥
वशिष्ठः कश्यपोऽत्रिश्च विश्वामित्रोऽथ गौतमः ।
जमदग्निर्भरद्वाजस्तथा सप्तर्षयोऽमलाः ॥
उदीच्यां दिशि सप्तैते नित्यमेव निवासिनः ।
प्राप्य ते तु महात्मानो राघवस्य निवेशनम् ॥ इति ७।१।२-६ ।

पाश्चात्त्ये पुनः—

कौशिकोऽथ यवक्रीतो गार्ग्यो गालव एव च ।
कण्वो मेधातिथेः पुत्रः पूर्वस्यां दिशि ये श्रिताः ॥

---

1. ग 'मेऽतिविवर्धते' । 2. च 'देवेश' । 3 ग 'कथा' । 4. ग-च 'राज्ये रामे सुख स्थिते,' क 'राज्ये' । 5. क-ख-घ '-वन्दि' । 6. च 'कर्णो' । 7. क 'काश्य-' । 8. च '-यो मुदा' ।

अगस्त्यः [1]सह शिष्यैश्च मुनिभिः सहितोऽभ्यगात् ।
द्वारमासाद्य रामस्य द्वारपालमथाब्रवीत् ॥ ७ ॥
ब्रूहि रामाय मुनयः समागत्य बहिः स्थिताः ।
अगस्त्यप्रमुखाः [2]सर्व आशीर्भिरभिनन्दितुम् ॥ ८ ॥
प्रतीहारस्ततो राममगस्त्यवचनाद् द्रुतम् ।
नमस्कृत्याब्रवीद् वाक्यं विनयावनतः प्रभुम् ॥ ९ ॥
कृताञ्जलिरुवाचेदमगस्त्यो मुनिभिः सह ।
देव त्वद्दर्शना[3]र्थाय प्राप्तो बहिरुपस्थितः ॥ १० ॥
[4]तमुवाच द्वार[5]पालं प्रवेशय यथासुखम् ।
पूजिता विविशुर्वेश्म नाना[6]रत्नविभूषितम् ॥ ११ ॥

---

७ । नरो० । मुनिभिर्मननशीलैः ।
९ । नरो० । प्रतीहारो द्वारपालः ।

---

स्वस्त्यात्रेयश्च भगवान् नमुचिः प्रमुचिस्तथा ।
अगस्त्योऽत्रिश्च भगवान् सुमुखो विमुखस्तथा ॥
आजग्मुस्ते सहागस्त्या ये श्रिता दक्षिणां दिशम् ।
नृषङ्गुः कवषो धौम्यः कौशेयश्च महानृषिः ॥
तेऽप्याजग्मुः सशिष्या वै ये श्रिताः पश्चिमां दिशम् ।
वशिष्ठः कश्यपोऽथात्रिर्विश्वामित्रः सगौतमः ॥
जमदग्निर्भरद्वाजस्तेऽपि सप्तर्षयस्तथा ।
उदीच्यां दिशि सप्तैते नित्यमेव निवासिनः ॥ इति ७।१।२-६ ।

७ । शिष्यैः सह मुनिभिर्वालिखिल्यादिभिश्च सहितोऽगस्त्यः अभ्यगादयोध्यामिति शेषः । अथ अयोध्याप्राप्त्यनन्तरमित्यर्थः । द्वारमयोध्याद्वारम् ।

८ । अगस्त्यप्रमुखा मुनय आशीर्भिरभिनन्दितुं समागत्य बहिः स्थिताः सन्तीति रामाय ब्रूहीत्यन्वयः । रा० ।

१० । कृताञ्जलिः प्रतिहार इति शेषः । प्राप्तः स्वाश्रमादागतः बहिर्द्वारि उपस्थितोऽस्तीति शेषः । रा० ।

११ । पूजिताः प्रतीहारेण मार्गप्रदर्शनादिना पूजिताः कृतादरा इति यावत् । रा० ।

---

1. ग 'सहशिष्यश्च' । 2. च-ख 'रामम-' । 3 च '-र्थायाऽऽगतो' । 4. च 'ग्रुलोवाच' । 5. क '-पाल' । 6. छ '-वस्त्र-' ।

दृष्ट्वा रामो मुनीन् शीघ्रं प्रत्युत्थाय कृताञ्जलिः ।
पाद्यार्घ्यादिभि[1]रापूज्य गां निवेद्य यथाविधि ।
[2]नत्वा तेभ्यो ददौ दिव्यान्यासनानि यथार्हतः ॥ १२ ॥

उपविष्टाः [3]प्रहृष्टाश्च[4] मुनयो रामपूजिताः ।
संपृष्टकुशलाः सर्वे रामं कुशलमब्रुवन् ॥ १३ ॥

कुशलं ते महाबाहो [5]सर्वत्र रघुनन्दन ।
दिष्ट्येदानीं प्रपश्यामो[6] हतशत्रुमरिन्दम ॥ १४ ॥

[7]न हि भारः स ते राम रावणो राक्षसेश्वरः ।
सधनुस्त्वं हि लोकांस्त्रीन् विजेतुं [8]शक्त एव च ।
दिष्ट्या [9]त्वया हताः सर्वे राक्षसा रावणादयः ॥ १५ ॥

---

१२ । नरो० । गां सौरभेयीम् ।

---

तं द्वारपालं यथासुखं प्रवेशय इति उवाच राम इति शेषः । पूजिताः प्रतीहारेण विनयावनत्या नत्या वाचा च कृतादरा इत्यर्थः ।

१२ । गां मधुपर्कार्थम् ।

'वृषभञ्च महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत् ।'

इति स्मृतेः । यथार्हतः अर्हो योग्यता, तदनतिक्रमादित्यर्थः । रा० ।

आसनं विशिनष्टि वाल्मीकिः—

तेषु काञ्चनचित्रेषु स्वास्तीर्णेषु सुखेषु च ।
कुशोत्तरेष्वथासीना आसनेष्वृषिपुङ्गवाः ॥ इति ।७।१।१३ ।

१३ । संपृष्टकुशलाः रामेणेति शेषः ।

१५ । अत्र पाश्चात्त्ये वाल्मीकीये—

न हि भारः स ते राम रावणः पुत्रपौत्रवान् ।
सधनुस्त्वं हि लोकांस्त्रीन् विजयेथा न संशयः ॥ इति ७।१।१८ ।

---

1. क '-रानर्च्य' । 2. च 'ददौ दिव्यासन तेभ्यो नत्वा सन्तुष्टमानसः' । 3. क 'प्रविष्टाश्च' । 4. च '-स्ते' । 5. ग 'सर्वतो' । 6. क '-मि' । 7. क 'निहतो भवता' । 8. क 'शक्य' । 9. क 'हतास्त्वया' ।

[1]शक्यमेतन्महाबाहो रावणस्य निबर्हणम् ।
[2]अशक्यमेतत् सम्प्राप्तं रावणेर्यन्निषूदनम् ॥ १६ ॥
अन्तकप्रतिमाः सर्वे कुम्भकर्णादयो [3]मृधे ।
अन्तकप्रतिमैर्बाणैर्हतास्ते रघु[4]सत्तम ॥ १७ ॥
दत्ता चेयं त्वयाऽस्माकं पुरा ह्यभयदक्षिणा ।
हत्वा रक्षो[5]गणान् [6]सङ्ख्ये कृतकृत्योऽद्य जीवसि ॥ १८ ॥
श्रुत्वा तु भाषितं तेषां मुनीनां भावितात्मनाम् ।
विस्मयं परमं गत्वा रामः प्राञ्जलिरब्रवीत् ॥ १९ ॥

---

१६ । नरो० । निबर्हणं मारणम्, शक्यं निष्पादयितुमिति शेषः । रावणेरिन्द्रजितो यन्निषूदनं तन्निष्पादयितुमशक्यम्, एतत् संप्राप्तं दिष्ट्येति शेषः ।

१७ । नरो० । अन्तकप्रतिमैः यमतुल्यैः ।

१९ । नरो० । भावितात्मनां चिन्तितपरमात्मनाम् ।

---

१६ । [ सह्यमिति । सह्यं शक्यम् । सह शक्यार्थे इत्यस्य रूपम् । निबर्हणं मारणम् । रावणेरिन्द्रजितो यन्निषूदनं मारणं संप्राप्तं जातं तदशक्यमित्यर्थः । गो० ]

रावणिनिषूदनस्य वैशिष्ट्यभङ्गी पाश्चात्त्ये वाल्मीकीये—

संख्ये तस्य न किञ्चित्तु रावणस्य पराभवः ।
द्वन्द्वयुद्धमनुप्राप्तो दिष्ट्या ते रावणिर्हतः ॥
दिष्ट्या तस्य महाबाहो कालस्येवाभिधावतः ।
मुक्तः सुररिपोर्वीर प्राप्तश्च विजयस्तथा ॥
अभिनन्दाम ते सर्वे संश्रुत्येन्द्रजितो वधम् ।
अवध्यः सर्वभूतानां महामायाधरो युधि ।
विस्मयस्त्वेष चास्माकं त्वच्छ्रुत्वेन्द्रजितं हतम् ॥ इति ७।१।२५-२७ ।

१८ । या दक्षिणा पुरा दत्ता दातुं प्रतिज्ञाता सा रक्षोगणान् हत्वा पूर्णा कृता, अतः कृतकृत्यः सन् जीवसि त्वमेव जीव, तव जीवनमेव श्लाघ्यं जीवनमित्यर्थः । रा० ।

अत्र वाल्मीकेर्नवीनत्वम्—

दत्त्वा पुण्यामिमां वीर सौम्यामभयदक्षिणाम् ।
काकुत्स्थ वर्धसे दिष्ट्या जयेनामितविक्रम ॥ इति ७।१।३० ।

१९ । तेषामिति गुरुत्वेन वचनबहुत्वम्, तेषां मुनीनामगस्त्यप्रमुखानामित्यर्थो वा । भाषितं रावणकुम्भकर्णादीन् अतिक्रम्य इन्द्रजित्प्रशंसात्मकं वचनम् । अत एवास्य विस्मयातिशयः । प्राञ्जलिरिति विनयादिप्रदर्शनार्थं बद्धाञ्जलित्वं रामस्य ।

---

1. क-ख-ग-घ-ङ 'सह्य-' । 2. क-ख-ग-घ-च-ङ 'असह्य-' । 3. च 'रणे' । 4. ग-च'-नन्दन' । 5. च '-गर्षं' । 6. ङ 'सर्वान्' ।

रावणादीनतिक्रम्य कुम्भकर्णा[1]दिराक्षसान् ।
त्रिलोकजयिनो हित्वा किं प्रशंस[2]थ रावणिम् ॥ २० ॥
तत[3]स्तद्वचनं श्रुत्वा राघवस्य महात्मनः ।
कुम्भयोनिर्महातेजा रामं [4]प्रीत्या वचोऽब्रवीत् ॥ २१ ॥
शृणु राम यथावृत्तं रावणे रावणस्य च ।
जन्मकर्मवरादानं सङ्क्षेपाद् गदतो मम ॥ २२ ॥
पुरा कृतयुगे राम पुलस्त्यो ब्रह्मणः सुतः ।
तपस्तप्तुं गतो विद्वान् मेरोः पार्श्वं महामतिः ॥ २३ ॥
तृणबिन्दोराश्रमेऽसौ न्यवसन्मुनिपुङ्गवः ।
तपस्तेपे महातेजाः स्वाध्यायनिरतः सदा ॥ २४ ॥
तत्राऽऽश्रमे महा[5]रम्ये देवगन्धर्वकन्यकाः ।
गायन्त्यो [6]ननृतुस्तत्र हसन्त्यो वादयन्ति च ।
पुलस्त्यस्य [7]तपोविघ्नं चक्रुः सर्वा अनिन्दिताः ॥ २५ ॥

---

२० । नरो० । रावणिमिन्द्रजितम् ।
२१ । नरो० । कुम्भयोनिरगस्त्यः ।

---

२० । रामप्रश्नो वाल्मीकीये—

महाबलं कुम्भकर्णं रावणञ्च निशाचरम् ।
अतिक्रम्य महावीर्यं किं प्रशंसथ रावणिम् ॥
कीदृशो वै प्रभावोऽस्य किं बलं कः पराक्रमः ।
केन वा कारणेनैष रावणादतिरिच्यते ॥ इति ७।१।३२-३३ ।

२२ । जन्मोत्पत्तिः, कर्म तपश्चर्यादिकम्, वरादानं वरग्रहणं प्रजापतित इति शेषः । अत्राऽऽह वाल्मीकिः—

शृणु राजन् यथावृत्तं तस्य तेजो बलं महत् ।
जघान च रिपून् येन यथाऽवध्यश्च शत्रुभिः ॥
अहन्तु रावणस्येदं कुलं जन्म च राघव ।
वरप्रदानञ्च यथा तथा सर्वं ब्रवीमि ते ॥ इति ७।२।२-३ ।

२५ । वाल्मीकीयेऽपि—

गायन्त्यो वादयन्त्यश्च लासयन्त्यस्तथैव च ।
मुनेस्तपस्विनस्तस्य विघ्नं चक्रुरनिन्दिताः ॥ इति ७।२।१० ।

---

1. च '-दिकानपि' । 2. छ '-साथ' । 3. ग-छ '-स्ते व-' । 4. छ 'प्रति' । 5. छ '-रम्ये' । 6. ग 'नृत्ययन्त्यश्च', च-छ 'नृत्यवत्यश्च' । 7. छ 'ततो विघ्नं' ।

ततः क्रुद्धो महातेजा व्याजहार वचोऽर्थवत् ।
या मे दृष्टिपथं गच्छेत् सा गर्भं धारयिष्यति ॥ २६ ॥
ताः सर्वाः शापसंविग्ना न तं देशं प्रचक्रमुः ।
तृणबिन्दोस्तु राजर्षेः कन्या तन्नाश्रृणोद् वचः ।
विचचार मुनेरग्रे निर्भया तं प्रपश्यती ॥ २७ ॥
बभूव पाण्डुर[1]तनुर्व्यञ्जितान्तःशरीरजा ।
दृष्ट्वा सा देहवैवर्ण्यं भीता पितरमन्वगात् ॥ २८ ॥
तृणबिन्दु[2]श्च तां दृष्ट्वा राजर्षिरमितद्युतिः ।
[3]ध्यात्वा मुनिकृतं स[4]र्वमवैद् विज्ञानचक्षुषा ॥ २९ ॥

---

२६। नरो०। अर्थवत् प्रयोजनवत् ।

२८। नरो०। व्यञ्जितोऽर्थात् पाण्डुरवर्णेन प्रकाशितोऽन्तःशरीरजो गर्भो यस्याः सा तथा ।

---

२७। प्रपश्यतीत्यत्र नुमभाव आर्षः। रा०।

तृणबिन्दोः कन्या तु तद्वचो नाश्रृणोत्, अतो निर्भया मुनेरग्रे विचचार। तं प्रपश्यती च सा पाण्डरतनुः व्यञ्जितान्तःशरीरजाऽभवदिति द्वाभ्यामन्वयः।

२८। व्यञ्जितः प्रकटीकृतोऽन्तर्मध्ये शरीरजो गर्भो यस्याः सा। रा०।

२९। तृणबिन्दुस्तां तादृगवस्थापन्नां कन्यां दृष्ट्वा अपृच्छत्। अज्ञातकारणा साऽपि उत्तरदाने असमर्था इति विज्ञानचक्षुषा सर्वमवैत्। व्यक्तं तु वाल्मीकीये—

तान्तु दृष्ट्वा तथाभूतां तृणबिन्दुरथाब्रवीत् ।
किं त्वमेतदसदृशं धारयस्यात्मनो वपुः ॥
साऽथ कृताञ्जलिर्दीना कन्योवाच तपोधनम् ।
न जाने कारणं तात येन मे रूपमीदृशम् ॥
किन्तु पूर्वं गताऽस्म्येका महर्षेर्भावितात्मनः ।
पुलस्त्यस्याऽऽश्रमपदमन्वेष्टुं स्वसखीजनम् ॥
न च पश्याम्यहं तत्र काञ्चिदभ्यागतां सखीम् ।
रूपस्य तु विपर्यासं लब्ध्वैवाहमिहाऽऽगता ॥
तृणबिन्दुस्तु राजर्षिस्तपसा द्योतितप्रभः ।
ध्यानं विवेश तच्चापि ददर्श मुनिशापजम् ॥ इति ७।२।१७-२१ ।

---

1. च '-वपु-'। 2. च-छ '-स्तु'। 3. च-छ 'ज्ञात्वा'। 4. ग '-र्वमवेद्य ज्ञान-', च '-र्वमादाय ज्ञान-', छ '-र्वं स वै दिव्येन च-'।

तां कन्यां मुनिवर्याय पुलस्त्याय ददौ पिता ।
तां प्रगृह्याब्रवीत् कन्यां बाढमित्येव स द्विजः ॥ ३० ॥

शुश्रूष[1]णपरां दृष्ट्वा मुनिः प्रीतोऽब्रवीद् वचः ।
दास्यामि पुत्रमेकं त उभयोर्वंशवर्धनम् ॥ ३१ ॥

ततः [2]प्रासूत सा पुत्रं पुलस्त्याल्लोकविश्रुतम् ।
विश्रवा इति विख्यातः पौलस्त्यो ब्रह्म[3]विन्मुनिः ॥ ३२ ॥

तस्य शीलादिकं दृष्ट्वा भरद्वाजो महामुनिः ।
भार्यार्थं स्वां दुहितरं ददौ विश्रवसे मुदा ॥ ३३ ॥

तस्या[4]न्तु पुत्रः सञ्जज्ञे पौलस्त्याल्लोक[5]सम्मतः ।
पितृतुल्यो वैश्रवणो ब्रह्मणा चानुमोदितः ॥ ३४ ॥

ददौ तत्तपसा तुष्टो ब्रह्मा तस्मै वरं शुभम् ।
मनोऽभिलषितं तस्य धनेशत्वमखण्डितम् ॥ ३५ ॥

---

३१। नरो०। ते तुभ्यम्। उभयोः पितामहमातामहयोः। यद्वा उभयोरावयोः स्त्रीपुंसयोः।

---

३२। यं प्रासूत स विश्रवा इति विख्यात इत्यर्थः। रा०।

पौलस्त्यस्य विश्रवा इति नाम्नो हेतुमाह वाल्मीकीये—

उभयोर्वंशकर्त्तारं पौलस्त्यमिति विश्रुतम् ।
यस्मात्तु विश्रुतो वेदस्त्वयेहाध्ययतो मम ।
तस्मात् स विश्रवा नाम भविष्यति न संशयः । इति ७।२।२९-३० ।

३४। ब्रह्मणा चानुमोदित इति। वाल्मीकीये ब्रह्मणा कृताख्यानः। तथाच—

तस्मिन् जाते तु सन्तुष्टः स बभूव पितामहः ।
नाम चास्याकरोत् प्रीतः सार्धं देवर्षिभिस्तदा ॥
यस्माद् विश्रवसोऽपत्यं सादृश्याद् विश्रवा इव ।
तस्माद् वैश्रवणो नाम भविष्यत्येष विश्रुतः ॥ इति ७।२।६-७ ।

३५। तत्तपसा तस्य तपसा। मनोऽभिलषितं धनेशत्वरूपं ददौ। रा०।

---

1. क '-णा-'। 2. च 'प्रसूता'। 3. छ '-वन्मुनिः'। 4. छ '-स्तु'। 5. छ '-विश्रुतः'।

ततो [1]लब्धवरः सोऽपि पितरं द्रष्टुमागतः ।
पुष्पकेण धनाध्यक्षो ब्रह्मदत्तेन भास्वता ॥ ३६ ॥
नमस्कृत्याथ पितरं निवेद्य तपसः फलम् ।
प्राह मे भगवान् ब्रह्मा दत्वा वरमनिन्दितम् ॥ ३७ ॥
निवासाय न मे स्थानं दत्तवान् परमेश्वरः ।
ब्रूहि मे नियतं[2] स्थानं हिंसा यत्र न [3]कस्यचित् ॥ ३८ ॥
विश्रवा अपि तं प्राह लङ्का नाम पुरी शुभा ।
राक्षसानां निवासाय निर्मिता विश्वकर्मणा ॥ ३९ ॥
त्यक्त्वा विष्णुभयाद्दैत्या विविशुस्ते रसातलम् ।
सा पुरी दुष्प्रधर्षाऽन्यैर्मध्येसागरमा[4]स्थिता ।
तत्र वासाय गच्छ त्वं नान्यैः साऽधिष्ठिता [5]पुरा ॥ ४० ॥

---

३६ । लब्धवरः ब्रह्मणः सकाशात् प्राप्तपुष्पकश्च । तेन पुष्पकेणेत्यर्थः । पुष्पकलाभमव-लम्ब्य वाल्मीकीये—

एतच्च पुष्पकं दिव्यं विमानं सूर्यसन्निभम् ।
प्रतिगृह्णीष्व यानार्थं त्रिदशैः समतां व्रज ॥ इति ७।३।१८ ।

आगतस्तपोवनादिति शेषः ।

स तु वैश्रवणस्तस्य तपोवनगतस्तथा ।
व्यवर्द्धत महातेजा हुताहुतिरिवानलः ॥ ७।३।८

इत्यादिप्राच्यवाल्मीकीयेन,

स तु वर्षसहस्राणि तपस्तप्त्वा महावने ।
यन्त्रितो नियमैरुग्रैश्चकार सुमहत्तपः ॥ ७।३।११

इत्यादिपाश्चात्यवाल्मीकीयेनापि तस्य तपःसिद्ध्यर्थं वनगमनदर्शनात् ।

३९ । प्राह पितरमिति कर्म । वरं दत्त्वेत्यस्य स्थानं न दत्तवान् इत्यनेनान्वयः । रा० ।

अत्राऽऽह वाल्मीकिः—

धनेशः पितरं प्रोचे विनयात् प्रणतो वचः ।
भगवन् लब्धवानस्मि वरं कमलयोनितः ॥
निवासं न तु मे देवो विदधे स प्रजापतिः ।
तत् पश्य भगवन् कञ्चिद्देशं वासाय मे प्रभो ॥ इति ७।३।२१-२२ ।

३९-४० । पुरा दैत्यानां रसातलप्रवेशोत्तरमितः प्रागित्यर्थः । रा० ।

---

1. ग 'पुरी' । 2. छ 'लब्ध्वा वरं' । 3. छ '-तस्थान' । 4. च 'विद्यते' । 5. ग '-श्रिता' ।

राक्षसानां निवासाय लङ्का नाम पुरी विश्वकर्मणा निर्मिता इति। अत्र वाल्मीकीये राक्षसानामुत्पत्तिस्तेषां वासार्थं विश्वकर्मणा लङ्कानिर्माणं विष्णुभयात्तेषां रसातलप्रवेशः इत्यादिवृत्तात्मकः कश्चित् सुदीर्घः सारवांश्च प्रबन्धो दृश्यते। ग्रन्थविस्तृतिभिया तत्सर्वमनुद्धृत्य किञ्चित् किञ्चिदुपदिश्यते। तत्र प्रथमतोऽगस्त्यं प्रति—

भगवन् पूर्वमेवैषा लङ्काऽभूत् पिशिताशिनाम्।
इतीदं भवतः श्रुत्वा जातो मे विस्मयः परः॥
पुलस्त्यवंशादुद्भूता राक्षसा इति नः श्रुतम्।
इदानीमन्यतश्चापि सम्भवः कीर्तितस्त्वया॥
रावणात् कुम्भकर्णाच्च प्रहस्ताद् विकटादपि।
रावणस्य च पुत्रेभ्यः किन्नु ते बलवत्तराः॥
एतेषां पूर्वको ब्रह्मन् किंनामा किंबलाश्च ते।
अपराधञ्च कं प्राप्य विष्णुना द्राविताः कथम्॥ ७।४।३-६

इत्यादिना रामस्य प्रश्नः। तदुत्तरमुखेण तत्र भवतोऽगस्त्यस्य वाचः। यथा—पूर्वं प्रजापतिरपः सृष्ट्वा तासां रक्षार्थं सत्त्वानसृजत्। ते च प्रजापतिं किं कुर्म इत्यपृच्छन्, प्रजापतिः प्राह अपो रक्षध्वम्। ततश्च तेषु केचिद् रक्षाम केचिच्च क्षिणुम इत्यब्रुवन्। अनन्तरम्—

क्षिणुम इति यैरुक्तं ते तु यक्षा भवन्तु वः।
रक्षाम इति यैरुक्तं राक्षसास्ते भवन्तु वः॥ ७।४।१३

इत्युक्तवति प्रजापतौ हेतिप्रहेती राक्षसौ बभूवतुः। तत्र प्रहेतिर्धार्मिकः। राक्षसस्वभावो हेतिः कालभगिनीं भयावहां भयामुपयेमे। तस्य विद्युत्केशो नाम सुतः। स च सन्ध्यादुहितरं सालकटंकटां वरयामास। सा च मन्दरं गत्वा गर्भं प्रसूय परित्यक्तवती। मन्दरस्थः स च गर्भः शिशुरभवत्। अथोपरिष्टाद् गच्छन् वृषभध्वजो रुदन्तं तं राक्षसात्मजं ददर्श, दृष्ट्वा च कारुण्यात् तं पितुः समवयस्कं कृत्वा अमरं चकार, आकाशगं पुरञ्च प्रादात्। एवम्—

उमयाऽपि वरो दत्तो राक्षसीनां नृपात्मज।
गर्भोपलब्धिः सद्यश्च प्रसूतिः सद्य एव च॥
सद्य एव च जातस्य वयःप्राप्तिश्च कामतः॥ ७।४।३०

इत्युमयाऽपि वरो दत्तः। अस्य च विद्युत्केशपुत्रत्वेन सुकेश इति नामाभवत्।

सुकेशो धार्मिकोऽभूत्। तस्मै ग्रामणीर्नाम गन्धर्वो वेदवतीं नाम स्वां कन्यामददात्। तस्य सुकेशस्य माल्यवत्सुमालिमालिनामानस्त्रयः पुत्रा अभवन्। ते च तपसा ब्रह्माणं प्रसाद्य वरप्रदानार्थं तमागतमालोक्य—

अजेयाः शत्रुहन्तारस्तथैव चिरजीविनः ।
प्रभविष्णो भविष्यामः परस्परमनुव्रताः ॥ ७।५।१४

इत्येवं वरं प्रार्थयामासुः । ब्रह्माऽपि एवं भविष्यथ इत्युक्त्वा स्वलोकं ययौ । वरादानदर्पितास्ते माल्यवदादयः सुरासुराणां कदनं कुर्वन्तो विश्वकर्माणमाहूय स्ववासार्थं गृहकरणायाऽऽदिदिशुः । विश्वकर्माऽपि—

निवासं कथयामास शक्रवासोपमं तदा ।
दक्षिणस्योदधेस्तीरे त्रिकूटो नाम पर्वतः ।
सुवेल इति चाप्यन्यो द्वितीयो राक्षसर्षभाः ।
शिखरे तस्य शैलस्य मध्यमेऽम्बुदसन्निभे ॥
शकुनैरपि दुष्प्रापे टङ्कच्छिन्ने चतुर्दिशि ।
त्रिंशद्योजनविस्तीर्णा शतयोजनमायता ॥
तत्र लङ्केति नगरी मया शक्राज्ञया कृता ।
तत्र वसथ दुर्द्धर्षाः पुर्यां राक्षसपुङ्गवाः ॥ ७।५।२२-२५

इत्युवाच । तदाज्ञया ततः प्रभृति ते तामेव पुरीमध्यूषुः । कालान्तरे च तैर्नर्मदानाम-गन्धर्व्यास्तनयास्तिस्र उपयेमिरे । तत्र माल्यवतो भार्या सुन्दरी वज्रमुष्टिविरूपाक्षदुर्मुखसुप्तघ्न-यज्ञकेतुमत्तोन्मत्तान् नाम पुत्रान् सुवेलां नाम कन्याम्, सुमालिभार्या केतुमती प्रहस्ताकम्पन-विकटकालिकामुखधूम्राक्षदण्डसुपार्श्वसंह्रादिप्रघसभासकर्णान् नाम पुत्रान् राकापुष्पोत्कटानैकसी-कुम्भीनसीर्नाम कन्याः, मालिभार्या वसुदा अनिलानलभीमसम्पातिप्रभृतीन् केवलान् पुत्रानेव जनयामास । एते च राक्षसाः क्रमेण देवगन्धर्वनागानां महत् कदनं कृतवन्त इति देवा तेषां विनाशाय शङ्करं शरणं ययुः । स च त्रिलोचनो लोचनपथगतांस्तान् विष्णुं शरणीकर्त्तुमादिदेश । गतेषु च देवेषु विष्णुं शरणम्, विष्णू राक्षसविद्रावणमङ्गीचकार । ततस्तेन सह राक्षसानां महद् युद्धमभवत, तेन विताडिता राक्षसा रसातलं जग्मुरिति । सप्रपञ्चमेतावद्वृत्तान्तमुक्त्वाऽगस्त्य उपसंहारार्थमाह—

कथिता राक्षसा राम एते सालकटङ्कटाः ।
ये त्वया निहतास्ते वै पौलस्त्या नाम राक्षसाः ॥
सुमाली माल्यवान् माली ये च तेषां पुरःसराः ॥
सर्वे ह्येते महाभागा रावणाद् बलवत्तराः ॥
... ... ... ... ...
एषा मया तव नराधिप राक्षसानाम्
उत्पत्तिरद्य कथिता सकला यथावत् ।
भूयो निबोध रघुनन्दन रावणस्य
जन्म प्रभावमतुलं ससुतस्य सर्वम् ॥ इति ७।८।२४-२९ ।

पित्रा[1]दिष्टस्त्वसौ गत्वा तां पुरीं धनदोऽविशत्।
स तत्र सुचिरं कालमुवास पितृसम्मतः ॥ ४१ ॥

[2]कस्यचित्त्वथ कालस्य सुमाली नाम राक्षसः।
रसातलान्मर्त्यलोकं चचार पिशिताशनः ॥ ४२ ॥

गृहीत्वा तनयां [3]कन्यां साक्षाद्देवीमिव श्रियम्।
अपश्यद्धनदं देवं चरन्तं पुष्पकेण सः ॥ ४३ ॥

हिताय चिन्तयामास राक्षसानां [4]महामनाः।
उवाच तनयां तत्र [5]नैकषीं नाम [6]नामतः ॥ ४४ ॥

वत्से विवाहकालस्ते यौवनं चातिवर्त्तते।
प्रत्याख्यानाच्च भीतैस्त्वं न [7]वरैर्गृह्यसे शुभे ॥ ४५ ॥

सा त्वं वरय भद्रं ते मुनिं ब्रह्मकुलोद्भवम्।
स्वयमेव ततः पुत्रा भविष्यन्ति महाबलाः।
[8]ईदृशाः सर्वशोभाढ्या [9]धनदेन समाः शुभे ॥ ४६ ॥

तथेति साश्रमं गत्वा मुनेरग्रे व्यवस्थिता।
लिखन्ती भुवमग्रेण पादेनाधोमुखी स्थिता ॥ ४७ ॥

---

४२। [ कस्यचित्त्वथ कालस्य कस्मिंश्चित् काले इत्यर्थः। 'सुपां सुपि'ति व्यवस्थया सप्तम्यां षष्ठी। गो० ]

४४। 'नैकषीमि'त्यत्र 'कैकसी'ति नाम पाश्चात्त्ये वाल्मीकीये। तथाच—

अथाब्रवीत् सुतां रक्षः कैकसीं नाम नामतः ॥ इति ७।९।७।

प्राच्ये पुन'र्नैकसी'ति दन्त्यान्तः पाठः (७।९।७)।

४५। गृह्यसे प्रार्थ्यसे। क्वचित्तथैव पाठः। रा०।

४६। ईदृशा इत्यस्यैव विवरणं धनदेन समा इति। रा०।

४७। सा आश्रममिति च्छेदः। लज्जावशाद् भूलेखनादि। रा०।

---

1. च '-दिष्टस्त्व-'। 2. च 'कदाचिदथ'। 3. ग 'रामा', च 'स्वान्तु'। 4. छ 'महात्मनाम्'। 5. ख 'कैकसी,' च-टि, छ 'निकषा'। 6. च-छ 'राक्षसः'। 7. ग 'कैश्चिदग्र-'। 8. च 'कुशलाः'। 9. छ 'धनदाभा महाशुभे'।

तामपृच्छन्मुनिः का त्वं [1]कस्यासि वरवर्णिनि ।
साऽब्रवीत् प्राञ्जलिर्ब्रह्मन् ध्यानेन ज्ञातुमर्हसि ॥ ४८ ॥

ततो ध्यात्वा मुनिः सर्वं ज्ञात्वा तां प्रत्यभाषत ।
ज्ञातं [2]तवाभिलषितं मत्तः पुत्रानभीप्ससि ॥ ४९ ॥

दारुणायां तु वेलायामागताऽसि सुमध्यमे ।
अतस्ते दारुणौ पुत्रौ राक्षसौ सम्भविष्यतः ॥ ५० ॥

---

४८। का किंजातीया ? कस्यासि उत विवाहिताऽसीति प्रश्नः । रा० ।

अत्राऽऽह वाल्मीकिः—

भद्रे कस्यासि दुहिता कुतो वा त्वमिहाऽऽगता ।
किं कार्यं कस्य वा हेतोस्तत्त्वतो ब्रूहि तच्छुभे ॥ इति ७।९।१८ ।

साऽब्रवीदिति । अत्र वाल्मीकेर्नवीनता—

एवमुक्ता तु सा कन्या कृताञ्जलिरथाब्रवीत् ।
राक्षसीं विद्धि मां ब्रह्मन् शासनात् पितुरागता ॥
नैकसीमिति नाम्ना वै शेषं त्वं ज्ञातुमर्हसि ।
तपःप्रभावेण मुने यदर्थमहमागता ॥ इति ७।९।१९-२० ।

५० । दारुणायामिति । दारुणत्वे हेतुर्वाल्मीकीये—

एतस्मिन्नन्तरे राम पुलस्त्यतनयो द्विजः ।
अग्निहोत्रमुपातिष्ठच्चतुर्थ इव पावकः ॥
सा तु तं दारुणं कालमबुद्ध्वा पितृगौरवात् ।
उपसृत्याग्रतस्तस्य चरणेऽधोमुखी स्थिता ॥ इति ७।९।१५-१६ ।

वाल्मीकीये मुनेर्वाक्यम्—

सुताभिलाषो मत्तस्ते मत्तमातङ्गगामिनि ।
दारुणायान्तु वेलायां यस्मात्त्वं समुपस्थिता ॥
शृणु तस्मात् सुतान् भद्रे यादृशाञ् जनयिष्यति ।
दारुणान् दारुणाचारान् दारुणाभिजनप्रियान् ॥
जनयिष्यसि सुश्रोणि राक्षसान् क्रूरकर्मणः । इति ७।९।२२-२४ ।

---

1. क-ख-घ-छ 'कन्याऽसि' । 2. क-ख-ब 'तस्वाभि-' ।

साऽब्रवीन्मुनिशार्दूल[1] त्वत्तोऽप्येवंविधौ सुतौ ।
तामाह पश्चिमो यस्ते भविष्यति महामतिः ।
महाभागवतः [2]श्रीमान् रामभ[3]क्तैकतत्परः ॥ ५१ ॥
इत्युक्ता सा [4]तथा काले सुषुवे दशकन्धरम् ।
रावणं विंशतिभुजं दश[5]शीर्षं सुदारुणम् ॥ ५२ ॥
तद्रक्षोजातमात्रेण चचाल च वसुन्धरा ।
[6]बभूवु[7]र्नाशहेतूनि निमित्तान्यखिलान्यपि ॥ ५३ ॥

---

५३ । नरो० । नाशहेतूनि नाशसूचकानि निमित्तानि रक्तवृष्ट्यादीनि ।

---

५१ । त्वत्तोऽप्येवंविधौ सुतौ इत्यत्र काकुः । यस्ते पुत्रो भविष्यति स महामतिर्भविष्यतीत्यर्थः । तदेवाऽऽह—महाभागवत इति । रामभक्तयेत्यस्य युक्त इति शेषः । एकस्मिन् तस्मिन् एव तत्परः सर्वदा दत्तचित्तः । रा० ।

त्वत्तोऽप्येवंविधौ सुताविति । त्वत्तो महामुनेरपि तादृशौ दारुणौ सुतौ भविष्यत इत्यनुचितमेवेति तस्या विस्मयक्षोभादयो ध्वनिताः । वाल्मीकीये मुनेर्वचनानन्तरं नैकस्याः प्रार्थनया प्रतिबुद्धस्य मुनेः—

पश्चिमो यस्तव सुतो भविष्यति शुभानने ।
मम वंशानुरूपः स धर्माचारो न संशयः ॥ ७।९।२७ ।

पुनरेवंवादः ।

५२ । सद्योजातस्य दशाननस्याऽऽकृतिमवलम्ब्य वाल्मीकीये—

एवमुक्ता तु सा कन्या राम कालेन केनचित् ।
जनयामास बीभत्सं रक्षोरूपं सुदारुणम् ॥
दशशीर्षं महादंष्ट्रं नीलाञ्जनचयोपमम् ।
ताम्रोष्ठं विंशतिभुजं महास्यं दीप्तमूर्धजम् ॥ इति ७।९।२८-२९ ।

५३ । नाशहेतूनि रक्षोवंशस्य लोकानाञ्चेति शेषः । रा० ।

नाशहेतूनां निमित्तानां स्वरूपं वाल्मीकीये—

जातमात्रे ततस्तस्मिन् सज्वालकवलाः शिवाः ।
क्रव्यादाश्चापसव्यानि मण्डलानि विचक्रमुः ॥
ववर्ष रुधिरं देवो मेघाश्च खरनिस्वनाः ।
प्रबभौ न च वै सूर्यो महोल्काश्चापतन् भुवि ॥

---

1. ग-च '-लं' । 2. च 'सोऽपि' । 3. क-घ '-क्तैक-' । 4. च 'यथा-' । 5. ग-च '-ग्रीव' । 6. ङ-पुस्तके इदमर्धं नास्ति । 7. ग '-स्तास-' ।

कुम्भकर्णस्ततो जातो महापर्वतसन्निभः ।
ततः शूर्पणखा नाम जाता रावणसोदरा[1] ॥ ५४ ॥
ततो विभीषणो जातः शान्तात्मा सौम्यदर्शनः ।
स्वाध्यायी[2] नियताहारो नित्य[3]धर्मपरायणः ॥ ५५ ॥
कुम्भकर्णस्तु दुष्टात्मा द्विजान् सन्तुष्ट[4]चेतसः ।
भक्षयन्नृषिसङ्घांश्च विचचारातिदारुणः ॥ ५६ ॥
रावणोऽपि महासत्त्वो लोकानां भयदायकः ।
ववृधे लोकनाशाय ह्यामयो देहिनामिव ॥ ५७ ॥
राम त्वं सकलान्तरस्थ[5]मभितो जानासि विज्ञान[6]दृक्
साक्षी सर्वहृदि स्थितो[7] हि परमो नित्योदितो निर्मलः ।

---

५५ । नरो० । शान्त आत्मा अन्तःकरणं यस्य स तथा । सौम्यं मनोहरं दर्शनं यस्य स तथा ।

द्वौ भागौ पूरयेदन्नैस्तोयेनैकं प्रपूरयेत् ।
मारुतस्य प्रचारार्थं चतुर्थमवशेषयेत् ॥

इत्येवमादिवचनोक्तो नियत आहारो यस्य स नियताहारः । नित्यं धर्मः परं केवलमयनमाश्रयो यस्य स तथा । 'नित्यकर्मपरायण' इति पाठो वा ।

५६ । नरो० । दुष्टः हिंसाऽसूयादिदोषाश्रय आत्मा शरीरं यस्य स तथा ।

५८ । नरो० । आत्मन औद्धत्यं निराकुर्वन्नाह—राम त्वमित्यादि । यतो विज्ञान-

---

चकम्पे जगती चैव ववुर्वाताश्च दारुणाः ।
अक्षोभ्यः क्षोभितश्चैव समुद्रः सरितां पतिः ॥ इति ७।९।३०-३२ ।

अत्र दशग्रीव इति नामकरणकारणमाह वाल्मीकिः—

अथ नामाकरोत्तस्य पितामहसमः पिता ।
दशशीर्षः प्रसूतोऽयं दशग्रीवो भवत्विति ॥ इति ७।९।३० ।

५४ । कुम्भकर्णं विशिनष्टि वाल्मीकिः—

तस्य त्वनन्तरं जातः कुम्भकर्णो महाबलः ।
प्रमाणाद् यस्य विपुलं प्रमाणं नेह विद्यते ॥ इति ७।९।३४ ।

५५ । स्वाध्यायी वेदाध्ययनवान् । नित्यं कर्म अग्निहोत्रादि । रा० ।

---

1. घ '-री' । 2. च '-यनि-' । 3. क-ख-ग-घ-च '-कर्म-' । 4. च '-मानसः', ङ '-चेतसा' । 5. ङ '-मभितो' । 6. च '-दृक्' । 7. च '-तोऽपि' ।

त्वं लीलामनुजाकृतिः [1]सुमहिमा मायागुणै[2]र्नाज्यसे ।
लीलार्थं [3]परिचोदितोऽद्य [4]भवता वक्ष्यामि रक्षोद्भवम् ॥ ५८ ॥
जानामि केवल[5]मनन्तमचिन्त्यशक्तिं चिन्मात्रमक्षरमजं विदितात्मतत्त्वम् ।
त्वां राम [6]गूढनिजरूपमनुप्रवृत्तो [7]गूढो ह्यहं भवदनुग्रहतश्चरामि ॥ ५९ ॥

---

दृग् बुद्धिदृक् अतः सकलान्तरस्थं सर्वेषामन्तरात्मनि स्थित........नासि । बुद्धिदृक्त्वे हेतुः—सर्वहृदि स्थित इति । तत्र हेतुः—साक्षीति ; अत एव परमः सर्वोत्कृष्टः नित्योदितो निर्मलश्च । लीलायै मनुजस्येवाऽऽकृतिर्यस्य मनुजाकृतिरिवाऽऽकृतिर्यस्य वा स तथा । शोभनो महिमा यस्य स तथा । मायागुणैर्मायागुणपरिणामैः सुखदुःखमोहादिभिः । लीलार्थं भवता परिचोदितोऽद्य रक्षोद्भवं वक्ष्यामीत्यन्वयः । रक्षोद्भवमित्यत्र सन्धिरार्षः । परिचोदितः प्रेरितः । श्रीरामस्य 'रावणादीनतिक्रम्य कुम्भकर्णादिराक्षसान् त्रिलोकीजयिनो हित्वा किं प्रशंसथ रावणिम् ॥' (७।१।४६) इत्युक्त्या प्रेरणा गम्या ।

५९ । नरो० । मामज्ञात्वा कथमेवं वदसीत्यत आह—जानामीत्यादि । हे राम,

---

५८ । सकलान्तरस्थं जानासि सर्वान्तर्यामित्वात् । तदेव स्फुटयति—सर्वहृदि स्थितो हीत्यन्तेन । हिर्यत इत्यर्थे । विज्ञानदृक् विज्ञानेन स्वरूपेण दृक् सर्वद्रष्टा । अनेन वित्तादिकरणान्तरनैरपेक्ष्यमुक्तम् । अत एव साक्षी साक्षाद् द्रष्टा । नन्वहं मानुषः, कथं ममेदृशत्वं तत्राऽऽह—त्वं लीलेति । वस्तुतो न मनुष्यस्त्वमिति भावः । स्वमहिमन् स्वमात्रज्ञेयमहिमन् अन्यैस्त्वन्महिमा दुर्ज्ञेय इत्यर्थः । मायागुणै रजआदिभिर्नाज्यसे न स्पृश्यसे । एवं सर्वज्ञस्य तवाग्रे कथनं यद्यप्यनुचितं तथाऽपि भवता लीलार्थं प्रतिचोदितः पृष्टो रक्षोद्भवं वक्ष्यामि । रक्षोद्भव-मित्यत्र सन्धिरार्षः । रा० ।

[ रामेत्यादि । सकलानामन्तरस्थं हृदयस्थम् । अभितोऽन्तर्बहिश्च । तत्र हेतुः—विज्ञान-दृक् विज्ञानेन अपरोक्षज्ञानेन पश्यति यः । सर्वहृदि स्थितः अत एव साक्षी द्रष्टा । ननु तर्हि सर्वहृदि स्थितत्वेन किं तस्मिन् दोषादयः संयुक्ता न इत्याह—निर्मलो रागादिहीनः । तत्र हेतुः—नित्योदितः नित्यप्रकाशः । तत्रापि हेतुः—परमः परमात्मा, न तु जीववत् परापेक्षज्ञानः । मायागुणैर्नाञ्जसे इति । मायागुणैर्लिप्तो न भवसि । 'नाज्यसे' इत्यपि पाठः । त्वया लीलार्थं परिचोदितः प्रेरितः । अयं प्रश्नोऽपि तव लीलयैव न तात्त्विक इत्यर्थः । गो० ]

५९ । ननु त्वं मामेकं कथं ज्ञातवानसीत्याह—जानामीति । मूढोऽप्यहं भवदनुग्रहत एवं-विशेषणं त्वां जानामि । अनन्तं देशकालापरिच्छेद्यम् । अक्षराजत्वाभ्यां नाशोत्पत्तिराहित्यमुक्तम् ।

---

1. क-ख-ग-छ 'स्वमहिमा', घ 'स्वमहिमन्' । 2. ग '-र्नाञ्जसे', च-'र्लंघ्यसे', छ '-र्नाप्यसे । 3. क-ख-घ 'प्रति-' 4. क-ख 'भवतो' । 5. छ '-मनन्य-' । 6. क 'मूढ-' । 7. क-ख-घ 'मूढोऽप्यहं', ग 'मूढो' ।

एवं वदन्त[1]मिनवंशपवित्रकीर्त्तिः[2] कुम्भोद्भवं रघुपतिः प्रहसन् बभासे ।
[3]मायाश्रितं सकलमेत[4]दनन्य[5]कत्वात् मत्कीर्त्तनं जगति पापहरं निबोध ॥ ६० ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे उत्तरकाण्डे
प्रथमोऽध्यायः ॥ १ ॥

---

गूढनिजरूपं विदितात्मतत्त्वं त्वां केवलं निर्धर्मकम् अनन्तं देशकालाद्यपरिच्छिन्नम् अविन्त्यशक्तिम् अजं जन्मरहितं चिन्मात्रम् अक्षरं ब्रह्म जानामीत्यन्वयः। रावणादीनां सर्वं वृत्तान्तं कथं ज्ञातवानसीति चेत्तत्राऽऽह—अनुप्रवृत्तो गूढो ह्यहमित्यादि ।

[ उत्तरकाण्डे प्रथमाध्यायव्याख्या समाप्ता ॥ १ ॥ ]

---

सांसारिकान् प्रति गूढं गुप्तं कृतं निजरूपं येन तम् । अथापि त्वामनुप्रवृत्तः त्वत्प्रवृत्तिमार्गमनुप्रवृत्तोऽङ्गीकृतप्रवृत्तिमार्ग इह लोके चरामि । रा० ।

[ ननु लीलार्थं किमिति कथ्यते तात्त्विकमेवैतदित्याह—जानामीति । त्वां जानामि । कीदृशम् ? केवलं निरञ्जनम्, अनन्तं देशकालापरिच्छिन्नम् अचिन्त्यशक्तिम् अनिरूपणीयशक्तिम्, चिन्मात्रं विज्ञानघनम्, अक्षरम् अविनाशिनम्, अतोऽजं जन्मरहितम्, विदितात्मतत्त्वं ज्ञातनिजस्वरूपम् न तु जीववद् विस्मृतनिजस्वरूपम् । ननु कर्तृभोक्तृरूपस्य मम कथमेतावत्त्वं वदसि ? तत्राऽऽह—गूढनिजरूपमिति । गूढं मनुष्यलीलया आच्छादितं निजरूपं परब्रह्मस्वरूपं येन तम् । स्वज्ञाने हेतुमाह—अनुप्रवृत्तः प्रपन्नः, यतो भवदनुग्रहेणैव त्वां जानामि । गो० ]

६० । इनवंशे सूर्यवंशे पवित्रा कीर्त्तिर्यस्य सः । एतत् सकलमप्युदाहृतमन्तर्यामित्यादि दृश्यमानं जगच्च मायाश्रितमेव । तत्र हेतुः—अनन्यकत्वात, न विद्यतेऽन्यद् यस्य सोऽनन्यकस्तस्य भावस्तत्त्वम् । मम तादृशत्वात् धर्मरहितत्वादितराधारत्वादेरप्यसम्भवात् सर्वं धर्मजालमपि गृह्यमाणं मायाश्रितमेव जानीहीति शेषः । स्वावतारस्य मुख्यप्रयोजनमाह—मत्कीर्त्तनमिति, स्वकीर्त्तनद्वारा पापहरणार्थमेवावतार इति भावः । रा० ।

[ इनवंशपवित्रा कीर्त्तिर्यशो यस्य सः । एतत् सर्वं सकलं मायाश्रितं वनवासरावणवधराज्यप्राप्त्यादिकं सर्वं मम मायैवेत्यर्थः । ननु नित्यानन्दचिन्मयस्य तव किं मायाचरणेन ? लोकहितार्थमेवेत्याह—जगतीति । मत्कीर्त्तनं मम गुणादिकीर्त्तनं पापहरं निबोध जानीहि । गो० ]

---

1. च-छ 'मनु-' । 2. च '-र्त्ति' । 3. ग 'मामा-' । 4 ग '-दनल्प-' । 5. क '-कत्वं', छ '-कृत्या' ।

# द्वितीयोऽध्यायः

——:*:——

[1]श्रीमहादेव उवाच—

[2]श्रीरामवचनं श्रुत्वा परमानन्दनिर्भरः ।
मुनिः प्रोवाच सदसि सर्वेषां तत्र शृण्वताम् ॥ १॥
अथ [3]वित्तेश्वरो देवस्तत्र कालेन केनचित् ।
आययौ पुष्पकारूढः पितरं द्रष्टु[4]मञ्जसा ॥ २ ॥
दृष्ट्वा तं [5]नैकषी तत्र भ्राजमानं महौजसम् ।
राक्षसी पुत्रसामीप्यं गत्वा रावणमब्रवीत् ॥ ३ ॥
पुत्र पश्य धनाध्यक्षं ज्वलन्तं स्वेन तेजसा ।
त्वमप्येवं यथा भूयास्तथा यत्नं कुरु [6]प्रभो ॥ ४ ॥

२ । नरो० । वित्तेश्वरः कुबेरः ।

१ । परमानन्दे चिदानन्दस्वरूपे भगवति निर्भरो यस्य सः । मुनिरगस्त्यः । शृण्वतां सर्वेषां सभासदां समक्षमिति शेषः ।

२ । अथेति । तत्र विश्रवस आश्रमे । पितरं विश्रवसम् । रा० ।

अथ रावणादीनामुत्पत्त्यनन्तरं वयःप्राप्त्यनन्तरञ्चेत्यर्थः । केनचित् कालेन कालक्रमेणेत्यर्थः । तत्र पितुराश्रमे ।

३ । अत्रायं वाल्मीकीयसंवादः—

तं दृष्ट्वा नैकसी तत्र ज्वलन्तमिव तेजसा ।
आगम्य राक्षसीं बुद्धिं दशग्रीवमुवाच ह ॥
पुत्र वैश्रवणं पश्य भ्रातरं तेजसावृतम् ।
भ्रातृभावे समे चापि पश्याऽऽत्मानं त्वमीदृशम् ॥
दशग्रीव तथा यत्नं कुरुष्वामितविक्रम ।
यथा त्वमपि मे पुत्र भवेर्वैश्रवणोपमः ॥ इति ७।९।४१-४३ ।

४ । यद्यपि प्रभो इत्यत्र द्रुतमिति च-पुस्तकधृतः पाठ एवास्माकं समीचीनतया प्रतिभाति,

1. क-ख-ञ-पुस्तकेषु 'श्रीमहादेव उवाच' इति नास्ति, ग 'अगस्त्य'। 2. ग-च-छ-पुस्तकेषु अयं श्लोको नास्ति। 3. छ 'कालेन वित्तेशो देवस्तत्र तु'। 4. छ 'मोजसा'। 5. ख-ञ 'कैकसी', च-टि-छ 'निकषा'। 6. च 'द्रुतम्'।

तच् श्रुत्वा रावणो रोषात् [1]प्रतिज्ञामकरोद् द्रुतम् ।
धनदेन समो वाऽपि ह्यधिको वाऽचिरेण [2]तु ।
भविष्या[3]म्यम्ब मां पश्य सन्तापं त्यज सुव्रते ॥ ५ ॥
इत्युक्त्वा दुष्करं कर्त्तुं तपः स दशकन्धरः ।
[4]आगमत् फलसिद्ध्यर्थं [5]गोकर्णं [6]तु सहानुजः ॥ ६ ॥
स्वं स्वं नियममास्थाय भ्रातरस्ते तपो महत् ।
आस्थिता दुष्करं [7]घोरं सर्वलोकैकतापनम् ॥ ७ ॥
दशवर्षसहस्राणि कुम्भकर्णोऽकरोत्तपः ।
विभीषणोऽपि धर्मात्मा सत्यधर्मपरायणः ।
पञ्चवर्षसहस्राणि पादेनैकेन तस्थिवान् ॥ ८ ॥

---

५ । नरो० । अचिरेण शीघ्रम् ।

६ । नरो० । गोकर्णं तीर्थविशेषम् । अनुजाभ्यां सह वर्त्तमानः सहानुजः ।

८ । नरो० । दशवर्षसहस्राणि दिव्यानीति शेषः ।

---

तथाऽप्यादर्शानां संख्याधिक्ये दत्तावधानास्तं ग्रहीतुं नालमास्म । अत्र च पाठे स्त्रीत्वाविशेषाद् मातुर्निग्रहानुग्रहसमर्थत्वं पुत्रस्य तेन च प्रभो निग्रहानुग्रहसमर्थ इत्येवार्थः ।

५ । मां पश्य शिवेन चक्षुषेति शेषः । रा० ।

रोषाद् भ्रातुरवस्थाप्रदर्शनेन स्वहेयत्वप्रतिपादनजन्यापमानजनितात् कोपात् । मां पश्य मां तत्तुल्यं तदधिकं वा द्रक्ष्यसीत्यर्थः । यद्वा मां पश्य शिवेन चक्षुषेति शेषः । तत्र तादृशदर्शनेन ममाभ्युदयोऽवश्यमेव भविष्यतीत्याशयः ।

६ । दुष्करं तपः कर्त्तुमित्यन्वयः । फलस्य वाञ्छितस्य सिद्ध्यर्थम् । सहानुजः कुम्भकर्णविभीषणसहितः । रा० ।

७ । स्वं स्वं नियमं स्वस्ववासेनोद्भूतं राजस-तामस-सात्त्विकरूपम् । दुष्करम् अन्यैरिति शेषः । रा० ।

[ सर्वलोकानामेकं मुख्यं तापनं तापजनकम् । तापयतीति तथा । गो० ]

स्वं स्वमित्यत्र तांस्तान् धर्मविधीनिति वाल्मीकीयः पाठः ।

८ । कुम्भकर्णस्योग्रचेष्टितत्वं वाल्मीकीये—

कुम्भकर्णस्तदाऽत्यर्थं सत्यधर्मपरायणः ।
अतप्यद् ग्रीष्मकाले वै सोऽग्निभिः सूर्यपञ्चमैः ॥

---

1. च 'कथयामास मातरम्'। 2 च 'च'। 3. ग-च-छ '-ष्यद्य'। 4. च-छ 'अगमत्'। 5. छ 'गोकर्णाख्य'। 6 ग 'स'। 7. क 'कर्म'।

[1]दिव्यं वर्षसहस्रं[2] तु निराहारो दशाननः ।
पूर्णे [3]वर्षसहस्रे तु शीर्षमग्नौ जुहाव सः ।
एवं वर्षसहस्राणि नव तस्यातिचक्रमुः ॥ ९ ॥
अथ वर्षसहस्रे तु दशमे दशमं शिरः ।
छेत्तुकामस्य धर्मात्मा[4] प्राप्तश्चाथ प्रजापतिः ॥ १० ॥
वत्स वत्स दशग्रीव प्रीतो[5]ऽस्मीत्यभ्यभाषत ।
वरं वरय दास्यामि यत्ते मनसि [6]काङ्क्षितम् ॥ ११ ॥

---

९। नरो०। दिव्यं वर्षसहस्रन्त्विति। मानुषमाने तु षष्टिसहस्राधिकलक्षत्रयम्। एवं निराहारत्वप्रकारेण।

---

मेघाम्बुसिक्तो वर्षासु वीरासनमसेवत ।
नित्यञ्च शिशिरे काले जलमध्यप्रतिश्रयः ॥
एवं वर्षसहस्राणि दश तस्य तदा ययुः ।
सत्ये धर्मे च रक्तस्य सत्पथाधिष्ठितस्य च ॥ इति ७।१०।३-९ ।

विभीषणतपश्चर्यायां वाल्मीकीयसंवादः—

विभीषणश्च धर्मात्मा नित्यं धर्मव्रतः शुचिः ।
पञ्चवर्षसहस्राणि पादेनैकेन तस्थिवान् ॥
समाप्ते नियमे तस्मिन् ननृतुश्चाप्सरोगणाः ।
पपात पुष्पवर्षञ्च तुष्टुवुश्चैव देवताः ॥
पञ्चवर्षसहस्राणि सूर्यमेवानुवर्त्तयन् ।
तस्थावूर्द्ध्वशिरोबाहुः स्वाध्यायासक्तचेतनः ॥
एवं विभीषणस्यापि गतानि सुमहात्मनः ।
दश वर्षसहस्राणि स्वर्गस्थस्येव नन्दने ॥ इति ७।१०।६-९ ।

९। नवसहस्रे वर्षेषु नव शिरांसि अर्पितान्यनेनाग्नौ इत्यर्थः। व्यक्तं वाल्मीकीये—

एवं वर्षसहस्राणि नव तस्यातिचक्रमुः ।
शिरांसि नव चाप्यस्य प्रविष्टानि हुताशने ॥ इति ७।१०।११ ।

११। तपस उग्रत्वावलोकनेन व्यस्तस्य प्रजापतेः वत्स वत्सेति द्विः सम्बोधनं न विरुद्धम्।

---

1. क-ग-च-छ 'दिव्य-'। 2. च-छ '-स्राणि'। 3. च 'वर्षे स-'। 4. च '-र्थं'। 5. च '-स्मीति अभा-'। 6. च 'वर्त्तते'।

दशग्रीवोऽपि तच्छ्रुत्वा प्रहृष्टेनान्तरात्मना ।
अमरत्वं वृणोमीश वरदो यदि मे भवान् ॥ १२ ॥
सुपर्ण[1]नागयक्षाणां [2]देवतानां तथाऽसुरैः ।
अवध्यत्वं [3]तु मे देहि तृणभूता हि मानुषाः ॥ १३ ॥

---

१२ । नरो० । अन्तरात्मना अन्तःकरणेन ।

---

१२ । दशग्रीवस्य वरप्रार्थना तस्मै ब्रह्मणो वरप्रदानञ्च वाल्मीकीये—

ततोऽब्रवीद्दशग्रीवः प्रहृष्टेनान्तरात्मना ।
प्रणम्य शिरसा देवं हर्षगद्गदया गिरा ॥
भगवन् प्राणिनां नित्यं माऽन्यत्र मरणाद्भयम् ।
न च मृत्युसमः शत्रुरमरत्वमतो वृणे ॥
एवमुक्तस्ततो ब्रह्मा दशग्रीवमुवाच ह ।
नास्ति सर्वामरत्वं ते वरमन्यं वृणीष्व वै ॥
एवमुक्तस्तदा राम ब्रह्मणा लोककर्तृणा ।
दशग्रीव उवाचेदं कृताञ्जलिरथाग्रतः ॥
सुपर्णयक्षनागानां दैत्यदानवरक्षसाम् ।
अवध्यः स्यां प्रजाध्यक्ष देवतानाञ्च सर्वशः ॥
न हि चिन्ता ममान्येषु प्राणिषु प्रपितामह ।
तृणभूता हि ते सर्वे प्राणिनो मानुषादयः ॥

*   *   *   *

भविष्यत्येतदेवं वै तव राक्षसपुङ्गव ।
शृणु चापि वचो भूयः प्रीतस्येह हितं मम ॥
हुतानि यानि शीर्षाणि पूर्वमग्नौ त्वयाऽनघ ।
अक्षयाणि भविष्यन्ति तथैव तव सर्वशः ॥
वितरामि च ते सौम्य वरमन्यं सुदुर्लभम् ।
छन्दतो विन्द भद्रं ते रूपमन्यद् यदिच्छसि ॥ इति ७।१०।१५-२४ ।

१३ । हि यतो मानुषास्तृणभूतास्तृणतुल्या अतितुच्छाः अतः किन्तेषामवध्यत्वप्रार्थनेन इत्याशयः ।

---

1. च '-यक्ष-नागानां' । 2. च 'दैव-' । 3. क 'च' ।

तथाऽस्त्विति प्रजाध्यक्षः पुनराह दशाननम् ।
अग्नौ हुतानि शीर्षाणि यानि तेऽसुर[1]सत्तम ।
भविष्यन्ति यथापूर्वमक्ष[2]राणि च सत्तम ॥ १४ ॥

एवमुक्त्वा ततो राम दशग्रीवं प्रजापतिः ।
विभीषणमुवाचेदं प्रणतं भक्तवत्सलः ॥ १५ ॥

विभीषण त्वया वत्स कृतं धर्मार्थमुत्तमम् ।
तपस्ततो वरं वत्स वृणीष्वाभिमतं [3]स्थितम् ॥ १६ ॥

विभीषणोऽपि तं नत्वा प्राञ्जलिर्वाक्यमब्रवीत् ।
देव मे सर्वदा बुद्धिर्धर्मे तिष्ठतु शाश्वती[4] ।
मा रोचयत्वधर्मे [5]मे बुद्धिः[6] सर्वत्र सर्वदा ॥ १७ ॥

ततः प्रजापतिः प्रीतो विभीषणमथाब्रवीत् ।
वत्स त्वं धर्मशीलोऽसि [7]तथैव च भविष्यसि ।
अया[8]चितोऽपि ते दास्ये ह्यमरत्वं [9]विभीषण ॥ १८ ॥

---

१४ । नरो० । असुरसत्तम असुरश्रेष्ठ ।

---

१६ । विभीषणस्य धर्मविषयबुद्धिप्राप्तिकामनया तपःकर्तृत्वादरेण वत्सेति द्विः सम्बोधनम् । रा० ।

विभीषणस्य वरप्रार्थनं वाल्मीकीये—

भगवन् कृतमेतावद् यन्मे लोकेश्वरः प्रभुः ।
प्रीतो मे यदि दातव्यो वरो यं शृणु सुव्रत ॥

परमापद्गतस्यापि धर्मे एव धृतिर्भवेत् ।
अशिक्षितञ्च भगवन् ब्रह्मास्त्रं प्रतिभातु मे ॥

या या जायेत मे बुद्धिस्तेषु तेष्वाश्रमेषु च ।
सा सा भवतु धर्मिष्ठा तं तं धर्मं भजेत च ॥ इति ७।१०।२९-३१ ।

---

1. क-ख-ग-घ-च-छ '-पुङ्गव'। 2. ख घ-च '-याणि'। 3. ख 'हि तम्', छ 'हित'। 4. छ '-ते'। 5. च 'तु'। 6. च '-र्द्धिर्मम सदा प्रभो'। 7. च 'तथा शृणु ममाऽऽज्ञया'। 8. ग '-चतो-'। 9. च 'महामते'।

कुम्भकर्णमथोवाच वरं वरय सुव्रत ।
वाण्या व्याप्तोऽथ तं प्राह कुम्भकर्णः पितामहम् ।
स्वप्स्यामि देव षण्मासान् दिनमेकन्तु भोजनम् ॥ १९ ॥
एवमस्त्विति तं प्राह ब्रह्मा [1]दृष्ट्वा दिवौकसः ।
सरस्वती च तद्वक्त्रान्निर्गता [2]प्रययौ दिवम् ॥ २० ॥

---

१९ । नरो० । वाण्या सरस्वत्या ।

---

१९ । वाण्या व्याप्तोऽथ इति । व्यक्तं वाल्मीकीये । ब्रह्माणं वरोद्यतमवलोक्य सुराः—

न तावत् कुम्भकर्णाय प्रदातव्यो वरस्त्वया ।
जानासि हि यथा लोकांस्त्रासयत्येष राक्षसः ॥
नन्दनेऽप्सरसः सप्त महेन्द्रानुचरास्तथा ।
अनेन भक्षिता ब्रह्मन् ऋषयो मानुषास्तथा ॥
तच्छापो वरनामाऽस्मै दीयताममितप्रभ ।
लोकेभ्यः स्वस्ति चैवं स्याद् भवेत्तस्य च सम्मतिः ॥ ७।१०।३७-३९

इत्यादिना तं प्रार्थयामासुः । स च—

एवमुक्तः सुरैर्ब्रह्मा चिन्तयन् पद्मसम्भवः ।
देवीं सरस्वतीं देवः पद्माक्षीं पद्मसम्भवाम् ॥
त्रैलोक्ये सर्वभूतेषु जिह्वा बुद्धिर्धृतिः स्मृतिः ।
चिन्तिता चोपतस्थे सा पार्श्वे देवी सरस्वती ॥
वाणी त्वं राक्षसस्यास्य भव वाग्देवतेप्सिता ।
इत्युक्ता सा प्रणम्याथ तं विवेश निशाचरम् ॥ ७।१०।४०-४४

इत्युक्तदिशा ब्रह्मणः सरस्वतीचिन्तनं सरस्वत्या आगमनं कुम्भकर्णशरीरव्याप्तिश्च ।

[वाण्या व्याप्तोऽथ तं प्राहेति, वरदानायोद्यतं ब्रह्माणं दृष्ट्वा कुम्भकर्णवञ्चनार्थं देवैः प्रेरितया सरस्वत्या व्याप्तस्तया प्रेरितश्चेत्यर्थः । गो० ]

२० । ब्रह्मा एवं त्वत्प्रार्थितं षण्मासनिद्रारूपं वस्त्वेव अस्तु इति प्राह । दृष्ट्वा एतद्वृत्तान्तं ज्ञात्वेत्यर्थः, दिवौकसो दिवं ययुः । सरस्वती च तद्वक्त्रात् कुम्भकर्णवदनात् निर्गत्य दिवं प्रययौ ।

---

1. च 'दृष्टमनास्ततः', ङ 'दृष्टो' । 2. ङ 'त्रिदिव ययौ' ।

[1]कुम्भक[2]र्णस्तु दुष्टात्मा चिन्तयामास दुःखितः।
अनभिप्रेत[3]मेवाऽऽस्यात् किं निर्गतमहो विधिः॥ २१॥
सुमाली वरलब्धांस्ताञ् ज्ञात्वा पौत्रान् निशाचरान्।
पातालान्निर्भयः प्रायात् प्रहस्तादिभि[4]रन्वितः।
दशग्रीवं परिष्वज्य वचनं चेदमब्रवीत्॥ २२॥
दिष्ट्या ते पुत्र संवृत्तो वाञ्छितो मे मनोरथः।
यद्भयाच्च [5]वयं लङ्कां त्यक्त्वा [6]याता रसातलम्।
तद् गतं नो महाबाहो महद् [7]विष्णुकृतं भयम्॥ २३॥
अस्माभिः पूर्वमुषिता लङ्केयं धनदेन ते।
भ्रात्राक्रान्तामिदानीं [8]त्वं प्रत्यानेतु[9]मिहार्हसि।
साम्ना [10]वाऽथ बलेनापि राज्ञां बन्धुः कुतः सुहृत्॥ २४॥

---

२१। नरो०। विधिर्नियतिः।

२२। नरो०। पौत्रानिति। पुत्र्या अपत्यानि दौहित्रानित्यर्थः।

---

२२। वरलब्धान् प्राप्तवरान् पौत्रान् पुत्रीपुत्रान् विदादित्वादञ्। प्रायाद् रावणादि-समीपमिति शेषः। रा०।

प्रहस्तादिभिरिति। व्यक्तमाह वाल्मीकीये—

माल्यवांश्च प्रहस्तश्च विरूपाक्षो महोदरः।
सचिवाः परिवार्यैनमुदतिष्ठन् सुमालिनम्॥ इति ७।११।२।

२३। मे वाञ्छितो मनोरथस्ते दिष्ट्या संवृत्तः। अतो यदभयादिति तद्विष्णुकृतं भयं नोऽस्माकं गतं सर्वावध्यत्वस्य त्वया प्राप्तत्वात्। रा०।

२४। इयं लङ्का पूर्वमस्माभिरुषिता अनेनास्मत्सम्बन्धादियं तव धनभूतेति ध्वनितम्। इदानीं मे भ्रात्रा धनदेनाऽऽक्रान्तां त्वं प्रत्यानेतुं स्वाधीनां कर्त्तुम् अर्हसि। ननु ज्येष्ठे भ्रातरि कथं बलं योग्यं तत्राऽऽह—राज्ञां बन्धुः कुतः सुहृत्। सर्वथैतानुपमर्द्यैव राज्ञः प्रवृत्तेरिति भावः। रा०।

अत्र विष्णुकृतं भयकारणमाह वाल्मीकीये—

असकृद् येन भग्ना हि परित्यज्य स्वमालयम्।
विद्रुताः सहिताः सर्वे प्रविष्टाः स्मो रसातलम्॥ इति ७।११।६।

---

1. च 'ततो दुष्ट कुम्भकर्णश्चि-'। 2 छ '-र्णोऽपि'। 3. क-ग च '-मेव स्यात्'। 4. छ '-रावृतः'। 5 छ 'मया'। 6. छ 'यातं'। 7. छ 'दैवकृत'। 8. ग 'ता'। 9 च '-मयार्हसि'। 10. च 'वाऽपि बलेनाथ'।

इत्युक्तो रावणः प्राह नार्ह[1]स्येवं प्रभाषितुम् ।
वित्तेशो गुरुरस्माकमेवं श्रुत्वा तमब्रवीत् ।
प्रहस्तः [2]प्रश्रितं वाक्यं रावणं दशकन्धरम् ॥ २५ ॥
[3]शृणु रावण यत्नेन नैवं त्वं वक्तुमर्हसि ।
नाधीता राजधर्मास्ते नीतिशास्त्रं तथैव च ।
सुराणां न हि सौभ्रात्रं शृणु मे वदतः प्रभो ॥ २६ ॥
कश्यपस्य सुता देवा राक्षसाश्च महाबलाः ।
परस्परमयुध्यन्त त्यक्त्वा सौहृदमायुधैः ।
नैवेदा[4]नीन्तनं राजन् [5]वैरं देवैरनुष्ठितम् ॥ २७ ॥

---

२५ । तमब्रवीत् प्रहस्त इत्यन्वयः ।

[ प्रहस्तः प्रस्तुतं वाक्यमिति, प्रस्तुतं नीतिशास्त्रोचितम्, प्रश्रितमिति पाठेऽप्यय-मेवार्थः । गो० ]

२७ । देवैरनुष्ठितं लङ्काहरणरूपं वैरमिदानीन्तनमेव न, किन्तु प्राचीनमेव । एवञ्च तैरस्मद्द्वेषकरणवदस्माकमपि तद्द्वेषकरणं न दोषायेति भावः । रा० ।

वृत्तान्तोऽयं व्यक्तं वाल्मीकीये । तथाच—

अदितिश्च दितिश्चैव द्वौ भगिन्यौ बभूवतुः ।
भार्ये परमरूपिण्यौ कश्यपस्य प्रजापतेः ॥
अदित्या जज्ञिरे देवास्तदा त्रिभुवनेश्वराः ।
दितिस्त्वजनयद्दैत्यान् कश्यपादात्मसम्भवान् ॥
दैत्यानां किल धर्मज्ञ पुरेयं सवनार्णवा ।
आसीत् सपर्वता भूमिस्तेऽभवन् प्रभविष्णवः ॥
ततस्ते निहताः सर्वे विष्णुना प्रभविष्णुना ।
देवानाञ्च वशं नीतं त्रैलोक्यमिदमव्ययम् ॥
तथा वैरमपर्यन्तं गरुडस्योरगैः सह ।
भ्रातृभिः संप्रसक्तं हि संहारो यस्य नाभवत् ॥
नैतदेको भवानद्य करिष्यति विपर्ययम् ।
शूरैराचरितं पूर्वं कुरुष्वैतद् वचो मम ॥ इति ७।११।१९-२० ।

---

1. क '-सी त्व विभा-' । 2. च 'प्रक्रात' । 3 ग-च-क-पुस्तकेषु अयं श्लोको नास्ति । 4. क '-नीं तदा' । 5. ग-च 'पूर्वजैरप्यनु-', क 'दैवतैरप्यनु-' ।

प्रहस्तस्य वचः श्रुत्वा दशग्रीवो दुरा[1]त्मनः ।
तथेति क्रोधताम्राक्षस्त्रिकूटाचलमन्वगात् ॥ २८ ॥

दूतं प्रहस्तं संप्रेष्य [2]निष्काश्य धनदेश्वरम् ।
लङ्कामाक्रम्य सचिवै राक्षसैः सुखमा[3]स्थितः ॥ २९ ॥

धनदः पितृवाक्येन त्यक्त्वा लङ्कां महायशाः ।
गत्वा कैलासशिखरं तपसाऽतोषयच्छिवम् ॥ ३० ॥

तेन सख्यमनुप्राप्य तेनैव परिपालितः ।
अलकां नगरीं तत्र निर्ममे विश्वकर्मणा ।
दिक्पालत्वं चकारात्र[4] शिवेन परि[5]पालितः ॥ ३१ ॥

---

२८। क्रोधताम्राक्ष इति वाल्मीकीयविरुद्धम्,

स तु तेनैव हर्षेण तस्मिन्नहनि वीर्यवान् ।
लङ्कां यातो दशग्रीवः सह तैः क्षणदाचरैः ॥ ७।११।२२

इत्यत्र हर्षेणेति दर्शनात्, रावणप्रहितस्य दूतरूपस्य प्रहस्तस्य वचनेनैव धनदस्य लङ्कापरित्यागश्रवणेन क्रोधस्य कारणाभावाच्च। एवमग्रस्थं 'निष्काश्य आक्रम्य' इत्यादि वाक्यमपि वाल्मीकीयविरुद्धम्।

ब्रूहि गच्छ दशग्रीवं पुरीं राज्यञ्च यन्मम ॥
तवाप्येतन्महाबाहो भुङ्क्ष्व चैतदकण्टकम् ।
अविभक्तं त्वया सार्धं राज्यं यच्चास्ति मे वसु ॥

अहं गच्छामि कैलासं निवासाय महागिरिम् ।
लङ्कामावस भद्रन्ते स्वधर्मं तत्र पालय ॥

एवमुक्त्वा धनाध्यक्षो बलेन महता वृतः ।
सपौरदारः सामात्यः सवाहनधनो गतः ॥ ७।११।४३-४६

इत्यादिश्लोकस्थेनार्थेन आक्रमणनिष्कासनयोराशङ्काऽपि नाऽऽविर्भवतीति ।

३०। धनदस्तद्दूतगमनोत्तरं पितृसमीपं गत्वा रावण एवमाहात्र किमुचितमिति पृष्टवान्, तेन च त्याग एवोचितोऽस्यावध्यत्वादित्युक्ते तां त्यक्तवानिति गाथा पौराणिकी । रा० ।

---

1. छ '-त्मवान्'। 2. च 'निष्क्रम्य,' छ 'निःसार्य'। 3. ग '-श्रित.'। 4. छ '-ष'। 5. ग-च-छ '-नन्दित:'।

रावणो राक्षसैः सार्द्धमभिषिक्तः सहा[1]नुजैः ।
राज्यं चका[2]रासुराणां त्रिलोकीं बाधयन् खलः ॥ ३२ ॥
भगिनीं काल[3]खञ्जाय ददौ विकटरूपिणीम् ।
विद्युज्जिह्वाय नाम्नाऽसौ महामा[4]यी निशाचरः ॥ ३३ ॥
ततो मयो विश्वकर्मा राक्षसानां [5]दितेः सुतः ।
सुतां मन्दोदरीं नाम्ना ददौ लोकैकसुन्दरीम् ।
रावणाय [6]पुनः शक्तिममोघां [7]प्रीतमानसः ॥ ३४ ॥
वैरोचनस्य दौहित्रीं [8]वृत्रज्वालेति विश्रुताम् ।
स्वयं [9]दत्तामुदवहत् कुम्भक[10]र्णाय रावणः ॥ ३५ ॥
गन्धर्वराजस्य सुतां शैलूषस्य महात्मनः ।
विभीषणस्य[11] भार्यार्थे धर्मज्ञां समुदा[12]वहत् ।
सरमां नाम सुभगां सर्वलक्षणसंयुताम् ॥ ३६ ॥

---

३२ । असुराणां तदवताररूपरक्षसाम् । यद्वा क्रूरकर्मत्वाद्रक्षःस्वप्यसुरपदप्रयोगः, एवमसुरेष्वपि राक्षसपदप्रयोग इति बोध्यम् । रा० ।

३३ । 'कालखञ्जाय' इत्यत्र 'कालकेयाय' इति वाल्मीकिः (७।१२।२ ) ।

३४ । राक्षसानां विश्वकर्मा दितेः सुतो मयः मन्दोदरीं कन्यां रावणाय ददौ, पुनः शक्तिञ्चामोघां स्वनिर्मितां ददौ । रा० ।

मन्दोदरी च हेमाया अपत्यम्,

इयं ममाऽऽत्मजा राजन् हेमायाः पयसा भृता ।
कन्या मन्दोदरी नाम भार्यार्थं प्रतिगृह्यताम् ॥ ७।१२।१८ ।
इयं ममाऽऽत्मजा राजंस्तस्याः कुक्षिसमुद्भवा ।
भर्त्तारमस्याः सदृशं प्राप्तवानस्मि मार्गितुम् ॥ ७।१२।१०

वाल्मीकीये मयस्य इत्यादिवचनदर्शनात् ।

३५ । [ वैरोचनस्येति । विरोचनस्य बलेर्दौहित्रीं स्वयं दत्तां तत्पित्रा स्वयमुद्यम्य दत्तां कुम्भकर्णाय कुम्भकर्णार्थम् उदवहत् स्वीकृतवान् । गो० ]

'वृत्रज्वाले'त्यत्र 'विद्युज्ज्वाले'ति वाल्मीकीये ( ७।१२।२३ ) ।

३६ । सरमेति नामकारणमाह वाल्मीकीये—

---

1. क '-नुजः' । 2. च '-र सुराणां' । 3. ग-क '-कञ्जाय' । 4. क-ख '-यो' । 5. क 'दनोः' । 6. क 'ददौ' । 7. ग 'प्रीति-' । 8. च-क 'ब्रह्मज्वा' । 9. च 'दत्ता महाबाहुः' । 10. ग '-र्णोऽय रावणः,' क '-र्णो महाबलः' । 11. क '-स्य' । 12. च '-हरत्' ।

निद्रिते कुम्भकर्णे[1] तु रावणो लोकरावणः ।
ब्राह्मणानृषिमुख्यांश्च देवदानवकिन्नरान् ।
[2]देवश्रियो मनुष्यांश्च निजघ्ने समहोरगान् ॥ ३९ ॥
धनदोऽपि ततः श्रुत्वा रावणस्याऽऽक्रमं [3]प्रभुः ।
अधर्मं मा कुरुष्वेति दूतवाक्यैर्न्यवारयत् ॥ ४० ॥
ततः क्रुद्धो दशग्रीवो जगाम धनदालयम् ।
विनिर्जित्य धनाध्यक्षं [4]जहारोत्तमपुष्पकम् ॥ ४१ ॥
ततो यमन्तु[5] वरुणं निर्जित्य समरेऽसुरः ।
स्वर्गलोकमगात्तूर्णं देवराजजिघांसया ॥ ४२ ॥

---

३९ । नरो० । लोकान् रावयति आर्तस्वरं कारयतीति लोकरावणः ।

---

३९ । देवादीन् समहोरगान् निजघ्ने । देवश्रियश्चेति, जघ्ने हृतवानित्यर्थः । 'देवस्त्रियः' इति पाठान्तरम् । रा० ।

४० । दूतवाक्यानि वाल्मीकीये द्रष्टव्यानि ( ७।१३ ) । तत्र पुनः सरोषेण रावणेन अवध्यस्यापि दूतस्य वधः । तथाच—

छित्त्वा स रोषताम्राक्षो दूतं खड्गेन रक्षसः ।
ददौ भक्षयितुं तत्र राक्षसेभ्यो निशाचरः ॥ इति ७।१३।३९ ।

४१ । पुष्पकं विशिनष्टि वाल्मीकिः—

निर्जित्य राक्षसेन्द्रन्तु धनदं हृष्टमानसः ।
पुष्पकं तस्य जग्राह विमानं जयलक्षणम् ॥
काञ्चनस्तम्भसंवीतं वैदूर्यमणितोरणम् ।
मुक्ताजालप्रतिच्छन्नं सर्वकामफलप्रदम् ॥
मनोजवं कामगमं कामरूपं विहङ्गमम् ।
मणिकाञ्चनसोपानं तप्तकाञ्चनवेदिकम् ॥
देवोपवाह्यमक्षय्यं सदा दृष्टिमनःसुखम् ।
बह्वाश्चर्यं भक्तिचित्रं ब्रह्मणा परिनिर्मितम् ॥
निर्मितं सर्वकामैस्तु मनोरममनुत्तमम् ।
न च शीतं न चैवोष्णं सर्वर्तुसुखदं शुभम् ॥ इति ७।१५।३६-४० ।

४२ । स्वर्गलोकं मेरोरूर्द्ध्वं स्थितं शक्रलोकम्, अनेन यमादिलोकास्तदधः स्थिता इति ध्वनयति । रा० ।

---

1. क '-र्णोऽपि' । 2. ग 'देवान् स्त्रियो,' च 'यक्षान् स्त्रियो', क 'देवस्त्रियो' । 3. ग-च 'पुनः' । 4. च 'जहार पुष्पकोत्तमम्', क 'जयाढ्यो-' । 5. ग-च-क '-ञ्च' ।

ततोऽभवन्महद् युद्धमिन्द्रेण सह दैवतैः ।
ततो रावण[1]मभ्येत्य बबन्ध त्रिदशेश्वरः ॥ ४३ ॥

तच्छ्रुत्वा सहसागत्य मेघनादः [2]प्रतापवान् ।
कृत्वा [3]घोरं महद् युद्धं जित्वा त्रिदशपुङ्गवान् ॥ ४४ ॥

इन्द्रं गृहीत्वा बद्ध्वाऽसौ मेघनादो महाबलः ।
मोचयित्वा तु पितरं गृहीत्वेन्द्रं [4]ययौ पुरम् ॥ ४५ ॥

ब्रह्मा तु मोचयामास देवेन्द्रं मेघनादतः ।
दत्त्वा वरान् बहूंस्तस्मै [5]ब्रह्मा स्वभवनं ययौ ॥ ४६ ॥

---

वाल्मीकीये धनेशविजयात् परमेव कैलासोत्तोलनम् । ततः सीतोत्पत्ति-मरुत्तसमागमा-नरण्यवध-नर्मदावगाह-रावणनिग्रह-रावणमोक्ष-बालिरावणसख्य-नारदसमागम-वैवस्वतबलिविध्वंस-नादिवृत्तजातम्, ततो यमविजयः, ततः पुना रसातलविजय-बलिनिदर्शन-मान्धातृयुद्ध-ब्रह्मप्रोक्त-स्तवमहापुरुषदर्शन-स्त्रीपरिदेवित-मधुपुरगमन-नलकूबराभिशाप-सुमालिवधादिकम्, तत इन्द्रेण युद्ध-मित्येवं क्रमः । अस्ति कश्चित् कौतुकावहः संवादो यमविजये, स च क्रुद्धस्य यमस्य रावणविनाशार्थं दण्डक्षेपणोद्योगमवलोक्य ब्रह्मणा स्वप्रदत्तवरस्य रक्षार्थम्,

वैवस्वत महाबाहो न खल्वमितविक्रम ।
न हन्तव्यस्त्वयैतेन दण्डेनैष निशाचरः ॥
वरः खलु मयैतस्मै दत्तस्त्रिदशपुङ्गव ।
स त्वया नानृतः कार्यो यन्मया व्याहृतं वचः ॥ ७।२६।३८-२९

इत्यादिना प्रतिषेधरूपः, अनन्योपायत्वेन यमस्य पलायनरूपश्च । तथाच—

एवमुक्तस्तु धर्मात्मा प्रत्युवाच यमस्तदा ।
एष व्यावर्त्तितो दण्डः प्रभविष्णुर्हि नो भवान् ॥
किं त्विदानीं मया शक्यं कर्त्तुं रणगतेन हि ।
न मया यद्ययं शक्यो हन्तुं वरपुरस्कृतः ॥
एष तस्मात् पलायिष्ये दर्शनादस्य रक्षसः ।
इत्युक्त्वा सरथः साश्वस्तत्रैवान्तरधीयत ॥ इति ७।२६।४६-४८ ।

४६ । इन्द्रमोचनप्रतिदानत्वेन तदभीष्टानेकवरदानम् । रा० ।

इन्द्रमोचनप्रसङ्गेन ब्रह्मणो वरदानं वाल्मीकीये—

---

1. ग-च '-माहत्य' । 2. छ 'प्रभाववान्' । 3. च 'युद्धं महाघोरं' । 4. ग 'पुरं ययौ', च 'गच्छे-ऽमयत्' । 5. छ 'ततः' ।

रावणो विजयी लोकान् सर्वाञ् जित्वा क्रमेण तु ।
कैलासं तोलयामास बाहुभिः परिघोपमैः[1] ॥ ४७ ॥

तत्र नन्दीश्वरे[2]णैवं शप्तोऽयं [3]रावणेश्वरः ।
वानरैर्मानुषैश्चैव नाशं गच्छेति [4]कोपिना ॥ ४८ ॥

---

अथाब्रवीद् विमानस्थमिन्द्रजित् प्रभुमव्ययम् ।
श्रूयतां यो भवेत् सन्धिः शतक्रतुविमोक्षणे ॥

ममेष्टो दहनो नित्यं हव्यैः संपूज्य मन्त्रवत् ।
यं प्रवर्त्तेय संग्रामं न च मे स्यात् पराजयः ॥

तं यदा त्वसमाप्याहं जप्यं होमं विभावसौ ।
युध्येयं देव संग्रामे तदा मे स्यात् पराजयः ॥

सर्वो हि तपसा देव वृणोत्यमरतां पुमान् ।
विक्रमेणार्जितं चेदममरत्वं मया प्रभो ॥

एवमस्त्विति तं प्राह वाक्यं देवः प्रजापतिः ।
मुक्तश्चेन्द्रजिता शक्रो गताश्च त्रिदिवं सुराः ॥ इति ७।३८।११-१९ ।

किमयम् एक एव वरो द्वौ बहवो वेति न विद्मः, इह तु 'बहून् वरान्' इत्युक्तम् ।

४८ । शापमाह—वानरैरिति । कोपिना कोपवता, कैलासचालनादयं कोपः । वानरमुखं नन्दीश्वरं दृष्ट्वा रावणेन हसितमित्यतो वा शापः । रा० ।

तत्र कैलासे कोपिना नन्दीश्वरेण वानरैर्मानुषश्च नाशं गच्छ अयमेवं शप्तोऽभूदिति शेषः ।

अभिशापकारणं शापप्रकारश्च वाल्मीकीये—

दृष्ट्वा तं वानरमुखमवज्ञाय स राक्षसः ।
प्रहासं मुमुचे तत्र सतोय इव तोयदः ॥

स क्रुद्धो भगवान्नन्दी शङ्करस्यापरा तनुः ।
अब्रवीद्राक्षसेन्द्रञ्च दशग्रीवमुपस्थितम् ॥

यस्माद् वानरमूर्त्तिं मां दृष्ट्वा राक्षस दुर्मते ।
मोहादिह न जानीषे प्रहासं चैव मुञ्चसि ॥

---

1. अतः परं च-पुस्तके 'नन्दिं दृष्ट्वा रावणोऽथ जहास वानर मुखम्' इत्यधिकम् । 2. ग-घ-ङ '-णैव' । 3. ग-घ-च 'राक्षसे-, ङ 'रावणोऽसुर.' । 4. च 'दुमते' ।

शप्तो[1]ऽप्यगणयन् वाक्यं ययौ हैहयपत्तनम् ।
तेन बद्धो दशग्रीवः [2]पुलस्त्येन विमोचितः ॥ ४९ ॥
ततोऽपि [3]बलमासाद्य जिघांसुर्हरिपुङ्गवम् ।
धृत[4]स्तेनैव कक्षेण बालिना दशकन्धरः ॥ ५० ॥

---

तस्मान्मद्रूपसंयुक्ता मद्वीर्यसमतेजसः ।
उत्पतत्स्यन्ते वधार्थं ते कुलस्य भुवि वानराः ॥
नखदंष्ट्रायुधाः शूरा मनःपवनरंहसः ।
युद्धोन्मत्ता बलोदग्राः शैला इव विसर्पिणः ॥
ते राक्षस बलं दर्पमुत्सेधं च पृथग्विधम् ।
व्यपनेष्यन्ति सम्भूय सहामात्यसुतस्य ते ॥ इति ७।१६।१३-१९ ।

४९ । अगणयन् किमस्य शापेन भवितेति तच्छापगणनामकुर्वन् । हैहयपत्तनं सहस्रार्जुन-नगरम् । रा० ।

तेन कार्त्तवीर्यार्जुनेनेत्यर्थः । रावणस्य बन्धनप्रकारमाह वाल्मीकिः—

तं विह्वलितमालोक्य दशग्रीवं ततोऽर्जुनः ॥
सहसाप्लुत्य जग्राह गरुत्मानिव पन्नगम् ।
स तं बाहुसहस्रेण बलादादाय रावणम् ॥
बबन्ध बलवान् राजा बलिं नारायणो यथा । इति ७।२१।६३-६९ ।

पुलस्त्येन विमोचनमर्जुनेन रावणसख्यञ्च वाल्मीकीये—

तत् पुत्रक यशःस्फीतं लोके विश्रावितं त्वया ॥
मद्वाक्यं पालय त्वद्य मुञ्च तात दशाननम् ॥
पुलस्त्याज्ञां गृहीत्वा स न किञ्चिद्वचनोऽर्जुनः ।
अमुञ्चत् पार्थिवेन्द्रस्तं राक्षसेन्द्रं प्रहृष्टवत् ॥
स तं विमुच्य त्रिदशारिमर्जुनः प्रपूज्य दिव्याभरणाम्बरैः शुभैः ।
अहिंसया सख्यमुपेत्य साग्निकं प्रणम्य स ब्रह्मसुतं व्यसर्जयत् ॥ इति ७,२२।१७-१८ ।

५० । बलं हैहयप्रतिरूपं बलम् । हरिपुङ्गवं बालिनम् । तद्धननोद्यमेन गतस्य विपरीत-स्तत एवानिष्टलाभ इत्याह—तेनैव कक्षेण धृत इति । विषममत्रालङ्कारः । रा० ।

---

1. ग '-ऽप्यागण-', च '-नाग-' । 2. क 'पौल-' । 3 क 'बालि-' । 4. च '-स्तवैव' ।

भ्रामयित्वा तु चतुरः समुद्रान् रावणं हरिः ।
विसर्जयामास ततस्तेन सख्यं चकार सः ॥ ५१ ॥

रावणः पर[1]मप्रीत एवं लोकान् महाबलः ।
चकार स्ववशे राम बुभुजे स्वयमेव तान् ॥ ५२ ॥

---

हरिपुङ्गवं बालिनं जिघांसुर्दशकन्धरो रावणः तेन हरिपुङ्गवेण बालिना कक्षेण धृतो बद्ध इत्यर्थः । व्यक्तं वाल्मीकीये—

हन्तुं प्राप्तं तु तं दृष्ट्वा पदशब्देन रावणम् ।
प्राङ्मुखस्तं निजग्राह बाली सर्पमिवाण्डजः ॥
ग्रहीतुकाममादाय रक्षसामीश्वरं हरिः ।
खमुत्पपात वेगेन कृत्वा कक्षावलम्बिनम् ॥ इति ७।२३।२१-२२ ।

५१ । रावणस्य चतुःसागरभ्रामणमपि तत्रैव—

सभाज्यमानो भूतैस्तु खेचरैः खेचरो हरिः ।
पश्चिमं सागरं बाली आजगाम सरावणः ॥
तत्र सन्ध्यामुपास्यासौ जप्त्वा जप्यं च वानरः ।
उत्तरं सागरं प्रायाद्वहमानो निशाचरम् ॥
बहुयोजनसाहस्रं तमध्वानं महाकपिः ।
वायुवच्च मनोवच्च जगाम सह शत्रुणा ॥
उत्तरे सागरे सन्ध्यामुपास्यैव विधानतः ।
प्रययौ वेगवान् बाली पूर्वमम्बुमहानिधिम् ॥
तत्रापि सन्ध्यामन्वास्य वासविः स हरीश्वरः ।
किष्किन्ध्याभिमुखं रक्षो गृहीत्वा पुनरागमत् ॥ इति । ७।२३।२९-३३ ।

सख्यमपि तत्रैव—

ततः प्रज्वाल्य तावग्निं तत्रोभौ हरिराक्षसौ ।
भ्रातृत्वमुपपन्नौ तौ परिष्वज्य परस्परम् ॥ इति ७।२३।४४ ।

विसर्जयामासेति

स तत्र मासमुषितो बालिना सह रावणः ।
अमात्यै रावणो नीतस्त्रैलोक्योच्छादनार्थिभिः ॥ ७।२३।४६

इत्यादिना वाल्मीकीयेन अमात्यादिभिर्नयनं तस्य ।

---

1. च '-मोन्मत्त' ।

एवंप्रभावो राजेन्द्र दशग्रीवः सहेन्द्रजित् ।
[1]त्वया विनिहतः सङ्ख्ये रावणो लोक[2]रावणः ॥ ५३ ॥
मेघनादश्च निहतो लक्ष्मणेन महात्मना ।
कुम्भकर्णश्च निहतस्त्वया पर्वतसन्निभः ॥ ५४ ॥
भवान्नारायणः साक्षाज्जगतामादि[3]कृद्विभुः ।
त्वत्स्वरूपमिदं [4]सर्वं जगत् स्थावरजङ्गमम् ॥ ५५ ॥
त्वन्नाभिकमलोत्पन्नो ब्रह्मा लोकपितामहः ।
अग्निस्ते मुखतो जातो वाचा सह रघूत्तम ॥ ५६ ॥
बाहुभ्यां लोक[5]पालौघाश्चक्षुर्भ्यां चन्द्रभास्करौ ।
दिशश्च विदिशश्चैव कर्णाभ्यां ते समुत्थिताः ॥ ५७ ॥
घ्राणात् प्राणः समुत्पन्नश्चाश्विनौ देवसत्तमौ ।
जङ्घाजानूरुजघनाद् भुवर्लोकादयोऽभवन् ॥ ५८ ॥
कुक्षिदेशात् समुत्पन्नाश्चत्वारः सागरा हरे ।
स्तनाभ्यामिन्द्रवरुणौ [6]बालखिल्याश्च [7]रेतसः ॥ ५९ ॥

---

५५ । नरो० । श्रीरामस्य परमेश्वरस्य सर्वज्ञस्याग्रे अज्ञात्वा मया यत्किञ्चित् प्रलपितं तत्तेन स्तुतिं विना न क्षन्तव्यमिति हृदि कृत्वा श्रीरामं स्तौति—भवान्नारायण इत्यादि 'विचिन्वन्तो हि पश्यन्ति चिन्मात्रं त्वां न चान्यथे'त्यन्तेन (५५—६७) श्लोकजातेन । आदिकृद् आदिकर्त्ता ।

५६ । नरो० । तदेवोपपादयति—त्वन्नाभीति सार्द्धैः पञ्चभिः ।

५७ । नरो० । लोकपालौघा लोकपालसमूहाः ।

---

५३ । सहेन्द्रजिद् दशग्रीव एवम्प्रभाव आसीदिति शेषः । तयोस्त्वया रावणः सङ्ख्ये विनिहत इत्यन्वयः, परश्लोके इन्द्रजिद्विनाशकर्तृत्वस्य लक्ष्मणे आरोपात् ।

५४ । अत्र रावणबन्धकेन्द्रबन्धकतया रामपृष्ट इन्द्रजित उत्कर्ष उक्तः । रा० ।

५५-५६ । एतत्तव नाऽऽश्चर्यायेत्याह—भवानिति । आदिकृद् उत्पत्तिकर्त्ता । जगतो भगवत्स्वरूपत्वमेवाऽऽह—त्वन्नाभीति । अग्निस्ते इति 'मुखादग्निरजायत' ( वाजसनेयस० ३१।१२ ) इति श्रुतेः, 'अग्निं वागप्येति' ( बृहदा० ३।२।१३ ) इति श्रुतेश्च । रा० ।

५७ । बाहुभ्यामित्याद्यपि श्रुतिसिद्धमिति तद्विदां स्पष्टमेव । रा० ।

५८ । प्राणः प्राणवायुः । जङ्घाजानूरुजघनादिति समाहारद्वन्द्वः । रा० ।

---

1 च 'ल व निहत.' । 2 च '-दारुणः' । 3. क '-कृत् प्रभु.' । 4. ग-च 'विश्व' । 5. ग '-पालाश्च चक्षुर्भ्यां' । 6. ग-च-क 'बालि-' । 7. क 'तेजसः' ।

मेढ्राद् यमो गुदान्मृत्युर्मन्यो रुद्रस्त्रिलोचनः ।
अस्थिभ्यः पर्वता जाताः केशेभ्यो मेघ[1]संहतिः ।
[2]ओषध्यस्तव रोमभ्यो नखेभ्यश्च [3]खरादयः ॥ ६० ॥
त्वं विश्वरूपः पुरुषो मायाशक्तिसमन्वितः ।
नानारूप इवाऽऽभासि गुणव्यतिकरे सति ॥ ६१ ॥
त्वामाश्रित्यैव विबुधाः पिबन्त्यमृतमध्वरे ।
त्वया सृष्टमिदं [4]सर्वं विश्वं स्थावरजङ्गमम् ॥ ६२ ॥
त्वामा[5]श्रित्यैव जीवन्ति सर्वे स्थावरजङ्गमाः ।
त्वद्युक्तमखिलं वस्तु व्यवहा[6]रेऽपि [7]राघव ॥ ६३ ॥

---

६१ । नरो० । तर्हि मम ब्रह्मत्वं न स्यादित्यत आह—त्वमित्यादि । गुणव्यतिकरे सति सत्त्वादिगुणसम्बन्धे सति त्वं नानारूप इवाऽऽभासि, परमार्थतः किञ्चिदपि नास्तीत्यर्थः । मायारूपा शक्तिस्तया समन्वितः ।

६२ । नरो० । तव साहाय्यं विना देवा यज्ञशेषं पातुमप्यसमर्था इत्याह—त्वामित्यादिना । त्वामाश्रित्यैव विबुधा देवा अध्वरे यज्ञे अमृतं यज्ञशेषं दधिघृतादि पिबन्तीत्यन्वयः । किञ्च इदं सर्वं स्थावरजङ्गमं विश्वं जगत् त्वया सृष्टम् ।

६३ । नरो० । किञ्च स्थावरजङ्गमास्त्वामाश्रित्यैव जीवन्तीति । तथाच श्रुतिः—'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति' ( तैत्ति० ३।१।१ ) इत्यादिः । उपादानत्वमङ्गीकृत्य त्वत्स्वरूपमिदमित्याद्युक्तं निमित्तत्वमङ्गीकृत्य त्वया सृष्टमित्याद्युक्तमिति

---

६० । [ खरादय इति । खरा गर्दभाः । गो० ]

६१ । विश्वरूपो विराडित्यर्थः । मायागुणानां सत्त्वादीनां व्यतिकरे सति आधिक्यन्यूनताभ्यां परस्परसंश्लेषे सति नानारूपो ब्रह्मविष्णुरुद्रादिरूपो भासि । रा० ।

[ गुणव्यतिकरे गुणानां व्यतिकरः परिणामस्तस्मिन् । गो० ]

६२ । अग्निरूपं त्वामाश्रित्यैव अमृतं हविरध्वरे देवाः पिबन्ति । त्वमेव सृष्टिस्थितिकर्त्तेत्याह—त्वयेति ।

[ अग्निरूपतामाह—त्वामाश्रित्येत्यादि । त्वामवलम्ब्यैव त्वद्वशा देवा अग्निरूपेण अध्वरे हविर्हुतं पिबन्ति । गो० ]

६३-६४ । व्यवहारे तत्कालेऽपि अखिलं वस्तु त्वद्युक्तमेव । सत्त्वेन भातत्वेन च सर्वव्यव-

---

1. घ '-सन्ततिः' । 2 क 'औष-' । 3 च 'सुरा-' । 4. ग-च 'विश्वं सर्वं' । 5. च '-श्रित्य च' । 6. क-ख-ग-घ '-रेऽपि' । 7. च 'सर्वशः' ।

क्षीर[1]मध्यगतं सर्पिर्यथा [2]व्याप्याखिलं पयः ।
त्वद्भासा [3]भास्यते[4]ऽर्कादिर्न त्वं तेना[5]भिभास्यसे ॥ ६४ ॥
सर्वगं नित्यमेकं त्वां ज्ञानचक्षुर्विलोकयेत् ।
नाज्ञानचक्षुस्त्वां पश्येदन्धदृग् भास्करं यथा ॥ ६५ ॥

---

भास्ति विरोधः । किञ्च तव सर्वगतत्वमपीत्याह—त्वद्युक्तमखिलं वस्तु इत्यनेन । किं तत्र प्रमाणमिति चेत्तत्राऽऽह—व्यवहारोऽपीति । श्रुतिरपि लभ्यते, सा यथा—'आकाशवत् सर्वगतो नित्य' इति ।

६४ । नरो० । व्यवहारं दर्शयति—क्षीरमध्यगतमिति । गतं स्थितमित्यर्थः । किञ्च त्वद्भासा अर्कादिरपि भास्यते प्रकाश्यते त्वं तेनार्कादिना नाभिभास्यसे न प्रकाश्यसे । तवैव स्वप्रकाशकत्वं परप्रकाशकत्वञ्चेति भावः । तथाच श्रुतिः—'तमेव भान्तम् अनुभाति सर्वम् तस्य भासा सर्वमिदं विभाति' ( कठ० ५।१५ ) 'न दृष्टेर्द्रष्टारं पश्येः' ( बृहदा० ३।४।२ ) इत्यादि ।

६५ । नरो० । ननु यदि मम सर्वगतत्वं स्वप्रकाशकत्वञ्च तर्हि किं न सर्वेषां ज्ञानविषयत्वमित्यत आह—सर्वगमित्यादि । एकमद्वितीयम् । अन्धा चक्षुःशून्या दृग् यस्य स तथा ।

---

हारः सत्ता-भातत्वे च सर्वत्र त्वदीये एवेति भावः । तदेव दृष्टान्तेनोपपादयति सर्पिर्यथाऽखिलं पयो व्याप्य तिष्ठति, तथा त्वमखिलं व्याप्य तिष्ठसीति सर्वत्र सदिति भासते इति च व्यवहारः । 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' ( कठ० ५।१५ ) इति श्रुतेः । तदेवाऽऽह—त्वद्भासेति । रा० ।

[ त्वद्युक्तमखिलमिति । अखिलं समग्रं वस्तु व्यवहारकारणञ्च त्वद्युक्तं सद्रूपेण त्वया युक्तम् अनुगतम् , अतस्तेन व्यवहारोऽपि सिध्यति, न हि सद्रूपं त्वां विना अत्यन्तमिथ्याभूतेन वस्तुना व्यवहारः सिध्यति । सर्वानुभूतत्वं सदृष्टान्तमाह—यथा क्षीरस्य दुग्धस्य मध्यगतमन्तर्गतं सर्पिर्घृतमखिलं पयो व्याप्य तिष्ठति, तथा सर्वं वस्तु त्वद्युक्तम् । तथा च श्रुतिः—'एको देवः सर्वभूतेषु गूढः' ( श्वेताश्व० ।३।११ ) इत्याद्या । त्वत्तेजसा रव्यादयो दीप्यन्ते इत्याह—त्वद्भासेति । अर्कादिः रविचन्द्रवह्न्यादि. त्वद्भासा तव तेजसैव भासते प्रकाशते, न तु तेनार्कादिना त्वम् अभिभास्यसे तव स्वपरप्रकाशकत्वात् । तथाच श्रुतिः—'न तत्र सूर्यो न च चन्द्रतारका नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ( कठ० ५।१५ ) इति । गो० ]

६५-६६ । ईदृशस्त्वं न सर्ववेद्य इत्याह—सर्वगमिति । ज्ञानचक्षुषोऽप्यात्मन्येव त्वां

---

1. ग '-मध्ये ग-' । 2. च 'व्याप्त' पयोऽखिलम्' । 3 क-ख-घ 'भासते' । 4 ग '-ऽग्न्यादि-' । 5. क-ख-घ '-वभाससे' ।

योगिनस्त्वां विचिन्वन्ति स्वदेहे परमेश्वरम् ।
[1]अतन्निरसनमुखैर्वेदशीर्षैरहर्निशम् ॥ ६६ ॥

त्वत्पादभक्ति[2]लेशेन गृहीता यदि योगिनः ।
विचिन्वन्तो हि पश्यन्ति चिन्मात्रं त्वां न चान्यथा ॥ ६७ ॥

---

अत्र दृक्पदं गोलकपरम् । यद्वा आलोकोद्भूतरूपसम्बन्धसत्त्वेऽपि अन्धा विषयग्रहणासमर्था दृग् यस्य स तथा । सूर्यस्य आलोकजनकत्वम् अद्भुतरूपत्वञ्च विद्यत इति भास्करमित्युक्तम् ।

६६-६७ । नरो० । योगिनोऽपि स्वदेहे स्थितं त्वां वेदान्तैरहर्निशम् अन्विष्यापि त्वत्पादभक्तिं विना द्र...रा—इत्याह योगिन इति द्वाभ्याम् । विचिन्वन्ति अन्विच्छन्ति । तस्य अध्यारोपस्य निरसनं निराकृतिस्तन्निरसनम्, न तन्निरसनम् अतन्निरसनम्, तन्मुखमाद्यं येषां तैस्तथा । वस्तुनि अवस्थारोपः अध्यारोपः । वेदशीर्षैर्वेदान्तैः ।

---

पश्यन्तीत्याह—योगिन इति । न तु स्वस्माद्भेदेनेत्यर्थः । एतेन सर्वत्र चैतन्यभूतस्त्वमेवेति सूचितम् । विचिन्वन्ति पश्यन्ति । तथाऽदर्शने कारणमाह—अतदिति । अतद् दृश्यं जडं तन्निरसनमुखैर्न स्त्री न पुमानित्यादिरूपैर्वेदशीर्षैरुपनिषद्भागैः पश्यन्ति वस्तुतो निर्धर्मकत्वात् केनापि रूपेण वक्तुमशक्यतया निषेधमुखेनैव श्रुतयो ब्रह्म प्रतिपादयन्तीति भावः । रा० ।

[ ननु यद्यहं सर्वप्रकाशकस्तर्हि सूर्यादिमिव किं मां न पश्यन्ति सर्वे इत्याह—सर्वगमिति । सर्वगं सर्वानुस्यूतम् एकम् एकरूपं नित्यं सर्वत्र स्थितमपि तद्धर्मैर्नाशादिभिरयुक्तत्वात् ज्ञानमेव चक्षुर्यस्य स विलोकयेत् पश्यति, अन्धदृक् चक्षुर्हीनो जनः प्रकाशमानमपि भास्करं यथा न पश्यति 'दृश्यते त्वग्र्यया बुद्ध्या' ( कठ० ३।१२ ) इति श्रुतेः । ननु ज्ञानचक्षुर्विलोकयेदित्युक्त्या क्रियाफलत्वेन मम विषयतामापादयसि नेति, तर्हि कथं विलोकयेदित्याह—योगिन इति । योगिनो योगयुक्ताः स्वदेह एव परमेश्वरं त्वाम् अतन्निरसनमुखैः तच्चैतन्यं न तद् अतत् जडम्, तस्य निरसनं निरासस्तदेव मुखमुपायो यत्र तैर्वेदशीर्षैरुपनिषद्भिरहर्निशं त्वां विचिन्वन्ति मृगयन्ते । अयं भावः—यावद्देहे अहंभावस्तावत् त्वम् अन्तःस्थितोऽपि न प्रकाशसे, उपनिषद्भिर्देहादावहंभावे निवृत्ते स्वयमेव बुद्धिवृत्तौ त्वं प्रकाशसे निर्मले नभसि रविरिव । यद्वा इह जगति त्रिविधा लोकाः । ते च मुक्ताः, मुमुक्षवः, विषयिणश्च । ते सर्वे यथा पश्यन्ति तदाह—त्रिभिः । तत्र जीवन्मुक्ता ज्ञानचक्षुषा सर्वत्र त्वामेव पश्यन्ति न तु विवर्त्तम् । मुमुक्षवस्तु अतन्निरसनेन स्वदेहे क्रमात्त्वां पश्यन्ति । विषयिणोऽपि त्वत्पादयोर्यो भक्तिलेशः, तेन यो योगः, तेन निरन्तरभक्तियुक्ता भवन्ति, तदा चिन्मात्रं ज्ञानमयं त्वां विचिन्वन्तो मृगयमाणाः श्रवणस्मरणादिभिस्त्वां पश्यन्ति न चान्यथा भक्तिं विना नेत्यर्थः । गो० ]

---

1. च 'अतस्त्व' निरसनम्खैर्वे-' । 2. क '-लेशान्न' ।

मया प्रलपितं किञ्चिन् सर्वज्ञस्य तवाग्रतः ।
क्षन्तुमर्हसि देवेश तवानुग्रहभागहम् ॥ ६८ ॥
दिग्देशकालपरिहीनमनन्यमेकं चिन्मात्रमक्षरमजं चलनादिहीनम् ।
सर्वज्ञमीश्वरमनन्तगु[1]णव्युदस्तमायं भजे रघुपतिं भजतामभिन्नम् ॥ ६९ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे उत्तरकाण्डे द्वितीयोऽध्यायः ॥ २ ॥

---

६९ । नरो० । दिग्देशकालपरिहीनमिति, दिगाद्यपरिच्छिन्नमित्यर्थः । अनन्यमद्वितीयमित्यर्थः । एकं निर्धर्मकम्, अक्षरमपक्षयशून्यम्, अजं जन्मरहितमित्यर्थः । ईश्वरं कर्त्तुमकर्त्तुं समर्थम् । व्युदस्ता माया येन तं तथा ।

[ द्वितीयाध्यायव्याख्या समाप्ता ॥ २ ॥ ]

---

तदपि तेषां ज्ञानं त्वद्भक्तिं विनोपनिषन्मात्रेण नेत्याह—त्वत्पादेति । अन्यथा नेति भावः । विचिन्वन्तः उपनिषत्सु विचारयन्तः अन्यथा केनचिद्धर्मेण धर्मवन्तं न पश्यन्तीत्यर्थः । रा० ।

६८ । [ आत्मन एतत् कथनं सर्वज्ञस्य पुर औद्धत्य मन्यमानः क्षमापयति—मयेति । प्रलपितं प्रलपनमिवोक्तम् । ननु महानयं दोषः कथं क्षन्तव्य इति चेत्तत्राऽऽह—तवानुग्रहभागहमिति । गो० ]

६९ । भजतां भक्तानामभिन्नं स्वाभिन्नत्वेन बुद्धिविषयम् । रा० ।

[ स्तौति—दिगित्यादि । दिग्देशकालैः परिहीनं रहितम् । अयं भावः—यः परिच्छिन्नो भवति, स दिग्देशाभ्यां परिच्छेद्यो भवति, इयमस्य पूर्वा दिग् इयमस्य दक्षिणा दिग् इति । यः खलु जन्मादिमान् भवति स कालविशिष्टो भवति, असावस्मात् पूर्वः कालः, असौ भावीति । अपरिच्छिन्नस्य नित्यसिद्धस्य कुतो दिगादिविशेषः । किञ्च सर्वमयत्वादपि न दिगादिविशिष्टत्वमित्याह—अनन्यमिति । न विद्यते अन्यद् व्यतिरिक्तं यस्मात् तम्, दिगादेरपि तद्रूपत्वात् । अत्र हेतुः—एकमद्वितीयम् । अत्रापि हेतुः—चिन्मात्रं ज्ञानरूपम् । ननु ज्ञानस्यापि नीलज्ञानं नष्टं पीतज्ञानं जातमेवंरूपेण बहुविधत्वं दृश्यते नेत्याह—अक्षरम् अखण्डं ज्ञानमित्यर्थः । तत्तु वैषयिकत्वात् क्षणिकम् । अत्र हेतुः—अजं नित्यसिद्धम् । जन्यज्ञानं हि बहुप्रकारं भवति । चलनादिहीनं निष्क्रियम् । सर्वज्ञं सर्वसाक्षित्वात् । ईश्वरं नियन्तारम् । ननु निष्क्रियत्वनियन्तृत्वयोरेकत्र कथं सम्भवस्तत्राऽऽह—अनन्तगुणमिति । अपरिमितगुणत्वान्न विरोधः । गो० ]

---

1. ग '-णं व्य-' ।

# तृतीयोऽध्यायः

श्रीराम उवाच—

बालिसुग्रीवयोर्जन्म श्रोतुमिच्छामि तत्त्वतः ।
रवीन्द्रौ वानराकारौ जज्ञाते इति नः [1]श्रुतम् ॥ १ ॥

अगस्त्य उवाच—

मेरोः स्वर्णमय[2]स्याद्रेर्मध्यशृङ्गे मणिप्रभे ।
तस्मिन् सभास्ते विस्तीर्णा ब्रह्मणः शतयोजना ॥ २ ॥

---

२ । नरो० । शतं योजनानि परिमाणमस्या इति शतयोजना ।

---

१ । बालीति । रवीन्द्राविति । 'आत्मा वै पुत्रनामासि' (कौषीतकी० २।११) इति श्रुतेस्तयोरेव वानराकारत्वमुक्तम् । रा० ।

इत आरभ्य चतुर्थाध्यायान्तर्गत 'मातृवत् पालयामास त्वत्तः काङ्क्षन् वधं स्वकम्' (७।४।१०) इत्यन्तोऽशः प्राच्ये वाल्मीकीये नास्ति, अस्ति पुनः पाश्चात्त्ये, तत्रापि रामायणतिलकटीकाविरहित इत्यनेकासम्मतत्वेनात्र महानेव सन्देहावकाशः। पाश्चात्त्ये रामस्यागस्त्यं प्रति प्रश्नः—

एतच्छ्रुत्वा तु निखिलं राघवोऽगस्त्यमब्रवीत् ।
य एषर्क्षरजा नाम बालिसुग्रीवयोः पिता ॥
जननी का च भगवन् न त्वया परिकीर्त्तिता ।
बालिसुग्रीवयोश्चापि नामनी केन हेतुना ॥ इति ७।४२।१—२ ।

२ । मेरोरद्रेरिति मेरुनाम्नः पर्वतस्येत्यर्थः । काञ्चनमयत्वात् पर्वतशृङ्गस्यातिस्वच्छत्वेन मणिप्रभे इति विशेषणं न विरुद्धम् । अत्र वाल्मीकिः—

मेरुर्नगवरः श्रीमाञ्जाम्बूनदमयः शुभः ।
तस्य यन्मध्यमं शृङ्गं सर्वदैवतपूजितम् ॥
तस्मिन् दिव्या सभा रम्या ब्रह्मणः शतयोजना ।
तस्यामास्ते सदा देवः पद्मयोनिश्चतुर्मुखः ॥ इति ७।४२।७-८ ।

---

1. क 'श्रुतिः', ख 'श्रुतेः' । 2. च '-स्याग्रे म-' ।

तस्यां चतुर्मुखः साक्षात् कदाचिद् योग[1]मास्थितः ।
नेत्राभ्यां पतितं दिव्यमानन्दसलिलं बहु ॥ ३ ॥

तद् गृहीत्वा करे ब्रह्मा ध्यात्वा किञ्चि[2]त्तदाऽसृजत् ।
भूमौ पतितमात्रेण तस्माज्जातो महाकपिः ॥ ४ ॥

तमाह द्रुहिणो वत्स किञ्चित् कालं वसात्र मे ।
समीपे सर्व[3]शोभाढ्ये ततः श्रेयो भविष्यति ।
[4]इत्युक्तो [5]न्यवसत्तत्र ब्रह्मणा वानरोत्तमः ॥ ५ ॥

---

४ । नरो० । असृजद् अक्षिपत् ।

---

३ । तस्यां शतयोजनपरिमितायां सभायाम् । कदाचित् सभाकर्तव्यकार्याणां कस्मिंश्चिदवकाशे इत्यर्थः । योगं ध्यानम् । तस्येति अध्याहर्तव्यम् । योगमास्थितस्य तस्य ब्रह्मणो नेत्राभ्याम् आनन्दसलिलं योगेन कृतब्रह्मसाक्षात्कारतया सञ्जातानन्दस्य तस्य आनन्दजं सलिलमित्यर्थः । योगमभ्यसत इति पाश्चात्त्ये वाल्मीकीये । तथाच—

योगमभ्यसतस्तस्य नेत्राभ्यां यदस्रुस्रवत् ।
तद् गृहीतं भगवता पाणिना चर्चितन्तु तत् ॥ इति ७।४२।९ ।

४ । किञ्चिद् ध्यात्वा तदत्यजद् भूमाविति शेषः । भूमौ पतितमात्रेण तेन सलिलेन दार्ढ्यं प्राप्तमिति शेषः । तस्मात् कपिर्जातः । रा० ।

अत्रापि पाश्चात्त्ये वाल्मीकीये—

निक्षिप्तमात्रं तद् भूमौ ब्रह्मणा लोककर्तृणा ।
तस्मिन्नश्रुकणे राम वानरः सम्बभूव ह ॥ इति ७।४२।१० ।

५ । सर्वशोभाढ्ये अत्र शैले मे समीपे, किञ्चित् कालं वसेत्यन्वयः । पाश्चात्त्यवाल्मीकीयेऽपि—

पश्य शैलं सुविस्तीर्णं सुरैरध्युषितं सदा ।
तस्मिन् रम्ये गिरिवरे बहुमूलफलाशनः ॥
ममान्तिकचरो नित्यं भव वानरपुङ्गव ।
कञ्चित् कालमिहास्व त्वं ततः श्रेयो भविष्यति ॥ इति ७।४२।१२-१३ ।

---

1. ग '-माश्रितः' । 2. क-ख-घ-ङ '-त्तदत्यजत्' । 3 ग '-भोगाढ्ये' । 4. क 'इत्युक्ता' । 5. ग-च-छ 'निवसंस्तत्र' ।

एवं बहुतिथे काले [1]गते ऋक्षाधिपः सुधीः ।
कदाचित् पर्यट[2]न्नद्रौ फलमूलार्थ[3]मुद्यतः ।
अपश्यद्दिव्यसलिलां वापीं मणि[4]शिलान्विताम् ॥ ६ ॥

पानीयं पातुमागच्छत्तत्र च्छायामयं कपिम् ।
दृष्ट्वा प्रतिकपिं मत्वा निपपात जलान्तरे ॥ ७ ॥

---

६ । नरो० । बहुतिथे इति 'बहुगणपूगसङ्घात्तिथडि'ति तिथट् ।

७ । नरो० । प्रतिनिधिः कपिः प्रतिकपिस्तं प्रतिकपिम् ।

---

६ । उद्यत उद्यमवान्, फलमूलार्थं तल्लाभार्थमद्रौ पर्यटन् वापीमपश्यत् । रा० ।

[ ऋक्षाधिप इति । ऋक्षशब्दो वानरवाची । गो० ]

फलमूलार्थमित्यत्र तृष्णाशान्तये सलिलार्थमिति वाल्मीकिः । अस्यापि 'पानीयं पातुमागच्छदि'त्यग्रिमेण संवादात् तदेव समीचीनम् । अद्रौ उत्तरे अद्रिशिखरे इत्यर्थः । तथाच वाल्मीकिः—

कस्यचित्त्वथ कालस्य समतीतस्य राघव ।
ऋक्षराड् वानरश्रेष्ठस्तृषया परिपीडितः ॥
उत्तरं मेरुशिखरं गतस्तत्र च दृष्टवान् । इति ७।४२।२०-२१ ।

७ । तत्र वाप्याम् । आगच्छत् स कपिरिति शेषः । छायामयं स्वप्रतिबिम्बरूपमित्यर्थः । कपिं दृष्ट्वा प्रतिकपिं प्रतिकूलं कपिमित्यर्थः । जलान्तरे निपपात तज्जिघांसयेति शेषः । अत्रार्थे पाश्चात्त्ये वाल्मीकीयेऽपि—

ददर्श तस्मिन् सरसि वक्त्रच्छायामथाऽऽत्मनः ।
कोऽयमस्मिन् मम रिपुर्वसत्यन्तर्जले महान् ॥
रूपं चान्तर्गतं तत्तु वीक्ष्य तस्य स्वतो हरिः ।
क्रोधाविष्टमना ह्येष नियतं माऽवमन्यते ॥

इति ७।४२।२३-२४ ।

---

1 क 'स ऋक्षो विरजाः सुधीः' । 2. क '-न्नृक्षः' । 3. च '-माहृतः' । 4. ग-च '-शिलाचिताम्', क '-शिला शिवाम्' ।

तत्रादृष्ट्वा हरिं शीघ्रं पुनरुत्प्लुत्य वानरः ।
अपश्यत् सुन्दरीं [1]रामामात्मानं [2]विस्मयं गतः ॥ ८ ॥
ततः सुरेशो देवेशं पूजयित्वा चतुर्मुखम् ।
गच्छन्मध्याह्नसमये दृष्ट्वा नारीं मनोरमाम् ।
कन्दर्पशर[3]विद्धाङ्गस्त्यक्तवान् वीर्यमुत्तमम् ॥ ९ ॥
तामप्रा[4]प्यैव [5]तद्बीजं बालदेशेऽपतद् भुवि ।
बाली समभवत्तत्र शक्रतुल्यपराक्रमः ।
[6]तस्य दत्त्वा सुरेशानः स्वर्णमालां दिवं गतः ॥ १० ॥

---

८ । नरो० । हरिं वानरम् ।

९ । नरो० । सुरेश इन्द्रः ।

१० । नरो० । बालदेशे चिकुरदेशे पतित्वेति शेषः । शक्रेण शक्रपराक्रमेण तुल्यः पराक्रमो यस्य स तथा ।

---

८ । आत्मानं सुन्दरीं रामां तद्रूपं स्त्रीरूपमपश्यत् । स्वयमेव स्वरूपं स्त्रीत्वे परिणतं दृष्टवान् इति भावः । तेनैव विस्मय इत्याह—विस्मयं गत इति । पाश्चात्त्ये वाल्मीकीये—

उत्प्लुत्य तस्मात् स ह्रदाद् दुःखितः प्लवगः पुनः ।
तस्मिन्नेव क्षणे राम स्त्रीत्वं प्राप स वानरः ॥ इति ७।४२।२६ ।

प्राप्तस्त्रीरूपस्य कपेः सौन्दर्यं विशिनष्टि वाल्मीकिः—

मनोज्ञरूपा सा नारी लावण्यललिता शुभा ।
विस्तीर्णजघना सुभ्रूर्नीलकुन्तलमूर्धजा ॥
मुग्धसस्मितवक्त्रा च पीनस्तनतटा शुभा ।
ह्रदतीरे च सा भाति ऋजुयष्टिर्लता यथा ॥
त्रिलोकसुन्दरी कान्ता सर्वचित्तप्रमाथिनी ।
लक्ष्मीव पद्मरहिता चन्द्रज्योत्स्नेव निर्मला ॥
रूपेणाप्यभवत् सा तु श्रियं देवीमुमा यथा ।
द्योतयन्ती दिशः सर्वास्तत्राभूत् सा वराङ्गना ॥ इति ७।४२।२७-३० ।

९ । ततः कपे रमणीरूपप्राप्त्यनन्तरमित्यर्थः । तामप्राप्यैव तया सार्द्धं मिलनं विनैव वीर्यं त्यक्तवान्, तच्च वीर्यं बालदेशे मस्तके पतित्वा भुव्यपतदित्यग्रेणान्वयः ।

१० । अत्र सुरेशात् परं सूर्यस्याऽऽगमनम्, पाश्चात्त्ये वाल्मीकीये युगपदेवोभयोरागमनं रमण्या दर्शनञ्च । तथाच—

---

1. च-छ 'नारी-' । 2. ग 'विस्मयान्वितः' । 3. ग-च '-भिन्ना-' । 4. छ '-प्राप्य च' । 5. च 'तद्वीर्यं' । 6. च 'तस्मै' ।

भानुरप्यागतस्तत्र[1] तदानीमेव भामिनीम्[2] ।
दृष्ट्वा कामवशो भूत्वा ग्रीवादेशेऽसृजन्महत्[3] ॥ ११ ॥
बीजं तस्यास्ततः[4] सद्यो महाकायोऽभवद्धरिः ।
तस्य दत्त्वा हनूमन्तं[5] सहायार्थं[6] गतो रविः ॥ १२ ॥
पुत्रद्वयं समादाय गत्वा सा निद्रिता क्वचित् ।
प्रभातेऽपश्यदात्मानं पूर्ववद् वानराकृतिम् ॥ १३ ॥

---

१२ । नरो० । सहायार्थं साहाय्यार्थम् ।

---

एतस्मिन्नन्तरे देवो निवृत्तः सुरनायकः ।
पादावुपास्य देवस्य ब्रह्मणस्तेन वै पथा ॥
तस्यामेव च वेलायामादित्योऽपि परिभ्रमन् ।
तस्मिन्नेव पदे सोऽभूद् यस्मिन् सा तनुमध्यमा ॥
युगपत् सा तदा दृष्टा देवाभ्यां सुरसुन्दरी ।
कन्दर्पवशगौ तौ तु दृष्ट्वा तां सम्बभूवतुः ॥ इति ७।४२।३१-३३ ।

वीर्यपातमुत्पत्तिञ्चावलम्ब्य तत्रैव—

ततस्तस्यां सुरेन्द्रेण स्कन्नं शिरसि पातितम् ।
अनासाद्यैव तां नारीं सन्निवृत्तमथाभवत् ॥
ततः सा वानरपतिं जज्ञे वानरमीश्वरम् ।
अमोघरेतसस्तस्य वासवस्य महात्मनः ॥
बालेषु पतितं बीजं बाली नाम बभूव सः ।
भास्करेणापि तस्यां वै कन्दर्पवशवर्त्तिना ॥
बीजं निषिक्तं ग्रीवायां विधानमनुवर्तत ।
... ... ... ।
ग्रीवायां पतितं बीजं सुग्रीवः समजायत ॥ इति ७।४२।३५-३९ ।

तस्येति सम्बन्धविवक्षायां षष्ठी, तस्मै इत्यर्थः । पुत्रत्वेनेदं स्वर्णमाल्यप्रदानम् ।
[ बालदेशे सरोमदेशे स्थाने पतित्वा भुवि अपतदिति तात्पर्यम् । गो० ]

१३ । गत्वा निजाश्रममिति शेषः । निद्रिता पुत्रद्वयेन सह रात्राविति शेषः । वानरस्य आकृतिरिव आकृतिर्यस्य तादृशमात्मानं स्वमपश्यत् ।

---

1. ग-च '-मत्तव' । 2. च 'भाविनीम्' । 3. च '-त्यजन्म-' । 4. क 'तस्याः सुत,' । 5. च 'सहायार्थं हनूमन्तं' । 6. क '-र्थो' ।

फलमूलादिभिः सार्धं पुत्राभ्यां सहितः कपिः ।
नत्वा चतुर्मुखस्याग्रे [1]ऋक्षराजः स्थितः सुधीः ॥ १४ ॥

ततोऽब्रवीत् समाश्वास्य [2]बहुशः कपिकुञ्जरम् ।
तत्रैकं देवतादूतमाहूयामरसन्निभम् ॥ १५ ॥

गच्छ दूत मयादिष्टो गृहीत्वा वानरोत्तमम् ।
किष्किन्ध्यां दिव्यनगरीं निर्मितां विश्वकर्मणा ।
सर्व[3]सौभाग्यबलितां देवैरपि दुरासदाम् ॥ १६ ॥

तस्यां सिंहासने [4]वीरं राजानमभिषेचय ।
सप्तद्वीपगता ये ये वानराः सन्ति दुर्जयाः ।
सर्वे ते ऋक्षराजस्य भविष्यन्ति [5]वशेऽनुगाः ॥ १७ ॥

यदा नारायणः साक्षाद्रामो भूत्वा सनातनः ।
भूभारासुरना[6]शाय सम्भविष्यति भूतले ।
तदा सर्वे सहायार्थे तस्य गच्छन्तु वानराः ॥ १८ ॥

इत्युक्तो ब्रह्मणा दूतो देवानां स महा[7]मतिः ।
यथा[8]ज्ञप्तस्तथा चक्रे ब्रह्मणा तं हरीश्वरम् ॥ १९ ॥

---

१४ । नरो० । फलमूलादिभिः सहितः सन् पुत्राभ्यां सार्धं गत्वेति सम्बन्धः ।

१६ । नरो० । सर्वसौभाग्यबलितां सर्वशोभासम्पदाढ्यामित्यर्थः । दुरासदां दुष्प्रापाम् ।

१८ । नरो० । भुवो भारा ये असुरास्तेषां नाशाय । सहायार्थे साहाय्यार्थे ।

---

१४ । फलमूलादिभिर्गमनं ब्रह्मणे उपढौकनदानाय । कपिर्गत्वा नत्वा च चतुर्मुखस्य ब्रह्मणः अग्रे सम्मुखे स्थितः । वृत्तवृत्तरहस्यज्ञाने कौतूहलपरतयेयं नतिपूर्वकब्रह्मसम्मुखावस्थितिस्तस्य ।

१५ । समाश्वास्य भाविनो दुर्वारत्वान्मम स्त्रीरूपता कथमित्यादिखेदो माऽस्त्वित्याश्वास्येत्यर्थः । देवतादूतं देवदूतमित्यर्थः । रा० ।

---

1. क 'स्थित्वा ऋक्षवरः' । 2. क 'बहुभि.' । 3. च '-शोभाढ्यफलितां', क '-शोभाढ्यवनितां' । 4. च 'वीर' । 5. ग-च-क 'वशानुगाः' । 6. च-क '-शार्थं' । 7. ग-च '-द्युतिः', क '-मतेः' । 8. '-ज्ञातस्त-' ।

देवदूतस्ततो गत्वा ब्रह्मणे [1]तन्न्यवेदयत् ।
तदादि वानराणां सा किष्किन्ध्या[2]ऽभून्नृपाऽऽश्रयः ॥ २० ॥
सर्वेश्वरस्त्वमेवाऽऽसीरिदानीं ब्रह्मणाऽर्थितः ।
भूमेर्भारो हृतः कृत्स्नस्त्वया लीलानृदेहिना ॥ २१ ॥
सर्वभूतान्तरस्थस्य नित्यमुक्त[3]चिदात्मनः ।
अखण्डानन्दरूपस्य कियानेष पराक्रमः ॥ २२ ॥
तथाऽपि वर्ण्यते सद्भिर्लीलामानुषरूपिणः ।
[4]यशस्ते सर्वलोकानां पापहत्यै सुखाय च ॥ २३ ॥
य इदं कीर्तयेन्मर्त्यो बालिसुग्रीवयोर्महत् ।
जन्म त्वदाश्रयत्वात् स मुच्यते सर्वपातकैः ॥ २४ ॥

---

२१ । नरो० । ब्रह्मणाऽर्थित इति अत्रावतीर्ण इति शेषः । लीलार्थो यो नृदेहः स यस्यास्ति तेन तथा ।

२२ । नरो० । सर्वभूतान्तरस्थस्य सर्वभूतान्तःकरणस्थस्य, अर्थादुपाधितो नित्यमुक्तश्चासौ चिदात्मा चेति तस्य तथा । अखण्ड आनन्दो रूपं यस्य तस्य तथा ।

२४ । नरो० । त्वमेव आश्रयो ययोस्तयोर्भावात्, त्वद्भक्तत्वादित्यर्थः । यद्वा त्वमाश्रयो यस्य तस्य भावः तस्मात्तथा । जन्म जन्मकथाम् ।

---

२० । तदादि तत्प्रभृति हे नृप, वानराणां सा किष्किन्ध्या आश्रयोऽभूत् । रा० ।

२१ । त्वमेवेदानीं ब्रह्मणा अर्थितः सन् सर्वेश्वरः सर्ववानरेश्वरः । लीलानृदेहिना लीलागृहीतमनुष्यदेहेन । रा० ।

२२ । अयं पराक्रमस्तव नाऽऽश्चर्यायेत्याह—सर्वभूतेति । यस्त्वामेवं वेत्ति सोऽपि स्वेच्छया सृष्टिसंहारसमर्थो भवति चेत् साक्षात्तव किं वाच्यमिति भावः । रा० ।

[ अखण्डानन्दश्चासौ चिदात्मा चिद्रूप आत्मा चेति । अखण्डानन्दरूपस्य नित्यानन्दमूर्तेः । 'एतस्यैवाऽऽनन्दस्य अन्यानि भूतानि मात्राण्युपजीवन्ति' ( बृहदा० ४।३।३२ ) इति श्रुतेः । कियानेष इति, एष राक्षसवधरूपः । गो० ]

२३ । नन्वीदृशस्यामाश्चर्यस्य किं वर्णनेन तत्राऽऽह—तथाऽपीति । सर्वलोकपापनाशायाऽऽत्मनस्तेषां सुखाय चानाश्चर्यमपि आश्चर्यवत् कृत्वा वर्ण्यते इत्यर्थः । रा० ।

२४ । तज्जन्मनस्त्वदाश्रयत्वात् त्वदुपकारार्थत्वाद् यस्तयोर्जन्म कथयेत् स पातकैर्मुच्यते । रा० ।

---

1. घ 'तन्नि-' । 2. ग-च '-सीन्नृपाऽऽश्रया' । 3. ख '-श्चिदा-' । 4. क 'भावास्ते' ।

[1]अथान्यां संप्रवक्ष्यामि कथां राम [2]तदाश्रयाम् ।
सीता हृता यदर्थं [3]सा रावणेन [4]दुरात्मना ॥ २५ ॥
पुरा कृतयुगे राम प्रजापतिसुतं विभुम् ।
सनत्कुमारमेकान्ते समासीनं दशाननः ।
विनयावनतो भूत्वा ह्यभिवाद्येदमब्रवीत् ॥ २६ ॥
[5]को न्वस्मिन् प्रवरो लोके देवानां बलवत्तरः ।
देवाश्च यं समाश्रित्य युद्धे [6]शत्रुं जयन्ति हि ॥ २७ ॥
कं [7]यजन्ति द्विजा नित्यं कं ध्यायन्ति च योगिनः ।
[8]एतन्मे शंस भगवन् प्रश्नं प्रश्नविदां वर ॥ २८ ॥
ज्ञात्वा [9]तस्य हृदिस्थं यत्तदशेषेण योग[10]दृक् ।
दशाननमुवाचेदं शृणु वक्ष्यामि पुत्रक ॥ २९ ॥

---

२५। नरो०। श्रीरामाश्रया कथा कीर्त्तिता श्रुता च पापहरा भवतीति हृदि कृत्वा प्रश्नं विनाऽपि तदाश्रयां कथां वक्तुं प्रतिजानीते—अथान्यामिति। हे राम, यदर्थं दुरात्मना रावणेन सीता हृता, तदाश्रयां कथाम् अथ वक्ष्यामीत्यन्वयः। अथशब्दोऽत्रानन्तर्यार्थः। या कथा अर्थः कारणं यस्य तत्तथा।

२६। नरो०। सा का इत्यपेक्षायामाह—पुरेत्यादि। कृतयुगे सत्ययुगे।

२७। नरो०। प्रवरः प्रकर्षेण श्रेष्ठः। बलवत्तरोऽतिबलवान्।

२९। नरो०। योगदृग् योगचक्षुः सनत्कुमारस्तस्य हृदिस्थं यत् तदशेषेण ज्ञात्वा दशाननमुवाचेत्यन्वयः। किमुवाचेत्यपेक्षायामाह—इदं शृणु वक्ष्यामि पुत्रकेत्यादि।

---

२५। यदर्थं सीता हृता तां तदाश्रयां तद्विषयां कथां वक्ष्यामि। रा०।

'सीता हृता यदर्थं सा रावणेन दुरात्मना' इत्यादिप्रबन्धोऽपि पाश्चात्त्ये वाल्मीकीये दृश्यते। तथाच तत्रागस्त्यवाक्यम्—

अथापरां कथां दिव्यां शृणु राजन् सनातनीम्।
यदर्थं राम वैदेही रावणेन पुरा हृता॥ इति ७।४३।६।

२७। अस्मिँल्लोके प्रवरः श्रेष्ठः। विवक्षितं श्रैष्ठ्यमेवाऽऽह—देवानामित्यादि। बलवत्तरत्वमेव प्रकटयति—देवाश्चेति। रा०।

२८। तस्य रावणस्य हृदिस्थं तादृशान्मे मरणं भवत्विच्छारूपम्। रा०।

---

1. छ 'अथार्यं'। 2. क-ख-ग-घ-च-छ 'त्वदा-'। 3. च 'वै'। 4. च 'महा-'। 5. च 'कोऽमुष्मिन्'। 6. ग-च-छ 'शत्रून्'। 7. ग-च-छ 'जपन्ति'। 8. च-पुस्तके एतदर्द्धमूनत्रिंशश्लोकश्च न दृश्येते। 9. छ 'तव'। 10. छ '-वित्'।

[1]भर्त्ता यो जगतां नित्यं यस्य जन्मादिकं न हि ।
सुरासुरैर्नुतो नित्यं हरिर्नारायणोऽव्ययः ॥ ३० ॥

[2]यन्नाभिपङ्कजाज्जातो ब्रह्मा विश्व[3]सृजां पतिः ।
सृष्टं येनैव सकलं जगत् स्थावरजङ्गमम् ॥ ३१ ॥

तं समाश्रित्य विबुधा जयन्ति समरे रिपून् ।
योगिनो ध्यान[4]योगेन तमेवानु [5]जपन्ति हि ॥ ३२ ॥

महर्षेर्वचनं श्रुत्वा प्रत्युवाच दशाननः ।
दैत्यदानव[6]रक्षांसि विष्णुना निहतानि च ।
[7]कां वा गति प्रपद्यन्ते प्रेत्य ते मुनिपुङ्गव ॥ ३३ ॥

तमुवाच मुनिश्रेष्ठो रावणं राक्षसाधिपम् ।
दैवतैर्निहता नित्यं गत्वा स्वर्गमनुत्तमम् ।
भोगक्षये पुनस्तस्माद् भ्रष्टा भूमौ [8]भवन्ति [9]ते ॥ ३४ ॥

पूर्वार्जितैः [10]पुण्यपापैर्म्रियन्ते चोद्भवन्ति च ।
विष्णुना ये हतास्ते तु प्राप्नुवन्ति हरे[11]र्गतिम् ॥ ३५ ॥

---

३० । नरो० । भर्त्ता पालकः । जन्मादिकमिति आदिपदेन जीवनमरणयोर्ग्रहणम् । नुतः स्तुतः । पापानि हरतीति हरिः । अव्ययोऽविनाशी ।

३३ । नरो० । दैत्याश्च दितेरपत्यानि, दानवाश्च दनोरपत्यानि रक्षांसि च तानि तथा । गम्यतेऽसौ गतिः ताम्, प्रेत्य मृत्वा । मुनिपुङ्गव मुनिश्रेष्ठ ।

३४ । नरो० । किमुवाचेत्यपेक्षायामाह—दैवतैरित्यादि । नास्ति उत्तमो यस्मात् तं तथा ।

३५ । नरो० । हरेर्गतिं वैकुण्ठम् ।

---

३० । यः सुरासुरैर्नुतः स हरिर्नारायणादिपदवाच्य इत्यर्थः । रा० ।

३१ । अत्र तल्लक्षणमाह—यन्नाभीति । अनेन ब्रह्मसहितजगत्स्रष्टृरूपत्वं तल्लक्षण-मुक्तम् । रा० ।

३५ । हरेर्गतिं मुक्तिम् । सा च क्रमेण हिरण्यगर्भेण सहेति बोध्यम् । रा० ।

---

1. ग-छ 'कर्त्ता' । 2. छ 'तन्ना-' । 3. च '-प्रजापतिः' । 4. च '-रूपेण' । 5. ग-च-छ 'यजन्ति' । 6. छ '-यक्षांसि' । 7. च 'कां गतिं वा' । 8. च-छ 'पतन्ति' । 9. च 'च' । 10. छ 'पापपुण्यै-' । 11. च '-र्गृहम्' ।

श्रुत्वा मुनिमुखात् सर्वं रावणो हृष्टमानसः ।
योत्स्येऽहं हरिणा सार्द्धमिति चिन्तापरो[1]ऽभवत् ॥ ३६ ॥

मनःस्थितं परिज्ञात्वा रावणस्य [2]महामुनिः ।
उवाच वत्स तेऽभीष्टं भविष्यति न संशयः ॥ ३७ ॥

[3]कश्चित् कालं प्रतीक्षस्व सुखी भव दशानन ।
एवमुक्त्वा महाबाहो मुनिः पुनरुवाच तम् ॥ ३८ ॥

तस्य स्वरूपं वक्ष्यामि ह्यरूपस्यापि मायिनः ।
स्थावरेषु च सर्वेषु [4]नदेषु च नदीषु च ॥ ३९ ॥

ओङ्कारश्चैव स[5]त्यश्च सावित्री पृथिवी च सः ।
समस्तजगदाधारः शेषरूपधरो [6]हि सः ॥ ४० ॥

---

३८ । नरो० । महाबाहो इति श्रीरामसम्बोधनम् ।

३९ । नरो० । अरूपस्य परमार्थतो रूपरहितस्य । अपरिमितानिरूपितशक्तिविशेषविशिष्टमायासहितः सन् नानारूपो भवतीति सूचनाय मायिन इत्युक्तम् ।

---

३६ । एवं मुक्तीच्छुरपि रावणो भगवन्मायावशात्तमोगुणप्रधानत्वाच्च भगवद्द्वेषेणैव मुक्तिं प्रार्थयते—योत्स्ये इत्यर्थः । रा० ।

३७ । मनःस्थितमिति । अत्र पाश्चात्त्यवाल्मीकीये—

मनसश्चेप्सितं यत्तद् भविष्यति महाहवे ।
सुखी भव महाबाहो कश्चित् कालमुदीक्ष्य च ॥ इति ७।४४।२ ।

३८ । सुखी भवेत्यस्य तत इत्यादिः । ततो मरणलाभेन सुखित्वम् । रा० ।

३९ । स्थावरेषु नदेषु नदीषु च व्याप्त इति शेषः । रा० ।

४० । इदमुपलक्षणम् । तदाह—ओङ्कार इति । प्रणवरूपत्वेन सर्ववाङ्मयव्याप्तिरुक्ता । 'ओङ्कारो वै सर्वा वाक्' ( छान्दोग्य० २।२३।४ ) इति श्रुतेः । तदेवाऽऽह—सत्यं वाक्यं सावित्री गायत्री च । स इत्यनेनार्थोऽपि सर्वस्तद्रूप एवेत्याह—पृथिवी चेति । इदमुपलक्षणं तदाह—समस्तेति । रा० ।

[ ओङ्कारः सर्ववेदकारणम्, सावित्री गायत्री । एतेन 'यं जपन्ति द्विजा नित्यमि'त्यस्योत्तरं दत्तम् । गो० ]

---

1. च 'भवेत्' । 2. च 'तदा मुनिः' । 3. क-ग 'किञ्चित्' । 4. छ 'नगरेषु' । 5 ग-च-छ '-त्य सः' । 6. च 'हरिः' ।

सर्वे देवाः समुद्राश्च कालः सूर्यश्च चन्द्रमाः ।
[1]सूर्यो देवो [2]दिवा रात्रिर्यमश्चैव तथाऽनिलः ॥ ४१ ॥
[3]अग्निरिन्द्रस्तथा मृत्युः पर्जन्यो [4]वसवस्तथा ।
[5]ब्रह्मा रुद्रादयश्चैव ये चान्ये देवदानवाः ॥ ४२ ॥
विद्योतति ज्वलत्येष पाति चात्तीति विश्वकृत् ।
क्रीडां करोत्यव्ययात्मा सोऽयं विष्णुः सनातनः ॥ ४३ ॥
तेन सर्वमिदं व्याप्तं त्रैलोक्यं सचराचरम् ।
नीलोत्पलदलश्यामो विद्युद्वर्णाम्बरावृतः ॥ ४४ ॥
शुद्धजाम्बूनदप्रख्यां श्रियं वामा[6]ङ्कसंस्थिताम् ।
सदाऽनपायिनीं देवीं पश्यन्नालिङ्ग्य तिष्ठति ॥ ४५ ॥

---

४५ । नरो० । शुद्धजाम्बूनदप्रख्यां निर्मलसुवर्णसदृशीं वर्णेनेति शेषः । श्रियं लक्ष्मीम् । अनपायिनीम् अविनाशिनीम् ।

---

४२ । शेषादयो दानवान्ताः सर्वे तद्रूपा एवेति विराड्रूपत्वमुक्तम् । रा० ।

४३ । सूर्यादौ प्रकाशः, अग्नेर्ज्वलनम् । रक्षासंहारौ च तदधीनौ एवेत्याह—विद्योततीति । तत् सर्वमयत्नेनैव इत्याह—क्रीडां करोतीति । क्रीडामेव करोतीत्यर्थः, न तु कश्चिच्छ्रमस्तस्येति भावः । रा० ।

४४-४५ । उक्तमेवार्थं सामान्येनोपसंहरति—तेनेति । अथैतद्ध्यानाशक्तं प्रति अन्यद् ध्येयं रूपमाह—नीलोत्पलेति । विद्युद्वर्णाम्बरं पीताम्बरम् । जाम्बूनदप्रख्यां तत्सदृशकान्तिं देवीं पश्यन् स्वदर्शनेन सृष्टिव्यापारादौ प्रवर्तयन् आलिङ्ग्य तिष्ठतीति । एतेन तस्याः स्वतो नात्यन्तं भेद इति दर्शितम्, शक्तिशक्तिमतोस्तादात्म्यस्यैव शास्त्रसिद्धान्तत्वात् । रा० ।

पाश्चात्यवाल्मीकीये क्रमेण अत्रोक्तं सर्वमुक्त्वा—

अथ वा बहुनाऽनेन किमुक्तेन दशानन ।
तेन सर्वमिदं व्याप्तं त्रैलोक्यं सचराचरम् ॥

इत्याद्युक्तम् । अध्यायोऽयं शब्दतोऽर्थतश्च प्रायः पाश्चात्यवाल्मीकीयरामायणस्य तुल्यः । शुद्धजाम्बूनदप्रख्यामिति । अत्रापि पाश्चात्ये—

तस्य नित्यं शरीरस्था मेघस्येव शतह्रदा ।
संग्रामरूपिणी लक्ष्मीर्देहमावृत्य तिष्ठति ॥ इति ७।४४।१३ ।

---

1. क-ख-ब 'सूर्योदयौ', च 'भूमिरापो' । 2. ख-घ 'दिवा रात्री य-' । 3. ग-ङ 'अग्निश्च निर्ऋतिश्चैव कुबेरो' । 4. ग-च-ङ 'वरुण-' । 5. च 'ब्रह्मरु-' । 6. ग-ङ '-ङ्कसं-' ।

द्रष्टुं न शक्यते कैश्चिद् देवदानवपन्नगैः ।
यस्य प्रसादं कुरुते स चैनं द्रष्टुमर्हति ॥ ४६ ॥
न च [1]यज्ञतपोभिर्वा न दानाध्ययनादिभिः ।
शक्यते भगवान् द्रष्टुमुपायैरितरैरपि ॥ ४७ ॥
[2]तद्भक्तैस्तद्गतप्राणैस्तच्चित्तैर्धूतकल्मषैः ।
शक्यते भगवान् [3]विष्णुर्वेदान्तामलदृष्टिभिः ॥ ४८ ॥
[4]यथा वा द्रष्टु[5]मिच्छा ते [6]शृणु त्वं परमेश्वरम् ।
त्रेता[7]मुखे स देवेशो भविता नृपविग्रहः ॥ ४९ ॥

---

४७। नरो०। ननु यज्ञतपआदयस्तस्य दर्शनोपाया भविष्यन्तीति चेत्तत्राऽऽह—न चेति।

४८। नरो०। तर्हि कैः स द्रष्टुं शक्यते इत्यपेक्षायामाह—तद्भक्तैरित्यादि। अत्र द्रष्टुमित्यस्यानुषङ्गः कार्यः। तमेव गताः प्राप्ताः प्राणा इन्द्रियाणि येषां तैः। यद्वा तस्मिन्नेव गतः स्थितः प्राणो जीवनं येषां तैस्तथा। तस्मिन्नेव चित्तं येषां तैस्तथा। धूतानि उज्झितानि नाशितानि वा कल्मषाणि पापानि यैस्तैस्तथा। धूतकल्मषत्वात्तच्चित्तत्वम्, तच्चित्तत्वात् तद्गतप्राणत्वम्। वेदान्ते अमला दृष्टिर्ज्ञानं येषां तैस्तथा।

४९। नरो०। लक्ष्म्या युतं चतुर्भुजं रूपं द्रष्टुमसौ समर्थो न भविष्यति किन्तु त्रेतामुखे राजविग्रहं भवितारं परमेश्वरं यदि दिष्ट्या द्रष्टुं प्राप्स्यति तदा द्रक्ष्यतीत्यभिप्रेत्याऽऽह—यथा वेत्यादि।

---

४६। तादृशोऽपि तत्प्रसादं विना द्रष्टुमशक्य इत्याह—द्रष्टुमिति। रा०।

४७। तद्दर्शने तद्भक्तिरेवासाधारण उपाय इत्याह—न चेति। रा०।

[ शक्यते द्रष्टुमिति पूर्वेण सम्बन्धः। गो० ]

४८। [ वेदान्तामलदृष्टिभिरिति। वेदान्ते अमला शुद्धा दृष्टिर्बुद्धिर्येषां तैः। गो० ]
वेदान्तामलदृष्टिभिरित्यत्र 'ज्ञाननिर्दग्धकिल्बिषैरि'त्युक्तं पाश्चात्त्ये वाल्मीकीये। तथाच—

तद्भक्तैस्तद्गतप्राणैस्तच्चित्तैस्तत्परायणैः ।
शक्यते भगवान् द्रष्टुं ज्ञाननिर्दग्धकिल्बिषैः ॥ इति ७।४४।१६।

४९। अथवा द्रष्टुमिच्छा एतैरुपायैर्विनाऽपीति शेषः। रा०।

---

1. छ 'यज्ञैर्न तपोभिर्न'। 2. क 'सद्-'। 3. च 'ज्ञातुं वे-', छ 'द्रष्टुं वे-'। 4. क-ख-घ 'अथवा', छ 'यथावद्'। 5. ग-च '-मिच्छन्ति'। 6. छ 'शृणुध्व''। 7. क-ख-ग-घ-च-छ '-युगे'।

हितार्थं देव[1]मर्त्यानामिक्ष्वाकूणां कुले हरिः ।
रामो दाशरथिर्भूत्वा महासत्त्वपराक्रमः ॥ ५० ॥
पितुर्नियोगात् स भ्रात्रा भार्यया दण्डके वने ।
विचरिष्यति धर्मात्मा जगन्मात्रा स्वमायया ॥ ५१ ॥
[2]एवं ते सर्वमाख्यातं मया रावण विस्तरात् ।
भजस्व भक्तिभावेन तदा रामं [3]श्रिया युतम् ॥ ५२ ॥
एवं श्रुत्वाऽसुराध्यक्षो ध्यात्वा किञ्चिद्विचार्य च ।
त्वया सह विरोधेप्सुर्मुमुदे रावणो महान् ॥ ५३ ॥
युद्धार्थी [4]सर्वतो लोकान् पर्यटन् समवस्थितः ।
[5]एतदर्थं महाराज रावणोऽतीव बुद्धिमान् ।
हृतवाञ्जानकीं देवीं त्वयात्मवधकाङ्क्षया ॥ ५४ ॥
इमां कथां यः शृणुयात् पठेद् वा संश्रावयेद् वा [6]श्रवणार्थितः सदा ।
आयुष्यमारोग्यमनन्तसौख्यं प्राप्नोति [7]लाभं धनमक्षयञ्च ॥ ५५ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे उत्तरकाण्डे
तृतीयोऽध्यायः ॥ ३ ॥

---

९९ । नरो० । श्रवणाय अर्थितः श्रवणार्थितः ।

---

५० । महासत्त्वपराक्रमः महान्तौ बलपराक्रमौ यस्य सः । रा० ।
५१ । जगन्मातृत्वं जगत्कारणत्वपालकत्वाभ्याम् । रा० ।

---

1. छ '-दैत्याना-' । 2. छ 'एतत्ते' । 3. च 'श्रियाऽन्वितम्', छ 'प्रियाच्युतम्' । 4. च 'सर्वंल्लोकान् स' । 5. छ-पुस्तके एतदर्धं नास्ति । 6 क-ख-ग घ 'श्रवणार्थिनां', च 'श्रवणार्थिनो मुदा', छ 'श्रवणार्थिने' । 7. च 'कामं' ।

# चतुर्थोऽध्यायः

[1]श्रीमहादेव उवाच—

एकदा ब्रह्मणो लोकादायान्तं नारदं मुनिम् ।
पर्यटन् रावणो लोकान् दृष्ट्वा नत्वाऽब्रवीद्वचः ॥ १ ॥
भगवन् ब्रूहि [2]मे योद्धुं कुत्र सन्ति महाबलाः ।
योद्धुमिच्छामि बलिभिस्त्वं [3]जानासि जग[4]त्त्रयम् ॥ २ ॥
मुनिर्ध्या[5]त्वाह सुचिरं श्वेतद्वीपनिवासिनः ।
महाबला महाकायास्तत्र [6]याहि महामते ॥ ३ ॥
विष्णुपूजारता ये वै विष्णुना निहताश्च ये ।
त एव तत्र सञ्जाता अजेयाश्च सुरासुरैः ॥ ४ ॥

---

१ । नारदोऽपि सर्वतो बलवन्तं त्वां त्वत्सामीप्यं प्राप्तानेव चाऽऽहेत्याह—एकदेति । रा० ।

३ । श्वेतद्वीपं नाम क्षीरोदस्य समीपवर्त्ति किञ्चिद् द्वीपम् । तच्च व्यक्तं पाश्चात्त्ये वाल्मीकीये—

चिन्तयित्वा मुहूर्त्तेन नारदः प्रत्युवाच तम् ।
अस्ति राजन् महाद्वीपं क्षीरोदस्य समीपतः ॥
तत्र ते चन्द्रसंकाशा मानवाः सुमहाबलाः ।
महाकाया महावीर्या मेघस्तनितनिस्वनाः ॥
महामात्रा धैर्यवन्तो महापरिघबाहवः ।
श्वेतद्वीपे मया दृष्टा मानवा राक्षसाधिप ॥ इति ७।४६।७-९ ।

श्वेतद्वीपमिदम्—

ये हता लोकनाथेन शार्ङ्गमानस्य संयुगे ।
चक्रायुधेन देवेन तेषां वासस्त्रिपिष्टपे ॥ ७।४६।१६

इत्यादिना त्रिपिष्टपत्वेनाप्यभिहितम् ।

---

1. क-ग-च-छ-पुस्तकेषु 'श्रीमहादेव उवाच' इति नास्ति । 2. च 'मेऽभीष्ट'' । 3. क-ख-ग-घ 'ज्ञातासि' । 4. ग '-त्त्रये' । 5. ग-छ '-त्वा तु' । 6. च 'गच्छ' ।

[1]श्रुत्वा तद्रावणो वेगान्मन्त्रिभिः पुष्पकेण [2]तान् ।
योद्धुकामः समागत्य श्वेतद्वीप[3]समीपतः ॥ ५ ॥
तत्प्रभाहततेजस्कं पुष्पकं नाचलत्ततः ।
त्यक्त्वा विमानं प्रययौ मन्त्रि[4]णश्च दशाननः ॥ ६ ॥
[5]प्रविशन्नेव [6]तद् द्वीपं धृतो हस्तेन योषिता ।
[7]पृष्टश्च त्वं कुतः कोऽसि [8]प्रेषितः केन वा वद ॥ ७ ॥
इत्युक्तो लीलया स्त्रीभिर्हसन्तीभिः पुनः पुनः ।
कृच्छ्राद्धस्ताद् विनिर्मुक्तस्तासां स्त्रीणां दशाननः ।
आश्चर्यमतुलं [9]लब्ध्वा चिन्तयामास दुर्मतिः ॥ ८ ॥
विष्णुना निहतो यामि वैकुण्ठमिति निश्चितः[10] ।
मयि विष्णुर्यथा कुर्यात्तथा कार्यं करोम्यहम् ।
इति निश्चित्य वैदेहीं जहार विपिनेऽसुरः ॥ ९ ॥

---

५ । मन्त्रिभिः सह पुष्पकेण श्वेतद्वीपसमीपतः समागत्य स्थितः । रा० ।

६ । तद्द्वीपप्रभया हततेजस्कं प्रतिरुद्धगतिकं पुष्पकं मन्त्रिणश्च त्यक्त्वा प्रययुः पद्भ्यामिति शेषः ।

८ । अत्र पाश्चात्ये वाल्मीकीये—

तया स ह विनिर्धूतः सहसैव निशाचरः ।
पपात सोऽम्भसो मध्ये सागरस्य भयातुरः ॥
पर्वतस्येव शिखरं यथा वज्रविदारितम् ।
प्रापतत् सागरजले तथाऽसौ विनिपातितः ॥
एवं स रावणो राम श्वेतद्वीपनिवासिभिः ।
युवतीभिर्विगृह्याऽऽशु भ्रामितश्च ततस्ततः ॥
नारदोऽपि महातेजा रावणं प्राप्य धर्षितम् ।
विस्मयं सुचिरं गत्वा प्रजहास ननर्द च ॥ इति ७।४६।३९-४२ ।

९ । विष्णुना निहतः सर्वथा वैकुण्ठं यामि यास्यामीति निश्चितः निश्चयवान् सन् । रा० ।

---

1. च 'श्रुत्वैतद्रा-' । 2. च 'च' । 3. छ '-समाश्रितान्' । 4. च '-भिः स दशा-' । 5. छ 'स विश-' । 6. च 'तं' । 7. छ 'पृष्टश्चेति' । 8. छ 'प्रेरितः' । 9. च 'दृष्ट्वा' । 10. च-छ '-सम्' ।

जानन्नेव[1] परात्मानं [2]स जहारावनीसुताम् ।
मातृवत् पालयामास त्वत्तः काङ्क्षन् वधं स्वकम् ॥ १० ॥
[3]राम त्वं परमेश्वरोऽसि सकलं जानासि विज्ञानदृग्
भूतं भव्यमिदं [4]त्रिकालकलना[5]साक्षी विकल्पोज्झितः ।
भक्तानामनुवर्त्तनाय सकलां कुर्वन् क्रियासंहतिं
[6]आशृण्वन्मनुजाकृतिर्मुनिवचो भासीश लोकार्चितः ॥ ११ ॥

---

११ । नरो० । सकलज्ञाने मम सामर्थ्यं कुत इति चेदत आह—विज्ञानदृगिति । तत् कुत इत्यत आह—भूतं भव्यमिदं त्रिकालकलनासाक्षीति । भूतम् इदं भव्यम् इदम् इत्येवंरूपा या त्रिकालकलना त्रिकालज्ञानं तस्या द्रष्टेत्यर्थः । भविष्यतीति भव्यम् । 'भुवः कर्त्तरि चे'ति यङ् । इदं दृश्यमानं भवदित्यर्थः । तत कुत इत्यत आह—विकल्पोज्झित इति, भेदविहीन इत्यर्थः । हे ईश, लोकार्चितस्त्वं मनुजा[कृतिः ?]सन् भक्तानामनुवर्त्तनाय सकलां क्रियासंहतिं कुर्वन् मुनिवचः आशृण्वन् भासीत्यन्वयः । अनुवर्त्तनाय अनुसरणाय । तथाच भगवद्गीता—

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ ३।२१ ।
न मे पार्थास्ति कर्त्तव्यं त्रिषु लोकेषु किञ्चन ।
नानवाप्तमवाप्तव्यं वर्त्त एव च कर्मणि ॥ ३।२२ ।
यदि ह्यहं न वर्त्तेऽयं जातु कर्मण्यतन्द्रितः ।
मम वर्त्मानुवर्त्तन्ते मनुष्याः पार्थ सर्वशः ॥ ३।२३ ।
उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
सङ्करस्य च कर्त्ता स्यामुपहन्यामिमाः प्रजाः ॥ इति ।३।२४ ।

---

११ । एवं कथामुक्त्वा स्वाश्रमं जिगमिषुः रामं भगवन्तं स्तौति—रामेति । सकलज्ञानवत्त्वे हेतुः—विज्ञानदृक् । विज्ञानं स्वस्वरूपमेव दृग् ज्ञानकारणं यस्य, ज्ञाने इतरकारणानपेक्ष इति यावत् । अत एव भूतमतीतं भव्यं भावि, इदं वर्तमानम् एवं त्रिषु कालेषु या कलना तत्तत्कालवैशिष्ट्यं तस्य साक्षाद् द्रष्टा । विकल्पोज्झितस्त्यक्तसंशय इत्यर्थः, भक्तानामनुवर्तनाय स्वचरितकीर्तनादिना तेषां पापक्षयाय सकलक्रियासंहतिं कुर्वन् मनुजाकृतिः, न तु वस्तुतो मनुष्य इत्यर्थः । ईशलोकैरिन्द्रादिभिरर्चितस्त्वं मुनीनामस्माकं वच आशृण्वन् भासि शोभसे । रा० ।

[ त्रिकालकलनासाक्षी त्रिकालज्ञानद्रष्टा । गो० ]

---

1. ग-च '-वं' । 2. च 'हृत्वा सोऽप्यथ-' । 3. क-ख 'रामस्त्व' । 4. छ 'त्रिलोक-' । 5. छ '-साक्षादि-' । 6. क-घ-छ 'त्वा', ख 'त्वा ग्रस्य-', ग-च 'चाऽऽग्रस्य-' ।

स्तुत्वैवं राघवं तेन पूजितः कुम्भसम्भवः ।
[1]स्वाश्रमं मुनिभिः सार्द्धं [2]प्रययौ हृष्टमानसः ॥ १२ ॥
[3]रामस्तु सीतया सार्द्धं भ्रातृभिः सह मन्त्रिभिः ।
संसारीव रमानाथो रममाणोऽवसद् गृहे ॥ १३ ॥
अनासक्तोऽपि विषयान् बुभुजे प्रियया सह ।
हनूमत्प्रमुखैः [4]सद्भिर्वानरैः परिवेष्टितः ॥ १४ ॥
पुष्पकं चाऽऽगमद्राममेकदा पूर्ववत् प्रभुम् ।
प्राह देव कुबेरेण [5]प्रेषितस्त्वामहं [6]ततः ॥ १५ ॥

---

१४। नरो०। विषयान् स्रक्चन्दनादीन्। केचिद् हनूमत्प्रमुखा वानराः श्रीराम-गृहे कानिचिद्दिनानि स्थिता इति नास्ति विरोधः। यद्वा यदा श्रीरामः स्मरति तदैव हनूमान् आगच्छतीति नास्ति विरोधः।

१५। नरो०। हे देव, कुबेरेण त्वां प्राप्तुमहं प्रेषितः, ततः स प्राह।

---

१४। अनासक्तोऽप्यासक्तवद् विषयान् बुभुजे। सद्भिः साधुभिः। रा०।

१५। ततो भवदाज्ञया कुबेरसमीपगमनानन्तरं कुबेरेण त्वां प्रति प्रेषितमिति प्राह। रा०।

पुष्पकवाक्यं वाल्मीकीये—

सौम्य राम निरीक्षस्व सौम्येन वदनेन माम्।
कुबेरभवनात् प्राप्तं विद्धि मां पुष्पकं विभो॥
तव शासनमाज्ञाय गतोऽस्मि धनदं प्रति।
उपस्थितं नरश्रेष्ठ स च मां प्रत्यभाषत॥
निर्जितस्त्वं नरेन्द्रेण राघवेण महात्मना।
निहत्य युधि दुर्धर्षं रावणं राक्षसाधिपम्॥
ममापि परमा प्रीतिर्हते तस्मिन् दुरात्मनि।
रावणे सगणे रौद्रे सपुत्रे सहबान्धवे॥
स त्वं रामेण लङ्कायां निर्जितः परमात्मना।
वह सौम्य तमेव त्वमहमाज्ञापयामि ते॥ इत्यादि ७।४४।३-८।

---

1. ग-च 'आश्र-'। 2. च 'ययौ हृष्टाविविह्वलः'। 3. च 'ततो रामो हृष्टमना'। 4. छ 'सर्वैः'। 5. क-घ 'प्रेषितं त्वा-'। 6. ग-छ 'गतः'।

[1]जितं [2]त्वं रावणेनाऽऽदौ पश्चाद्रामेण निर्जितम् ।
अतस्त्वं राघवं नित्यं वह यावद्वसेद् भुवि ।
यदा गच्छेद्रघुश्रेष्ठो वैकुण्ठं[3] [4]याहि मां तदा ॥ १६ ॥

तच्छ्रुत्वा राघवः प्राह पुष्पकं सूर्यसन्निभम् ।
यदा स्मरामि भद्रं [5]ते तदागच्छ ममान्तिकम् ।
[6]तिष्ठान्तर्धाय सर्वत्र गच्छेदानीं ममाऽऽज्ञया ॥ १७ ॥

इत्युक्त्वा रामच[7]न्द्रोऽपि पौरकार्याणि सर्वशः ।
भ्रातृभिर्मन्त्रिभिः सार्द्धं यथान्यायं चकार सः ॥ १८ ॥

राघवे शासति भुवं लोकनाथे रमापतौ ।
वसुधा शस्यसम्पन्ना फलवन्तश्च भूरुहाः ॥ १९ ॥

---

१६ । नरो० । किमाहेत्यपेक्षायामाह—जितं त्वमित्यादि । याहि प्राप्नुहि ।

---

१६ । यावद् गच्छेदिति पाठेऽपि यदा गच्छेदित्येवार्थः । मां याहि मां प्रत्यागच्छेत्यर्थः । पुष्पकं प्रति रामवाक्यं वाल्मीकीये—

यद्येवं स्वागतं तेऽस्तु विमानवर पुष्पक ।
आनुकूल्याद्धनेशस्य वृत्तदोषो न नो भवेत् ॥ इति ७।४४।१२ ।

'वृत्तदोषो सद्व्यवहारातिक्रमदोषः' इति रामायणतिलकटीकायाम् । पुष्पकस्य पूजनं विसर्जनञ्च तत्रैव—

लाजैश्चैव तथा पुष्पैर्धूपैश्चैव सुगन्धिभिः ।
पूजयित्वा महाबाहू राघवः पुष्पकं तदा ॥

गम्यतामिति चावोचदागच्छेः संस्मृतो मया ।
सिद्धानाञ्च गतिं सौम्य मा विषादेन योयुजः ॥ इति ७।४४।१३-१४ ।

१७ । तदा आगच्छेति च्छेदः । आगमनोत्तरमात्मानमन्तर्धाय तिष्ठ, यथा सर्वलोको मां देवत्वेन न जानीयादित्यर्थमेवमुक्तिः । रा० ।

१८ । अत्रापिशब्दाद् भरतादीनां भ्रातृणां कौशल्यादीनां मातृणां सीतादीनामवरोधजनानां वशिष्ठादीनां गुरुपरिजनानाञ्च न्यायानपेतकार्यसाधनत्वं संसूचितम् ।

---

1. ग 'रावण हि रणे हत्वा बलाद्रामेण निर्जितम्' । 2. च 'मे' । 3. च '-स्थमेहि' । 4. क 'याहि' । 5 च 'त्वा' । 6. ग 'वह त्वं धनदं देव' । 7. च 'न्द्रो हि' ।

जना धर्मपराः सर्वे पतिभक्तिपराः स्त्रियः ।
नापश्यत् पुत्रमरणं कश्चिद्राजनि राघवे ॥ २० ॥
समारुह्य विमानाग्र्यं राघवः सीतया सह ।
वानरैर्भ्रातृभिः सार्द्धं [1]सञ्चचारावनिं प्रभुः ।
अमानुषाणि [2]कार्याणि चकार बहुशो[3] भुवि ॥ २१ ॥
ब्राह्मणस्य सुतं दृष्ट्वा [4]बालं मृतमकालतः ।
शोचन्तं ब्राह्मणं चापि ज्ञात्वा रामो महा[5]मतिः ॥ २२ ॥
तपस्यन्तं वने [6]शूद्रं हत्वा ब्राह्मणबालकम् ।
जीवयामास शूद्रस्य ददौ स्वर्गमनुत्तमम् ॥ २३ ॥

---

२० । स्त्रीणां पतिभक्तिरेव मुख्यो धर्म इति पुनराह—पतिभक्तिपरा इति । नापश्यत् पुत्रमरणमित्यनेन तदानीं पितृसत्त्वे पुत्राणां मरणाभाव इति ध्वनितम् । अकालमृत्युरहितास्तदानीन्तना जना इति वास्तवोऽर्थः ।

२१ । ततः कदाचित् पृथिव्यां सम्यग् रक्षणं वर्त्तते न वेति द्रष्टुं पुष्पकं स्मृत्वा तत्राऽऽरुह्य पृथिव्यां सञ्चारं कुर्वन् अनेकानि अमानुषाणि कार्याणि चकारेत्याह—समारुह्येति । रा० ।

२२ । तेषां मध्ये कियत् कर्माऽऽह—ब्राह्मणस्येति । अकालतः अकाले, सार्वविभक्तिकस्तसिः । रा० ।

मृतपुत्रस्य ब्राह्मणस्य शोकप्रकारो वाल्मीकीये—

किन्नु मे दुष्कृतं कर्म पुरा देहान्तरे कृतम् ।
यदहं पुत्रमेकं त्वां पश्यामि निधनं गतम् ॥
अप्राप्तयौवनं बालं पञ्चवर्षकमेव च ।
अकाले कालमापन्नं मम दुःखाय पुत्रक ॥

* * * *

न स्मराम्यनृतं किञ्चिन्न च हिंसां कथञ्चन ।
सर्वेषां प्राणिनां चापि पीडां नैव स्मराम्यहम् ॥
केनायं दुष्कृतेनाद्य बाल एव ममाऽऽत्मजः ।
अकृत्वा पितृकार्याणि नीतो वैवस्वतक्षयम् ॥
नेदृशं दृष्टपूर्वं मे श्रुतं वा घोरदर्शनम् ।
मृत्युरप्राप्तकालानां रामस्य विषये यथा ॥

---

1. ग-च-छ 'स चचारा-' । 2. च 'कर्माणि' । 3. छ '-शः क्षितौ' । 4. च 'मृतं बालम-' । 5. छ '-यशाः' । 6. च 'हत्वा शूद्रं' ।

लोकानामु[1]पदेशार्थं परमात्मा रघूत्तमः ।
कोटिशः स्थापयामास शिवलिङ्गानि सर्वतः[2] ।
सीताञ्च रमयामास सर्वभोगैर[3]मानुषैः ॥ २४ ॥
शशास रामो धर्मेण राज्यं परमधर्मवित् ।
[4]कथां संस्थापयामास सर्वलोकमला[5]पहाम् ॥ २५ ॥
दशवर्षसहस्राणि मायामानुषविग्रहः ।
चकार राज्यं विधिव[6]ल्लोकवन्द्यपदाम्बुजः ॥ २६ ॥
एकपत्नीव्रतो रामो राजर्षिः[7] सर्वदा शुचिः ।
गृहमेधीयमखिलमाचरञ् [8]शिक्षयञ्जनान् ॥ २७ ॥

---

रामस्य दुष्कृतं किञ्चिन्महदस्ति न संशयः ।
तथाहि विषयस्थानां बालानां मृत्युरात्मनः ॥ इत्यादि ७।७९।४-१० ।

तपस्याप्रकारोऽपि तत्रैव—

तस्मिन् सरसि तप्यन्तं तापसं सुमहत्तपः ।
ददर्श राघवो भीमं लम्बमानमधोमुखम् ॥ इति ७।८१।१४ ।

शूद्रस्य नामाऽऽह वाल्मीकीये—

न मिथ्याऽहं वदे राम देवलोकजिगीषया ।
शूद्रं मां विद्धि काकुत्स्थ शम्बूकं नाम नामतः ॥ इति ७।८२।३ ।

तस्य हननप्रकारस्तत्रैव—

भाषतस्तस्य शूद्रस्य खड्गं सुरुचिरप्रभम् ।
निष्कृष्य कोषाद्विमलं शिरश्चिच्छेद राघवः ॥ इति ७।८२।४ ।

जीवयामासेति—

निवृत्तो भव काकुत्स्थ ब्राह्मणस्यैकपुत्रकः ।
जीवितं प्राप्तवान् भूयः सङ्गतश्चापि बन्धुभिः ॥
यस्मिन् मुहूर्ते काकुत्स्थ शूद्रोऽयं विनिपातितः ।
तस्मिन्नेव स जीवेन बालकः समयुज्यत ॥ इति ७।८२।१४-१९ ।

२४ । लोकानामुपदेशार्थं 'यद् यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः' ( गीता० ३।२१ ) इति न्यायेन । रा० ।

२७ । शिक्षयन् जनानिति भगवतो धर्माचरणं लोकशिक्षार्थमेवेति भावः । रा० ।

---

1. च '-पकारार्थ' । 2. क-ख-ग-घ '-शः' । 3. क '-नुत्तमैः' । 4. ग-च 'कथाः' । 5. ग-च '-पहा' । 6. च '-ल्लोके व-' । 7. ग-च '-र्षिप्रवरः' । 8. क 'शिक्षया परान्' ।

सीता प्रेम्णाऽनुवृत्त्या च [1]प्रश्रयेण दमेन च ।
भर्त्तुर्मनोहरा साध्वी भावज्ञा सा [2]ह्रिया भिया ॥ २८ ॥
एकदाक्रीडविपिने सर्वभोगसमन्विते ।
एकान्ते दिव्यभवने सुखासीनं रघूत्तमम् ॥ २९ ॥
नीलमाणिक्यसङ्काशं दिव्याभरणभूषितम् ।
[3]प्रसन्नवदनं शान्तं विद्युत्पुञ्जनि[4]भाम्बरम् ॥ ३० ॥
सीता कमलपत्राक्षी सर्वाभरणभूषिता ।
राममाह कराभ्यां सा लालयन्ती पदा[5]म्बुजे ॥ ३१ ॥
देवदेव जगन्नाथ परमात्मन् सनातन ।
चिदानन्दादिमध्यान्तरहिताशेषकारण ॥ ३२ ॥
[6]देव देवाः समासाद्य मामेकान्तेऽब्रुवन् वचः ।
बहुशोऽर्थयमानास्ते वैकु[7]ण्ठगमनं प्रति ॥ ३३ ॥

---

२८ । नरो० । अनुवृत्त्या सेवया, प्रश्रयेण प्रणयेन, दमेन इन्द्रियदमनेन । भावज्ञा अभिप्रायज्ञा । ह्रिया लज्जया ।

३० । नरो० । नीलमाणिक्यसङ्काशं नीलमाणिक्यसदृशम् । विद्युत्पुञ्जनिभाम्बरं विद्युद्राशितुल्यवस्त्रमित्यर्थः ।

३१ । नरो० । कमलपत्रे इव अक्षिणी यस्याः सा । लालयन्ती संवाहयन्ती ।

३२ । नरो० । चिच्चासौ आनन्दश्चेति हे तादृश, आदिमध्यान्तरहित हे जन्मजीवनमरणशून्य । सनातन नित्य ।

---

२८ । प्रेम प्ररूढावस्था प्रीतिः, अनुवृत्तिरानुकूल्यम् । प्रश्रयस्तन्मतानुष्ठानम् । दम इन्द्रियनिग्रहः । भावज्ञा अभिप्रायज्ञा, मनोहरा आसीदिति शेषः । रा० ।

२९ । आक्रीडविपिनं पुष्पवाटिका । रा० ।

३१ । पदाम्बुजे चरणपद्मे कराभ्यां लालयन्ती संवाहयन्ती सा सीता राममाह ।

३२ । चिदानन्द ज्ञानसुखरूप, आदिमध्यान्तहीन आद्यन्तयोरभावादेव मध्यस्याप्यभावः । अशेषस्य जगतः कारण । रा० ।

३३ । हे देव, देवा इन्द्राद्यास्ते तव वैकुण्ठगमनं प्रति बहुशो मां प्रार्थयमाना वचोऽब्रुवन् । रा० ।

---

1. च 'प्रशमेन' । 2. ग-च 'भिया ह्रिया', ङ 'क्रियाभिया' । 3. ग-च 'प्रशान्तवदनं' । 4. ङ '-भाननम्' । 5. ग-च-ङ '-म्बुजम्' । 6. ङ-पुस्तके इदमर्द्धं नास्ति । 7. ग-घ-ङ '-ण्ठाग-' ।

त्वया समेतश्चिच्छक्त्या रामस्तिष्ठति भूतले ।
विसृज्यास्मान् स्वकं धाम वैकुण्ठञ्च सनातनम् ॥ ३४ ॥
आस्ते त्वया जग[1]द्धाम्नि रामः कमललोचनः ।
[2]अग्रतो याहि वैकुण्ठं [3]त्वं तथा चेद्रघूत्तमः ।
आगमिष्यति [4]वैकुण्ठं सनाथान्नः करिष्यति ॥ ३५ ॥
इति विज्ञापिताऽहं तैर्मया विज्ञापितो भवान् ।
यद् युक्तं तत् कुरुष्वाद्य नाहमाज्ञापये [5]प्रभो ॥ ३६ ॥
सीतायास्तद्वचः श्रुत्वा रामो ध्यात्वाऽब्रवीत् [6]क्षणम् ।
देवि [7]जानामि सकलं तत्रोपायं [8]वदामि ते ॥ ३७ ॥
कल्पयित्वा [9]मिषं देवि लोकवादं त्वदाश्रयम् ।
त्यजामि त्वां वने [10]लोकवादाद् भीत इवापरः ।
भविष्यतः कुमारौ द्वौ वाल्मीकेराश्रमान्तिके ॥ ३८ ॥

---

३८ । नरो० । मिषं छलम् ।

---

अत्र सर्वं वाल्मीकीयान्नवीनम् । तत्र दोहदवत्याः सीताया मुनिजनसेवनरूपा प्रार्थना सीतापरित्यागसङ्केतः । तथाच—

स्मितं कृत्वा तु वैदेही रामं वाक्यमथाब्रवीत् ।
आश्रमाणि पवित्राणि द्रष्टुमिच्छामि राघव ॥
गङ्गातीरनिविष्टानि ऋषीणामुग्रतेजसाम् ।
फलमूलाशिनां देव पादमूलमुपासितुम् ॥
पर एव हि कामो मे यन्मूलफलभोजनम् ।
अप्येकरात्रिं काकुत्स्थ निवसेयं तपोवने ॥ इति ७।४९।३३-३५ ।

३४ । निर्विषयचित्तसविषयत्वसम्पादकत्वेन चिच्छक्तिरूपया मायया । विसृज्य त्यक्त्वा स्वकं सनातनं धाम वैकुण्ठं च हित्वा । रा० ।

३५ । अतः प्रथमं त्वमागच्छ ततः स आगमिष्यत्येव, शक्त्या विना शक्तिमतः स्थातुमशक्यत्वात् । रा० ।

३८ । लोकवादरूपं मिषं कल्पयित्वा ततो भीतः अपर इव पृथग्जन इव त्वां त्यजामि, सर्वस्यापि स्वकल्पनारूपत्वादिममपि जनमनसि कल्पयिष्यामीत्याशयः । रा० ।

---

1. ख-ग-च-छ '-द्धाचि' । 2 ग-च-छ 'अतोऽग्रे' । 3. च 'तथा चेद्रघुसत्तमः' । 4. च 'स्व धाम' । 5. ग 'विभो' । 6. छ 'स्वयम्' । 7. छ 'ज्ञातासि' । 8. च-छ 'ब्रवीमि' । 9. च 'छलं' । 10. छ 'लोको वा-' ।

इदानीं दृश्यते गर्भः पुनरागत्य मेऽन्तिकम् ।
लोकानां प्रत्ययार्थं त्वं कृत्वा शपथमादरात् ॥ ३९ ॥
भूमेर्विवर[1]मात्रेण वैकुण्ठं यास्यसि द्रुतम् ।
पश्चादहं गमिष्या[2]मि एष एव सुनिश्चयः ॥ ४० ॥
इत्युक्त्वा तां विसृज्याथ रामो ज्ञानैकलक्षणः ।
मन्त्रिभिर्मन्त्रतत्त्वज्ञैर्बलमुख्यैश्च [3]संवृतः ॥ ४१ ॥
[4]तत्रोपविष्टं श्रीरामं सुहृदः पर्युपासत ।
हास्य[5]प्रौढकथा[6]सुज्ञा हासयन्तः [7]स्थिता हरिम् ॥ ४२ ॥
कथाप्रसङ्गात् पप्रच्छ रामो विजयनामकम् ।
[8]पौरा जानपदा [9]मे किं वदन्तीह शुभाशुभम् ॥ ४३ ॥
सीतां वा मातरं [10]वा मे भ्रातॄन् वा कैकयी[11]मथ ।
न भेतव्यं त्वया ब्रूहि शापितोऽसि ममोपरि ॥ ४४ ॥

---

[ अपर इतरो जनो लोकवादाद् भीतो यथा स्वस्त्रियं त्यजति तथैवेत्यर्थः । गो० ]

३९ । पुत्रसम्भावनां सूचयति—इदानीं दृश्यते गर्भ इत्यादिना । इदानीं गर्भो दृश्यते, अत्रैव द्वौ कुमारौ भविष्यतः, ततः पुनरागत्य वैकुण्ठं यास्यसीति सम्बन्धः । अपत्यसम्भावना वाल्मीकीयेऽपि—

अपत्यकालो वैदेहि तवायं समुपस्थितः ।
किमिच्छसि वरारोहे कामः कः क्रियतां तव ॥ इति ७।४९।३१ ।

४३ । विजयनामकमित्यत्र भद्रमिति वाल्मीकीये । तथाच—

एवमुक्ते तु रामेण भद्रः प्राञ्जलिरब्रवीत् ।
शुभाशुभाः कथा राजन् वर्त्तन्ते पुरवासिनाम् ॥ इति ७।४६।७ ।

पाश्चात्त्येऽप्येवम् ।

४४ । सीतामित्यादेः प्रतीति शेषः । तत्तद्विषयं किं शुभाशुभं वदन्तीत्यर्थः । शापितोऽसि स्वशपथपूर्वं पृच्छामीत्यर्थः । रा० ।

---

1. ग-च-छ '-मार्गेण' । 2. ग 'मीत्येवमेव', च '-मीत्येवमुक्त सुनिश्चितम्', छ '-मि ह्येवमेव सुनिश्चितम्' । 3. ग च 'सर्वत.', छ 'सर्वश' । 4. च 'सद्योप-' । 5. छ '-प्रोढीक-' । 6. ग '-तज्ज्ञा', च-छ '-थान्तज्ज्ञा' । 7. छ 'स्थितं' । 8. छ 'पौरजा-' । 9. ग-च-छ 'वा मे किं वदन्ति' । 10. छ 'भ्रातॄनथवा' । 11. छ '-मपि' ।

इत्युक्तः प्राह विजयो देव [1]सर्वं वदन्ति ते ।
कृतं सुदुष्करं सर्वं रामेण विदितात्मना ॥ ४५ ॥
किन्तु हत्वा दशग्रीवं सीतामा[2]हृत्य राघवः ।
अमर्षं पृष्ठतः कृत्वा स्ववेश्म प्रत्यपादयत् ॥ ४६ ॥
कीदृशं हृदये तस्य सीतासम्भोगजं सुखम् ।
या हृता विजनेऽरण्ये रावणेन दुरात्मना ॥ ४७ ॥
[3]अकस्मादपि दुष्कर्म योषि[4]तामर्पणं भवेत् ।
यादृग् भवति वै राजा [5]तादृश्यो नियतं प्रजाः ॥ ४८ ॥

---

४६ । नरो० । पृष्ठतः पृष्ठे । प्रत्यपादयत् प्रापयत् ।

४८ । नरो० । अकस्मादपीति । परहृतानां योषिताम् अकस्मात् लोकानां प्रत्ययकारणं विना, अर्पणमर्थाद् गृहे, दुष्कर्म भवेदित्यर्थः ।

---

भद्रवाक्यं वाल्मीकीये—

दुष्करं कृतवान् रामः समुद्रे सेतुबन्धनम् ।
अकृतं पूर्वकैः कश्चित् सेन्द्रैरपि सुरासुरैः ॥
रावणश्च दुराधर्षो हतः सबलवाहनः ।
वानराश्च वशं नीता ऋक्षाश्च राक्षसैः सह ॥
हत्वा च रावणं युद्धे सीतामाहृत्य राघवः ।
अमर्षं पृष्ठतः कृत्वा स्वं प्रावेशयदालयम् ॥
कीदृशं हृदये तस्य सीतासङ्गमजं सुखम् ।
अङ्कमारोप्य या पूर्वं रावणेन हृता बलात् ॥
लङ्काञ्चापि पुरीं नीतामशोकवनिकां गताम् ।
कथं रक्षोवशं प्राप्तां रामः कुत्सयते न ताम् ॥ इति ७।४३।१४-१८ ।

४६ । [ स्ववेश्म प्रत्यपादयदिति स्वगृहमानीतवान् । गो० ]

४७ । या दुष्टेन रावणेन हृता बलान्नीता साऽपि गृहं प्रवेशितेति शेषः ।

४८ । किञ्चैवं सति अस्मदादीनामपि योषितां दुष्कर्म मर्षणं तद्योग्यं सहनयोग्यं भवेद् भविष्यतीत्यर्थः । तदेव स्पष्टयति—यादृगिति । नियतं नियमेन प्रजास्तादृश्यो भवन्ति, राजव्यवहारानुरूपव्यवहारा भवन्तीत्यर्थः । रा० ।

---

1. ग-छ 'सर्वे' । 2. ग-छ '-वृत्य' । 3. क-ख-ग-घ-च-छ 'अस्माकमपि' । 4. क-ख घ-छ '-तां मर्षणं' । 5. ग-छ 'तादृशा नियताः', च 'तादृशा' ।

श्रुत्वा तद्वचनं [1]रामः स्वजनान् पर्यपृच्छत ।
तेऽपि [2]नत्वाऽब्रुवन् राममेव[3]मेतन्न संशयः ॥ ४९ ॥
ततो विसृज्य सचिवान् विजयं सुहृदस्तथा ।
आहूय लक्ष्मणं रामो वचनं चेदमब्रवीत् ।
लोकापवादस्तु महान् सीतामाश्रित्य मेऽभवत् ॥ ५० ॥
सीतां प्रातः समानीय वाल्मीकेराश्रमान्तिके ।
त्यक्त्वा शीघ्रं [4]रथेन त्वं पुनरायाहि लक्ष्मण ।
वक्ष्यसे यदि वा किं[5]श्चित्तदा मां हतवानसि ॥ ५१ ॥

---

५० । नरो० । विसृज्य त्यक्त्वा । सचिवान् मन्त्रिणः सुहृदो मित्राणि च । सचिवादीनामदुष्टायां भार्यायां दोषार्पकत्वदर्शनाद् दुष्टात्मत्वमनुभूय तेषां श्रीरामेण त्यागः कृतः ।

[ चतुर्थाध्यायव्याख्या समाप्ता ॥ ४ ॥ ]

---

[ तथाऽपि मर्षणं जनानां तस्या गृहसमर्पणं भवेत्, न तु त्यागः । अत्र हेतुः यादृग् भवति वै राजेति । गो० ]

अस्माकमिति । वाल्मीकीयेऽपि—

अस्माकमपि दाराणां सहनीयं भविष्यति ।
यच्छीलो हि भवेद्राजा तच्छीला च प्रजा भवेत् ॥

४९ । स्वजनान् पर्यपृच्छत इति । अत्र वाल्मीकीये—

तस्य श्रुत्वाऽप्रियं वाक्यं राघवः परमार्त्तवत् ।
उवाच सर्वान् सुहृदः कथमेतदिति प्रभुः ॥
शिरोभिस्ते ततो राममभिगम्य प्रणम्य च ।
ऊचुर्नरपतिं दीनमेवमेतन्न संशयः ॥ इति ७।४३।२१-२२ ।

५१ । रथेन पुनरायाहि इत्युक्त्या सीताया अपि रथेन नयनं सूचितम्, न तु साक्षात्तथोक्तम्, तस्यां क्रोधातिशयं द्योतयितुमेव । मां हतवानसि अत्रार्थे विपरीतोक्तौ मद्वधप्रयुक्तप्रायश्चित्तमित्यर्थः । रा० ।

सीतापरित्यागे लक्ष्मणं प्रति रामवाक्यम्—

श्वस्त्वं प्रभाते सौमित्रे सुमन्त्राधिष्ठितं रथम् ।
आरुह्य सीतामारोप्य विषयान्ते समुत्सृज ॥
गङ्गायास्तु परे पारे वाल्मीकेः सुमहात्मनः ।
आश्रमो दिव्यसंकाशस्तमसातीरमाश्रितः ॥

---

1. च 'रामो जनानप्यपृ-' । 2. छ 'श्रुत्वाऽब्रु-' । 3. छ '-मेव न' । 4. क 'रथे स त्वं' । 5. ग-च '-च्चिदव' ।

इत्युक्तो लक्ष्मणो भीत्या[1] प्रातरुत्थाप्य[2] जानकीम् ।
[3]सुमन्त्रस्य रथे कृत्वा जगाम सहसा वनम् ॥ ५२ ॥
वाल्मीकेराश्रमस्यान्ते त्यक्त्वा सीतामुवाच सः ।
लोकापवादभीत्या त्वां त्यक्तवान् राघवो वने ।
[4]दोषो न कश्चिन्मे मातर्गच्छाऽऽश्रमपदं मुनेः ॥ ५३ ॥
इत्युक्त्वा लक्ष्मणः[5] शीघ्रं गतवान् रामसन्निधिम् ।
सीताऽपि दुःखसन्तप्ता विललापाति[6]मुग्धवत् ॥ ५४ ॥
शिष्यैः श्रुत्वा [7]तु वाल्मीकिः सीतां ज्ञात्वा स दिव्यदृक् ।
अर्घ्यादिभिः पूजयित्वा समाश्वास्य [8]च जानकीम् ।
[9]ज्ञात्वा भविष्यं सकल[10]मार्पयन्मुनियो[11]षिताम् ॥ ५५ ॥

---

तत्रैनां विजनेऽरण्य उत्सृज्य रघुनन्दन ।
शीघ्रमागच्छ सौमित्रे कुरुष्व वचनं मम ॥
न चास्मि प्रतिवक्तव्यः सीतां प्रति कदाचन ।
अप्रीतिर्हि परा मे स्यात्त्वद्वचनेऽस्मिन् विचारिते ॥ इति ७।४८।१९-१८ ।

५३ । लोकापवादभीत्या इति । व्यक्तं वाल्मीकीये—
श्रुत्वा परिषदो मध्ये प्रतिवादं सुदारुणम् ।
पुरे जनपदे चैव त्वत्कृते जनकात्मजे ॥
... ... ... ...
सा त्वं त्यक्ता नरेन्द्रेण साध्वी कुलसमन्विता ।
लोकापवादभीतेन त्वं त्यक्ता देवि नान्यथा ॥
इहाऽऽश्रमेषु च मया त्यक्तव्या त्वं भविष्यसि ।
राज्ञः शासनमाज्ञाय तथैव किल सौहृदम् ॥
तदेतज्जाह्नवीतीरे महर्षीणां तपोवनम् ।
पुण्यञ्च रमणीयञ्च विषादं मा कृथाः शुभे ॥ इत्यादि ७।४९।४२-४६ ।

५४ । [ मुग्धवदिति । लोकप्रतारणाय मुग्धवन्मूढवत् । गो० ]

५५ । मुनियोषितामार्पयत् एषा सर्वथा रक्षणीयेति तासां हस्ते दत्तवान् । रा० ।

---

1. अतः परं च-पुस्तके 'ररोद शोकविह्वलः । लोकाश्च ररोदु(?)र्मातरोऽप्येत्य जानकीम् । विलिपुलंच्मणो दुःखी' इत्यधिकम् । 2. ग-घ-च '-य' । 3. ग-घ-च-छ 'सुमन्त्रेण' । 4. च 'दोषः कश्चिन्न मे' । 5. च '-णो नत्वा' । 6. छ '-दुःखिता' । 7. क-ख-घ 'च' । 8. च 'स' । 9. छ 'श्रुत्वा' । 10. ग-च '-मर्पं-' । 11. ग '-षितः' ।

[1]तास्ताः सम्पूजयन्ति स्म सीतां भक्त्या दिने दिने ।
[2]ज्ञात्वा परात्मनो लक्ष्मीं मुनिवाक्येन योषितः ।
सेवां चक्रुः सदा तस्या विनयादिभिरादरात् ॥ ५६ ॥
रामोऽपि सीतारहितः परात्मा विज्ञानदृक् केवल आदिदेवः ।
सन्त्यज्य भोगानखिलान् विरक्तो मुनिव्रतोऽभून्मुनिसेविताङ्घ्रिः ॥ ५७ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे उत्तरकाण्डे चतुर्थोऽध्यायः ॥ ४ ॥

---

[ स दिव्यदृगिति । अयं भावः—दिव्यदृष्टित्वाद् यथा सीता देवज्ञापनया वैकुण्ठागमनाय श्रीरामेणाभिमन्त्र्य स्वेच्छया वनं ययौ, तत् सर्वं ज्ञात्वा भविष्यं पुत्रजन्मादि सर्वं ज्ञात्वा मुनियोषितां मुनियोषित्सु आर्पयदित्यर्थः । आर्षत्वात् सप्तम्यां षष्ठी । गो० ]

शिष्यैः श्रुत्वा शिष्यमुखात् श्रुत्वेत्यर्थः । दिव्यदृग् दिव्येन तपोलब्धदिव्यज्ञानेन पश्यतीति, ज्ञानदृष्टिरित्यर्थः । सीतां ज्ञात्वा अपापामिति शेषः । पूजयित्वेति, परमप्रीत्येयं पूजा । आर्पयन्मुनियोषितामिति । अत्र वाल्मीकिः—

इमां भवत्यः पश्यन्तु स्नेहेन परमेण हि ।
स्त्रीभावाच्च मयोक्तस्य वाक्यस्य च विशेषतः ॥
मुहुर्मुहुश्च वैदेहीं तासु निक्षिप्य सर्वशः ।
स्वमाश्रमं शिष्यवृतः पुनरायान्महामनाः ॥ इति ७।९१।१९-२० ।

५७ । मुनिसेविताङ्घ्रिः मुनिभिः सेवितावङ्घ्री यस्य, मुनीनां सेवितावङ्घ्री येनेति वा । रा० ।

---

1. घ 'तास्ता' । 2. ग-छ-पुस्तकयोरिदमर्धं नास्ति ।

रामस्य मनःसन्तापोपशमार्थमियं पृच्छा लक्ष्मणस्य। पुरातनीः प्राचीनाः निमिवशिष्ठादि-संवादरूपाः कथाः प्राह। अथ अनन्तरं कथाप्रसङ्गेन द्विजस्याभिशापतः प्रमत्तस्य नृगस्य राज्ञस्तिर्यक्त्वं कृकलासरूपत्वमाह कथयामास, लक्ष्मणसमीपे इति शेषः। नृगसम्बन्धीदं वृत्तजातं वाल्मीकीयरामायणे महाभारते भागवते च दृश्यते। अस्ति च तत्र तत्र वर्णितानां वस्तूनां क्वचित् क्वचित् पार्थक्यम्। वाल्मीकीयः संवाद एवम्—आसीत् पृथिवीपालः कश्चिन्नृगो नाम। स कदाचित् सवत्साः कोटीर्धेनूर्ब्राह्मणेभ्यो ददौ। तत्र कस्यचिदाहिताग्नेर्ब्राह्मणस्य काचित् सङ्गगता धेनुरासीत्। दरिद्रः स गोस्वामी गामन्विच्छन् बहून् संवत्सरान् तां न ददर्शेति तदन्वेषणाय कनखलमाजगाम; गत्वा च तत्र ब्राह्मणनिवेशने तामपश्यत् दृष्ट्वा च 'शबले एह्येही'त्येवाऽऽह्वयत्। सा च क्षुत्क्षामस्य स्वभर्त्तुः स्वरं विज्ञाय तस्य पृष्ठतोऽन्वगात्। तां ह्रियमाणां विविच्य तदानीन्तनो गोस्वामी तं ब्राह्मणं ममेयं धेनुरिति व्याहरत्, एवञ्च तन्निमित्तं तयोर्विवादः समजनि। ततश्च तौ दातारं नृगमभिजग्मतुः। अत्र शापवृत्तमवलम्ब्य वाल्मीकीये—

तौ राजभवनद्वारं संप्राप्तौ कार्यगौरवात्॥
अहोरात्राण्यनेकानि वसन्तौ क्रोधमीयतुः।
ऊचतुश्च महात्मानौ तावुभौ द्विजसत्तमौ॥

क्रुद्धौ परमसन्तप्तौ वाक्यं घोराभिसंहितम्।
अर्थिनां कार्यसिद्ध्यर्थं यस्मात्त्वं नैषि दर्शनम्॥

तस्माददृश्यो भूतानां कृकलासो भविष्यसि।
बहून्यब्दसहस्राणि बहून्यब्दशतानि च॥

श्वभ्रे त्वं कृकलीभूत्वा दीर्घकालं निवत्स्यसि।
उत्पत्स्यते च यो लोके यदूनां पुरुषर्षभः॥

वासुदेव इति ख्यातो विष्णुर्मानुषविग्रहः।
स ते मोक्षयिता राजंस्तस्माच्छापात् सुदारुणात्॥ इति ४।६९।१६-२१।

महाभारते भागवते च न दृश्यते शापवृत्तान्तः। तथाच महाभारते अनुशासनपर्वणि—

तावुभौ समनुप्राप्तौ विवदन्तौ भृशज्वरौ।
भवान् दाता भवान् हर्त्तेत्यथ तौ मामवोचताम्॥

शतेन शतसंख्येन गवां विनिमयेन वै।
याचे प्रतिग्रहीतारं स तु मामब्रवीदिदम्॥

देशकालोपसम्पन्ना दोग्ध्री शान्ताऽतिवत्सला।
स्वादुक्षीरप्रदा धन्या मम नित्यं निवेशने॥

कृतं च भरते सा गौर्मम पुत्रमपस्तनम् ।
न सा शक्या मया दातुमित्युक्त्वा स जगाम ह ॥
ततस्तमपरं विप्रं याचे विनिमयेन वै ।
गवां शतसहस्रं हि तत्कृते गृह्यतामिति ॥

ब्राह्मण उवाच—

न राज्ञां प्रतिगृह्णामि शक्तोऽहं स्वस्य मार्गणे ।
सैव गौर्दीयतां शीघ्रं ममेति मधुसूदन ॥
रुक्ममश्वांश्च ददतो रजतस्यन्दनांस्तथा ।
न जग्राह ययौ चापि तदा स ब्राह्मणर्षभः ॥
एतस्मिन्नेव काले तु चोदितः कालधर्मणा ।
पितृलोकमहं प्राप्य धर्मराजमुपागमम् ॥
यमस्तु पूजयित्वा मां ततो वचनमब्रवीत् ।
नान्तः संख्यायते राजंस्तव पुण्यस्य कर्मणः ॥
अस्ति चैव कृतं पापमज्ञानात्तदपि त्वया ।
चरस्व पापं पश्चाद्वा पूर्वं वा त्वं यथेच्छसि ॥
रक्षिताऽस्मीति चोक्तं ते प्रतिज्ञा चानृता तव ।
ब्राह्मणस्वस्य चाऽऽदानं द्विविधस्ते व्यतिक्रमः ॥
पूर्वं कृच्छ्रं चरिष्येऽहं पश्चाच्छुभमिति प्रभो ।
धर्मराजं ब्रुवन्नेवं पतितोऽस्मि महीतले ॥
अश्रौषं पतितश्चाहं यमस्योच्चैः प्रभाषतः ।
वासुदेवः समुद्धर्त्ता भविता ते जनार्दनः ॥
पूर्णे वर्षसहस्रान्ते क्षीणे कर्मणि दुष्कृते ।
प्राप्स्यसे शाश्वताल्लोँकाञ् जितान् स्वेनैव कर्मणा ॥
कूपेऽत्मानमथाशीर्षमपश्यं पतितश्च ह ।
तिर्यग्योनिमनुप्राप्तं न च मामजहात् स्मृतिः ॥ इत्यादि ७०।१३-२७ ।

एवं भागवतेऽपीति ग्रन्थकारो वाल्मीकीयकृतिमेवानुससार इति विभाव्यते। प्रमत्तस्यान-वहितस्याज्ञातवृत्तस्येत्यर्थः, न तु दानादिनोद्धतस्य, रामायणादिषु तथाऽदर्शनात्। तथाच महाभारतेऽनुशासनपर्वणि—

नृगस्ततोऽब्रवीत् कृष्णं ब्राह्मणस्याग्निहोत्रिणः ।
प्रोषितस्य परिभ्रष्टा गौरेका मम गोधने ॥

कदाचिदेकान्त[1] उपस्थितं प्रभुं रामं रमालालितपादपङ्कजम् ।
सौमित्रिरासादितशुद्धभावनः प्रणम्य भक्त्या विनयान्वितोऽब्रवीत्[2] ॥ ३ ॥
त्वं शुद्धबोधोऽसि हि सर्वदेहिनामात्माऽस्यधीशोऽसि निराकृतिः स्वयम् ।
प्रतीयसे ज्ञानदृ[3]शामथापि ते पादाब्जभृङ्गा[4]हित[5]सङ्गसङ्गिनाम् ॥ ४ ॥

---

३ । नरो० । रमया लालिते संवाहिते पादपङ्कजे यस्य तं तथा । आसादिता शुद्धा विषयसम्बन्धशून्या भावना परमात्मचिन्तनं येन स तथा ।

४ । नरो० । हि यतस्त्वं शुद्धबोधोऽसि उपाधिशून्यज्ञानरूपोऽसि अतो देहिनामात्मा अन्तर्यामी, अत एव अधीशोऽसि नियन्ताऽसि । निराकृतिराकारशून्यः । अथापि अथ तथाऽपि च ते तव पादाब्जभृङ्गाहितसङ्गसङ्गिनां ज्ञानदृशां ज्ञानचक्षुषां सम्बन्धे स्वयं त्वं प्रतीयसे इति । पादाब्जभृङ्गेषु आहितः सङ्गः आसक्तिर्यैस्तेषु सङ्ग आसक्तिर्विद्यते येषां तेषां तथा ।

---

गवां सहस्रे संख्याता तदा सा पशुपैर्मम ।
सा ब्राह्मणाय मे दत्ता प्रेत्यार्थमभिकाङ्क्षता ॥ इति ७०।१०।१०-११ ।

भागवतेऽपि—

कस्यचिद् द्विजमुख्यस्य भ्रष्टा गौर्मम गोधने ।
संपृक्ताऽविदुषा सा तु मया दत्ता द्विजातये ॥ इति १०।१४।१६ ।

वाल्मीकीयेऽपि—

स कदाचिद् गवां कोटीः सवत्साः स्वर्णभूषिताः ।
नृदेवो भूमिदेवेभ्यः पुष्करेषु ददौ नृपः ॥
तत्र सङ्गागता धेनुः सवत्सा कांस्यदोहना ।
ब्राह्मणस्याऽऽहिताग्नेस्तु दरिद्रस्योञ्छवृत्तिनः ॥ इति ४।९९।८-९ ।

महाभारतीयेन—

अस्ति चैव कृतं पापमज्ञानात्तदपि त्वया ॥ अनुशासन० ७०।२२

इत्यादियमवचनेन च स्पष्टमेव तस्य अज्ञानत्वं प्रतिपादितमिति ।

३ । एकान्ते विजने उपस्थितं प्राप्तं विनयान्वितः सन् भक्त्या गुरुरयमिति बुद्ध्या प्रणम्य । अनेन गुरूपसदनप्रकार उक्तः । आसादितं शुद्धं भावनं भावनाऽन्तःकरणं येन सः, शुद्धान्तःकरण इति यावत्; भगवदुक्तसत्कथाश्रवणेन शुद्धान्तःकरण इत्यर्थः । रा० ।

४ । हे महामते, महती सर्वविषया मतिर्यस्य तस्य सम्बोधनम् । त्वं शुद्धबोधोऽसि अनवच्छिन्नचैतन्यरूपोऽसि, सर्वदेहिनामात्माऽसि जीवानां त्वत्प्रतिबिम्बत्वात् । अधीशोऽसि

---

1. ग '-न्तसु-' । 2. अतः परं क-पुस्तके 'सौमित्रिरुवाच' इत्यधिकम् । 3. क-ख-घ '-शां महामते' । 4. क-ग '-पित-' । 5. च '-सङ्गिनां सदा' ।

अहं प्रपन्नोऽस्मि पदाम्बुजं प्रभो भवापवर्गं तव [1]योगिभावितम् ।
यथाऽञ्जसाऽज्ञानमपारवारिधिं सुखं तरिष्यामि तथाऽनुशाधि माम् ॥ ५ ॥

श्रुत्वाऽथ सौमित्रिवचोऽखिलं [2]तथा प्राह प्रपन्नार्त्तिहरः प्रसन्नधीः ।
विज्ञानमज्ञानतमोपशान्तये श्रुतिप्रपन्नं क्षितिपाल[3]भूषणम्[4] ॥ ६ ॥

---

५। नरो०। हे प्रभो, योगिभावितं भवापवर्गं तव पदाम्बुजमहं प्रपन्नोऽस्मि। अञ्जसा अज्ञानापारवारिधिं यथा सुखमनायासं तरिष्यामि तथा मामनुशाधि उपदिश। भवस्य संसारस्य अपवर्गो मोक्षो यस्मात् तम्, अत एव योगिभावितं योगिध्यातम्।

६। नरो०। अखिलं सौमित्रिवचः श्रुत्वा प्रपन्नार्त्तिहरः प्रसन्नधीः श्रीरामस्तं प्राह। यथा विज्ञानं श्रुतिं प्रपन्नं सत् अज्ञानतमोपशान्तये भवति। प्रसन्ना निर्मला धीरन्तःकरणं यस्य स तथा। विज्ञानं कीदृशम्? क्षितिपालभूषणम्। अज्ञानमेव तमस्तस्योपशान्तये। सन्धिरार्षः।

---

अन्तर्यामित्वात् नियन्ताऽसि। वास्तवभेदाभावाच्च सर्वात्मत्वम्, औपाधिकभेदाच्च नियन्तृ-नियम्यभावो बोध्यः। निराकृतिरस्मदादिवत् स्वार्जितकर्माधीनशरीराकृतिरहितः। नन्वेवं सर्वैः कथमेवं न ज्ञायतेऽत आह—ज्ञानदृशां स्वयमेवं प्रतीयसे। ज्ञायते अनेनेति ज्ञानं वेदान्त-वाक्यजातम्, तदेव दृग् दर्शनसाधनं येषां तेषामिति सम्बन्धसामान्ये षष्ठी, तैरित्यर्थः। तादृशदृग्लाभश्च त्वद्भक्त्यधीन इत्याह—पादेति। त्वच्चरणकमलयोर्भृङ्गवदाहितः कृतः सङ्गो येन तादृशान्तःकरणसङ्गवताम्, त्वच्चरणकमलसंलग्नान्तःकरणवतामित्यर्थः। रा०।

५। अथ प्रार्थयते—अहमिति। भवस्य संसारस्यापवर्गो निवृत्तिर्यस्मात्तादृशं तव पदाम्बुजं प्रपन्नोऽस्मि शरणं प्राप्तोऽस्मि। योगिभावितं योगिभिः संसारमुक्तये भावितम्। अनेन तस्य भवापवर्गत्वे सदाचारः प्रमाणमुक्तम्। अपारवारिधिरूपं यदज्ञानं संसारमूलकारणं यथा सुखमक्लेशेन तरिष्यामि तथा मामनुशाधि शिक्षय। अपारवारिधिमित्यनेन सपारप्रसिद्ध-समुद्राद्व्यतिरेक उक्तः। अशक्यतरणता अनेन ध्वनिता। रा०।

६। अथोत्तरमवतारयति—श्रुत्वेति। रामः सौमित्रिवचः श्रुत्वा। अथ-शब्दो वाक्यालङ्कारे। तदा श्रवणाव्यवहितकाले एव प्रपन्नानां भक्तानामार्त्तिं संसारदुःखं हरति तादृशः। प्रसन्ना भ्रमादिहीना भक्तानुग्रहपरा च धीर्यस्य सः। क्षितिपालानां राज्ञां भूषणभूतः। अज्ञानरूप-तमस उपशान्तये तदर्थम्। सन्धिरार्षः। श्रुतिभिः 'तमेव विदित्वाऽतिमृत्युमेति' इत्यादि-श्रुतिभिः प्रपन्नं तत्फलकत्वेन बोधितं विज्ञानमात्मतत्त्वज्ञानमिति सामान्यतः प्रथमं प्राह। रा०।

---

1 ग 'योग-'। 2. क-ख-घ-च-छ 'तदा'। 3. क-ख-घ-च '-भूषण'। 4. च-छ 'अतः परं श्रीराम उवाच' इत्यधिकम्।

आदौ स्ववर्णाश्रमवर्णिताः क्रियाः कृत्वा समासादितशुद्धमानसः ।
समाप्य तत्पूर्वमुपात्तसाधनः समाश्रयेत् सद्गुरुमात्मलब्धये ॥ ७ ॥
[1]क्रिया शरीरोद्भवहेतुरा[2]दृता प्रियाप्रियौ तौ [3]भजतः सुरागिणः ।
धर्मेतरौ तत्र पुनः शरीरकं पुनः क्रिया चक्रवदीर्यते भवः ॥ ८ ॥

---

७ । नरो० । आदाविति । आदौ स्ववर्णाश्रमवर्णिताः क्रियाः कृत्वा समासादितशुद्धमानसः सन् समाप्य तत्पूर्वमुपात्तसाधनः आत्मलब्धये परमात्मलाभाय सद्गुरुं सदाचार्यं समाश्रयेदित्यन्वयः । स्ववर्णाश्रमवर्णिताः स्ववर्णेष्वाश्रमे वर्णिता अवश्यं कर्तव्यतया विहिता. क्रिया नित्यनैमित्तिकीः क्रियाः । वर्णा ब्राह्मणक्षत्रियवैश्यशूद्राः । आश्रमाः—गृहि-ब्रह्मचारि-वानप्रस्थ-भिक्षवः । समासादितशुद्धमानसः संप्राप्तशुद्धचित्तः, समाप्य समाप्तिं नीत्वा, तत्पूर्वं क्रियासमापनपूर्वम् । उपात्तानि गृहीतानि साधनानि येन स तथा ।

८ । नरो० । नित्यानित्यवस्तुविवेकेहामुत्रार्थफलभोगविरागशमादिषट्कसम्पन्मुमुक्षुत्वानि । नित्यानित्यवस्तुविवेकस्तावद् ब्रह्मैव नित्यं वस्तु अतोऽन्यदखिलमनित्यमिति विवेचनम् । ऐहिकानां स्रक्चन्दनवनितादिविषयभोगाणां कर्मजन्यतया अनित्यवदामुष्मिकाणामपि अमृतादिविषयभोगाणामनित्यतया तेभ्यो नितरां विरतिरिहामुत्रार्थफलभोगविरागः । शमा-

---

७ । अथ तादृशज्ञानप्राप्तये क्रमेण बहिरङ्गान्तरङ्गसाधनान्याह—आदाविति । स्ववर्णाश्रमेषु शास्त्रेण वर्णितानि साधनानि शमदमादीनि येन तादृशः, अनेन कर्मणां बहिरङ्गत्वं शमदमादीनामन्तरङ्गत्वं स्फुटमेवोक्तम् । किञ्च शमदमवैराग्यदार्ढ्यपर्यन्तं कर्मानुष्ठानमेवेति सूचितम् । ततस्तत्कर्मानुष्ठानं समाप्य त्यक्त्वा संन्यस्येति यावत्, आत्मलब्धये आत्मज्ञानाय तत्फलकाय तत्त्वमस्यादिवाक्यार्थविचाराय सद्गुरुं श्रोत्रियं ब्रह्मनिष्ठमित्यादिलक्षणलक्षितं समाश्रयेत् सेवेत । अनेन व्युत्पत्तिबलेन स्वयमेव वाक्यार्थविचारः क्रियमाणो न फलायेति सूचितम् । रा० ।

८ । संसारस्य भ्रमिमच्चक्ररूपत्वात्तन्निवृत्तेश्च तत्कारणाज्ञाननिवृत्तिमूलकत्वादज्ञाननिवृत्तेश्च तत्त्वज्ञानैकसाध्यत्वात्तत्त्वज्ञानस्य च वेदान्तविचारसाध्यत्वात्तदर्थं गुरुसमाश्रयणमित्याह—क्रियेति । भवः संसारः चक्रवद्विपरिवर्तमान ईर्यते कथ्यते । तदेवोपपादयति, आदृता आदरपूर्वं पूर्वजन्मार्जिता क्रिया एनस्य शरीरोद्भवस्य जन्मनो हेतुः । तत्र जन्मनि सुरागिणो विषयाभिलाषवतः तौ शास्त्रप्रसिद्धौ धर्मेतरौ धर्माधर्मौ प्रियाप्रियौ सुखदुःखजनकौ भवतः । कस्यचिदधर्मे एव सुखत्वबुद्ध्या प्रवृत्तिः, कस्यचिद्धर्मे, एवं कदाचिदित्यप्यूह्यम् । एवं तत्रोत्पादितकर्मणा पुनः शरीरं पुनः क्रिया एवं चक्रवद्विपरिवृत्तिः । यथा चक्रे भ्राम्यमाणे अधोभागः कदाचिदुपरि उपरितनश्चाधः पुनरुपरि पुनरध एवं जन्मक्रिययोर्जन्यजनकभावेन परिवृत्तिरिति बोध्यम् । रा० ।

---

1. ग 'क्रियाः' । 2. ग '-दृताः' । 3. क-ख-ग-घ-च-छ 'भवतः' ।

अज्ञानमेवास्य हि मूलकारणं [1]तज्ज्ञानमेवात्र विधौ विधीयते ।
विद्यैव तन्नाशविधौ पटीयसी न कर्म [2]तज्ज्ञैः [3]स्वविरोधमीरितम् ॥ ९ ॥
नाज्ञान[4]हीनं न च रागसंक्षयो भवेत्ततः कर्म सदोषमुद्भवेत् ।
ततः पुनः संसृतिरप्यवारिता तस्माद् बुधो ज्ञानविचारवान् भवेत् ॥ १० ॥

---

दयस्तु शमदमोपरतितितिक्षासमाधानश्रद्धाः । शमस्तावत् श्रवणादिव्यतिरिक्तविषयेभ्यो मनसो निग्रहः, दमो बाह्येन्द्रियाणां तद्व्यतिरिक्तविषयेभ्यो निवर्त्तनम् । निवर्त्तितानां तेषां तद्व्यतिरिक्तविषयेभ्य उपरमणम् उपरतिः । अथवा विहितानां कर्मणां विधिना परित्यागः । तितिक्षा शीतोष्णादिद्वन्द्वसहिष्णुता । निगृहीतस्य मनसः श्रवणादौ तदनुगुणविषये च समाधिः समाधानम् । गुरुवेदान्तवाक्येषु विश्वासः श्रद्धा । मुमुक्षुत्वं मोक्षेच्छा । मुमुक्षुणा फलसङ्गरहितेन सतैव कर्म कर्तव्यं न तु फलाकाङ्क्षिणा, तथा सता तेन तस्मिन् कृते चित्तशुद्धिर्न स्यात्, स्याच्च अनर्थोत्पत्तिरित्याशयेनाऽऽह—क्रिया इत्यादि । प्रियाप्रियौ धर्मेतरौ, तौ भजतः सुरागिणः आहता क्रिया शरीरोद्भवहेतुर्भवतीति सम्बन्धः । धर्मेतरौ धर्माधर्मौ । सुरागिणः अतिप्रीतिमतः । भवतु का हानिरिति चेत्तत्राऽऽह—तत्रेत्यादि । तत्र धर्माधर्मयोः सतोः चक्रवत् पुनः शरीरं पुनः क्रिया भवः संसार ईर्यते सद्भिरिति सम्बन्धः ।

९ । नरो० । ननु तर्हि कर्मैव न कर्तव्यं तदकृतौ संसारो न भविष्यतीत्यत आह—अज्ञानमेवास्य हीत्यादि । हि यतः अस्य भवस्य अज्ञानमेव मूलं कारणं तत् तस्माज् ज्ञानमेव तत्र विधौ अज्ञानतरणविधौ वा विधीयते इति । ननु अज्ञाननाशाय कर्मैव कर्तव्यं किं विद्योपार्जनेनेत्यत आह—विद्यैवेत्यादि । विद्यैव तन्नाशविधौ पटीयसी न कर्म इति तज्ज्ञैः स्वविरोधं यथा स्यात्तथा ईरितमिति सम्बन्धः । तन्नाशविधौ अज्ञाननाशविधौ ।

१० । नरो० । कर्मणोऽज्ञाननाशकता तावद् दूर एव तिष्ठतु प्रत्युत अनर्थजनकतैव दृश्यते इत्याह—नाज्ञानहीनमित्यादिपादत्रयेण । कर्म इत्यनुषज्यते, यतः कर्म नाज्ञान-

---

९ । तस्य चाज्ञानमेव मूलमित्याह—अज्ञानमेवेति । अत्र विधौ संसारनिवृत्तिलक्षणे कर्त्तव्ये त्वर्थे तद्ज्ञानमेव मूलकारणत्वादज्ञानहानमेव विधीयते साधनत्वेनेति शेषः । ननु कर्मैव तन्नाशकमस्तु किं ज्ञानेनेत्याशङ्क्याऽऽह—विद्यैव ज्ञानमेव तन्नाशविधौ मूलाज्ञाननाशने पटीयसी समर्था, न कर्म समर्थमिति शेषः, यतस्तज्जमज्ञानजम् । आत्मस्वरूपाज्ञानजन्यदेहाद्यभिमानजन्यत्वात् कर्मणोऽज्ञानजन्यत्वं बोध्यम् । ननु तज्जन्यस्यापि तन्नाशकत्वं वृश्चिककर्कट्यादौ दृष्टमित्याशङ्क्य तज्जन्यत्वं वा न नाशकत्वे प्रयोजकं किन्तु सविरोधत्वमेवेत्याह—यत् सविरोधं तदीरितं नाशयुक्तमित्यर्थः । रा० ।

१० । अत एव कर्मणा नाज्ञानहानिरित्याह—नाज्ञानेत्यादि । यतः कर्मणा विरोधा-

---

1. क-ख-घ-छ 'तद्ज्ञान-' । 2. क-ख-ग-घ 'तज्ज', च-छ 'तज्ज्ञं' । 3. क-ख-ग-घ-च-छ 'सवि-' । 4. क-ख घ-च छ '-हानिर्न' ।

ननु क्रिया वेदमुखेन [1]नोदिता [2]तथैव विद्या पुरुषार्थसाधनम् ।
कर्त्तव्यता प्राणभृतः [3]प्रसादिता विद्यासहायत्वमुपैति सा पुनः ॥ ११ ॥
कर्माकृतौ दोषमपि श्रुतिर्जगौ तस्मात् सदा कार्यमिदं मुमुक्षुणा ।
[4]ननु स्वतन्त्रा ध्रुवकार्यकारिणी विद्या न किञ्चिन्मनसाऽप्यपेक्षते ॥ १२ ॥

---

हीनमतो न च कर्मणो रागसंक्षयो भवेत्, ततः कर्मणः सदोषं कर्म उद्भवेत्, ततः सदोषकर्मणः अवारिता पुनरपि संसृतिर्भवेदिति वाक्यार्थः । उपसंहरति—तस्मादिति । कर्मसहकृतैव विद्या मुक्तये भवतीति अकरणे प्रत्यवायोत्पत्तेश्च कर्मणश्च सदा कर्तव्यतेति ।

११ । नरो० । केषाञ्चिन्मतमुत्थापयति—नन्विति द्वाभ्याम् । यथा वेदमुखेन पुरुषार्थसाधनं क्रिया नोदिता तथैव विद्या पुरुषार्थसाधनं नोदिता ; किन्तु प्राणभृतो जीवस्य कर्तव्यता प्रसादिता सा पुनर्विद्यासहायत्वमुपैतीति योजना । वेदमुखेन वेदप्रधानेन उपनिषद्भागेन वेदान्तेन वेदादिना शास्त्रेण वा । पुरुषार्थसाधनं मोक्षसाधनम्, कर्तव्यता कर्मणः । यद्वा कर्तव्यतेत्यत्र स्वार्थे ता-प्रत्ययप्रयोगात् कर्त्तुं योग्यं कर्मेत्यर्थः ।

१२ । नरो० । तस्मात् कर्माकरणे श्रुत्या दोषस्य गानात् । इदं कर्म । वैदिककर्मभिर्विशेष्यमाणा सहायनिरपेक्षा विद्या मुक्तये भवतीति केषाञ्चिद्वितर्कवादिनां मतमुपस्थापयति—ननु

---

भावान्नाज्ञाननाशेनापि रागनाशो वस्तुतः कर्मानुष्ठानात् पुनः सदोषं क्षयिफलत्वादिदोषविशिष्टं कर्मैवोद्भवेत्, कर्मणश्च पुनः संसार एवेति न मुक्ति प्रत्याशा, ततस्तस्माद् बुधो विवेकी ज्ञानविचारवान् ज्ञायते अनेनेति ज्ञानं वेदान्तवाक्यं तद्विचारवान् भवेत् । रा० ।

११ । इदानीं ज्ञानस्यैव मोक्षहेतुत्वं वक्तुं ज्ञानकर्मसमुच्चयवादं दूषणायानुवदति सार्धेन—नन्विति । नन्विति शङ्कायाम् । यथा विद्या वेदमुखेन श्रुतिपुराणलक्षणेन 'ब्रह्मविदाप्नोति परम्' इत्यादिना पुरुषार्थसाधनमुक्ता तथा—

उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः ।
तथैव ज्ञानकर्मभ्यां प्राप्यते ब्रह्मसाधनम् ॥ ( योगवाशिष्ठं )

इत्यादिना क्रियाऽपि तत्साधनत्वेनोक्ता । किञ्च क्रिया कर्तव्यता तृतीयार्थे प्रथमा, कर्तव्यतया आवश्यके कृत्ये अवश्यकर्तव्यतया प्रचोदिता नित्यनैमित्तिकरूपा । एवञ्च तदकरणे प्रत्यवायोत्पत्त्या ज्ञानोत्पत्तिरेव न स्यात्, तस्मात् सा पुनर्विद्यायाः सहायत्वं प्राप्नोति घटे जननीये यथा दण्डचक्रादीनां परस्परसहायता । रा० ।

१२ । कर्तव्यतेति स्वोक्तमेव विवृणोति—कर्मेति । 'वीरहा वा एष देवानां योऽग्निमुद्वासयते, यावज्जीवमग्निहोत्रं जुहोति' इति श्रुतिः । तत्र सिद्धान्ती शङ्कते—नन्विति । ध्रुवं स्थिरं

---

1. क-ख-घ च-छ 'चो-' । 2. ख-ग-घ-च-छ 'यथैव' । 3. क-ख-ग-घ-छ 'प्रचोदिता', च 'प्रमोदिता' । 4. छ 'न तु' ।

न सत्यकार्योऽपि [1]हि यद्वदध्वरः [2]प्रकाशतेऽन्यानपि कार[3]कादिकान्।
तथैव विद्या विधितः प्रकाशितैर्विशिष्यते कर्मभिरेव मुक्तये ॥ १३ ॥

केचिद्वद[4]न्तीति वितर्कवादिनस्तदप्यसद्दृष्टविरोधकारणात् ॥
देहाभिमानादभिव[5]र्धते क्रिया विद्या गताहङ्कृतितः प्रसिध्यति ॥ १४ ॥

---

स्वतन्त्रेत्यादिना ग्रन्थेन। ध्रुवञ्च तत् कार्यञ्चेति ध्रुवकार्यं मोक्षः, 'न स पुनरावर्तते' (छान्दोग्य० ८।१५।११) इति श्रुतेस्तस्य नित्यत्वावगमात्, तत् कर्त्तुं शीलं यस्याः सा तथा।

१३। नरो०। विद्याया मनसोऽसम्भवेऽपि (?) उपेक्षणात्यन्ताभावसूचनाय मनसा······न्तमाह—न सत्यकार्योऽपीति। सत्यं मिथ्याविपरीतम् अबाधितं वा कार्यं यस्य स तथा। प्रकाशते अपेक्षते। अन्यानपीति अपिशब्दात् स्वकारकादिकानिति लभ्यते। आदिपदेन सम्बन्धादेः परिग्रहः। यद्वा कारकादिकान् कर्त्रादीन्। यज्ञो यथा स्वर्गादिफलोत्पादने कारकादिकान्नापेक्षते विद्या तथा मोक्षोत्पादने किञ्चिन्नापेक्षत इत्यर्थः। तथैवेति येन प्रकारेण विद्या प्रकाशिता तेनैव प्रकारेणेत्यर्थः। विधितो विधिना।

१४। नरो०। तदप्यसदिति अपिशब्दाद् एतदिति लभ्यते। दृष्टविरोधं दर्शयति—देहाभिमानादिति। देहाभिमानाद् देहात्माध्यासात्। देहेत्युपलक्षणम्, इन्द्रियाद्युपलक्षणीयम्। गताहङ्कृतितः नष्टदेहाद्यात्माध्यासादित्यर्थः।

---

कार्यमिदं (?) पुरुषार्थमोक्षजनिका विद्या, यतः स्वतन्त्रा विनाऽपि सहायेन स्वकार्यसम्पादने समर्था। यथा तेजस्तिमिरनिवर्त्तनसमर्थं मनसाऽपि किञ्चित् सहायभूतं वस्तु नापेक्षते, तथा फले जननीये सहायान्तरसम्भावनाऽपि नेति भावः। अनेन विद्या फलजनने निरपेक्षा स्वतन्त्रत्वात्तेजोवदित्यनुमानं सूचितम्। रा०।

१३। समुच्चयवादी परिहरति—नेति। त्वदुक्तं नेत्यर्थः। सत्यकार्यः 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इत्यादिवेदेन बोधितः स्थिरकार्योऽपि अध्वरः यथाऽन्यानपि कारकादिकान् आरादुपकारकप्रयाजाद्यङ्गानि देशकालादीनि च प्रकाङ्क्षते तथा विद्याऽपि 'अग्निहोत्रं जुहोति' इत्यादिविधिवाक्यतः तत्समूहेन प्रकाशितैः कर्मभिः सहितैव मुक्तये विशिष्यत इत्यर्थः। विद्या फलदाने कर्मापेक्षा अङ्गित्वात् प्रयाजाद्यङ्गापेक्षदर्शादिवदिति सत्प्रतिपक्षानुमानमनेन सूचितम्। रा०।

१४। तदनूद्य सिद्धान्ती दूषयति—केचिदिति। यत् केचिद्वितर्कवादिन इति ज्ञानकर्मणी समुचित्य मुक्तिसाधनं वदन्ति, तदप्यसत्, यथा केवलं कर्म मोक्षसाधनमित्यसत् तथा तन्मिलितमित्यप्यसत्। तत्र हेतुः—दृष्टविरोधकारणात् दृष्टो यो विरोधः सर्वलोकदृष्टविरोधरूपात् कारणात्तदसदित्यर्थः। विरोधमेवाऽऽह—देहाभिमानात् क्रिया वर्धते अनात्मनि देहादावात्म-

---

1. ग 'च'। 2. क-ख-घ 'प्रकाङ्क्षते'। 3. च '-चादि-'। 4. ग '-न्तीह'। 5. ग-च '-र्धते'।

विशुद्धविज्ञान[1]विलोचनाञ्चिता विद्यात्मवृत्तिश्चरमेति भण्यते ।
उदेति कर्माखिलकार[2]कादितो निहन्ति विद्याऽखिल[3]कारकादिकम् ॥ १५ ॥
तस्मात् त्यजेत् कार्यमशेषतः सुधीर्विद्याविरोधान्न समुच्चयो भवेत् ।
आत्मानुसन्धानपरायणः [4]सदा निवृत्तसर्वेन्द्रियवृत्तिगोचरः ॥ १६ ॥

---

१५ । नरो० । का विद्या इत्यपेक्षायामाह—विशुद्धविज्ञानस्य यद्विलोचनं पर्यालोचनम्, तेनाञ्चिता आत्मवृत्तिरन्तःकरणपरिणामः । चरमेत्युपादानम् इतः परमन्तःकरणवृत्तिर्न भविष्यतीति सूचनार्थम् । अपरं विरोधमाह—उदेतीति । अखिलकारकादितः कर्म उदेतीत्यन्वयः । विद्या अखिलकारकादिकं निखिलकर्त्रादिकं नाशयतीत्यर्थः । तथाच श्रुतिः—'सचक्षुरचक्षुरिव सकर्णोऽकर्ण इवे'त्यादिः ।

१६ । नरो० । तस्मात् अशेषतः साकल्येन कार्यं तथा विहितं कर्म सुधीस्त्यजेत् । सदा आत्मानुसन्धानपरायणः सन् निवृत्तसर्वेन्द्रियवृत्तिगोचरः सन् विद्याविरोधार्थं (?) समुच्चयो भवेच्चेति योजना । आत्मानुसन्धानं परम् अयनं यस्य स तथा । निवृत्ताः सर्वेन्द्रियगोचराः शब्दस्पर्शनादिवृत्तयो यस्य स तथा । एतेन आत्मविषयकं श्रवणादिकं कर्त्तव्यमिति सूचितम् । तथाच श्रुतिः—'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृहदा० २।४।५) इति । 'विद्या-

---

त्वाभिमानात् क्रियावृद्धिः ; विद्या तु गताहंकृतितः, गताऽहंकृतिर्यस्य तस्य नष्टाहंकृतेः प्रसिध्यति । सार्वविभक्तिकस्तसिः । एवञ्चाहङ्कारसत्तामूलकत्वात् क्रियाज्ञानयोः समुच्चयो विरुद्ध इत्यर्थः । रा० ।

१५ । अथ पूर्वपक्ष्युक्तानुमानं दूषयन् विद्यास्वरूपमाह—विशुद्धं विज्ञानं येभ्यस्तेषां वेदान्तवाक्यानां यद्विशेषेण रोचनं रलयोरभेदादालोचनं विचारः, तेनाञ्चिता प्रापिता या चरमा आत्मवृत्तिर्ब्रह्माकारान्तःकरणवृत्तिः सा विद्या भण्यते विद्वद्भिरिति शेषः । पुनः समुच्चयवारणाय विद्याकर्मणोर्वैषम्यमाह—कर्म यज्ञादि अखिलकारकादिभिः कर्तव्यकर्मादिभिरङ्गैश्च सहितं सदुदेति फलोन्मुखं भवति, विद्या पुनरखिलकारकादि निहन्ति तत्र कर्तृत्वादिबुद्धिं निहन्ति । सकलव्यापारपरित्यागेन ब्रह्मणि समाप्तिर्हि विद्या, अतः स्वोत्पत्तौ चित्तशुद्धिद्वारा कर्मसापेक्षा स्वफले जनयितव्ये तन्निरपेक्षैवान्यथा विद्यास्वरूपस्यैव भङ्गापत्तेरिति पूर्वपक्ष्युक्तहेतोरसिद्धिरिति भावः । रा० ।

१६ । उपसंहरन् मुमुक्षोर्वृत्तिप्रकारमाह—तस्मादिति । विद्याविरोधाद् विद्यायाः कर्मणा सह विरोधेन समुच्चयो न भवेत्, तस्मात् सुधीर्मुमुक्षुरशेषतः कर्म त्यजेत् । काम्यं तु सर्वथा त्याज्यमेव नित्यनैमित्तिकमपि यावच्चित्तशुद्धि कर्तव्यमेव । ततोऽपि ब्रह्मणि चित्तस्थैर्य-

---

1. क-ख-व-च '-विरो-' । 2. क-ख ग-घ ङ '-कादिभिर्न-', च '-णादिभिः' । 3. च '-कारिका-' । 4. च 'पुनर्भि-' ।

यावच्छरीरादिषु माययात्मधीस्तावद्विधेयो विधि[1]रेव कर्मणाम् ।
नेतीति वाक्यैरखिलं निषिध्य [2]तज् ज्ञात्वा परात्मानमथ त्यजेत् क्रियाः ॥ १७ ॥
यदा परात्मात्मविभेदभेदकं विज्ञानमात्मन्यवभाति [3]भास्वरम् ।
तदैव माया प्रविलीयतेऽञ्जसा [4]सकारणा कारणमात्मसंसृ[5]तिः ॥ १८ ॥

---

विरोधान्न समुच्चयो भवेदि'ति पाठे एवमाभाष्यमेवं व्याख्येयम् । तथाच—ननु 'यावज्जीवमग्निहोत्रं जुहुयादि'त्यादिचोदनाप्राप्तानां नित्यनैमित्तिककर्मणां विद्यायाश्च समुच्चयो भविष्यति कथं कर्म त्याज्यमित्यत आह—विद्याविरोधान्न समुच्चयो भवेदिति । समुच्चयः अर्थात्तयोः; कर्म त्यक्त्वा किंभूतो भवेदित्यपेक्षायामाह—आत्मानुसन्धानपरायण इत्यादि । सदा आत्मानुसन्धानपरायणः सन् निवृत्तसर्वेन्द्रियगोचरो भवेदित्यन्वयः । भवेदिति उभयत्र योज्यम् ।

१७ । नरो० । ननु तर्हि किं कर्मफलाकाङ्क्षाऽपि न कर्तव्या इत्यत आह—यावदित्यादि । यावत् शरीरादिषु मायया आत्मधीस्तावत् कर्मणां विधिरेव विधेय इति सम्बन्धः । शरीरादिष्विति आदिपदेन इन्द्रियादेः परिग्रहः । आत्मधीरात्मज्ञानम् । तर्हि कदा त्यजेदित्यपेक्षायामाह—नेतीति वाक्यैरित्यादि । नेतीति वाक्यैरखिलं निषिध्यते । अथ परात्मानं ध्यात्वा क्रियास्त्यजेदित्यन्वयः । नेतीतिघटितैर्वाक्यैः । तथाच श्रुतयः—'एकमेवाद्वितीयम्' (छान्दो० ६।२।१) 'अतोऽन्यदार्त्तं नेह नानाऽस्ति किञ्चन' (बृहदा० ३।४।२) 'अथात आदेशो नेति नेती'त्याद्याः' ।

१८ । नरो० । संसारस्य मूलकारणं माया कदा नङ्क्ष्यतीत्यपेक्षायामाह—यदेत्यादि । यदा परात्मात्मविभेदभेदकं भास्वरं विज्ञानमात्मनि मनसि अवभाति तदैव कारणमर्थात् संसारस्य

---

पर्यन्तं कर्तव्यमेव, ततस्तदनुसन्धानं प्रतिबन्धकत्वात् प्रयोजनाभावाच्च तदपि त्याज्यमेवेति भावः । इदानीं मुमुक्षुकर्तव्यमाह—निवृत्ताः सर्वेषामिन्द्रियाणां गोचरा विषयाः शब्दादयो यस्मात्तादृशः सन् आत्मनः सच्चिदानन्दस्यानुसन्धानमेव परमयनं प्राप्यं यस्य तथाविधो भवेत् । अत्रेन्द्रियप्रत्याहारः कर्तव्यत्वेनोक्तस्तेन तत्पूर्वं प्राणायामाद्यर्थादाक्षिप्तम् । रा० ।

१७ । रागिविरागिभेदेन कर्मणां कर्तव्यतेत्याह—यावदिति । माययाऽविद्यया शरीरादिष्वनात्मसु आत्मधीरहं कर्तेत्यादिरूपा यावद्वर्तते तावद् विधिवादकर्मणां विधिर्यजेतेत्यादिर्वादः कर्तव्यताबोधको येषां कर्मणां विधेयो वशवर्त्ती तत्कर्मकर्ता भवेत् । तदपगमे तु तदखिलं जगत् नेति इति वाक्यैः 'अथात आदेशो नेति नेति' इत्यादिवाक्यैर्निषिध्य मिथ्यात्वेन निर्णीय तद्विलक्षणतया सत्यत्वेन परात्मस्वरूपं ज्ञात्वा क्रियास्त्यजेत् निरूपितमेतत् । रा० ।

१८ । आत्मविज्ञाने सत्यवश्यमविद्या निवर्तत इत्याह—यदेति । आत्मनि शुद्धेऽन्तःकरणे परमात्मन ईशस्याऽऽत्मनो जीवस्य च यो विभेदो मायान्तःकरणरूपोपाधिद्वयकृतो विभेदो

---

1. क-ख-ग-घ-च-छ '-वाद-' । 2 ग 'तं', च 'तद् ध्यात्वा' । 3 छ 'भासुरं' । 4 क-ख-घ 'सकारका', ग 'सकारकं' । 5 क-ख-ग-घ-च-छ '-ते.' ।

श्रुतिप्रमा[1]णाऽभिविनाशिता च सा कथं भविष्यत्यपि कार्यकारिणी ।
विज्ञा[2]नमात्रादमलाद्वितीयतस्तस्मादविद्या न पुनर्भविष्यति ॥ १९ ॥
[3]यदि स्म नष्टा न पुनः प्रसूयते कर्त्ताऽहमस्येति मतिः कथं भवेत् ।
तस्मात् स्वतन्त्रा न किमप्यपेक्षते विद्या विमोक्षाय विभाति केवला ॥ २० ॥

---

मूलकारणं माया अञ्जसा झटिति [ प्रविलीयते ]। ततः सकारणा प्राक्तनकर्मरूपकारणसहिता आत्मसंसृतिः प्रविलीयते इति योजना। माया आवरणशक्तिविशिष्टा माया प्रविलीयते नश्यति, परात्मा च परमात्मा आत्मा च जीवः तयोर्यो विभेदस्तस्य भेदकं नाशजनकमित्यर्थः।

१९। नरो०। स्वयमेव पूर्वपक्षं कृत्वा सिद्धान्तयति—श्रुतिप्रमाणेति पद्येन। श्रुतिः प्रमाणं यस्याः सा श्रुतिप्रमाणा। तथाच श्रुतिः—'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजा जनयन्तीं सरूपाः। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः॥' (श्वेताश्व० ४।५) इति। विज्ञानमात्रादिति। मात्रपदेन कर्मव्यवच्छेदः। अमलश्च तदद्वितीयश्चेति तस्मात्तथा। अविद्या पुनर्न भविष्यतीति माया विद्याविरोधिनी न पुनर्भवतीत्यर्थः। यस्य तादृग् ज्ञानं तं प्रति तस्या आवरणशक्तिर्नष्टा न त्वन्यं प्रतीति भावः।

२०। नरो०। ननु तस्या एव नाशः स्वीकार्य इति चेदत आह—यदीत्यादि। उपसंहरति—तस्मादिति।

---

भेदस्तस्य भेदकं नाशकं भास्वरं प्रकाशशीलं यद् विज्ञानमितरवृत्त्युपमर्दनपूर्वकं ब्रह्माकाराऽखण्डा वृत्तिर्यदाऽवभाति असम्भावनादितिरस्कारेणोदेति, तदैव सकारका जन्मान्तरप्रापककर्मसहिता माया तत्तज्जीवोपाधिभूताऽविद्या अञ्जसा झटिति विलीयते नश्यति। ननु तन्नाशेऽपि संसारनाशः कथमतो मायाविशेषणम् आत्मसंसृतेः कारणं संसारस्योपादानकारणम्। एवञ्च तन्नाशे कार्यनाशो भवत्येवेति भावः। रा०।

१९। उक्तमेवार्थं पुनर्दार्ढ्यायाऽऽह—श्रुतीति। तत्त्वमसीत्यादिश्रुतिरूपैः प्रमाणैस्तज्जनितज्ञानेन नाशिता साऽविद्या कथमपि कार्यकारिणी भविष्यतीति काकुरत्र। सर्वथा नेत्यर्थः। असतः कार्यकारित्वासम्भवादिति भावः। पुनश्च तस्या नोद्भव इत्याह—विज्ञानमात्रादिति। अमलाद्वितीयतः शुद्धाद्वितीयात्मविषयकाद्विज्ञानमात्रादितरासहकृतान्निदिध्यासनपरिपाकजज्ञानाद् यतो नष्टा तस्मात् सा पुनर्न भविष्यति रज्ज्वज्ञानमूलकस्य सर्पस्य रज्जुज्ञानेन निवृत्तस्य यथा न पुनरुत्पत्तिरिति भावः। रा०।

२०। विद्याया इतरनिरपेक्षाया एव मोक्षकारणत्वमुक्तम्, युक्तिपूर्वकं पुनः कथयति श्रोतृदार्ढ्याय—यदीति। यदि नष्टा तत्त्वज्ञाननाशिता सा न पुनः प्रसूयते नोत्पद्यते तदा कारणाभावात् अहंमतिः कथं भवेत्, कथमपि न भवेदित्यर्थः। तदभावाच्च तत्काले कर्माभाव इति

---

1. ग '-णेन वि-'। 2. ग '-तमा-'। 3. च-छ 'यदाज्ञ'।

सा तैत्तिरीयश्रुतिराह सादरं न्यासं प्रशस्ताखिलकर्मणां स्फुटम् ।
एतावदित्याह च वाजिनां श्रुतिर्ज्ञानं विमोक्षाय [1]न कर्म साधनम् ॥ २१ ॥
विद्यासमत्वेन तु दर्शित[2]स्त्वया क्रतुर्न दृष्टान्त उदाहृतः समः ।
[3]फले पृथक्त्वाद्बहुकारकैः क्रतुः संसाध्यते ज्ञानमतो विपर्य[4]यम् ॥ २२ ॥

---

२१ । नरो० । त्वमेव एवं वदसि किं प्रमाणमस्तीति चेत्तत्राऽऽह—सा तैत्तिरीयश्रुतिराहेत्यादि । तित्तिरो भूत्वा यां श्रुतिं गीर्णवान् सा तैत्तिरीयश्रुतिः । विधिविरोधित्वप्रतिपादनाय प्रशस्तेति विशेषणम् ।

२२ । नरो० । 'न सत्यकार्योऽपि हि' (७।९।१३) इत्यादि यदुक्तं तत्राऽऽह—विद्यासमत्वेनेत्यादि । तया श्रुत्या दर्शितः क्रतुर्न समो दृष्टान्त उदाहृत इति सम्बन्धः । समत्वाभावे हेतुमाह—फले पृथक्त्वादित्यादि । फले पृथक्त्वात् फलगतभेदादित्यर्थः । विपर्ययम् अन्यथाभूतम् ।

---

स्वफलजनने सा स्वतन्त्रा इतरनिरपेक्षेव न किमप्यपेक्षते द्वितीयस्यासम्भवात् । अतः केवलाऽसहायैव विमोक्षाय विभाति तत्फलिका भवतीत्यर्थः । रा० ।

२१ । अत्रार्थे श्रुतिरपि प्रमाणमित्याह—सेति । सा प्रसिद्धा । 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' इत्यादिका तैत्तिरीयश्रुतिः । प्रशस्तानामर्थवादैः प्राशस्त्येन बोधितानामपि कर्मणां न्यासं त्यागं सादरं स्फुटमाह—न तु कर्मसमुच्चयमित्यर्थः । तथा वाजिनां वाजसनेयिनाम् 'एतावदरे खल्वमृतत्वम्' (बृहदा० ४।५।१५) इत्यादिका ज्ञानं विमोक्षाय साधनं न कर्मेत्येतदाह । रा० ।

२२ । अहङ्कारत्यागरूपकारणवैषम्यात् क्रियाज्ञानयोर्वैषम्यमुक्त्वा फलप्रयुक्तमपि वैषम्यमाह—विद्येति । हे समुच्चयवादिन्, त्वया क्रतुरग्निष्टोमादिर्विद्यासमत्वेन दर्शितः, परन्तु समो दृष्टान्तो नोदाहृतः । अनेन क्रतुर्विद्यासमः श्रुतिबोधितकर्तव्यताकत्वादित्यनुमानं निरस्तम्, दृष्टान्ताभावात् । अन्वय्येवानुमानं न व्यतिरेकीति भावः । एतच्चाऽऽकरे विस्तरेण प्रपञ्चितम् । ननु विद्याकर्मणी समे एकफलत्वाच्चक्रदण्डादिवदित्यनुमानमिति चेत्तत्राऽऽह—फलैः पृथक्त्वात् । षष्ठ्यर्थे तृतीया । फलानां भेदादित्यर्थः । एवञ्च स्वरूपासिद्धो हेतुरिति भावः । समानकारकत्वमपि हेतुर्नेत्याह—क्रतुर्बहुभिः कारकैरहंममताभिमानरूपैरान्तरैर्बाह्यैश्च देशकालादिनियमैश्च साध्यते ज्ञानं त्वतो विपर्ययवदतो न तयोः साम्यमिति भावः । रा० ।

---

1. क 'प्रतेकसाधनम्' । 2. क-ख-ग-घ-च-छ '-स्त्वया' । 3. क-ख-घ छ 'फलैः' । 4. च-छ '-यः' ।

सप्रत्यवायो[1] ह्यहमित्यनात्मधी[2]र्यस्य प्रसिद्धा न तु तत्त्वदर्शिनः ।
तस्माद् बुधैस्त्याज्य[3]मविक्रियात्मभिर्विधानतः कर्म विधिप्रकाशितम् ॥ २३ ॥
श्रद्धान्वितस्तत्त्वमसीति वाक्यतो गुरोः प्रसादादपि शुद्धमानसः ।
[4]विज्ञाय चैकात्म्यमथाऽऽत्मजीवयोः सुखी भवेन्मेरुरिवाप्रकम्पनः ॥ २४ ॥
आदौ पदार्थाव[5]गतिर्हि कारणं वाक्यार्थविज्ञानविधौ विधानतः ।
तत्त्वम्पदा[6]र्थौपरमात्मजीवकावसीति चैकात्म्यमथानयोर्भवेत् ॥ २५ ॥

---

२३ । नरो० । कर्माकृतावित्यादि यदुक्तं तत्राऽऽह—सप्रत्यवायो ह्यहमित्यादि । यस्य अहमित्यनात्मधीरिति अहमित्याकारिका अनात्मनि शरीरादौ बुद्धिरित्यर्थः । तत्त्वदर्शिनः कर्मत्यागे प्रत्यवायाभावात् कर्म त्याज्यमित्याह—तस्मादित्यर्धेन । बुधैर्विवेकिभिः । अविक्रियः हर्षविषादादिविकारशून्य आत्मा मनो येषां तैस्तथा ।

२४ । नरो० । आचार्यसमाश्रयणानन्तरं मुमुक्षोरात्मजीवयोरैकात्म्यज्ञानं भवतीत्युपदिशति—श्रद्धान्वित इति पद्येन । अथ श्रद्धाशुद्धमानसो मुमुक्षुस्तत्त्वमसीति वाक्यतो गुरोराचार्यस्य च प्रसादादपि आत्मजीवयोरैकात्म्यं विज्ञाय मेरुरिवाप्रकम्पनः सन् सुखी भवेदित्यन्वयः । अथ सद्गुरुसमाश्रयणानन्तरम् । शुद्धं मानसं यस्य स शुद्धमानसः ।

२५ । नरो० । ऐकात्म्यज्ञाने परिपाटीं दर्शयति—आदाविति पद्येन । हि यतः तत्त्वंपदार्थौपरमे आत्मजीवकावसीति ऐकात्म्यम् अनयोरात्मजीवयोर्भवेत्, अथ अतः विधानतो

---

२३ । नन्वकरणे प्रत्यवायभिया कर्म कार्यमिति चेन्नेत्याह—सप्रत्यवाय इति । कर्मत्यागेन हि निश्चयेनाहं प्रत्यवायसहितो भविष्यामीत्येवं शुद्धात्मनि अनात्मधर्मस्य धर्मज्ञस्य तत्त्वज्ञानविकलस्य प्रसिद्धा, न तु तत्त्वदर्शिनस्तस्याहंबुद्धेरभावात् पापादेरनात्मधर्मतानिश्चयाच्च । तस्माद् बुधैः कर्मक्रियात्मभिः । षष्ठ्यर्थे तृतीया । क्रियाफलासक्तचित्तानां विधानतो विधानेन इतिकर्तव्यतया युक्तं कर्म विधिभिरवश्यकर्तव्यतया बोधितमपि त्याज्यमित्यर्थः । रा० ।

२४ । अथ विरक्तस्य कार्यमाह—श्रद्धेति । गुरुशास्त्रयोर्विश्वासः श्रद्धा, तदन्वितो बुभुत्सुः शुद्धमानसोऽपि निष्कामकर्मानुष्ठानाच्छुद्धमानसश्च गुरोः प्रसादाल्लब्धतत्त्वमसीति वाक्यतः श्रुतमात्मजीवयोरैकात्म्यं विज्ञाय मननिदिध्यासनपरिपाकाभ्यां साक्षात्कृत्य । च एवार्थः । साक्षात्कृत्यैव सुखी भवेत् सकलदुःखहीनो भवेदित्यर्थः । अप्रकम्पनः विषयाभिलाषाक्षोभितान्तःकरणः । रा० ।

---

1. ग-च-छ '-यीऽप्यन्न-' । 2. क-ख-घ '-रज्ञ-' । 3. क-ख-ग-घ-च '-मपि क्रि-' ।
4. क 'यम्नाय' । 5. छ '-गतेर्हि' । 6. क-ख-ग-घ-च-छ '-र्थौ पर-' ।

प्रत्यक्‌परोक्षादिविरोधमात्मनोर्विहाय संगृह्य तयोश्चिदात्मताम् ।
संशोधितां लक्षणया च लक्षितां ज्ञात्वा स्वमात्मानमथाद्वयो भवेत् ॥ २६ ॥
[1]एकात्मकत्वाज्ज[2]हता न सम्भवेत् [3]तथा जहल्लक्षणया विरोधतः ।
सोऽयंपदार्थाविव भागलक्षणा युज्येत तत्त्वम्पदयोरदोषतः ॥ २७ ॥

---

वाक्यार्थविज्ञानविधौ आदौ पदार्थावगतिः पदार्थज्ञानं कारणमित्यन्वयः । तत्त्वंपदार्थोपरमे विरुद्धपरोक्षत्वापरोक्षत्वादिविशिष्टत्वांशोपरमे तत्त्वंपदार्थोपरमात्मजीवकावसीतीति अत्र यकारलोपेऽपि सन्धिश्छान्दसः ।

२६ । नरो० । अथ मुमुक्षुर्जीवपरयोरैकात्मत्वमात्मनि जानीयादित्याह—प्रत्यक्‌परोक्षादिविरोधमिति पद्येन । प्रत्यक्‌परोक्षादिविरोधं विहाय तयोर्लक्षणया लक्षितां चिदात्मतां संगृह्य स्वमात्मानमर्थात्तां ज्ञात्वा अथाद्वयो भवेदिति योजना । प्रत्यक्‌परोक्षादिविरोधमिति विरुद्धं प्रत्यक्‌परोक्षत्वादीत्यर्थः । आदिपदेन अपरोक्षत्वादेः परिग्रहः । संशोधिताम् अध्यारोपापवादाभ्यामिति शेषः । वस्तुनि अवस्त्वारोपोऽध्यारोपः । अवस्तु च अज्ञानादिसकलजडसमूहः, अपवादो नायं सर्प इति रज्जुविवर्त्तस्य सर्पस्य रज्जुमात्रत्ववद् वस्तुविवर्त्तस्यावस्तुनोऽज्ञानादेः प्रपञ्चस्य वस्तुमात्रत्वम् ।

२७ । नरो० । ननु जडसंयोगादात्मनो जडत्वं कथं न स्यात् । तथा चोक्तमत्रैव ग्रन्थे—

---

२५ । महावाक्यं विवरीतुं वाक्यार्थस्य पदार्थबोधपूर्वकत्वमाह—आदाविति । विधानतः भ्रमप्रमादराहित्येन वाक्यार्थविज्ञानस्य विधावुत्पत्तौ । आदौ प्रथमं मुख्यमिति यावत् । पदार्थावगतिः कारणम् । हि प्रसिद्धम् । तस्य पदत्रयं तत्त्वमसीति । तत्र तत्पदार्थः परमात्मा सर्वज्ञत्वादिगुणः, त्वंपदार्थो जीवः, अनयोस्तत्त्वंपदार्थयोरैकात्म्यं तद्बोधकमसीति पदम् । रा० ।

२६ । ननु सर्वज्ञत्वादिगुणस्येशस्य किञ्चिज्ज्ञत्वधर्मवता जीवेनैकात्म्यं विरुद्धमित्याशङ्क्याऽऽह—प्रत्यगिति । अहंबुद्धिवेद्यत्वं प्रत्यक्त्वं जीवधर्मः, परोक्षत्वमीशधर्मस्तदादिधर्मकृतमात्मनोः परमात्मजीवात्मनोर्विरोधं विहाय त्यक्त्वा तयोः संशोधितां युक्तिभिः सम्यग्विचारितां तत्त्वंपदार्थाभ्यां शक्त्यभावेऽपि वक्ष्यमाणप्रकारया लक्षणया लक्षितां चिदात्मतां संगृह्य तत्त्वंपदोपस्थितिविषयां कृत्वा स्वमात्मानं तथा ज्ञात्वाऽथ एकात्मज्ञानानन्तरमद्वयो भवेत् चित्स्वरूपतां प्राप्त इव भवेत् । पूर्वमपि तत्स्वरूप एव विस्मृतकण्ठचामीकरन्यायेन च तत्प्राप्तिरत इवेत्युक्तम् । अयं भावः—तत्त्वंपदयोर्द्वावर्थौ—वाच्यो लक्ष्यश्च, तत्र तत्पदस्य मायोपाधिः सर्वज्ञत्वादिविशिष्टो वाच्यः, त्वंपदस्यापि किञ्चिज्ज्ञत्वादिविशिष्टो मायाकार्याविद्योपाधिरविद्यावदन्तःकरणोपाधिर्वाच्यः, उभयोरपि विशेषणांशत्यागेन शुद्धश्चिदात्मा लक्ष्यः, तत्र वाच्ययोर्विरुद्धधर्मकत्वादैक्यासम्भवेऽपि लक्ष्ययोरैक्यं निर्बाधमेवेति । रा० ।

२७ । उक्तलक्षणास्वरूपमाह—एकात्मकत्वादिति । जहती लक्षणा जहत्स्वार्थलक्षणा यथा गङ्गायां घोष इत्यत्र गङ्गापदार्थस्य प्रवाहस्य घोषाधारतानुपपत्त्या सर्वथा तत्परि-

---

१. छ-पुस्तके अयं श्लोको नास्ति, ग 'ऐकात्म-' । २. क-ख-ग-घ-च-छ '-हती' । ३. क-ख-ग-घ-च छ 'तथाऽजह-' ।

रसादिपञ्चीकृतभूतसम्भवं भोगालयं दुःखसुखादिकर्मणाम् ।
शरीरमा[1]द्यन्तवदादिकर्मजं मायामयं स्थूलमुपाधि[2]मात्मनः ॥ २८ ॥

जडस्य चित्समायोगाच्चित्त्वं भूयाच्चितेस्तथा ।
जडसङ्गाज्जडत्वं हि जलाग्न्योर्मेलनं यथा ॥

इत्यत आह—एकात्मकत्वाज्जडता न सम्भवेत्तथेति । ऐकात्म्यज्ञानेन अज्ञानतत्कार्यबाधितत्वमिति भावः । किंविधाऽत्र लक्षणेत्यपेक्षायामाह—जहल्लक्षणयेत्यादि । जहल्लक्षणया विरोधतः विरोधात् तत्त्वंपदयोरदोषतः 'सोऽयं'पदार्थाविव भागलक्षणा युज्येत इति सम्बन्धः । जहल्लक्षणया विरोधत इति अशेषवाच्यार्थत्यागे तात्पर्याभावाद् विरोध इति । 'सोऽयं'पदार्थाविवेति 'सोऽयं'पदार्थयोरिवेत्यर्थः । सोऽयंपदार्थान्वितानां पदे वाक्ये पदार्थे वाक्येऽर्थे च लक्षणास्वीकारादविरोधः । भागलक्षणेति यत्र विशिष्टवाचकशब्द एव एकदेशं विहाय एकदेशे वर्त्तते तत्र भागलक्षणा । तथा हि—यथा तत्कालविशिष्टदेवदत्तवा[चक'स'शब्दैतत्का ?]......लविशिष्टदेवदत्तवाचकायंशब्दौ विरुद्धतत्कालविशिष्टत्वरूपांशौ परित्यज्य पिण्डमात्रं लक्षयतः, तथा परोक्षत्वादिविशिष्टचैतन्यवाचकतच्छब्दापरोक्षत्वादिवाचकत्वंशब्दौ विरुद्धपरोक्षत्वादिविशिष्टत्वादि(?) रूपांशौ परित्यज्य चैत्यन्यमात्रं लक्षयतः ।

२८ । नरो० । उपाधिभेदात् पृथक्स्थितं स्वात्मानमात्मनि क्रमादवधारयितुमुपदेष्टुमादौ उपाधिं दर्शयति—रसादीति त्रिभिः । रसादीनि पृथ्व्यादीनि यानि पञ्चीकृतानि भूतानि तेभ्यः सम्भव उत्पत्तिर्यस्य तत्तथा । पञ्चीकरणप्रकारो यथा—आकाशादिषु पञ्चसु एकैकं समं द्विधा विभज्य तेषु दशसु भागेषु प्राथमिकान् पञ्च भागान् प्रत्येकं चतुर्धा संविभज्य चतुर्णां भागानां स्वस्वद्वितीयभागत्यागेन भागान्तरेषु योजनमिति । आद्यन्तवत् जन्मनाशवत् । आदिकर्मजं प्राक्तनकर्मजन्यमित्यर्थः ।

---

त्यागेन तीररूपार्थलक्षणा सा प्रकृते न, एकात्मत्वात्, विशेष्यांशस्यैकत्वात् सर्वथा स्वार्थत्यागाभावात् । तथाऽजहल्लक्षणाऽजहत्स्वार्थलक्षणावत्त्वमपि अत्र न सम्भवति । यथा—काकेभ्यो दधि रक्ष्यतामित्यादौ काकपदस्य स्वार्थात्यागेनैव दध्युपघातके लक्षणा । साऽपि न । विरोधतः विशेषणत्यागेन सर्वथा त्यागाभावात् । अतो भागलक्षणजहदजहल्लक्षणा युज्यते । अदोषतः पूर्वोक्तदोषाभावात् । विशेष्यांशस्यात्यागाद्विशेषणांशस्य त्यागाच्च । तत्र दृष्टान्तः—सोऽयंपदार्थाविव । यथा सोऽयं देवदत्त इत्यत्र तद्देशादिविशिष्टोऽतीतानुभवविषयो वा तत्पदार्थः, एतद्देशादिविशिष्टोऽनुभूयमानो वेदंशब्दार्थः । तयोश्च विरुद्धविशेषणकत्वादैक्यासम्भवेन देशादिरूपविशेषणत्यागेनानुभवगतातीतत्वादिविशेषणत्यागेन वा लक्षणयैक्यं तद्वदिति भावः । रा० ।

२८ । अथ त्याज्यत्वाय जीवोपाधिमाह—रसादीति । रसा पृथ्वी आदिर्येषां तानि पञ्चीकृतानि यानि भूतानि तेभ्यः सम्भवो यस्य तत् । पञ्चीकरणञ्चेत्थम्—एकैकं भूतं द्विधा विभज्य

---

1. च '-द्यं दुरितादि' । 2. च-छ '-रात्मनः' ।

सूक्ष्मं मनोबुद्धि[1]रहंक्रियेन्द्रियैः प्राणैरपञ्चीकृतभूतसम्भवम् ।
[2]भोक्तुः सुखादे[3]रनुसाधनं भवेच्छरीरमन्यद् विदुरात्मनो बुधाः ॥ २९ ॥
अनाद्यनिर्वाच्यमपीह कारणं मायाप्रधानन्तु परं [4]शरीरकम् ।
उपाधिभेदात्तु[5] यतः पृथक्स्थितं स्वात्मानमात्मन्यवधारयेत् क्रमात् ॥ ३० ॥

---

२९। नरो०। मनोबुद्धिरहंक्रियाश्रयैः (?) प्राणैर्मिलित्वा अपञ्चीकृतभूतसम्भवं भोक्तुः सुखादेः साधनम् अन्यत् स्थूलादन्यदात्मनः सूक्ष्मं शरीरं भवेदिति बुधा विदुरित्यन्वयः । अहंक्रिया च अहङ्कार इन्द्रियाणि च तैस्तथा । अपञ्चीकृतभूतसम्भवं पञ्च······न्यमित्यर्थः । तदुक्तम्—

पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् ।
अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् ॥ इति ।

३०। नरो०। ननु क्षणभङ्गुरशरीरनाशादेव मुक्तिर्भविष्यति मुमुक्षुः कथं मोक्षाय यतते इत्यत आह—अनाद्यनिर्वाच्यमिति । प्रवाहरूपत्वादनादित्वम् अनिर्वाच्यत्वञ्च, अनिर्वाच्यत्वं वक्तुमशक्यत्वम्, कारणं बन्धस्येति शेषः । मायैव प्रधानं यत्र तत्तथा । परं केवलम् । इदानीं स्वस्मिन् स्वात्मानमवधारयितुमुपदिशति—उपाधिभेदात्त्वित्यर्धेन । अत उपाधिभेदात् पृथक् स्थितं पृथक् स्थितिः, अतः क्रमात् स्वात्मानमात्मन्यवधारयेदित्यन्वयः ।

---

तत्रैकं भागं चतुर्धा विभज्य तेषां भागानां स्वेतरभूतचतुष्टयार्धभागचतुष्टये संयोजने एकैकं भूतं पञ्चात्मकं भवति भागाधिक्याच्च प्रातिस्विकतया भूरादिव्यवहारोऽपि । सुखदुःखयोरादीनि यानि कर्माणि तेषां भोगस्तत्कर्मजसुखदुःखानुभवस्तस्याऽऽलयमाश्रयभूतमाद्यन्तवत् उत्पत्तिनाशयोगि आदिकर्मजं प्राग्भवीयकर्मजन्यं मायामयं परंपरया मायाविकारः तद्विकारभूतविकारत्वात्, एतच्छरीरमात्मनः स्थूलमुपाधिं वदन्तीति शेषः । रा० ।

२९। अथ सूक्ष्मोपाधिमाह—सूक्ष्ममिति । बुधा अन्यत् स्थूलशरीरविलक्षणं शरीरं लिङ्गदेहाख्यमात्मन उपाधिं विदुः । तत्स्वरूपमाह—सूक्ष्मं चक्षुराद्यविषयः मनोबुद्धिदशेन्द्रियैः प्राणैश्च युतम् । सङ्कल्पात्मकं मनः, निश्चयात्मिका बुद्धिः, घ्राणरसनाचक्षुस्त्वक्श्रोत्रेति पञ्च ज्ञानेन्द्रियाणि, वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाणि, प्राणापानव्यानोदानसमानाश्च प्राणाः, तैर्युतमेतत् सप्तदशसमुदायात्मकम् । तदाधारभूतान्याह—अपञ्चीकृतभूतसम्भवं तेभ्य उत्पन्नमत एवादृश्यम् । तथा भोक्तुः सुखदुःखादेः सुखदुःखाद्यनुभवस्यानुसाधनम्, स्थूलशरीरस्यैतदनुगतस्यैव भोगसाधनमिति भावः । एतद्वियोगेनैव मरणव्यवहार इति बोध्यम् । रा० ।

३०। इति जीवोपाधिद्वयमुक्त्वा ईशोपाधिमाह—अनादीति । अनादि उत्पत्तिहीनम् । नानाविधपरिणामशालितया परिणामरूपेण नश्वरमिति अनादित्वमात्रोक्त्या सूचितम् । अनिर्वाच्यं

---

1. क-ख-घ '-दशेन्द्रियैर्युत' । 2. ग-च 'भोक्तु' । 3. ग-च-छ '-रपि' । 4. ग 'शरीरम्' । 5 च '-त्र' ।

कोशेषु[1] पञ्चस्वपि तत्तदाकृतिर्विभाति सङ्गात् स्फटिकोपलो यथा।
असङ्गरूपोऽयमजो[2] यतोऽद्वयो विज्ञाय तेऽस्मिन्[3] परितो विचारिते॥ ३१॥
बुद्धेस्त्रिधा वृत्तिरपीह दृश्यते स्वप्नादिभेदेन गुणत्रयात्मनः।
अन्योऽन्यतोऽस्मिन् व्यभिचारतो मृषा नित्ये परे ब्रह्मणि केवले शिवे॥ ३२॥

---

३१। नरो०। ननु अन्नमयादिकोशभेदेनाऽऽत्मनो नानाविधत्वमेव भवितुमर्हतीति त्वया एकविधत्वं कथमुक्तमित्यत आह—कोशेष्वित्यादि। यतोऽसङ्गरूपोऽजोऽद्वयोऽयं पञ्चसु कोशेषु सङ्गादासक्तेस्तत्तदाकृतिर्विभाति, यतोऽस्मिन् विषये अविचारतोऽविचारेऽयं न विज्ञायते इति योजना। तस्यैव तस्यैव आकृतिर्यस्य सा साकृतिर्यस्येति वा स तथा। दृष्टान्तमाह—स्फटिकोपलो यथेति। नीलपीतादिषु सङ्गात् स्फटिकोपलो यथा तत्तदाकृतिर्विभातीत्यर्थः।

३२। नरो०। तर्हि कोऽत्र विचार इत्यपेक्षायामाह—बुद्धेरित्यादि। इह गुणत्रयात्मनो जीवस्य स्वप्नादिभेदेन बुद्धेरन्तःकरणस्य त्रिधा वृत्तिर्दृश्यते, अतोऽन्यतो व्यभिचारतोऽस्मिन् नित्ये सदैकरूपे परे मूलकारणे केवले निर्धर्मके शिवे मङ्गलरूपे ब्रह्मणि मृषा मिथ्येति सम्बन्धः। आदिपदेन जाग्रत्सुष्वापयोर्ग्रहणम्। गुणत्रयं सत्त्वरजस्तमांसि आत्मा स्वरूपं यस्य तस्य

---

सत्त्वासत्त्वाभ्यां निर्वक्तुमशक्यं कारणं सकलप्रपञ्चस्य जनकम् ईदृशी माया तु ब्रह्मणः परम् ईश्वरव्यवहारसम्पादकत्वादुत्कृष्टं प्रधानं शरीरकम्। स्वार्थे कः। एवमुपाधिभेदादेकमेव चैतन्यं यतः पृथक् स्थितं जीव ईश इति भेदबुद्धिविषयमतो लक्षणयोपाधिपरित्यागेन स्वात्मानमात्मनि अवधारयेदभेदेन जानीयात्। क्रमाच्छ्रवणमनननिदिध्यासनक्रमेणेत्यर्थः। रा०।

३१। अथ वाक्यार्थविचारफलमाह—कोशेष्विति। आनन्दमयस्य ब्रह्मत्वे अन्नमयप्राणमयमनोमयविज्ञानमयेषु चतुर्षु कोशेषु तत्तत्सङ्गात्तत्तदाकृतिर्विभाति, यथा जपादिसङ्गात् स्फटिकोऽनेकाकृतिर्भाति। आनन्दमयस्यापि जीवत्ववादिनान्तु तेन सह पञ्चसु कोशेष्विति बोध्यम्। अस्मिन् महावाक्ये परितो विचारिते सम्यग् विचारिते सत्ययमात्माऽसङ्गरूपः अन्नमयादिभिः सङ्गरहितः, 'असङ्गो न हि सज्जते' इति श्रुतेः। अजोऽद्वयश्च विज्ञायते। स्थूलोऽहमित्यादिस्त्वज्ञस्य तत्तत्कोशप्रसङ्गात् प्रतीतिः स्फटिकवत्, तत्त्वज्ञस्य तु न तथा प्रतीतिरिति भावः। एवञ्च तत्तदुपाधिकृततद्रूपताप्रतीतिनिरास एव विचारफलमिति भावः। रा०।

३२। जाग्रदाद्यवस्थाऽपि बुद्धिधर्मो नाऽऽत्मधर्म इत्याह—बुद्धेरिति। इह आत्मनि स्वप्नादिभेदेन जाग्रत्स्वप्नसुषुप्तिभेदेन या त्रिधा वृत्तिर्दृश्यते साऽपि गुणत्रयात्मनः सत्त्वरजस्तमोरूपगुणत्रयस्वरूपाया बुद्धेर्धर्मः, उक्तावस्थात्रयस्योक्तमूलकत्वात्। एतदवस्थात्रयस्यास्मिन्नवस्थानं व्यभिचारतो मृषा बुद्ध्यध्यासनिबन्धनं न तु वास्तवमित्यर्थः। अन्योऽन्यतो व्यभिचारत-

---

1. क-ख-घ '-ष्वय तेषु तु'। 2. च-छ '-जोऽयमद्वयो'। 3. ग '-न्न ततो विचारतः', च '-न्नभितो विचारतः'।

देहेन्द्रियप्राणमनश्चिदात्मनां सङ्घादजस्रं[1] परिवर्त्तते धियः ।
वृत्तिस्तमोमूलतयाऽज्ञलक्षणा यावद्भवेत्तावदसौ [2]भवेद्भवः ॥ ३३ ॥
नेतिप्रमाणेन [3]निराकृताखिलो हृदा समास्वादितचिद्घना[4]मृतः ।
त्यजेदशेषं जगदात्तसद्रसं पीत्वा यथाऽम्भः प्रजहाति तत्फलम् ॥ ३४ ॥

---

तथा। तथाच—विद्यान्तःकरणस्थूलशरीरावच्छिन्नो जाग्रदवस्थाभिमानी विश्वः स एव स्थूलशरीराभिमानरहितः उपाधिद्वयोपहितः स्वप्नावस्थाभिमानी तैजसः। शरीरान्तःकरणोपाधिद्वयरहितोऽन्तःकरणसंस्कारावच्छिन्नाविद्यामात्रोपहितः सुषुप्त्यवस्थाभिमानी प्राज्ञः अन्योन्यतो व्यभिचारत इति जाग्रदवस्थायां स्वप्नावस्थासुषुप्त्यवस्थाभावः, एवं···[ स्वप्ने ? ] जाग्रदवस्थासुषुप्त्यवस्थाभावः। परमार्थतस्तु स्वप्नादिव्यवस्थैव नास्तीति। तथाचोक्तं श्रीभगवच्छङ्करचरणैः—

न जाग्रन्न मे स्वप्नको वा सुषुप्तिर्न विश्वो न व...ज्ञको... ।
अविद्यात्मकत्वात् त्रयाणां तुरीयस्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ इति ।

३३। नरो०। देहेन्द्रियेति। देहेन्द्रियप्राणमनश्चिदात्मनां मिलितसङ्घात् समूहात् अजस्रात् धियोऽन्तःकरणस्य [ वृत्तिः परि-? ]वर्त्तते भवति। सा यावत् तमोमूलतया अज्ञलक्षणा अहमज्ञ इत्यनुभवलक्षणा भवेत्तावदसौ भवः संसारो भवेदिति सम्बन्धः, मिलितानामिति शेषः। देहश्च इन्द्रियाणि च प्राणाश्च मनश्च चिदात्मा च तेषां तथा।

३४। नरो०। नेति प्रमाणेनेति। नेति प्रमाणेन निराकृताखिलः सन् हृदा समास्वादितचिद्घनामृतः सन् आत्मसद्रसं पीत्वा अशेषं जगत् त्यजेदित्यन्वयः। नेतिप्रमाणेन निराकृतानि निरस्तानि अखिलानि यस्य येन वा सः। तथाच श्रुतयः—'एकमेवाद्वितीयम्',

---

स्तत्स्यावस्थात्रयस्य स्वरूपतो मृषात्वात् तद्भानस्य मृषात्वमेव, स्वप्नकाले जाग्रत्सुषुप्त्योरभावात्। जाग्रति इतरद्वयस्याभावात् सुषुप्तावितरयोरभावात् परस्परं व्यभिचारो बोध्यः। आत्मनस्तदनाश्रयत्वं विशेषणैराह—नित्ये उत्पत्तिनाशशून्ये परे गुणत्रयातीते ब्रह्मणि व्यापके केवलेऽसङ्गे शिवे आनन्दरूपे एवम्भूते सदैकरसे परस्परव्यभिचारधर्माधानमसम्भवीति भावः। रा०।

३३। अथ त्याज्यत्वाय संसारमूलभूतां वृत्तिमाह—देहेति। एषां सङ्घात इतरेतराध्यासविषयात्। अजस्रं यावद्धि बुद्धेर्वृत्तिस्तमोमलतयाऽज्ञलक्षणाज्ञत्वज्ञापिका यावत् परिवर्त्तते तावद् भवोद्भवः संसारोद्भवो भवेत्। तमःपदं रजसोऽप्युपलक्षणम्। रजस्तमःप्रधाना बुद्धिः संसारहेतुत्वात् सर्वथा त्याज्येति भावः। रा०।

३४। कृतमहावाक्यविचारस्य कर्तव्यमाह—नेतीति। 'अथात आदेशो नेति नेति' इति प्रमाणेन निराकृतं मिथ्यात्वेन गृहीतम् अखिलं जगद् येन सः, ततो हृदा सत्त्वप्रधानेन मनसा

---

1. ग-च-छ '-स्रात्'। 2. क-ख-ग-घ 'भवोद्भवः'। 3. छ 'निबन्धितेऽखिले'। 4. ग '-स्तृतम्'।

कदाचिदात्मा न मृतो न जायते न क्षीयते नापि [1]विवर्धतेऽनवः ।
निरस्तसर्वातिशयः सुखात्मकः स्वयंप्रभः सर्वगतोऽयमद्वयः ॥ ३५ ॥

---

'अतोऽन्यदार्त्तम्' 'नेह नानास्ति किञ्चन' 'अथात आदेशो नेति नेती'त्याद्याः । समास्वादितं चिद्घनामृतं येन सः । आत्मैव आनन्दरूपब्रह्मैव सद्रसः सद्द्रवस्तं तथा । तथा चामरः 'श्रृङ्गारादौ विषे वीर्ये द्रवे रागे गणे रस' इति । यद्वा आत्मैव सद्रसः शोभनजलं तं तथा । तथाच नानार्थध्वनिमञ्जरी 'रसो जलं रसो हर्षो रसः श्रृङ्गारपूर्वकः । रसः काथादिनिर्यासे सारादपि रसो विषे ॥' इति । दृष्टान्तमाह—यथाऽम्भः प्रजहाति तत्फलमिति । मुक्ताफलं त्यजतीत्यर्थः । 'आकाशवत् सर्वगतो हि नित्य' इति श्रुतेः ।

३९ । नरो० । अविद्यमानं द्वयं यस्मात् स तथा । उक्तञ्च वार्त्तिके—

अव्यावृत्त्याऽननुगतं वस्तु ब्रह्मेति भण्यते ।
ब्रह्मार्थो दुर्लभस्तस्माद् द्वितीये सति वस्तुनि ॥ इति ।

---

सम्यगास्वादितं चिल्लक्षणं घनामृतं दुःखासंभिन्नं सुखं येन सः । स्वर्गादि तु परिणामदुःखत्वात् तत्संभिन्नमेव । एवम्भूतोऽशेषं जगद्देहेन्द्रियादिदृश्यसमूहं त्यजेत् हानोपादानबुद्धिविषयं कुर्यात् किन्तूदासीनस्तत्र भवेत् । ननु देहेन्द्रियादिभिरेव तज्ज्ञानलाभात् कथमुपजीव्यस्य त्याग इत्याशङ्क्य दृष्टान्तदर्शनेन परिहरति—यथा तृषावान् आर्त्तः सद्रसो माधुर्यं येन तादृशं नारिकेल-नारङ्गादिफलान्तर्वर्त्यम्भः पीत्वा तत्स्थानभूतं तत्फलं जहाति तत्रोदासीनो भवति तद्वत् सर्वदृश्य-सारांशो ब्रह्म तल्लाभे सति निःसारं दृश्यं नोपादेयं नापि हेयमिति भावः । यतो भयादि-सम्भावना तद्धेयमित्युच्यते । रा० ।

३९ । इतरस्यानित्यत्वेन तत्र वैराग्यार्थमात्मन एव नित्यत्वमाह—कदाचिदित्यादि, कदापीत्यर्थः । अनवः उत्पत्त्यनन्तरविद्यमानो हि नवः, तेन जन्मान्तरास्तित्वं व्यावर्त्तितम् । नवत्वाभावेनैव जीर्णत्वाभावादवस्थान्तरापत्तिरूपपरिणामोऽपि निरस्तः । अनेन जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते नश्यतीति षड्भावविकारराहित्यमुक्तम् । एवञ्चैतद्भिन्नं सर्वमुक्त-षड्भावविकारवत्त्वादनित्यमिति ततो विरज्येतेति बोधितम् । यत ईदृशोऽत एव निरस्तः सर्वस्य देहेन्द्रियादेरतिशयो महत्त्वं येन स्वलाभात् सः । 'यल्लाभान्नापरो लाभः' इति श्रुतेः । यतः सुखात्मकः आनन्दस्वरूपः स्वयंप्रभः देहेन्द्रियादिस्तु दुःखस्वरूपः परप्रकाशश्च, 'यस्य भासा सर्वमिदं विभाति' इति श्रुतेः । सर्वगतो व्यापकः । अयमहंबुद्धिविषयः प्रत्य-गात्माऽपि अद्वयः उक्ताद्वयब्रह्मस्वरूप एव ततोऽतिरिक्त इति भावः, 'अयमात्मा ब्रह्म' इति श्रुतेः । रा० ।

---

1. ग 'विकुर्वतेऽमरः', च 'च वर्धतेऽमरः', छ 'विवर्धते परः' ।

[1]एवं हि विज्ञानमये सुखात्मके कथं भवो दुःखमयः प्रतीयते ।
अज्ञान[2]तोऽध्यासवशात् प्रकाशते ज्ञाने [3]विलीयेत विरोधतः क्षणात् ॥ ३६ ॥
यदन्यदन्यत्र विभाव्यते भ्रमा[4]दध्यासमित्याहुरमुं विपश्चितः ।
असर्पभूतेऽहिविभावनं यथा रज्ज्वादिके तद्वदपीश्वरे जगत् ॥ ३७ ॥
विकल्पमायारहिते चिदात्मकेऽहङ्कार एष प्रथमः प्रकल्पितः ।
अध्यास एवाऽऽत्मनि सर्वकारणे [5]निरामये ब्रह्मणि केवले परे ॥ ३८ ॥

३६। नरो०। आत्मनि संसारित्वभावानुपसंहरति—एवमित्यादिना। विज्ञानमये विज्ञानस्वरूपे। भवः संसारः। दुःखमयः प्रचुरदुःख इत्यर्थः। ननु तर्हि कथं संसारित्वेनाऽऽत्मदर्शनमित्यत आह—अज्ञानत इत्यादि। अज्ञानतोऽध्यासवशात् भवः प्रकाशते, ज्ञाने तत्त्वज्ञाने विरोधतो विरुद्धत्वात् क्षणात् क्षणं प्राप्य विलीयेत इति वाक्यार्थः।

३७। नरो०। कोऽध्यास इत्यपेक्षायामाह—यदन्यदित्यादि। यदन्यदन्यत्र भ्रमाद् विभाव्यते आरोप्यते विपश्चितः पण्डिताः अमुमध्यासमित्याहुरित्यन्वयः। यदिति क्रियाविशेषणम्। तमेव सदृष्टान्तमाह—असर्पभूते रज्ज्वादिके यथाऽहिविभावनं सर्पाध्यास ईश्वरेऽपि तद्वद् जगद्विभावनमित्यर्थः। यद्वा जगदिति विभाव्यते इत्यनुषज्यते। रज्ज्वादिके इति आदिपदेन दण्डादेः परिग्रहः।

३८। नरो०। आदौ कस्याध्यास इत्यपेक्षायामाह—विकल्पमायारहिते इत्यादि। विकल्पमायारहिते परमार्थतो भेदाविद्याशून्ये इत्यर्थः। अहङ्कारोऽन्तःकरणं प्रकल्पितः,

३६। नन्वेवंविधे विकारशून्ये आत्मनि जन्ममरणादिप्रवाहरूपसंसारभानं कथमिति शङ्कते—एवंविधे इति। दुःखमयो दुःखप्रचुरः। उत्तरयति—अज्ञानमूलको योऽध्यासो देहान्तःकरणादौ अहंममेत्यध्यासस्तद्वशात्। एवञ्च भ्रान्तिरूपा तत्प्रतीतिरिति भावः। नन्वेवं कथं संसारस्य निवृत्तिस्तत्राऽऽह—ज्ञानेति। आविर्भूत इति शेषः। ज्ञानस्याज्ञानविरोधित्वात् तदुत्पत्तिक्षण एव कारणभूताज्ञाननाशात् तत्कार्यसंसारस्यापि विलय इत्यर्थः। यथा रज्जुसर्पस्य लय इत्यर्थः। रा०।

३७। अथाध्यासलक्षणमाह—यदन्यदिति। यदन्यत् सर्पादिकम् अन्यत्र रज्ज्वादौ भ्रमाद् भ्रमजनकाद्दोषाद् विभाव्यते विज्ञाप्यते अमुं विपश्चितो विद्वांसोऽध्यास इत्याहुः। यथा सर्पभूते रज्ज्वादौ अहिविभावनं सर्पारोपो रज्ज्वबुद्धिमूलकस्तद्वदीश्वरेऽपि जगद्देहादिसंसारात्मकं सर्वं विभाव्यते आत्मज्ञानाभावाद् यथार्थतया ज्ञायते। रा०।

३८। आत्मनि जगद्भाने कीदृशोऽध्यासो निमित्तं तदाह—विकल्पेति। सर्वविकल्प-

1. क-ख-ग 'एवविधे ज्ञान-', छ 'एवञ्च विज्ञान-'। 2. छ '-तोऽदृष्टव-'। 3. छ 'प्रली-'। 4. छ '-दध्यात्ममित्याहुरविद्यया स्थिताः'। 5. छ 'निराश्रये'।

इच्छादिरागादिसुखादि धर्मकाः [1] [2]सदा धियः संसृतिहेतवः [3]परे।
यस्मात् प्रसुप्तौ तदभावतः परः सुखस्वरूपेण विभाव्यते हि नः ॥ ३९ ॥
अनाद्यविद्योद्भवबुद्धिबिम्बितो जीवः प्रकाशोऽयमितीर्यते [4]चितः।
आत्मा धियः साक्षितया पृथक् स्थितो बुद्ध्या परिच्छिन्नपरः स एव हि ॥४०॥

---

परमार्थतो नास्तीत्यर्थः। यतोऽस्य निरामये निरुपद्रवे ब्रह्मणि बृहति केवले निर्धर्मके परे परमे मूलकारणे वा। आत्मन्यध्यास एव सर्वकारणं सर्वेषाम् अध्यस्यमानेच्छादिरागादिसुखादीनां कारणम्, आदौ आत्मनि अन्तःकरणस्याध्यासः पश्चात् अन्तःकरणावच्छिन्ने आत्मनि अन्तःकरण-धर्माणामध्यास इत्यर्थः।

३९। नरो०। नन्वहमिच्छावान् अहं सुखी अहं दुःखीत्याद्यनुभवादिच्छादिरागादि-सुखादिधर्मा आत्मन एव भवितुमर्हन्ति न त्वन्तःकरणस्येत्यत आह—इच्छादिरागादिसुखादि-धर्मिका इत्यादि। धियोऽन्तःकरणस्य इच्छादिरागादिसुखादिधर्मकाः परे परमात्मनि सद्यः संसृतिहेतवो भवन्ति। अत्र स्वार्थे कप्रत्ययो बोध्यः। एषामन्तःकरणधर्मत्वे हेतुर्यस्मादित्यादि। प्रसुप्तौ सुषुप्तौ। तदभावतः इति, ज्ञानशक्त्यज्ञानशक्त्यवच्छिन्नस्येति विशेषणोपादानं क्रियाशक्त्य-वच्छिन्नस्यान्तःकरणस्य स्थितिज्ञानार्थम्, अन्यथा तदानीं श्वासादिर्न स्यात् तदवच्छिन्नस्य सवासनस्यान्तःकरणस्याभावादित्यर्थः। परः परमात्मा। विभाव्यते अनुभूयते। न इति सम्बन्धविवक्षायां षष्ठी, अस्माभिरित्यर्थः।

४०। नरो०। तर्हि को जीव इत्यपेक्षायामाह—अनाद्यविद्योद्भवबुद्धिबिम्बित इत्यादि। अनादि ..[या अविद्या ?] तस्याः उद्भवो यस्यास्तस्यां बुद्धौ अन्तःकरणे बिम्बितः प्रतिबिम्बितोऽयं

---

कारणमायारहिते वस्तुतत्सङ्गरहिते चिदात्मके चित्स्वरूपे सर्वकारणे निरामये दुःखासंभिन्ना-नन्दमये केवले सर्वविकारशून्ये परे दृश्यविलक्षणे ब्रह्मणि व्यापके आत्मनि प्रथममहंकारः कल्पितः स एवाध्यासः। अहंबुद्ध्यात्मकोऽध्यास एव सर्वसंसारकारणमिति भावः। रा०।

३९। बुद्धिनिष्ठ एव संसारो न त्वात्मनिष्ठ इत्यत्रान्वयव्यतिरेकौ प्रमाणयति—इच्छादीति। परे सर्वसाक्षिणि आत्मनि संसृतिहेतवः भासमानसंसारकारणं सदा कालत्रयेऽपि इच्छादिरागादिसुखादिधर्मिकाः इच्छोपेक्षे रागद्वेषौ सुखदुःखे इत्येवमादिद्वन्द्वधर्मिका धिय एव, धीषु सतीषु संसार इत्यन्वयमुक्त्वा तद्व्यतिरेकमाह—यस्मात् कारणात् प्रसुप्तौ तदभावाद् धीवृत्त्यभावात् पर आत्मा नोऽस्माभिः। तृतीयार्थे षष्ठी। सुखरूपेण स्वस्वरूपमात्रेण विभाव्यते निश्चीयते, न तु संसारित्वेनेति भावः। सुप्तोत्थितस्तु सुखमहमस्वाप्समिति प्रत्यभिज्ञानुभवात्तदात्मस्वरूपनिश्चयोऽस्तीति तात्पर्यम्। रा०।

४०। पुनस्तत्त्वंपदार्थस्वरूपमाह—अनादीति। अनादिर्या अविद्या तत उद्भवो यस्या

---

1. क-ख-घ '-धर्मिकाः'। 2. क-घ 'सदा'। 3. च 'परम्'। 4. च 'विभुः'।

चिद्बिम्बसाक्ष्यात्मधियां प्रसङ्गतस्त्वेकत्र वासादनलाक्त[1]लोहवत् ।
अन्योन्य[2]मध्यासवशात् [3]प्रतीयते जडाजडत्वञ्च चिदात्मचे[4]तसोः ॥ ४१ ॥
गुरोः सकाशादपि वेदवाक्यतः सञ्जातविद्यानुभवो [5]निरीक्ष्य तम् ।
[6]स्वात्मानमात्मस्थमुपाधिवर्जितं त्यजेदशेषं जडमात्मगोचरम् ॥ ४२ ॥

---

चितश्चैतन्यस्य प्रकाशो जीव इतीर्यते, हि यतो य आत्मा धियोऽन्तःकरणस्य साक्षितया पृथक् स्थितः, स एव बुद्ध्या अन्तःकरणेन परिच्छिन्नः ।

४१ । नरो० । तर्हि कथमजडस्याऽऽत्मनो जडत्वं प्रतीयते कथं वा जडस्यान्तःकरणस्याजडत्वं प्रतीयते इति चेत्तत्राऽऽह—चिद्बिम्बसाक्ष्यात्मधियामित्यादि । एकत्र वासाद् एकस्थाने वासं प्राप्य स्थितानां चिद्बिम्बसाक्ष्यात्मधियाम् आत्मचेतसोः प्रसङ्गात् प्रकर्षेणाम(?)लकादासत्तेर्वा अनलाक्तलौहवद् वह्निसंपृक्तलौहस्येव अन्योन्यमध्यासवशात् जडाजडत्वं प्रतीयते इति योजना। चिद्बिम्बञ्च चित्प्रतिबिम्बम्, साक्षी च तद्द्रष्टा, आत्मा च शरीरम्, धीश्चान्तःकरणम्, तासां तथा ।

४२ । नरो० । गुरोः सकाशाद् वेदवाक्याच्च संजातो विद्यानुभवो यस्य स तथा । आत्मगोचरं स्वात्मविषयकम् ।

---

बुद्धेरन्तःकरणस्य तत्र बिम्बितः प्रतिबिम्बितश्चितः प्रकाशः सजीव इतीर्यते, आत्मा परात्मा धियः साक्षितया धीधर्मासङ्गेनैव पृथक् स्थितः अन्तर्यामितयेत्यर्थः । जीवोऽहं सुखीत्यादिप्रकारेणान्तःकरणधर्माध्यासवान्, परमात्मा तु साक्षितया सर्वत्र विद्यमानोऽपि न तथेति भावः । अत एव बुद्ध्यादिपरिच्छिन्नपरः बुद्धिलक्षणपरिच्छेदरहितः, अत एव परः । एवञ्च ज्ञानेन प्रतिबिम्बाधारविलयप्रतिबिम्बस्य विलयात् स जीवः, स एव परमात्मैव हि प्रसिद्धम्, स इत्यस्य चावृत्तिर्बोध्या । रा० ।

४१ । अथ बुद्ध्यात्मनोः परस्पराध्यासवशात् परस्परधर्मभानमिति दार्ढ्याय पुनराह—चिद्बिम्बेति । चिदात्मचेतसोरन्योन्याध्यासवशात् परस्परतादात्म्यारोपाज्जडत्वं प्रतीयते । चेतसो वृत्तीनां ज्ञानवत्त्वं जीवात्मनो जडत्वं प्रतीयते, अत एव ज्ञानाश्रय आत्मेति चित एव तार्किकव्यवहारः, जीवात्मनि जडात्मनि जडात्मा कथ्यते बुधैरिति स्मार्तव्यावहारश्च । अत्र हेतुः—चिदित्यादि । चिद्बिम्बं यस्य स चिदाभासः अक्षैः सहितः साक्षः सेन्द्रियः स चासावात्मा मनः धीरन्तःकरणं तेषां प्रकृष्टसङ्गादतिसन्निकर्षादध्यास इत्यर्थः । अनलाक्तलोहवत् अग्नितप्तलोहपिण्डवत्। अत्र दृष्टान्तः—अग्निधर्मो दाहकत्वं लोहधर्मश्च वर्त्तुलत्वाद्यनले भासते । तत्र हेतुः—एकत्र वासात् परस्पराविभागेन वृत्तेरित्यर्थः । तद्वदेतयोरपि परस्परधर्माध्यास इत्यर्थः । रा० ।

४२ । उक्तमेवार्थं दार्ढ्याय पुनराह—गुरोरिति । वेदवाक्यत इत्यनेन श्रवणं गुरोः सकाशा-

---

1. च '-लौह-' । 2. च-छ '-माधार-' । 3. छ 'प्रलीयते' । 4. छ '-तसः' । 5. छ '-निरीक्ष्यते' । 6. छ 'आत्मा-' ।

प्रकाशरूपोऽहमजोऽहमद्व[1]योऽसकृद्विभातोऽहमतीव निर्मलः ।
विशुद्धविज्ञान[2]मयो निरामयः सम्पूर्ण आनन्दम[3]यो ह्यविक्रियः ॥ ४३ ॥
सदैव मुक्तोऽहमचिन्त्यशक्तिमानतीन्द्रियज्ञानमविक्रियात्मकः ।
अनन्तपारोऽहमहर्निशं बुधैर्विभावितोऽहं हृदि वेदवादिभिः ॥ ४४ ॥

---

४३ । नरो० । निरीक्षणं कीदृगित्यपेक्षायामाह—प्रकाशरूपोऽहमित्यादि । प्रकाशरूप इत्यनेन प्रकाशान्तरानपेक्षत्वमुक्तम् । अजो जन्मरहितः । एतेनानादित्वं सूचितम् । सकृद्विभात इत्यनेन आत्मनः सूर्यादिवत्तिरोभावो नास्तीति सूचितम् । अतीव निर्मल इति रागादिदोषलेशोऽपि नास्तीत्यर्थः । अतिनिर्मलत्वे हेतुः—विशुद्धविज्ञानमय इति, विशुद्धविज्ञानस्वरूप इत्यर्थः । निरामयः निरुपद्रवः । सम्पूर्णो वृद्धिरहितः । सम्पूर्णत्वे हेतुः—अद्वय इति । आनन्दमयः आनन्दस्वरूपः अविक्रियः देहेन्द्रियादिविकाररहितः ।

४४ । नरो० । सदैवमुक्तः इन्द्रियाग्राह्यत्वबोधाय अतीन्द्रियज्ञानमित्युक्त...... पौनरुक्त्यम् । अविक्रियः कामादिविकाररहितः आत्मा अन्तःकरणं यस्य स तथा । बुधैर्विवेकिभिरहर्निशमहं विभावितो ध्यात इति सम्बन्धः ।

---

दपि । ततश्चानेन मननमुक्तम् । ताभ्यां सञ्जातो विद्यया ज्ञानरूपस्याऽऽत्मनोऽनुभवो यस्य सः । अनेन कृतनिदिध्यासन इत्यर्थः । तं चिदानन्दस्वरूपं स्वात्मानमुपाधिवर्जितं रहितोपाधिधर्ममात्मस्थं हृत्स्थं निरीक्ष्य अपरोक्षीकृत्याशेषं जडं दृश्यं त्यजेत् तत्रोदासीनो भवेदिति भावः । रा० ।

४३ । ज्ञेयं निरुपाधिकं स्वरूपं श्लोकद्वयेनाऽऽह—प्रकाशेति । अहं प्रकाशरूपः स्वप्रकाशः परप्रकाशहीनः । परप्रकाशरूपो यथा घटादिः । अजो जन्मादिहीनः, अद्वयः सजातीयद्वितीयरहितः, असकृद् विभातः सकृदपि परेण भासकान्तरेण प्रकाशितः सकृद्विभातः न सकृद्विभातोऽसकृद्विभातः 'न तत्र सूर्यो भाति न चन्द्रतारकम्' इति श्रुतेः, 'न तद् भासयते सूर्यः' इति स्मृतेश्च । अतीव निर्मलः मायाकृतावरणविक्षेपरहितः, विशुद्धविज्ञानघनः विशुद्धचिदेकरसः । निरामयः कर्तृत्वाभिमानरहितः । संपूर्णः देशकालपरिच्छेदहीनः । आनन्दमयः आनन्दरूपः । स्वार्थे मयट् । अक्रियः परिणामहीनः । रा० ।

४४ । सदैवेति । अहं सदैव कालत्रयेऽपि मुक्तः सर्वधर्मरहितः अचिन्त्यशक्तिमान् यः परमात्मा अतीन्द्रियज्ञानमिन्द्रियातिरिक्तज्ञानरूपः, 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह' इति श्रुतेः । अविक्रियात्मकोऽपरिणामी । अनन्तपारः अन्तः कालतः पारः परं तीरं तावविद्यमानौ यस्य, तेन देशकालपरिच्छेदहीनः । ईदृशो यः परमात्मा बुधैर्हृदि अहर्निशं विभावितः सोऽहमित्यर्थः । रा० ।

---

1. घ '-यः सकृ-' । 2. क-ख घ '-घनो' । 3 क-ख-ग-घ-च-छ '-योऽहमक्रियः' ।

एवं सदात्मानमखण्डितात्मना [1]विचार्यमाणस्य विशुद्धभावना ।
हन्यादविद्यामचिरेण कारकै रसायनं यद्वदुपासितं रुजः ॥ ४५ ॥
विविक्त आसीन उपा[2]रतेन्द्रियो विनिर्जितात्मा विमलान्तराशयः ।
विभावयेदेकमनन्यसाधनो विज्ञानदृक् केवल[3] आत्मसंस्थितः ॥ ४६ ॥

---

अत्र परमात्मना सहाभेदज्ञानादचिन्त्यशक्तिमत्त्वादीनि विशेषणान्यविविनपरमार्थतो वेति (?)

४५ । नरो० । एतादृग्ज्ञानस्य किं फलमित्यपेक्षायामाह—एवं सदात्मानमित्यादि । अखण्डितात्मना अखण्डानन्दरूपेण एवमभेदेन सदात्मानं विचार्यमाणस्य विचारयतो निरीक्षमाणस्य विशुद्धभावना निर्मलध्यानम् अचिरेण शीघ्रमविद्यां हन्यादित्यन्वयः । दृष्टान्तमाह—कारकैः कर्तृभी रसायनं यद्वदुपासितं रुज इति । कारकैरुपासितं सेवितं रसायनं यथा रुजो रोगान् हन्ति तथेत्यर्थः ।

४६ । नरो० । मुमुक्षुः कीदृशः सन् ध्यास्यतीत्यपेक्षायामाह—विविक्त इत्यादि । विविक्ते विजने उपारतानि संयतानि वशीकृतानि इन्द्रियाणि येन सः । अत एव विनिर्जितो वशीकृत आत्मा मनो येन सः । अत एव विमलो रागादिदोषरहितः ऽन्तराशयोऽन्तःकरणं यस्य सः । विभावयेत् ध्यायेत् । एकमिति अखण्डितात्मना अभेदेनाऽऽत्मानमिति पूरणीयम् । अविद्यमानानि अन्यसाधनानि यस्य सः । साधनानि—नित्यानित्यवस्तुविवेकेहामुत्रार्थफलभोगविरागशमादिषट्कसम्पन्मुमुक्षुत्वानि । नित्यानित्यवस्तुविवेकस्तावद् ब्रह्मैव नित्यं वस्तु ततोऽन्यदखिलमनित्यमिति विवेचनम् । ऐहिकानां स्रक्चन्दनवनितादिविषयभोगाणां कर्मजन्यतयाऽनित्यत्ववदामुष्मिकाणामपि अमृतादिविषयभोगाणामनित्यतया तेभ्यो नितरां विराग इहामुत्रार्थफलभोगविरागः । शमादयस्तु—शमदमोपरतितितिक्षासमाधानश्रद्धाः । शमस्तावत् श्रवणादिव्यतिरिक्तविषयेभ्यो मनसो निग्रहः । दमो बाह्येन्द्रियाणां तद्व्यतिरिक्तविषयेभ्यो निवर्त्तनम् ।

---

४५ । एवं भावनायाः फलमाह—एवमिति । उक्तरीत्या सदा आत्मानमखण्डितात्मना विषयानाकृष्टचित्तेन विचारमाणस्य ध्यायतः । धातूनामनेकार्थत्वात् चरमाण एव चारमाणः । स्वार्थेऽण् । विशुद्धभावना ब्रह्माकारान्तःकरणवृत्तिरुदेतीति शेषः । सा चोदिता कारकैर्देहान्तरप्रापककर्मभिः सहाविद्यामचिरेण शीघ्रमेव हन्यात् । यथोपासितं सेवितं रसायनं रुजो हन्यात् तद्वत् । रा० ।

४६ । तत्र ध्याने इतिकर्तव्यतामाह—विविक्त इति, निर्जन इत्यर्थः । आसीनो यथोचितपद्मासनाद्युपविष्टः । उपारतेन्द्रियः तेन शमदमादिसम्पन्नः । विनिर्जितात्मा प्राणायामादिभिर्जितान्तःकरणः । अत एव विमलान्तराशयो विशुद्धचित्तः । विज्ञानदृग्

---

1. क-ख-घ-च 'विचार-', च 'विभाव्यमानस्य'। 2. छ '-ह्निते-'। 3. च '-लमात्म-'।

विश्वं [1]यदेतत् परमात्मदर्शनं [2]विलोपयेदात्मनि सर्वकारणे ।
पूर्णश्चिदानन्दमयो[3]ऽवतिष्ठते न वेद बाह्यं न च किञ्चि[4]दान्तरम् ॥ ४७ ॥

---

मनसस्तद्व्यतिरिक्तविषयेभ्य उपरमणमुपरतिः, अथवा विहितानां कर्मणां विधिना परित्यागः। तितिक्षा शीतोष्णादिद्वन्द्वसहिष्णुता। निगृहीतस्य मनसः श्रवणादौ तदनुगुणविषये च समाधिः समाधानम्। गुरुवेदवाक्येषु विश्वासः श्रद्धा। मुमुक्षुत्वं मोक्षेच्छा। विज्ञानं दृक् चक्षुर्यस्य सः। केवलः निर्द्धर्मकः। आत्मसंस्थितः आत्मनिष्ठः।

४७। नरो०। सविकल्पसमाधिमुक्त्वा निर्विकल्पसमाधिमाह—विश्वमिति पद्येन। परमात्मनः परमात्मनि वा दर्शनं यस्य तत्तथा। चिदानन्दमयः चिदानन्दस्वरूपः, अत एव पूर्णः सुखेच्छादुःखध्वंसेच्छारहितः। बाह्यं न वेद किञ्चिदान्तरं च न वेदेति। समाधिर्द्विविधः सविकल्पो निर्विकल्पश्च। तत्र सविकल्पो नाम ज्ञातृज्ञानज्ञेयविकल्पाऽपेक्षया अद्वितीयवस्तुनि तदाकारकारितायाश्चित्तवृत्तेरवस्थानम्। मृन्मयगजादिभानेऽपि मृद्भावनवद् द्वैतज्ञानेऽप्यद्वैतं भासते। तदुक्तम् अभियुक्तैः—

दृशिस्वरूपं गगनोपमं परं सकृद्विभातं········।
अलेपकं सर्वगतं यदद्वयं तदेव चाहं सततं विमुक्तः ॥ इति।

निर्विकल्पस्तु—ज्ञातृज्ञानादिप्रमाणानपेक्षया अद्वितीयवस्तुनि तदाकाराकारितायाश्चित्तवृत्तेरतितरामेकीभावेनावस्थानम्, तदा जलाकाराकारिततरङ्गानवभासेन जलमात्रावभासवत् अद्वितीयवस्त्वाकाराकारितचित्तवृत्त्यनवभासेन अद्वितीयवस्तुमात्रमवभासते। अस्याङ्गानि—यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयः। तत्र अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः। शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः। करचरणादिसंस्थानविशेषलक्षणानि पद्मस्वस्तिकादीनि आसनानि। रेचकपूरककुम्भकलक्षणाः प्राणनिग्रहोपायाः प्राणायामाः। इन्द्रियाणां स्वस्वविषयेभ्यः प्रत्याहरणं प्रत्याहारः। अद्वितीये वस्तुनि अन्तरिन्द्रियधारणं धारणा। अद्वितीये वस्तुनि विषयेभ्यो विच्छिद्य अन्तरिन्द्रियवृत्तिप्रवाहो ध्यानम्। समाधिस्तूक्तः।

---

विज्ञाने एव दृक् भावनं यस्य सः, द्रष्टृदृश्यभावरहितः, अनेन निर्विकल्पसमाधिरुक्तः। अनन्यसाधनः तत्त्वज्ञानातिरिक्तमुक्तिसाधनास्तित्वभ्रमरहितः। केवलोऽसङ्गः आत्मसंस्थितः आत्मन्येव संस्था समाप्तिः सञ्जाता यस्य सः। तेन न कदाऽपि विषयान्तरसञ्चारवच्चित्तः। विभावयेद् ध्यायेत्। रा०।

४७। किञ्च यदेतद् भूतं भविष्यद्वर्त्तमानं विश्वं परमात्मा दर्शनं भासको यस्य तत्। 'तस्य भासा सर्वमिदं विभाति' ( कठ० ५।१५ ) इति श्रुतेः। तत् सर्वकारणे मायासन्निधानात्

---

1. छ 'तदेतत्'। 2. क ख-ग-घ-च-छ 'विलापयेत्'। 3. छ '-ऽवशिष्यते'। 4. ग-च-छ '-दन्तरम्'।

पूर्वं समाधेरखिलं विचिन्तयेदोङ्कारमात्रं सचराचरं जगत् ।
तदेव [1]वाच्यं प्रणवो हि वाचको विभाव्यतेऽज्ञानवशा[2]न्न [3]बोधतः ॥ ४८ ॥
अकारसंज्ञः पुरुषो हि विश्वको [4]ह्युकारतैजस्थ ईर्यते क्रमात् ।
प्राज्ञो मकारः [5]परिपठ्यतेऽखिलैः समाधि[6]पूर्वं न तु तत्त्वतो भवेत् ॥ ४९ ॥

---

४८ । नरो० । सविकल्पकत ओङ्कारमात्रत्वेन सचराचरजगतश्चिन्तनं समाध्यनुकूलं भवतीति तत्पूर्वं तच्चिन्तनमुपदिशति—पूर्वं समाधेरित्यादिना ।

४९ । नरो० । ओङ्कारं विवृणोति—अकारसंज्ञ इति पद्येन । विशति अर्थाद्देहेन्द्रियादिष्विति विश्वः, विश्व एव विश्वकः । 'विश्वदृगि'ति पाठो वा । विश्वान् सर्वस्थूलविषयान् पश्यति अनुभवतीति विश्वदृक्, विश्वाख्यो जीवस्तदर्थः । उकारस्तैजस्थ इति वक्तव्ये उकारतैजस्थ इति विसर्गस्य सकारस्य वा लोपश्छान्दसः । तेजसि तेजोमये अन्तःकरणे उपाधौ तिष्ठतीति तेजस्थः, तेजस्थ एव तैजस्थः, तैजस इत्यर्थः । तत्त्वतो याथार्थ्यात् । तथाच सिद्धान्तबिन्दुः—जीवोऽपि त्रिविधः, सोपाध्यवान्तरभेदेन विश्वतैजसप्राज्ञभेदात् । तत्राप्यविद्यान्तःकरणस्थूलसंसारावच्छिन्नो जाग्रदवस्थाभिमानी विश्वः ; एवं स्थूलशरीराभिमानरहित उपाधिद्वयोपहितः स्वप्नावस्थाभिमानी तैजसः, शरीरान्तःकरणोपाधिद्वयरहितोऽन्तःकरणसंस्कारावच्छिन्नोऽविद्यामात्रोपहितः सुषुप्त्यवस्थाभिमानी प्राज्ञ इति ।

---

सर्वोपादानत्वेनाभिमते आत्मनि विलापयेत् । उपादानसत्ताव्यतिरेकेण कार्यसत्तां न पश्येत् । तादृशस्य लक्षणमाह—संपूर्णः अवाप्तसमस्तकामः तस्य काम्याभावात् । चिदानन्दमयः तद्रूपोऽवतिष्ठते बाह्यमान्तरञ्च दृश्यं न जानाति, सर्वत्र ब्रह्मदर्शनादिति भावः । रा० ।

४८ । समाधिसिद्धेः पूर्वं यत् कर्तव्यं तदाह—पूर्वमिति । समाधेः सकलविषयव्यासङ्गनिवृत्तिपूर्वकं ब्रह्माकारवृत्तिः समाधिस्ततः पूर्वमखिलं सचराचरं जगत् ओङ्कारमात्रं विचिन्तयेत्, ओङ्कारः मीयतेऽनयेति मात्रा प्रमाणं बोधकत्वेन परिच्छेदको यस्य तथा जानीयात् । तदेव विवृणोति—तदेवेति । जगदेवेत्यर्थः । प्रणवो वाचको विभाव्यते, एतद्धि प्रसिद्ध इत्यर्थः । इयं भावना ज्ञानवशादेव न बोधजनकः । निर्विशेषब्रह्मसाक्षात्कारस्तदुत्तरं नेत्यर्थः । तस्य सर्ववृत्त्युपमर्दकत्वात् । रा० ।

४९ । उक्तमर्थं विवृणोति—अकारेति । अकारसंज्ञस्तद्वाच्यः पुरुषो हि विश्वकः विश्व व विश्वकः विश्वशब्देन परिभाषितः । अयं जाग्रत्साक्षी विराट्, ततः स्वप्नसाक्षी तैजसः, तेन पदेन परिभाषितः लिङ्गदेहाभिमानी हिरण्यगर्भ उकारक उकारप्रतिपाद्य ईर्यते ।

---

1. क 'वाक्यं' । 2. ग '-नुबोधित' । 3. क 'बोधकः' । 4. क-ख-ग-घ-की 'ह्युकारकस्ते-', च '-क उकारतैजस्क इतीर्यते', छ '-को ह्युकारतैजस्क इतीर्यते' । 5. क 'परिगद्यते' । 6. छ '-पूर्वं' ।

विश्वं त्वकारं पुरुषं [1]विलापये[2]दुकारमध्ये बहुधा व्यवस्थितम् ।
ततो मकारे[3] प्रविलाप्य [4]तैजसं द्वितीयवर्णं प्रण[5]वस्य चान्तिमे ॥ ५० ॥
मकारमप्यात्मनि [6]चिद्घने परे विलापयेत् प्राज्ञमपीह [7]कारणम् ।
सोऽहं परं ब्रह्म सदा [8]विमुक्तवद् विज्ञान[9]दृङ् मुक्त उपाधितोऽमलः ॥ ५१ ॥

---

५०-५१ । नरो० । तर्हि किं तत्त्वमित्यपेक्षायामाह—विश्वमित्यादि । बहुधा व्यवस्थितं विश्वं पुरुषमकारमुकारमध्ये विलापयेदित्यन्वयः । विश्वाख्यस्य पुरुषस्य देहेन्द्रियादिषु सर्वत्र प्रवेशाद् बहुधा व्यवस्थितिः । ततः प्रणवस्यान्तिमे मकारे तैजसं द्वितीयवर्णमुकारं प्रविलाप्य चिद्घने चित्स्वरूपे परे मूलकारणे आत्मनि प्राज्ञं मकारमपि, अपि निश्चितम्, विलापयेदित्यन्वयः । प्रणवस्य चेति चकारः पादपूरणे । एवं सर्वत्र निरर्थकश्चकारादिः पादपूरणे बोध्यः । सर्वशरीराभिमाने नष्टे विश्वोऽपि नष्ट इत्युच्यते ज्ञानशक्त्यवच्छिन्नस्य सवासनस्यान्तःकरणस्य कारणात्मनाऽवस्थाने सति तैजसोऽपि नष्ट इत्युच्यते । ब्रह्मस्वरूपावरणशक्तिविशिष्टाविद्यानाशे सति प्राज्ञोऽपि नष्ट इत्युच्यते । कथं विलापनं कुर्यादित्यपेक्षायामाह—इह कारणमित्यादि । मनः-करणात् पूर्ववर्त्तित्वमित्यविरोधः । परं परमम् । सदा विमुक्तवद्विज्ञानदृक् सदा विमुक्त इव ज्ञान-चक्षुरित्यर्थः । यत उपाधितो मुक्त अत एवामलो रागद्वेषादिरहितः ।

---

ततः सुषुप्तिसाक्षी प्राज्ञपदवाच्यो मायोपाधिको मकारस्तद्वाच्यः पठ्यते अखिलैर्वेदैः । इयं भावना समाधिपूर्वं समाधेः पूर्वमेव न तत्त्वतस्तत्त्वसाक्षात्कारे सति न भवेत् । सर्वस्य ब्रह्मणि प्रविलयात् । रा० ।

५० ५१ । अथ विलापनप्रकारमाह द्वाभ्याम्—विश्वन्त्विति । उकारमध्ये बहुधा व्यव-स्थितं स्थूलदेहनिबन्धनं स्थूलदेहाभिमानेन स्थितं विश्वं पुरुषं तद्वाचकमकारञ्च विलापयेत् । तुश्चार्थे । विलीनं भावयेत् । ततस्तैजसं लिङ्गदेहाभिमानिनं पुरुषं तद्वाचकं प्रणवद्वितीयवर्ण-मुकारं विलीनविश्वकं मकारे विलाप्य विलीनं भावयित्वा, ततस्तादृशं मकारं तद्वाच्यं प्राज्ञञ्च कारणं कारणत्वाभिमानिनं पुरुषमिहाऽऽत्मनि चिद्घने परे विलापयेत् तथा भावयेत् । ततः सोऽहं सर्वविलापाधिष्ठानं परं ब्रह्म विभावयेत् । तद् विशिनष्टि—सदा विमुक्तिमत् नित्यमुक्तम् । नन्वहंपदार्थस्य रागद्वेषादिमलिनस्य कथं ब्रह्मत्वभावनेत्याशङ्क्याहंपदार्थं विशिनष्टि—उपाधितो मुक्तः अत एवामलः, तथा भावने साधनं विज्ञानदृग् विज्ञानं निदिध्यासनं ब्रह्ममात्रप्रत्यया-विच्छेदरूपा दृक् तत्साक्षात्कारे साधनं यस्य सः । रा० ।

---

1. क 'प्रला-' । 2. ग '-वकार-' । 3. क '-रं प्रतिपाद्य' । 4. ग-क 'तेजसि' । 5. क '-वश्च' । 6. ग-च 'चित्तनौ' । 7. च 'कारणे' । 8. क-ख-घ 'विमुक्तिमद्' । 9. क '-वन्मुक्त' ।

एवं [1]परिज्ञातपरात्मभावनः स्वानन्दतुष्टः परिविस्मृताखिलः ।
[2]तिष्ठेत् स नित्यात्मसुखप्रकाशकः साक्षाद्विमुक्तोऽचलवारिसिन्धुवत् ॥ ५२ ॥
एवं सदाभ्यस्तसमाधियोगिनो निवृत्तसर्वेन्द्रियगोचरस्य हि ।
विनिर्जिताशेषरिपोरहं सदा दृश्यो भवेयं जितषड्गुणात्मनः ॥ ५३ ॥

---

५२ । नरो० । एवं परिज्ञातपरात्मभावनः सन् आत्मा अचलवारिसिन्धुवत् तिष्ठेदिति सम्बन्धः । एवमनेन प्रकारेण, परिज्ञातं परात्मभावनं परात्मध्यानं येन सः । परिविस्मृतमखिलं येन सः । स्वेन निजेन आनन्देन तुष्टः स्वानन्दतुष्टः । नित्यमजस्रमात्मन्येव स्वस्मिन्नेव न तु विषयेषु सुख प्रकाशयतीति नित्यात्मसुखप्रकाशकः । यद्वा नित्योऽजस्रः आत्मन्येव सुखप्रकाशो यस्य सः । यद्वा आत्मनि सुखप्रकाशः आत्मसुखप्रकाशः नित्योऽजस्र आत्मसुखप्रकाशो यस्य सः । साक्षाद्विमुक्तः साक्षात् प्रत्यक्षविषयान्नामरूपात्मकप्रपञ्चाद्‌ विमुक्त इत्यर्थः । अचलं वारि यत्र स चासौ सिन्धुश्चेति स इव तिष्ठेदिति शेषः ।

५३ । नरो० । सदाभ्यस्तसमाधेर्ब्रह्मसाक्षात्काररूपं फलं दर्शयति—एवं सदाभ्यस्तसमाधियोगिन इति पद्येन । एवं सदाभ्यस्तसमाधियोगिनोऽहं सदा दृश्यो भवेयमित्यन्वयः । सदाऽभ्यस्तो यः समाधिस्तद्रूपो योगो यस्यास्ति तस्य तथा । यद्वा सदाभ्यस्तो यः समाधिस्तस्य योगः सम्बन्धो यस्यास्ति तस्य तथा । कीदृशस्य ? निवृत्ताः सर्वे इन्द्रियगोचरा· शब्दस्पर्शरूपरसगन्धा यस्य तादृशस्य । अत एव जिताः षड्गुणाः कामादय येन तादृश आत्मा यस्य तस्य । अत एव विनिर्जिता अशेषा रिपवो येन तस्य ।

---

५२ । एवं भावनावतो लक्षणमाह—एवमिति । उक्तप्रकारेण सदा जाता परमात्मन्येकभावना यस्य सः, परिविस्मृतमखिलं पुत्रदेहादि येन सः । अत एव स्वस्वरूपानन्देनैव तुष्टः न तु विषयानन्देन, तस्य परिणामे दुःखरूपत्वात्ततो विरक्त इत्यर्थः । साक्षान्नित्यात्मनि सुखप्रकाशकः साक्षादौपाधिकनामरूपभेदराहित्येन नित्यमखण्डितमात्मस्वरूपं यत्सुखप्रकाशश्च तद्रूपः एवंरूपो विमुक्तो जीवन्मुक्तः । अचलं निश्चलं वारि यस्य तादृशसिन्धुवदास्ते, विषयसम्बन्धरूपलहरीरहित आस्त इत्यर्थः । रा० ।

५३ । ईदृशस्य मत्प्राप्तिर्भवत्येवेत्याह—एवमिति । उक्तप्रकारेण सदाभ्यस्तसमाधेर्योगिनः, निवृत्ताः सर्वेषामिन्द्रियाणां गोचरा विषयाः शब्दादयो यस्य सः । विनिर्जिता अशेषा रिपवः कामादयो येन तस्य । तज्जयेन विषयेष्वन्तःकरणाप्रवृत्तिः सूचिता । अत एव सर्वज्ञत्वनित्यतृप्तत्वनित्यबोधरूपत्वस्वतन्त्रत्वनित्यमलुप्तत्वानन्तत्वरूपाः षड्गुणा यस्य तादृश आत्मा जितो वशीकृतो येन तस्य सदा दृश्यो भवेयम् । एतेन मद्भक्तस्य योगिनोऽहं दृश्यो न तु भक्तिविमुखस्येति सूचितम् । रा० ।

---

1. क-ख घ 'सदा जात-', च 'परिज्ञाय प-' । 2. क-ख-घ 'आस्ते', ग-च-छ 'आत्मा तु' ।

ध्यात्वैवमात्मानमहर्निशं मुनिस्तिष्ठेत् सदा मुक्तसमस्तबन्धनः ।
प्रारब्धम[1]श्नन्नभिमानवर्जितो मय्येव साक्षात् प्रविलीयते [2]ततः ॥ ५४ ॥
आदौ च मध्ये च तथैव चान्ततो [3]भवं विदित्वा भयशोककारणम् ।
हित्वा समस्तं विधिवादचोदितं भजेत् स्वमात्मानमथाखिलात्मनाम् ॥ ५५ ॥
आत्मन्यभेदेन विभावयन्निदं[4] [5]जानाति भेदेन [6]मयात्मनस्तदा ।
यथा जलं वारिनिधौ यथा पयः क्षीरे वियद्व्योम्न्य[7]नले यथाऽनिलः ॥ ५६ ॥

---

५४। नरो०। आत्मसाक्षात्कारफलं दर्शयति—ध्यात्वैवमित्यादिना। सदा मुक्तसमस्तबन्धनः अभिमानवर्जितः प्रारब्धमश्नन् अहर्निशमेवमात्मानं ध्यात्वा मुनिस्तिष्ठेत्, ततः साक्षात् प्रविलीयते इत्यन्वयः। सदा मुक्तानि समस्तानि बन्धनानि पुत्रदारादीनि येन सः। अभिमानवर्जितः अभिमानः आत्मन्यतिपूज्यत्वाद्यभिमानिता। मय्येव इत्येवकारोऽन्ययोगव्यवच्छेदार्थः। साक्षादित्यनेन परम्परालयो वारितः। ततः प्राक्तनकर्मभोगानन्तरम्, अनर्थहेतुकर्मत्यागपूर्वकम्।

५५। नरो०। सर्वात्मात्मभूतस्य स्वस्य भजनमुपदिशति—आदाविति पद्येन। आदौ आद्यावस्थायाम्। अन्ततोऽन्तावस्थायाम्। भवं संसारम्। विधिवादचोदितं विधिवादप्रदेशितम्। आत्मानमात्मभूतम्।

५६। नरो०। इदानीं ब्रह्मसाक्षात्कारस्वरूपं दर्शयति—आत्मनीत्यादिना। तदा आत्मनि अभेदेन इदं विश्वं विभावयन् भेदेन मया सहाऽऽत्मनो जानातीत्यन्वयः। आत्मन इति अत्राविवक्षिते कर्मणि सम्बन्धविवक्षायां षष्ठी। अत्र दृष्टान्तचतुष्टयमाह—यथेत्यादिना।

---

५४। एवंविधो जीवन्मुक्तः प्रारब्धवशेन अनभिमानो भोगानश्नंस्तिष्ठेत्, ततो मय्येव विलीयते मद्रूपो भवतीत्याह—ध्यात्वैवमिति। रा०।

५५। सर्वधर्मापेक्षया अयमेव धर्मो ज्यायानित्याह—आदौ चेति। भवं संसारमादिमध्यावसानेषु सर्वथा भयशोकयोः कारणं विदित्वा तत्कारणीभूतं विधिवादैर्यजेतेत्यादिभिश्चोदितं बोधितं समस्तं कर्ममार्गं काम्यं हित्वा अखिलात्मनां जीवानां स्वरूपभूतं मामात्मानं परमेश्वरं भजेत्। यथा धनस्यार्जनेनाऽऽदौ दुःखं मध्ये पालनकृतं तत्र राजादिकृतभयमन्ते नाशे शोकपर्यवसायि दुःखमेवं पदार्थमात्रे द्रष्टव्यम्। रा०।

५६। मय्यभेदभावनया नामरूपाविभागेन मद्रूप एव भवतीत्यमुमर्थं सदृष्टान्तमाह—आत्मनीति। आत्मनि सर्वाधिष्ठाने मयि इदं स्वस्वरूपं जीवमभेदेन विभावयन् यदा तिष्ठतीति

---

1. ग-च-छ '-श्नत्यभि-'। 2. ग 'परे'। 3. क 'ह्यहं'। 4. छ '-न्विदं'। 5. क-ख-घ-च 'भवत्यभेदेन', ग 'जानात्य-' छ 'जानाति भेदेन'। 6. क-ख-घ 'मयात्मना तदा', च 'मयात्मनस्ततः' छ 'तथात्मनस्तदा'। 7. ख-ग-च-छ '-न्यानिले'।

इत्थं यदी[1]क्षेत हि लोक[2]संस्थितो जगन्मृषैवेति विभावयन्मुनिः ।
[3]विनाकृतत्वाच्छ्रुतियुक्तिमा[4]नाद् यथेन्दुभेदो दिशि दिग्भ्रमादयः ॥ ५७ ॥
यावन्न पश्येदखिलं [5]मदात्मकं [6]तावन्मदाराधनतत्परो भवेत् ।
श्रद्धालुरत्यूर्जितभक्तिलक्षणो यस्तस्य दृश्योऽहमहर्निशं [7]हृदि ॥ ५८ ॥

---

वारिनिधौ जलं यथा अभेदेन प्रतीयते, क्षीरे यथा पयः अभेदेन प्रतीयते, व्योम्नि आकाशे वियद् यथा अभेदेन प्रतीयते, अनले अनिलो यथा अभेदेन प्रतीयते इत्यर्थः ।

५७ । नरो० । लोकसंस्थितो मुनिरित्थमनेन प्रकारेण यदीक्षेत पर्यालोचयेत् तदा श्रुतियुक्तिमानाद् विनाकृतत्वात् पृथक्कृतत्वात् जगन्मृषैवेत्यन्वयः । 'लोकसंस्थिते' इति पाठे लोकानां संस्थितं यत्र तस्मिन्नित्यर्थः । जगतो मिथ्यात्वे दृष्टान्तः—यथेन्दुभेद इत्यादि । यथा इन्दुभेदः शरीरो···षु उपाधिषु प्रतिबिम्बितचन्द्रनानात्वं मिथ्यादि···यश्च यथा मिथ्येत्यर्थः । आदिपदेन रज्जौ सर्पभ्रमः रज्जौ दण्डभ्रमश्च गृह्यते । 'इन्दुभेदे' इति सप्तम्यन्तपाठस्तु न रमणीयः अर्थासङ्गतेः ।

५८ । नरो० । निर्विशेषब्रह्मसाक्षात्कारं प्रति सगुणब्रह्मोपासनैवैकाग्र्यद्वारा कारणं भवतीत्याह—यावदिति पद्येन । मदाराधनतत्परो मदाराधनासक्तः ; अत्यूर्जितानि भक्तिलक्षणानि भक्तिचिह्नानि यस्य सः ।

---

शेषः । तदा मयात्मना परमेश्वरेणाभेदेन भवति अभिन्नो भवति । तत्र दृष्टान्तः—यथा समुद्रे प्रविष्टं नद्यादिजलं समुद्र एव, यथा क्षीरे गवादिक्षीरे प्रक्षिप्तं पयः क्षीरमेव, यथा व्योम्नि महाकाशे घटाद्यवच्छिन्नाकाशो घटादिभङ्गे च, यथा चर्मभस्त्रिकाद्यवच्छिन्नो वायुरनिले महावायौ नामरूपाविभागेनैकीभवतीत्यर्थः । रा० ।

५७ । एवमात्मतत्त्वज्ञस्य जगत्सत्यत्वभ्रमः स्वत एवापैतीत्याह—इत्थमिति । हिरप्यर्थे । लोकसंस्थितोऽपि जीवन्मुक्तिदशायां प्रारब्धवशाल्लोकव्यवहारं कुर्वन्नपि जगन्मृषैवेति भावयन् सन् यदि यदा इत्थमीक्षते ऐकात्म्यं जानीयात्तदा निवृत्तजगत्सत्यत्वभ्रमो भवतीति शेषः । तत्र हेतुः—श्रुतियुक्तिमानतो निराकृतत्वात् । 'अतोऽन्यदार्त्तम्' ( बृहदा० ३।४।२ ) इत्यादिश्रुतिरूपात् जगन्मिथ्या दृश्यत्वात् शुक्तिरजतवदिति तदुपबृंहितानुमानरूपात् मानतः प्रमाणतो निराकृतत्वात् । तत्र दृष्टान्तः—यथेन्दुभेदः एकचन्द्रे द्विचन्द्रत्वभ्रमस्तदेकत्वज्ञानेन निवर्त्तते, यथा च दिशि प्राच्यादौ अन्यदिक्त्वभ्रमः सोऽपि तत्त्वज्ञानान्निवर्त्तते । एवं भ्रमतः पुरुषस्य दिक्षु भ्रमणाद् भ्रमो निकटवर्त्तिवृक्षादौ च भ्रमस्तत्स्थैर्यज्ञानेन निवर्त्तते तद्वत् । रा० ।

५८ । ईदृशज्ञाने मदाराधनमेवोपाय इत्याह—यावदिति । अखिलं जगन्मदात्मकं

---

1. क '-च्छेत' । 2 क '-सम्मतो' । 3. क-ख-ग घ 'निराकृतत्वा-', च-छ 'निराकृतित्वा-' । 4. क-ख-ग-घ-च छ '-नतो' । 5 छ 'महा-' । 6 छ 'तावत् समा-' । 7 छ 'यदि' ।

रहस्यमेतच्छ्रुतिसारसंग्रहं मया विनिश्चित्य तवोदितं [1]प्रियात् ।
यस्त्वेतदालोचयतीह बुद्धिमान् स मुच्यते पातकराशिभिः क्षणात् ॥ ५९ ॥
भ्रातर्यदीदं परिदृश्यते जगन्मायैव सर्वं परिहृत्य चेतसा ।
मद्भावनाभावितशुद्धमानसः सुखी भवाऽऽनन्दमयो निरामयः ॥ ६० ॥
यः सेवते मामगुणं [2]गुणात् परं हृदा कदा वा यदि वा गुणात्मकम् ।
[3]सोऽहं स्वपादाश्रितरेणुभिः स्पृशन् पुनाति लोकत्रितयं यथा [4]रविः ॥ ६१ ॥

---

५९ । नरो० । रहस्यमेतदिति । प्रियात् प्रियत्वात् ।

६० । नरो० । भ्रातरिति । हे भ्रातः, यदि इदं जगत् मायैव परिदृश्यते तदा सर्वं चेतसा परिहृत्य निरामयः सन् सर्वोपद्रवरहितः सन्, मद्भावनाभावितशुद्धमानसः सन् आनन्दमयः सन् सुखी भवेति सम्बन्धः । मद्भावनया भावितं प्राप्तं शुद्धं मानसं येन सः ।

६१ । नरो० । यः सेवते इति । अगुणं गुणरहितम्, तत् कुत इत्याह—गुणात् परमिति । निर्गुणब्रह्मभजने कः समर्थो भवेदिति चेत्तत्राऽऽह—गुणात्मकमिति ।

[ उत्तरकाण्डे पञ्चमाध्यायव्याख्या समाप्ता ॥ ५ ॥ ]

---

मदधिष्ठानकं मद्विवर्तभूतं यावन्न पश्येत् तावन्मत्प्राप्तये श्रद्धालुः भगवदाराधनमेव ज्ञानप्रापकमित्यत्र दृढविश्वासवान् अतिशयेनोर्जिता वृद्धिमती भक्तिर्मयि भगवति पूज्यताबुद्धिरूपा लक्षणं चिह्नं यस्य सः । तावन्मदाराधननिष्ठो भवेत् । एवं हि तस्य हृदि अहमहर्निशं दृश्यो भवामि—

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।

( गीता० ४।११ ) इति स्मृतेः । रा० ।

५९ । स्वोक्तवचनजातस्य श्रुतिसमत्वं कथमेतदालोचनमपि मदाराधनप्रतिबन्धकदुरितध्वंसोपायमाह—रहस्यमिति । श्रुतिसारसंग्रहत्वेनातिगोपनीयता अप्रमाणशंकाकलङ्कराहित्यं सूचितम् । आलोचयति सम्यग् विचारयति । रा० ।

६० । अथ भगवानुक्तमेवार्थं सङ्क्षेपेण दार्ढ्याय पुनराह—भ्रातरिति । यदीति यदित्यर्थे । यदिदं जगत् परिदृश्यते तत् सर्वं मायैवेति ज्ञात्वेति शेषः । चेतसा सर्वं परिहृत्य तत्रौदासीन्यं कृत्वा मद्भावनया मदैक्यभावनया भावितं शुद्धं मानसं यस्य तादृशस्तिष्ठ । इत्युपदिश्याऽऽशिषं प्राह—निरामयः सन् सुखी भव, सर्वदुःखनिवृत्त्येति भावः । ततोऽन्तरगामन्यामाशिषमाह—आनन्दमयो भव तद्रूपो भवेत्यर्थः । यद्यपि पूर्वमानन्दरूपत्वमस्त्येव तथाऽपि तत्प्राप्तिर्विस्मृतकण्ठस्थभूषणप्राप्तिवत् । रा० ।

६१ । एवंरीत्या स्वोपासकस्य लोकपावनत्वमाह—य इति । कदा वा यदा कदा-

---

1. क ख-ब 'प्रिय' । 2. घ 'गुणान्' । 3. छ 'सोऽय' । 4. क 'मुनिः' ।

विज्ञानमेतदखिलं श्रुतिसारमेकं वेदान्तवेद्यचरणेन मयैव गीतम् ।
यः श्रद्धया परिपठेद् गुरुभक्तियुक्तो मद्रूपमेति यदि मद्वचनेषु भक्तिः ॥ ६२ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे उत्तरकाण्डे
पञ्चमोऽध्यायः ॥ ५ ॥

---

चिदित्यर्थः । हृदा निर्मलेन अन्तःकरणेन यो मामगुणं प्राकृतसत्त्वरजस्तमोगुणरहितं सच्चिदानन्दरूपत्वात् । अत एव गुणात् परं गुणादव्याकृतात् परं मायातीतम् । यदि वा यद् वेत्यर्थे । गुणात्मकं सर्वज्ञत्वादिलोकोत्तरलावण्यादिगुणवानात्मा मूर्त्तिर्यस्य तं दृश्यमानं रूपं सेवते । स द्विविधोऽप्युपासकः अहं मत्स्वरूप एव, मामक इत्यर्थो वा ; 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' इत्युक्तेः । तादृशो भक्तः स्वपादलग्नरेणुभिः संस्पृशन् लोकत्रयमपि पुनाति अज्ञानध्वान्तनिरसनेन पवित्रीकरोति । यथा रविः स्वकरैर्जगद् वितिमिरीकरोति तद्वत् । रा० ।

६२ । इदानीमेतद्ग्रन्थार्थालोचनासमर्थस्य पाठमात्रतोऽपि महत् फलमाह—विज्ञानं विज्ञानजनकम्, करणव्युत्पत्त्येति बोध्यम् । वेदान्तैरुपनिषद्वाक्यैर्वेद्यं चरणं जगज्जन्मादिलक्षणं कर्म यस्य तेन । ननु पाठमात्रादेतादृशमत्फलप्राप्तिः कथमित्याशङ्क्य भवत्येवेति सूचयंस्तत्र हेतुमाह—मद्वचनेषु भक्तिर्विश्वासो यदीत्यर्थाद् गुरुवाक्यविश्वासस्यैव फलदायकत्वादिति भावः । रा० ।

---

# षष्ठोऽध्यायः

—:०:—

श्रीमहादेव उवाच—

[1]एकदा मुनयः सर्वे यमुनातीरवासिनः ।
आजग्मू राघवं द्रष्टुं भयाल्लवणरक्षसः ॥ १ ॥
कृत्वाऽग्रे तु मुनिश्रेष्ठं भार्गवं च्यवनं द्विजाः ।
असङ्ख्याताः समा[2]याता रामादभयकाङ्क्षिणः ॥ २ ॥
तान् पूजयित्वा परया भक्त्या रघुकुलो[3]त्तमः ।
उवाच मधुरं वाक्यं हर्षयन्मुनिमण्डलम् ॥ ३ ॥

---

३ । नरो० । मुनिमण्डलं मुनिसमूहम् ।

---

१ । लवणरक्षसो लवणराक्षसात् भयात्, भयं प्राप्येत्यर्थः । क्रमेणोभयत्र 'भीत्रार्थानाम्'ति 'ल्यब्लोपे' इति च पञ्चमी । परमात्मनो रामस्य दर्शनेनैवैहिकामुष्मिकभयजातं निराकृतं स्यादिति भयार्त्तानां तेषां रामदर्शनार्थमागमनम् ।

ततो निवेदितं राज्ञे द्वारि तिष्ठन्ति तापसाः ।
भार्गवं च्यवनं नाम पुरस्कृत्य महामुनिम् ॥
दर्शनं तव राजेन्द्र काङ्क्षन्ति ते महर्षयः ।
आगतास्त्वरमाणा हि यमुनातीरवासिनः ॥ ७।६१।१-२

इत्यादिना वाल्मीकीयेन भृगोः पुत्रश्च्यवनः, यमुनातीरवासिनो मुनय इति च सुव्यक्तमेव ।

२ । [ भार्गवं च्यवनमिति । भृगोः पुत्रं च्यवनसंज्ञम् । गो० ]

३ । भक्त्या आसनोपवेशनानुरोधादिना चेत्यर्थः । परया भक्त्या तान् पूजयित्वा स्थितः स मुनिमण्डलं हर्षयन् तानेव मधुरं वाक्यमुवाच इत्यन्वयेन तच्छब्दमुनिमण्डलशब्दयोर्युगपत्प्रयोगरूपो दोषः कथञ्चित् परिहृतः । वाल्मीकीये—

उवाच च महातेजाः सर्वानेव तपोधनान् ।
इमान्यासनमुख्यानि यथार्हमुपविश्यताम् ॥ इति ७।६१।८ ।

---

1. क-पुस्तके इदमर्धं नास्ति । 2. ग-च-क '-यान्ति' । 3. च '-द्भवः' ।

करवाणि मुनिश्रेष्ठा[1] यदर्थमहमागताः ।
धन्योऽस्मि यदि यूयं मां प्रीत्या द्रष्टुमिहाऽऽगताः ॥ ४ ॥
[2]दुष्करं चापि यत् कार्यं भवतां तत् करोम्यहम् ।
आज्ञापयन्तु [3]मां भृत्यं ब्राह्मणा दैवतं हि मे ॥ ५ ॥
तच्छ्रुत्वा सहसा हृष्टश्च्यवनो वाक्यमब्रवीत् ।
मधु[4]नामा महादैत्यः पुरा कृतयुगे [5]प्रभो ।
आसीदतीव धर्मात्मा देवब्राह्मणपूजकः ॥ ६ ॥

---

५ । नरो० । भवतां पूज्यानाम् ।

६ । नरो० । धर्मे आत्मा मनो यस्य सः ।

---

४ । हे मुनिश्रेष्ठाः, अहं किं भवत्कार्यं करवाणि मत्समीपे भवदागमनस्य च किं कारणं यदि यत् प्रीत्या सर्वदुःखनिवर्तनक्षमत्वबुद्धया या प्रीतिस्तया यावद्द्रष्टुमागतास्तद्धन्योऽस्मि । रा० ।

हे मुनिश्रेष्ठाः, यदर्थं यूयमागतास्तदहं करवाणीत्यन्वयः । प्रयोजनं विना यदि मत्प्रीत्या मद्दर्शनार्थमेवाऽऽगताः, तर्हि भवतामनेनाऽऽगमनेनाहं धन्यः कृतार्थोऽस्मि । अत्रार्थे वाल्मीकीयेऽपि—

किमागमनकार्यं वः किं करोमि तपोधनाः ।
आज्ञाप्योऽहं तपःसिद्धैः सर्वथा किङ्करः स्वयम् ॥
इदं राज्यञ्च सकलं जीवितञ्च हृदि स्थितम् ।
सर्वमेतद्द्विजार्थं मे सत्यमेतद् ब्रवीमि वः ॥ इति ७।६१।११-१२ ।

५ । [भवतामिति । भवतां पूज्यानां युष्माकम्, यद्वा भवतां प्रभवतां प्रभूणामित्यर्थः । यद्वा भवतां भृत्यं मां दुष्करम् असाध्यं यत् कार्यं तदाज्ञापयन्तु, मुनिसमूहा इत्यूह्यम् । गो० ]

६ । मधुं विशिनष्टि वाल्मीकिः—

पूर्वं कृतयुगे राम दैतेयः सुमहानभूत् ।
हिरण्यकशिपोर्नप्ता मधुर्नाम महासुरः ॥
ब्राह्मण्यश्च वदान्यश्च बुद्ध्या च परिनिष्ठितः ।
सुरैश्च परमोदारैः प्रीतिस्तस्यातुलाऽभवत् ॥ इति ७।६६।३-४ ।

पाश्चात्त्ये—

लोलापुत्रोऽभवज्ज्येष्ठो मधुर्नाम महासुरः । इति ७।७४।३ ।

---

1. क-ख-घ-ङ '-ष्ठाः किमागमनकारणम्' । 2. ग 'सुदुष्करं वा', च 'सुदुष्करं वो', ङ 'सुदुष्करं च' । 3. ङ 'तत् सर्वं' । 4. च-ङ '-र्नाम' । 5. ग-ङ 'विभो' ।

तस्य तुष्टो महादेवो ददौ शूलमनुत्तमम् ।
प्राह चानेन यं [1]हंसि स तु भस्मीभविष्यति ॥ ७ ॥
रावणस्यानुजा भार्या तस्य कुम्भीनसी श्रुता ।
[2]तस्यां तु लवणो नाम राक्षसो भीमविक्रमः ॥ ८ ॥
आसीद् [3]दुष्टात्मा दुर्द्धर्षो देवब्राह्मण[4]हिंसकः ।
पीडितास्तेन राजेन्द्र वयं त्वां शरणं गताः ॥ ९ ॥

---

७ । नरो० । अविद्यमानमुत्तमं यस्मात् तत्तथा ।

९ । नरो० । दुष्ट आत्मा अन्तःकरणं यस्य स दुष्टात्मा । शरणं रक्षितारमाश्रयं वा ।

---

७ । तुष्टो महादेवः । तस्य तस्मै इत्यर्थः । शूलप्रदानं वाल्मीकीये—

शूलं शूलाद् विनिष्कृष्य महावीर्यं महाबलम् ।
ददौ महात्मा सुप्रीतो वाक्यञ्चेदमुवाच ह ॥
तवायमतुलो धर्मो मत्प्रसादकरः शुभः ।
येन प्रीतस्तवाविघ्नं दास्याम्यायुधमुत्तमम् ॥
यावत् सुरैश्च विप्रैश्च विरुध्येन्न भवान् भुवि ।
तावच्छूलं तवैतत् स्यादन्यथा नाशमेष्यति ॥
यश्च त्वामभियुञ्जीत युद्धाय विगतज्वरः ।
तं शूलो भस्मसात् कृत्वा पुनरेष्यति ते करम् ॥ इति ७।६६।६-९ ।

८ । तस्य मधोः कुम्भीनसी भार्या श्रुतेत्यर्थः । सा च विश्रवसोऽपत्यमिति व्यक्तं वाल्मीकीये । तथाच—

तस्य भार्या महाराज नाम्ना कुम्भीनसी पुरा ।
दत्ता विश्रवसोऽपत्यं राक्षसी रावणस्वसा ॥ इति ७।६६।१६ ।

पाश्चात्त्ये पुनः—

तस्य पत्नी महाभागा प्रिया कुम्भीनसीति या ।
विश्वावसोरपत्यं साऽप्यनलायां महाप्रभा ॥ इति ७।७४।१६ ।

तस्यां तस्या उदरे इत्यर्थः । लवणो नाम राक्षसोऽभवदिति शेषः ।

९ । लवणे शूलसंक्रमणप्रकारमाह वाल्मीकिः—

एवं शूलवरं लब्ध्वा स्मयमानो महासुरः ।
प्रणिपत्य महादेवं वाक्यमेतदुवाच ह ॥

---

1. ग 'हिंसी.' । 2. च 'तस्यास्तु' । 3. क-ख-ग-घ-च-छ 'दुरात्मा' । 4. छ '-कण्टकः' ।

तच्छ्रुत्वा राघ[1]वोऽप्याह मा भीर्वो मुनिपुङ्गवाः ।
[2]लवणं नाशयिष्यामि गच्छन्तु विगतज्वराः ॥ १० ॥
इत्युक्त्वा प्राह रामोऽपि भ्रातॄन् को वा हनिष्यति ।
लवणं राक्षसं [3]दद्याद् ब्राह्मणेभ्यो[4]ऽभयं महत् ॥ ११ ॥

---

१० । नरो० । वो युष्माकम् ।

---

भगवन् मम वंशस्य शूलमेतदनुत्तमम् ।
भवेद्धि सततं देव वराणामीश्वरो ह्यसि ॥
तथा ब्रुवाणमसुरं सर्वभूतपतिः शिवः ।
प्रत्युवाच स्वयं नाम्ना नैतदेवं भविष्यति ॥
मा तेऽभूद्विफला वाणी मत्प्रसादात् कृता शुभा ।
भवतः पुत्रमेकन्तु शूलमेतद् भविष्यति ॥
यावच्छूलं करस्थं तु भविष्यति सुतस्य ते ।
अवध्यः सर्वभूतानां तावदेव भविष्यति ॥ इति ७।६६।१०-१४

* * * *

स विहाय इमं लोकं प्रविष्टो वरुणालयम् ।
शूलं निवेश्य लवणे वरं चास्मै निवेद्य तम् ॥ इति च ७।६६।१९ ।

१० । अत्र रामप्रश्ने लवणस्य वासादिवर्णनं वाल्मीकीये । तथाच—

आहारः सर्वसत्त्वानि विशेषेण च तापसाः ।
आचारो रौद्रता नित्यं वासो मधुवने तथा ॥
हत्वा बहुसहस्राणि सिंहव्याघ्रमृगद्विपान् ।
मानुषांश्चैव कुरुते नित्यमाहारमाह्निकम् ॥
ततोऽपराणि सत्त्वानि खादते स महाबलः ।
संहारे समनुप्राप्ते व्यादितास्य इवान्तकः ॥ इति ७।६७।३-६ ।

११ । लवणं राक्षसमित्यस्य को वा हनिष्यतीत्यनेनान्वयः । को वा ब्राह्मणेभ्योऽभयं दद्याद् दास्यतीत्यर्थः । रा० ।

इत्युक्त्वा मुनीन् प्रतीति शेषः, भ्रातॄनाह । रामोऽपीति अपिशब्दः पादपूरणे । महदित्युक्त्या लवणविनाशेन तेषां प्राणनाशादिभयमप्यपास्तं भविष्यतीति सूचितम् ।

---

1. क '-व: प्राह' । 2. क 'अहमेव हनिष्यामि' । 3. ग-क 'हत्वा' 4. ग-क '-भय भवेत्' ।

तच्छ्रुत्वा प्राञ्जलिः प्राह भरतो राघवाय वै ।
अहमेव हनिष्यामि देवाऽऽज्ञापय मां [1]प्रभो ॥ १२ ॥
ततो रामं नमस्कृत्य शत्रुघ्नो वाक्यमब्रवीत् ।
लक्ष्मणेन महत् कार्यं कृतं राघव संयुगे ॥ १३ ॥
नन्दिग्रामे महाबुद्धिर्भरतो दुःखमन्वभूत् ।
अहमेव गमिष्यामि लवणस्य वधाय [2]च ।
त्वत्प्रसादाद्रघुश्रेष्ठ हन्यां तं राक्षसं युधि ॥ १४ ॥
तच्छ्रुत्वा स्वाङ्कमारोप्य शत्रुघ्नं [3]शत्रुसूदनः ।
प्राहाद्यैवाभिषेक्ष्यामि मथुराराज्यकारणात् ॥ १५ ॥
आनाय्य [4]च सुसम्भाराँल्लक्ष्मणेनाभिषेचने ।
अनिच्छन्तमपि स्नेहादभिषेकमकारयत् ॥ १६ ॥

---

१५ । नरो० । स्वाङ्कं स्वक्रोडम् ।

---

१२ । राघवाय राघवमुद्दिश्येत्यर्थः । प्रभो इति सम्बोधनं रामस्य सर्वकर्तृत्वसूचनाय । निग्रहानुग्रहसमर्थस्त्वम् अतस्तवाऽऽज्ञां विना तस्य विनाशे न प्रभविष्यामीत्याशयः ।

१३ । संयुगे युद्धे । भरतस्य क्लेशान् विवृणोति शत्रुघ्नमुखेन वाल्मीकिः—

अनुभूतानि दुःखानि भरतेन बहूनि च ।
शयानो दुःखशय्यासु नन्दिग्रामे महात्मवान् ॥
फलमूलाशनो भूत्वा जटाचीरधरस्तथा ।
मयि प्रेष्ये स्थिते ह्येष न भूयः क्लेशमर्हति ॥ इति ७।६७।१३-१४ ।

१४ । हन्यां हनिष्यामीत्यर्थः ।

१५ । अभिषेक्ष्यामि त्वामिति शेषः । मथुराराज्यकारणात् मथुराराज्यकरणाय, मथुराराज्यप्रतिष्ठार्थं वा ।

१६ । अभिषेचने निमित्तम् । विषयसप्तम्यामयमर्थः फलति । अकारयद् वशिष्ठादिभिरिति शेषः । रा० ।

अनिच्छन्तं शत्रुघ्नम् ।

एवमुक्तस्तु रामेण भूत्वा किञ्चिदवाङ्मुखः ।
शत्रुघ्नो वीर्यसम्पन्नो मन्दमन्दमुवाच ह ॥

---

1. च 'विभो' । 2. छ 'वै' । 3. च 'रघुनन्दनः' । 4. छ 'तत्र सम्भा-' ।

तं हत्वा लवणं [1]क्रूरं तद्वनं मधुसंज्ञितम् ।
[2]निवेश्य नगरं तत्र तिष्ठ त्वं मेऽनुशासनात् ॥ २० ॥
अश्वानां पञ्चसाहस्रं रथानाञ्च तदर्धकम् ।
गजानां षट्शतानीह पत्तीनामयुतत्रयम् ।
आगमि[3]ष्यति पश्चात्त्वमग्रे [4]साधय राक्षसम् ॥ २१ ॥
इत्युक्त्वा [5]मूर्ध्न्यवघ्राय प्रेषयामास राघवः ।
शत्रुघ्नं मुनिभिः सार्धमाशीर्भिरभिनन्द्य च ॥ २२ ॥
शत्रुघ्नोऽपि तथा चक्रे यथा रामेण चोदितः ।
हत्वा मधुसुतं युद्धे मथुरामकरोत् पुरीम् ।
स्फीतां [6]जनपदं चक्रे मथुरां दानमानतः ॥ २३ ॥

---

त्वां दृष्ट्वा क्रुद्धः स तदा तत्समय एव शूलसंग्रहार्थं कालान्तरप्रतीक्षामकृत्वैवेत्यर्थः, योत्स्यते वध्यश्च भविष्यति ।

अत्र वाल्मीकिः—

स त्वं निवर्त्तमानं तं दृष्ट्वाहारप्रचारतः ।
अप्रविष्टं पुरं पूर्वं द्वारि तिष्ठेर्धृतायुधः ॥
अगृहीतायुधं चैव युद्धाय पुरुषर्षभ ।
आह्वयेथा महाबाहो ततो हन्तासि राक्षसम् ॥ इत्यादि ७।६९।५-६ ।

२० । मधुसंज्ञितं तद्वनं प्रविश्येति शेषः । लवणं हत्वा तत्र मधुवने नगरं निवेश्य तत्र त्वं तिष्ठेत्यन्वयः ।

२१ । त्वमग्रे प्रथमम् एक एव राक्षसं साधय नाशय, पश्चाद् वधोत्तरं सेना त्वत्समीपमागमिष्यतीत्यर्थः । रा० ।

अश्वादीनां प्रेषणं वाल्मीकीये—

इमान्यश्वसहस्राणि चत्वारि पुरुषर्षभ ।
रथानां द्वे सहस्रे च गजानां शतमुत्तमम् ॥
चत्वरापणवीथ्यश्च नानापण्योपशोभिताः ।
अनुगच्छन्तु शत्रुघ्नं तथैव नटनर्त्तकाः ॥
हिरण्यस्य सुवर्णस्य नियुक्तं प्रयुतं तथा ।
गृहीत्वा गच्छ शत्रुघ्न पर्याप्तबलवाहनः ॥ इत्यादि ७।७०।२-४ ।

---

1. क 'तच' । 2. क 'एवं तवैव शत्रुघ्न' । 3. क '-ष्यसि' । 4. च 'धारय' । 5. ग-क 'मूर्ध्नुपा-' । 6. ग-च-क 'जनपदांश्च-', घ 'जनपदां' ।

सीताऽपि सुषुवे पुत्रौ [1]द्वौ वाल्मीकेरथाऽऽश्रमे ।
मुनिस्तयोर्नाम चक्रे कुशो ज्येष्ठोऽनुजो लवः ॥ २४ ॥
क्रमेण विद्यासम्पन्नौ सीतापुत्रौ बभूवतुः ।
उपनीतौ च मुनिना वेदाध्ययनतत्परौ ॥ २५ ॥
कृत्स्नं रामायणं प्राह [2]काव्यं बालकयोर्मुनिः ।
शङ्करेण पुरा प्रोक्तं पार्वत्यै पुरहारिणा ।
वेदोपबृंहणार्थाय [3]तावग्राहयत प्रभुः ॥ २६ ॥

---

२३ । रामेण यथा चोदित उपदिष्टः । लवणेन युद्धं वाल्मीकीये उत्तरकाण्डस्य चतुःसप्ततिपञ्चसप्ततितमसर्गयोः । मधुनिर्मितनगरस्य मथुरेति नामकरणं वाल्मीकीये—

देवानां भाषितं श्रुत्वा शूरो मूर्ध्नि कृताञ्जलिः ।
प्रत्युवाच महातेजाः शत्रुघ्नः प्रयतात्मवान् ॥
इयं मधुपुरी रम्या मधुना पूर्वनिर्मिता ।
निवेशं प्राप्नुयाच्छीघ्रमेष मे काङ्क्षतो वरः ॥
तं देवा बाढमित्येवं प्रीताः शत्रुघ्नमब्रुवन् ।
भविष्यतीयं नगरी मथुरेत्यभिशब्दिता ॥ इति ७।७९।४-६ ।

२४ । सीताऽपीति । लवणवधार्थं प्रस्थितस्य शत्रुघ्नस्य यद्दिने विश्रामार्थं वाल्मीकेराश्रमे निवासस्तद्दिने एव कुशलवयोर्जन्म । तथाच वाल्मीकीये—

यामेव रात्रिं शत्रुघ्नः पर्णशालामुपाविशत् ।
तामेव रात्रिं सीताऽपि प्रसूता दारकद्वयम् ॥ इति ७।७२।१ ।

दारकयोर्नामकरणमपि तत्रैव—

यस्तयोः पूर्वजातस्तु स कुशैर्मन्त्रसंस्कृतैः ।
निर्मार्जनीयो नाम्ना हि भविता कुश इत्यसौ ॥
तयोरवरजो यः स्याल्लवणेनैव चैव हि ।
निर्मार्जनीयो वृद्धाभिर्नाम्ना स भविता लवः ॥ इति ७।७२।६-७ ।

२५ । क्रमेण कालक्रमेण, वयोवृद्ध्या सहेत्यर्थः । विद्या व्याकरणादिज्ञानं तत्सम्पन्नौ व्याकरणादिज्ञानयुक्तावित्यर्थः । ततो मुनिना वाल्मीकिना उपनीतौ सावित्रीदीक्षया दीक्षितौ सन्तौ वेदाध्ययनतत्परौ सावित्रीदीक्षोत्तरकालमेव वेदाध्ययनस्याधिकारित्वश्रवणात् तदनन्तरं वेदाध्ययनपरायणौ बभूवतुरित्यन्वयः ।

२६ । यत् पुरा शङ्करेण पार्वत्यै प्रोक्तं रामायणं तद्वेदोपबृंहणार्थाय वेदतात्पर्यार्थज्ञाननिमित्तमग्राहयत शब्दतोऽर्थतश्च बोधितवानित्यर्थः । रा० ।

---

1. ग-च 'वाल्मीकेराश्रमे तदा' । 2. क 'वाक्य' । 3. च 'तदेव गृहीतु' ।

कुमारौ स्वरसम्पन्नौ सुन्दरावश्विनाविव ।
तन्त्री[1]तालसमायुक्तौ गायन्तौ चेरतुर्वने ॥ २७ ॥

तत्र तत्र मुनीनां तौ समाजे[2] सुररूपिणौ ।
गायन्ता[3]वभितो दृष्ट्वा विस्मिता मुनयोऽब्रुवन् ॥ २८ ॥

गन्ध[4]र्वेष्विह किन्नरेषु भुवि वा [5]देवेषु देवालये
पातालेष्वथ वा चतुर्मुखगृहे लोकेषु सर्वेषु[6] च ।
अस्माभिश्चिरजीविभिश्चिरतरं दृष्ट्वा दिशः सर्वतो
[7]नाज्ञायीदृशगीतवाद्यगरिमा नादर्शि नाश्रावि च ॥ २९ ॥

एवं स्तुवद्भिरखिलैर्मुनिभिः प्रतिवासरम् ।
आसाते सुख[8]मेकान्ते वाल्मीकेराश्रमे चिरम् ॥ ३० ॥

अथ रामोऽश्वमेधादींश्चकार बहुदक्षिणान् ।
[9]यज्ञान् स्वर्णमयीं सीतां विधाय विपुलद्युतिः ॥ ३१ ॥

---

[ वेदोपबृंहणार्थाय वेदार्थस्य ज्ञानेनोपबृंहणम् उपचितिकरणं तदर्थाय, एतेन समस्तवेदार्थमेवात्रोपन्यस्तवान् श्रीशङ्कर इत्युक्तम् । गो० ]

मुनिर्वाल्मीकिः कुशलवयोः समीपे इति शेषः, कृत्स्नं समग्रं रामायणं प्राह तौ अग्राहयत च शिक्षयामास चेत्यर्थः । रामायणशिक्षणस्य कारणमाह—वेदोपबृंहणार्थायेति । वेदानामुपबृंहणं पुष्टिस्तदर्थं वेदज्ञानस्य परिपोषार्थमित्यर्थः ।

२७ । तन्त्रीशब्दतालाभ्यां समायुक्तौ अवैषम्येण युक्तौ यथा तयोर्वैषम्यं न भवति तथा गायन्तौ चेरतुः । तन्त्रीलयेति पाठे तन्त्र्या लयो मूर्च्छना तत्र समायुक्तौ अत्यन्तनिपुणौ । रा० ।

२९ । भूलोके गन्धर्वकिन्नरमध्ये नेदृशः देवालये स्वर्गे देवेषु न पाताले नागेषु न अथवा ब्रह्मलोकेऽपि नेदृशो गायकः । नाज्ञायीत्यस्यैव विवरणं नादर्शि साक्षादीदृशं गानं स्वकर्णाभ्यां न श्रुतमित्यर्थः । नाश्रावि कर्णोपकर्णिकयाऽमुकदेशे ईदृशो विशिष्टगाताऽस्तीति न श्रुतमित्यर्थः । रा० ।

चिरजीविभिर्दीर्घजीविभिरपि नाज्ञायीत्यादि किमन्यैरल्पजीविभिरिति शेषः ।

---

1. ग-च-क '-लय-' । 2. ग-च-क '-जेषु सुरू-' । 3. ग-च-क '-वपि तौ' । 4. क '-र्वेऽपि हि' । 5. च 'देवे च' । 6. क '-ष्वपि' । 7. ग-क 'नाद्यापीदृश-' । 8. च '-मेवन्तौ' । 9. ग-च-क 'यज्ञे' ।

तस्मिन् विताने ऋषयः सर्वे राजर्षयस्तथा ।
ब्राह्मणाः क्षत्रिया वैश्याः समाजग्मुर्दिदृक्षवः ३२ ॥

वाल्मीकिरपि संगृह्य गायन्तौ [1]तौ कुशीलवौ ।
जगाम ऋषि[2]वाटस्य समीपं मुनिपुङ्गवः ॥ ३३ ॥

तत्रैकान्ते स्थितं शान्तं समाधिविरमे मुनिम् ।
कुशः पप्रच्छ वाल्मीकिं ज्ञानशास्त्रं कथान्तरे ॥ ३४ ॥

भगवञ् श्रोतुमिच्छामि सङ्क्षेपाद्भवतोऽखिलम् ।
देहिनः सं[3]सृतेर्बन्धः कथमुत्पद्यते दृढः ॥ ३५ ॥

कथं विमुच्यते देही दृढ[4]बन्धाद् भवाभिधात् ।
वक्तुमर्हसि सर्वज्ञ मह्यं शिष्याय ते मुने ॥ ३६ ॥

---

३२ । नरो० । विताने क्रतौ ।

३३ । नरो० । कुशीलवाविति बहुलवचनादकारस्य ईकारः ।

३५ । नरो० । देहिन इति । देहिनो देहाभिमानिनो जीवस्य । संसृतेर्जन्ममरणादिप्रवाहरूपात् संसारात् सकाशाद् दृढो बन्धः कथमुत्पद्यते इत्यर्थः ।

३६ । नरो० । बध्नात्यनेनेति बन्धः, दृढश्चासौ बन्धश्चेति तस्मात्तथा । भवः अभिधा यस्य तस्मात्तथा । भवः संसारः ।

---

३३ । संगृह्य स्वसमीपमानीयेत्यर्थः । जगाम ताभ्यां सहेति शेषः ।

३४ । ज्ञानशास्त्रं तत्त्वज्ञानकारणं शास्त्रम् । इतः परं मुनिवियोगकालस्य सन्निहितत्वादिदं गुह्यं तत्त्वं पप्रच्छेति भावः । रा० ।

[ समाधिविवरे मुनिमिति । समाधिरेव विवरं दुष्प्रवेशगह्वरं तत्र स्थितं समाधिनिष्ठमित्यर्थः । यद्वा समाध्यवसरे, कथान्तरे कथावसरे । गो० ]

३५ । [ देहिन इत्यादि । देहिनो जीवस्य संसृतेः संसारहेतोः दृढो बन्धः कथमुत्पद्यते । गो० ]

३६ । सर्वज्ञ इत्यनेन त्वं करबदरवत् सर्वं ब्रह्मतत्त्वं जानासीति सूचितम् । कथं त्वत्सकाशे परमरहस्यं तद् वदिष्यामीत्याह—शिष्यायेति । शिष्यायादेयं गुरोः किमपि न वर्त्तते इति भावः ।

---

1. च 'द्वौ' । 2. च-छ '-राजस्य' । 3. क-ख-ग-घ '-सृति-' । 4. क-च '-बद्धा-' ।

वाल्मीकिरुवाच—

शृणु [1]वत्स प्रवक्ष्यामि संक्षेपाद् बन्धमोक्षयोः ।
स्वरूपं साधनं [2]चापि मत्तः श्रुत्वा [3]यथोदितम् ।
तथैवाऽऽचर भद्रं ते जीवन्मुक्तो भविष्यसि ॥ ३७ ॥
देह एव महागेहमदेहस्य चिदात्मनः ।
तस्याहङ्कार एवास्मिन् मन्त्री तेनैव कल्पितः ॥ ३८ ॥
देहगेहा[4]भिमानं स्वं समारोप्य चिदात्मनि ।
तेन तादात्म्यमा[5]पन्नः स्वचेष्टितमशेषतः ।
विदधाति चिदानन्दे तद्भासितवपुः स्वयम् ॥ ३९ ॥

---

३७ । नरो० । शृणु वत्सेति । हे वत्स, बन्धमोक्षयोः स्वरूपं साधनञ्च संक्षेपाद् वक्ष्यामि शृणु । मत्तः श्रुत्वा यथोदितं तथैवाऽऽचर भद्रन्ते जीवन्मुक्तो भविष्यसीति सम्बन्धः ।

३८ । नरो० । बन्धस्य साधनरूपे मोक्षस्य साधनरूपे चाऽऽह—देह एवेत्यादि-सुषुप्तचित्तवृत्तिरित्यन्तेन ग्रन्थेन । अदेहस्य चिदात्मनो देह एव महागेहम्, अस्मिन् रूपे महागेहे तस्य चिदात्मनोऽहङ्कार एव मन्त्री तेनैव चिदात्मनैव कल्पित इत्यर्थः ।

३९ । नरो० । स्वं निजं देहगेहाभिमानं चिदात्मनि समारोप्य तेन देहगेहेन अहङ्कारेण वा तादात्म्यमापन्नः सन् तद्भासितवपुः सन् चिदात्मभासितवपुः सन् अशेषतोऽशेषेण स्वचेष्टितं स्वयमात्मना चिदात्मनि विदधातीति देहगेहाभिमानमिति पद्यार्थः ।

---

३७ । तच्च मत्तः श्रुत्वा यथा मयोदितं कथितं भविष्यति तथैवाऽऽचरेत्यन्वयः । रा० ।

३८ । अदेहस्य वस्तुतो देहसम्बन्धहीनस्यापि देहो महागेहमेव । यथा गृहस्वामिना गृहस्य न तादात्म्यं तथाऽस्य चिदात्मनो देहेनापि न तदिति भावः । तस्य चिदात्मनोऽस्मिन् देहेऽहङ्कार एव मन्त्री स चाहङ्कारस्तेनैव कल्पितः । तत्सान्निध्येन मायायास्तद्रूपः परिणाम इत्यतस्तेन कल्पित इत्युक्तम् । रा० ।

[ देह एवेत्यादि । अदेहस्य देहातीतस्य चिद्रूपत्वान्महात्मनो जीवस्य देह एव महागेहम् अजरं गृहम्, धारावाहित्वेन प्रवर्तनादच्छेद्यत्वाच्च । तस्मिन् देहगेहे तस्याऽऽत्मनस्तेनाऽऽत्मनैव स्वेच्छयाऽहंकारशरीरात् अहङ्कार एव मन्त्री कल्पितः, अहङ्कारवशेनैव सर्वं करोति । गो० ]

३९ । सोऽहङ्कारः स्वं स्वीयं देहरूपगेहविषयमहङ्कारं ममेत्याकाराभिमानं चिदात्मनि आरोप्य तेन चिदात्मना तादात्म्यमभेदमापन्नो यतोऽतः स्वचेष्टितं चिदानन्दे विदधाति । ननु जडस्याहङ्कारस्य कथं चेष्टितत्वमत आह—तद्भासितवपुस्तत्सम्पर्कादेव तादृशसामर्थ्यवानयं जात इत्यर्थः । रा० ।

---

1. क-ख-ख 'वक्ष्यामि ते सर्वं' । 2. ग 'वाऽपि' । 3. ग 'यथोचितम्' । 4. ग '-भिधान' । 5. क '-पन्नं' ।

तेन सङ्कल्पितो देही सङ्कल्प[1]निगडावृतः ।
पुत्रदारगृहा[2]दींश्च सङ्कल्पयति चानिशम् ।
सङ्कल्पयन् स्वयं देही परिशोचति सर्वदा ॥ ४० ॥
त्रयस्तस्या[3]हमो देहा अधमोत्तममध्यमाः ।
तमःसत्त्वरजःसंज्ञा जगतः कारणं स्थितेः ॥ ४१ ॥

---

४० । नरो० । तेनेति । तेनाहङ्कारेण सङ्कल्पितो देही सङ्कल्प एव निगडस्तेनाऽऽवृतः सन् अनिशं पुत्रदारगृहादीन् सङ्कल्पयति । देही स्वयं सङ्कल्पयन् सर्वदा परिशोचति ।

४१ । नरो० । त्रय इति । तस्य अहमोऽहङ्कारस्य तमःसत्त्वरजःसंज्ञा अधमोत्तम-मध्यमास्त्रयो देहा जगतः स्थितेः कारणमिति योजना ।

---

३९-४० । [ अहङ्कारवशवर्तित्वमेव संसारबन्धकारणम् इत्याह—देहगेहाभिमानमिति । एवं स्वकीयं देहगेहाभिमानं चिदात्मनि जीवे समारोप्य अहं देह इत्यभिमानं जीवे समर्प्य तेन चिदात्मना सह तादात्म्यमभिन्नत्वम् आपन्नम् अशेषतः समग्रं स्वचेष्टितम्, तद्भासितवपुः तेन चैतन्येन भासितं सचेतीकृतं वपुर्यस्य स्वभावतो जडत्वात् । यद्वा सद्रूपेणाभिभूतमूर्तिरात्मतां प्राप्य इत्यर्थः । चिदानन्दे ज्ञानानन्दस्वरूपे तस्मिन् जीवे स्वयमात्मना एव विदधाति करोति । अयं भावः—जीवो ज्ञानानन्दरूप एव स्वभावात् अस्याहङ्कारवशवर्तित्वेन देहाहंबुद्धिस्ततोऽहङ्कार-कृतेषु कर्मसु मयैवैतानि कृतानीति मत्वा संसारे बद्धो भवति । तेनाहङ्कारेण सङ्कल्पितो देही जीवः ; सङ्कल्पो वासनारूपा मनोवृत्तिः । स एव निगडं शृङ्खलं तेनाऽऽवृतो बद्धो भवति । तदुक्तं गीतासु—

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते ॥ इति ३।२७ ।

पुत्रदारेत्यादि । ततोऽनिशं सततं पुत्रदारगृहादीन् सङ्कल्पयति वासनाविषयीकरोति । गो० ]

तेनाहङ्कारेण सङ्कल्पितोऽयमेव स सङ्कल्पान् करोत्विति सङ्कल्पविषयीकृतः । यद्वा स्वीयसङ्कल्पेनैव तद्वान् कृतोऽत्यन्तसन्निकर्षेण तादात्म्यापन्नत्वात् । यथा भार्याविशिष्ट एव गृहस्थो गृहस्थस्य भार्येति च व्यवहारस्तद्वदयं व्यवहारो बोध्यः । तदीयसङ्कल्परूपनिगडेनाऽऽवृतो बद्धः सङ्कल्पयति कामयते । तानि कामयंस्तदलाभे लब्धनाशे च शोचति । रा० ।

४१ । त्रयस्तमःसत्त्वरजोरूपाः । तदेवाऽऽह—तम इत्यादि । अत एव जगतः स्थितेः कारणम् । रा० ।

[ तांश्च सङ्कल्पयन् अनिष्पत्तिवासनाद्यैर्जीवः स्वयं सर्वदा परिशोचति, न केवलं परिशोचति किन्तु अहङ्कारात् नानायोनीः प्राप्नोतीत्याह—त्रय इत्यादि । तस्य अहङ्कारस्य त्रयो देहा देह-

---

1. छ '-निगदावृत' । 2. क-ख-घ-छ '-दीनि' । 3. च-छ '-ऽऽत्मनो' ।

तमोरूपाद्धि[1] सङ्कल्पान्नित्यं तामसचेष्टया ।
अत्यन्तं[2] तामसो भूत्वा कृमिकीटत्वमाप्नुयात् ॥ ४२ ॥
सत्त्वरूपो हि सङ्कल्पो धर्मज्ञानपरायणः ।
अदूरमोक्षसाम्राज्यः सुखरूपो हि तिष्ठति ॥ ४३ ॥
रजोरूपो हि सङ्कल्पो [3]लोकसंव्यवहारवान् ।
परितिष्ठति संसारे पुत्रदारानुरञ्जितः ॥ ४४ ॥

---

४२ । नरो० । तमोरूपदेहस्याधमत्वं प्रकटयति—तमोरूपाद्धि सङ्कल्पादिति पद्येन । अमुकस्य मारणार्थमिदं कर्म कर्तव्यमित्यादिरूपः सङ्कल्पस्तमोरूपसङ्कल्पः ।

४३ । नरो० । सत्त्वरूपदेहस्य उत्तमत्वं प्रकटयति—सत्त्वरूपो हीति पद्येन । पुण्यार्थमिदं कर्म कर्तव्यमित्यादिरूपः सङ्कल्पः सत्त्वरूपः सङ्कल्पः ।······वति सधर्मज्ञानपरायण इति दिक् । यस्येति शेषः । धर्मो ज्ञानञ्च परमयनमाश्रयो यस्य सः । अत एव अदूरं मोक्षसाम्राज्यं यस्य सः । अत एव सुखं रूपं यस्य सः ।

४४ । नरो० । रजःसंज्ञकस्य देहस्य मध्यमत्वं प्रकटयन्नाह—रजोरूपो हीति पद्येन ।

---

यदभिमानविषया मूर्तयो वा । तेन अधमोत्तममध्यमाः । तमःसत्त्वरजःसंज्ञास्ते च जगत्स्थितेः कारणं त्रिगुणात्मकत्वात् । गो० ]

४२ । [ तत्र विशेषमाह—तमोरूपाद्धि इत्यादि । हि निश्चितं तमोरूपात् सङ्कल्पान्नित्यं तामसो भूत्वा कृमिकीटत्वम् आप्नुयात् । कृमिकीटत्वमित्युपलक्षणं स्थावरादित्वं प्राप्नुयात् । गो० ]

तेषां कार्यविशेषानाह—तमोरूपादिति । तमोरूपात्तमोगुणप्राधान्येन कृतात् सङ्कल्पादित्यर्थः । वृत्तिवृत्तिमतोरभेदात् । तमोरूपादित्युक्तकारणानुरूपत्वात् कार्यस्य तत्कृतचेष्टायास्तामसत्वम् । रा० ।

४३ । [ सत्त्वरूपः सात्त्विकः सङ्कल्पः, उपचारादभेदः । सत्त्वरूपात् सङ्कल्पादित्यर्थः । धर्मश्च ज्ञानमाध्यात्मिकं तच्च परमयनं यस्य । उत्तरोत्तरं सत्त्वकर्मपरत्वं ज्ञानपरत्वञ्च ज्ञातव्यम् । अदूरे मोक्षसाम्राज्यं मोक्षरूपसाम्राज्यं यस्य सः । 'सत्त्वं यद् ब्रह्मदर्शनमि'ति स्मृतेः । सुखरूपः विक्षेपलयाभावात् सत्यसुखरूपः, 'सत्त्वं सुखे सञ्जयती'ति गीतासूक्तेः । एवम्भूतस्तिष्ठति । तिष्ठतीति निर्देशात् कर्मादिव्याकुलतां परित्यज्य सदैव सुखी तिष्ठतीत्युक्तम् । गो० ]

मोक्षोऽप्यनयैव वृत्त्या प्राप्यत इत्याह—अदूरेति । अत एव स पुरुषः सुखरूपस्तिष्ठति । हि प्रसिद्धम् । रा० ।

४४ । [ राजसाहङ्कारकार्यमाह—रजोरूपः सङ्कल्पः लोकव्यवहारवान्, व्यवहारो नानाफलोद्देशेन ऐहिकामुष्मिककर्मसु प्रवृत्तिः । गो० ]

---

1. च '-दिसङ्कल्पो नित्यं' । 2. ग-च '-न्तता-' । 3. क-ख-घ 'लोके स-' ।

त्रिविधं तु परित्यज्य रूपमेतन्[1]महामते ।
सङ्कल्पः परमाप्नोति [2]परमात्मपरिक्षये ॥ ४५ ॥
दृष्टीः सर्वाः परित्यज्य नियम्य मनसा मनः ।
सबाह्याभ्यन्तरार्थस्य सङ्कल्पस्य क्षयं कुरु ॥ ४६ ॥

---

पुत्रप्राप्त्यर्थमिदं कर्म कर्तव्यमित्यादिरूपः सङ्कल्पो रजोरूपः सङ्कल्पो यस्य भवति स लोकव्यवहारवान् इति दिक् । लोकसंव्यवहारः पुत्रदारादिव्यवहारो यस्यास्ति स लोकसंव्यवहारवान् । अत एव पुत्रदारानुरञ्जितः, पुत्रदारेत्युपलक्षणम् । सत्त्वरूपसङ्कल्पस्यापि सुखजनकत्वाद् बन्धकत्वं विद्यते । अत एव अदूरमोक्षसाम्राज्य इत्युक्तम् । न तु प्राप्तमोक्षसाम्राज्य इत्युक्तम् । तथाच भगवद्गीता—

सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः ।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥
तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥
रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय ॥
तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ इति ।

४५ । नरो० । तर्हि किं कृत्वा कीदृशः सन् जीवः श्रेयः प्राप्नोतीत्यपेक्षायामाह—त्रिविधन्त्वित्यादि । सं सम्यक् कल्पः ज्ञानं यस्येति व्युत्पत्त्या संकल्पशब्दोऽत्र तत्त्वज्ञानिपरः । परं पदं मोक्षम् । आत्मपरिक्षये शरीरपरिक्षये ।

४६ । नरो० । तर्हि मया किं विधेयमित्यपेक्षायामाह—दृष्टीरित्यादि । सर्वा दृष्टीः

---

यस्य रजोरूपः सङ्कल्पः स लोके व्यवहारवान् । ततो व्यवहारयुतः पुत्रदारानुरञ्जितः संसारे राजससङ्कल्पकृततत्तत्कर्मवशात्तिष्ठति । रा० ।

४५ । [ गुणत्रयसङ्कल्पस्य फलमुक्त्वा सङ्कल्पहीनस्य परमपदप्राप्तिरूपं फलमाह—त्रिविधमित्यादि । सङ्कल्पते इति सङ्कल्पः अधिकारी पुरुषः, एतत्त्रिविधं तामसादिरूपं सङ्कल्पं परित्यज्य आत्मनोऽहङ्कारस्य परिक्षये निःशेषं क्षये सति परं पदम् आप्नोति मुक्तो भवतीत्यर्थः । गो० ]

यस्य सङ्कल्प एतत् पूर्वोक्तं त्रिविधमपि रूपं परित्यज्य शाम्यतीति शेषः । स परं पदमाप्नोति, सत्त्वरूपसङ्कल्पस्य हि क्रमेण सर्वसङ्कल्पनाशद्वारा दूरमोक्षत्वं प्रागुक्तं बोध्यम् । आत्मपरिक्षये अत्राऽऽत्मा संकल्पः । रा० ।

४६ । अतस्त्वं दृष्टीः सर्वेन्द्रियज्ञानानि परित्यज्य मनसैव मनो विनियम्य विषयेभ्यो

---

1. क '-न्महाबलम्' । 2. ख-ग-घ 'पदमा-' ।

यदि वर्षसहस्राणि तपश्च[1]रसि दारुणम् ।
पातालस्थस्य भूस्थस्य स्वर्गस्थस्यापि तेऽनघ ।
नान्यः कश्चिदुपायोऽस्ति सङ्कल्पोप[2]शमादृते ॥ ४७ ॥
[3]अनाबाधेऽविकारे स्वे सुखे परमपावने ।
सङ्कल्पोपशमे यत्नं पौरुषेण परं कुरु ॥ ४८ ॥

---

परित्यज्य मनसा मनश्चित्तवृत्तिं नियम्य निरुध्य बाह्याभ्यन्तरार्थाभ्यां सह वर्तमानस्य सङ्कल्पस्य क्षयं कुर्विति सम्बन्धः । सर्वा दृष्टीर्गुणबुद्धिं सुखबुद्धिं दुःखबुद्धिमित्यर्थः । तदर्थमिदं करिष्यामीति सामान्यसंकल्पः ।

४७ । नरो० । तत्र हेतुर्यदीत्यादि । यदि वर्षसहस्राणि दारुणं तपश्चरति तदाऽपि । पातालस्थस्य भूस्थस्य स्वर्गस्थस्यापि ते तव सङ्कल्पोपशमादृते सङ्कल्पोपशमं विना मोक्षस्य कश्चिदन्य उपायो नास्तीति सम्बन्धः ।

४८ । नरो० । सङ्कल्पोपशमादेव अनर्थनिवृत्तिरानन्दावाप्तिश्च भवेदित्याह—अनाबाधे इति सार्द्धैश्चतुर्भिः । अनाबाधे बाधशून्ये । अविकारे विकारशून्ये । सुखे सुखरूपे । पौरुषेण पुरुषव्यापारेण ।

---

निवर्त्त्य, बाह्येन्द्रियविषयसहितो य आभ्यन्तरेन्द्रियविषयोऽर्थस्तस्य तद्विषयस्य सङ्कल्पस्य क्षयं कुरु सङ्कल्पं त्यजेत्यर्थः ।

४७ । अन्योपायेन न सर्वथा सुखप्राप्तिरित्याह—यदीति । तादृशतपःपूर्वकं पातालाद्यन्यतमलोकस्थस्यापि तव सङ्कल्पोपशमादृते तं विना । रा० ।

[ यदि वर्षसहस्राणि दारुणम् अतिकृच्छ्रं तपश्चरसि । न केवलं पृथिव्यामेवैवं नियमः पातालस्थस्य स्वर्गस्थस्यापि ते तव सङ्कल्पोपशमाद् ऋते विना कश्चिदुपायो नास्ति । सङ्कल्पस्य पुण्यस्थाननिवासो मोक्षसाधकः । गो० ]

४८ । अनाबाधे दुःखासंमिश्रे अविकारे विषयसम्बन्धं विनैव प्राप्ये परमपावने स्वात्मरूपे सुखे तत्प्राप्तिनिमित्तं न कश्चिदुपायोऽस्तीत्यर्थः । तस्मात्तद्रूपोपशमे यत्नं कुरु । रा० ।

[ अनबोधविकारे इत्यादि । अबोधोऽज्ञानं विकारो विकल्पः, न विद्येते तौ यत्र तस्मिन् । स्वे आत्माख्ये, अत एव परमपावने अतिपवित्रे सुखे सुखस्वरूपे । यद्वा एवम्भूतं सुखार्थं यः सङ्कल्पोपशमः, तत्र तदर्थं पौरुषेण समस्तपुरुषकारेण यत्नं कुरु निर्वासनस्य नित्यसुखमयत्वात् । गो० ]

---

1. च '-रति' । 2. छ '-शमाय ते' । 3. ख 'अनन्तादिविकारेऽस्मिन्', छ 'अनन्तादिविकारे स्वे' ।

सङ्क[1]ल्पतन्तौ निखिला भावाः [2]प्रोताः किलानघ ।
छिन्ने तन्तौ न [3]जानीते क्व यान्ति विभवाः पराः ॥ ४९ ॥
निःसङ्कल्पो यथाप्राप्तव्यवहारपरो भव ।
क्षये सङ्कल्पजालस्य जीवो ब्रह्मत्वमाप्नुयात् ॥ ५० ॥
अधिगतपरमार्थतामुपेत्य प्रसभमपास्य विकल्पजालमुच्चैः ।
अधिगमय पदं[4] तदद्वितीयं विततसुखाय [5]सुषुप्तचित्त[6]वृत्तिः ॥ ५१ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे उत्तरकाण्डे
षष्ठोऽध्यायः ॥ ६ ॥

---

४९ । नरो० । सङ्कल्प एव तन्तुस्तस्मिन् तथा । भावा देहेन्द्रियादयः प्रोता[ प्रोता ग्रथिताः ? ] तन्तौ छिन्ने सति परा विभवाः क्व यान्ति इति न जानीते इति । विभवा अर्थाः ।

५० । नरो० । निःसङ्कल्पः सङ्कल्पशून्यः । यथाप्राप्तव्यवहार इति । यथाप्राप्तं प्राप्तानतिक्रमेण यो व्यवहारस्तस्मिन्नित्यर्थः । अप्रार्थितोप[ निपातस ]न्तुष्ट इति तु पर्यवसितार्थः । सङ्कल्पजालस्य सङ्कल्पसमूहस्य ।

५१ । नरो० । उपसंहरति—अधिगतपरमार्थतामिति । विकल्पजालमुच्चैः प्रसभं हठात्

---

४९ । सङ्कल्पस्यैवाऽऽधारत्वात् तन्नाशे एव सर्वविषयनिवृत्तिरित्याह—सङ्कल्पतन्ताविति । विभवाः विशिष्टो भवः संसारो येभ्यस्तादृशास्ते परा भवास्ते क्व यान्तीति न जानीमः, सर्वथा नश्यन्त्येवेति भावः । रा० ।

[ कथं सङ्कल्पत्यागमात्रेणैव संसारोपरमो भवतीत्याह—सङ्कल्पतन्ताविति । भाव्यन्ते पुनः पुनः क्रियन्ते भोगादयः एभिरिति भावा विषयाः, ते निखिलाः सर्वे, सङ्कल्प एव तन्तुः अखिलसूत्रम्, तत्र प्रोता ग्रथिताः, सूत्रे हारगुटिकावदित्यर्थः । गुणे छिन्ने परा विभवाः क्व यान्ति तन्न जानीमः । अयं भावः—सूत्रे ग्रथिता मणयो यथा सूत्रे छिन्ने इतस्ततः पतन्ति, तांश्च कर्ता न जानाति, तथा सङ्कल्पे नष्टे सङ्कल्पविषयाः सर्व एव भावाः स्वयं नश्यन्ति कर्ता न जानातीत्यर्थः । गो० ]

५० । तस्मान्निःसङ्कल्पस्त्यक्तेच्छो यथाप्राप्तं व्यवहारं कुर्वित्यर्थः । सङ्कल्पक्षय-फलमाह—क्षये इति । रा० ।

५१ । प्रसभं हठेन विकल्पजालं त्यक्त्वा, अधिगतः परमार्थो ब्रह्मतत्त्वं येन तद्भावमुपेत्य प्राप्य तदद्वितीयं पदमधिगमय प्राप्नुहि । विततसुखायानुच्छेद्यसुखाय । तदर्थं निदिध्यासन-

---

1. च '-ल्पितस्था' । 2. क-ख-च 'प्रोक्ताः', छ 'प्रोता इवा-' । 3. क-ख-घ च 'जानीमः' ।
4. छ '-दमहि-' । 5. छ 'सुखान्त-' । 6. च '-वृत्तेः' ।

अपास्य क्षिप्त्वा अमुं जीवम् उपेत्य तत् अद्वितीयं वस्तु ब्रह्म सुषुप्तचित्तवृत्तिः सन् विततसुखाय अधिगमय प्रापयेति योजना। विकल्पजालं देहगेहादिसमूहम्। सुषुप्ता चित्तवृत्तिर्यस्य सः।

[ उत्तरकाण्डे षष्ठाध्यायव्याख्या समाप्ता ॥ ६ ॥

---

मुपदिशति। सुषुप्तिकालिका चित्तवृत्तिर्यस्य तादृशो भव। सकलविषयरहितचित्तवृत्तिरेव ब्रह्माकारचित्तवृत्तिरिति भावः। रा०।

[ अधिगत इत्यादि। अधिगतः प्राप्तः परमार्थो येन तस्य भावस्तत्ता तामुपेत्य प्रसभं हठाद् विकल्पजालं विकल्पसमूहम् उच्चैर्निःशेषं यथा स्यात्तथा अपास्य त्यक्त्वा विततसुखाय अतिशयसुखाय अतिशयसुखार्थं सुषुप्ता चित्तवृत्तिर्यस्य तथाभूतः सन् तदद्वितीयपदं परं ब्रह्म अधिगमय अधिगच्छ। 'अन्येऽपि धातवः क्वचिदि'ति स्वार्थे णिच्। गो० ]

# सप्तमोऽध्यायः

[1]श्रीमहादेव उवाच—

वाल्मीकिना बोधितोऽसौ कुशः[2] सद्यो गतभ्रमः ।
अन्त[3]र्मुक्तो बहिः सर्वमनुकुर्वंश्चचार सः ॥ १ ॥
वाल्मीकिरपि तौ प्राह सीतापुत्रौ महाधियौ ।
तत्र तत्र च गायन्तौ पुरे वीथिषु [4]सर्वतः ॥ २ ॥
रामस्याग्रे प्रगायेतां शुश्रूषुर्यदि राघवः ।
न ग्राह्यं [5]वै युवाभ्यां तद् यदि किञ्चित् [6]प्रदास्यति ॥ ३ ॥
इति [7]तौ चोदितौ तत्र गायमानौ विचेरतुः ।
यथोक्तमृषिणा पूर्वं तत्र तत्राभ्यगायताम् ॥ ४ ॥
[8]तां संशुश्राव काकुत्स्थः पूर्वचर्यां[9] ततस्ततः ।
अपूर्वपाठ[10]वृत्तादिगेयेन समभिप्लुताम् ।
बालयो राघवः श्रुत्वा कौतूहलमुपेयिवान् ॥ ५ ॥

---

१ । नरो० । सद्यो गतो नष्टः, अत एव अन्तर्मुक्तो विषयवासनारहित इति ।

५ । नरो० । गेयेन समभिप्लुतां ताम् । ततस्तु पूर्वचर्यां काकुत्स्थः संशुश्राव इति ।

---

१ । वाल्मीकिनेति । सद्गुरूपदेशात् कुशस्योत्तमाधिकारित्वाच्च तत्कालमेव निदिध्यासनान्तसाधनसम्पदिति भावः । यत् करोति तदनुकुर्वन्निव तत्राऽऽस्थाभावादिति भावः । रा० ।

[ अन्तर्मुक्तो बहिःसर्वमनुकुर्वन्निति । अन्तरन्तःकरणे मुक्तो रागरहितः, बहिरनुकुर्वन् सर्वं चचार सर्वं कर्म कृतवान् । 'विरक्तो रक्तवच्चरेदि'ति स्मृतेः । गो० ]

५ । [ तां स शुश्रावेति । पूर्वचर्यां पूर्वेषामिक्ष्वाकुप्रभृतीनां चर्यां पालनादिकर्म

---

1. क-ख-घ-पुस्तकेषु 'श्रीमहादेव उवाच' इति नास्ति । 2. च '-श्च विगतभ्रमः' । 3. क-ख-घ '-र्युक्तो' । 4. छ 'सर्वशः' । 5. ग 'तद् युवाभ्यां स' । 6. च 'स यच्छति' । 7. ग-च 'तेनोदितौ' । 8. क-ख-ग-घ 'तां स शु-', च 'ताश्च शु-' । 9. च '-र्यामित-' । 10. क-ख-घ '-जातिश्च', ग-च-छ '-वृत्तानि' ।

अथ कर्मान्तरे [1]राजा समाहूय महामुनीन् ।
[2]राज्ञश्चैव नरव्याघ्रः पण्डितांश्चैव नैगमान् ॥ ६ ॥
पौराणिका[3]ञ्छब्दविदो ये च वृद्धा द्विजातयः ।
[4]एतान् सर्वान् समाहूय गायकौ संप्रवेशयत् ॥ ७ ॥
ते सर्वे हृष्टमनसो राजानो ब्राह्मणादयः ।
[5]रामं तौ [6]दारकौ दृष्ट्वा विस्मिता [7]ह्यनिमेषणाः ।
[8]अवोचन् सर्व एवैते परस्परमथा[9]ऽऽगताः ॥ ८ ॥
इमौ रामस्य सदृशौ बिम्बा[10]द्बिम्बमिवोदितौ ।
जटिलौ यदि न स्यातां न च वल्कलधारिणौ ।
विशेषं नाधिगच्छामो राघवस्यानयोस्तदा ॥ ९ ॥

---

पूर्वचर्यामिति । चर्या यतीनां सर्गमार्गस्थितिः । समभिप्लुतां व्याप्ताम् । बालयोरपूर्वपाठवृत्तादि श्रुत्वा कौतूहलं हर्षविशेषमुपेयिवान् इत्यन्वयः । अपूर्वः पाठो येषां तानि च वृत्तानि चेति तानि तथा । वृत्तानि पद्यानि ।

६ । नरो० । नैगमान् नागरान् ।

७ । नरो० । संप्रवेशयदिति, अत्राडभाव आर्षः ।

८ । नरो० । अविद्यमानं निमेषणं येषां ते अनिमेषणाः । परस्परमिति क्रिया-विशेषणम् ।

---

चरित्रं वा । अपूर्वपाठोऽध्ययनवृत्तान्तः जातिर्वृत्तं च यस्याम् । गेयेन गानेन समभिप्लुतां युक्ताम् । गो० ]

अपूर्वपाठवृत्तञ्चेत्यत्र अपूर्वां पाठजातिञ्चेति पाठो वाल्मीकीये । तथाच—

तां च शुश्राव काकुत्स्थः कथां दिव्याद्भुतोपमाम् ।
अपूर्वां पाठजातिञ्च गेयेन समभिप्लुताम् ॥ इति ७।१००।२ ।

७ । संप्रवेशयत्, अडभाव आर्षः । रा० ।

८ । रामं दारकौ च दृष्ट्वा विस्मिताः सन्तोऽनिमेषेणा अपश्यन्निति शेषः । रा० ।

९ । [ यदि जटिलौ न स्यातां वल्कलधारिणौ च न स्यातां तदा राघवस्यानयोश्च विशेषं भेदं नाधिगच्छामः । गो० ]

---

1. च 'सत्तान्'। 2. छ 'राज्ञा चैव'। 3. क '-च्छन्द-'। 4. क 'प्राज्ञान्'। 5. छ 'इमौ'। 6. म-च 'बालकौ'। 7. छ 'छि सभासदः'। 8. छ-पुस्तके अयं श्लोको नास्ति। 9. ग-च '-ऽऽहताः'। 10. च '-द्बिम्बाविवो-'।

एवं संवदतां तेषां विस्मितानां परस्परम् ।
उपचक्रमतुर्गातुं[1] तावुभौ मुनिदारकौ ॥ १० ॥
ततः प्रवृत्तं[2] मधुरं गान्धर्वमतिमानुषम् ।
श्रुत्वा तन्मधुरं गीतमपराह्णे रघूत्तमः ।
उवाच भरतं [3]चाऽऽभ्यां दीयतामयुतं वसु ॥ ११ ॥
दीयमानं सुव[4]र्णन्तु न तज्जगृहतुस्तदा ।
किमनेन सुवर्णेन राजन्नौ वन्य[5]भोजिनौ ।
इति सन्त्यज्य [6]संदत्तं जग्मतुर्मुनिसन्निधिम् ॥ १२ ॥
एवं श्रुत्वा तु चरितं रामः [7]स्वस्यैव विस्मितः ।
ज्ञात्वा सीताकुमारौ तौ शत्रुघ्नं चेदमब्रवीत् ।
हनूमन्तं सुषेणञ्च विभीषणमथाङ्गदम् ॥ १३ ॥

---

१० । नरो० । मुनिदारकाविति लोकप्रतीत्यभिप्रायेणोक्तम् ।

११ । नरो० । यतो गान्धर्वमतोऽतिमानुषं मानुषानतिक्रान्तम्, मधुरञ्च । रामाभिप्रायमिति अतः परं स्वस्थानं गन्तव्यमित्य...सुकाः कालक्षेपासहिष्णवः(?) ।

---

११ । अयुतं दशसहस्रम् । वाल्मीकीयेऽपि—

श्रुत्वा विंशतिसर्गांस्तान् भ्रातरं भ्रातृवत्सलः ।
आभ्यां दशसहस्राणि सुवर्णस्य कृताकृतम् ॥ इति ७।१००।१९ ।

१२ । दीयमानं भरतेनेति शेषः । तत् सुवर्णं न जगृहतुः कुशीलवाविति शेषः । न केवलं न गृहीतवन्तौ अपि तु हे राजन्, वन्यभोजिनौ फलमूलाद्यशनावावामिति सुवर्णेन किं किं प्रयोजनमिति उक्त्वा तत् सुवर्णं सन्त्यज्य च मुनेर्वाल्मीकेः सन्निधिं गतौ इत्यन्वयः । अत्रार्थे वाल्मीकीयेऽपि—

दीयमानं सुवर्णन्तु न तौ जगृहतुस्तदा ।
ऊचतुश्च महात्मानौ किं धनेन विशां पते ॥
वन्येन फलमूलेन निरतानां वनौकसाम् ।
किमस्माकं हिरण्येन सुवर्णेनापि वा नृप ॥ इति ७।१०१।१७-१८ ।

१३ । रामस्य वाल्मीकिमुनेरानयने शत्रुघ्नादीनां प्रेषणं वाल्मीकीये—

---

1. ग-च '-तुमुभौ तौ मुनिदारकौ' । 2. च-छ '-त्तमखिल' । 3. छ 'ताभ्या' । 4. ग-च '-र्णञ्च' । 5. ख-घ '-भोजनौ' । 6. च 'तद्दत्तं' । 7. ख-घ 'स्वस्यैव' ।

[1]भगवन्तं महात्मानं वाल्मीकिं मुनिसत्तमम् ।
आनयध्वं मुनिवरं ससीतं देवसम्मितम् ॥ १४ ॥
अस्यास्तु [2]पर्षदो मध्ये प्रत्ययं जनकात्मजा ।
करोतु शपथं सर्वे जानन्तु गतकल्मषाम् ॥ १५ ॥
[3]सीतातद्वचनं श्रुत्वा गताः सर्वेऽतिविस्मिताः ।
ऊचुर्यथोक्तं रामेण वाल्मीकिं रामपार्षदाः ॥ १६ ॥
रामस्य हृद्गतं सर्वं ज्ञात्वा वाल्मीकिरब्रवीत् ।
श्वः करिष्यति वै सीता शपथं जनसंसदि ।
योषितां परमं[4] दैवं पतिरेव न संशयः ॥ १७ ॥
तच्छ्रुत्वा सहसा गत्वा सर्वे प्रोचुर्मुनेर्वचः ।
राघव[5]स्यापि रामोऽपि श्रुत्वा मुनिवर[6]स्तथा ।
राजानो मुनयः सर्वे शृणुध्वमिति चाब्रवीत् ॥ १८ ॥
सीतायाः शपथं लोका विजानन्तु शुभाशुभम् ।
इत्युक्ता राघवेणाथ लोकाः सर्वे दिदृक्षवः ॥ १९ ॥

---

१५ । नरो० । पर्षदः सभायाः । प्रत्ययमिति प्रतीयते अनेनेति व्युत्पत्तिः कार्या ।

१६ । नरो० । सीतायास्तद्वचनं सीतातद्वचनम्, अत्र सम्बन्धे षष्ठी ।

---

तस्मिन् गीतेऽथ विज्ञाय सीतापुत्रौ कुशीलवौ ।
तस्याः परिषदो मध्ये रामो वाक्यमुवाच ह ॥
शत्रुघ्नं वीर्यसम्पन्नं हनूमन्तञ्च वानरम् ।
विभीषणञ्च धर्मज्ञं सुषेणञ्च परन्तपम् ॥
भगवन्तं महात्मानं वाल्मीकिमृषिसत्तमम् ।
आनयध्वमिहोदारं ससीतं देवसम्मितम् ॥ इति ७।१०२।६-८ ।

१८ । राघवस्यापि सविधं तद्वच ऊचुरित्यन्वयः । राजानो मुनय इति सम्बोधने । रा० ।

१९ । सीतायाः शपथं दृष्ट्वा तस्याः शुभाशुभं धर्माधर्मरूपं विजानन्तु निर्णयन्तु । रा० ।

---

1. ग-च-छ-पुस्तकेषु इदमर्धं नास्ति । 2. च 'संसदो' । 3. क-ख-ग-घ-च-छ 'सीता । 4. च '-मो दैवः' । 5. ग-छ '-स्याथ' । 6. ग-च-छ '-सदा' ।

ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव महर्षयः ।
वानराश्च समाजग्मुः कौतूहलसमन्विताः २० ॥
ततो मुनिवरस्तूर्णं ससीतः समुपागमत् ।
अग्रतस्तमृषिं कृत्वा यान्ती किञ्चिदवाङ्मुखी ।
कृताञ्जलिर्बाष्पकण्ठी सीता यज्ञं विवेश तम् ॥ २१ ॥
दृष्ट्वा लक्ष्मीमिवाऽऽयान्तीं ब्रह्माणमनुयायिनीम् ।
वाल्मीकेः[1] पृष्ठतः सीतां साधुवादो महानभूत् ॥ २२ ॥
तदा मध्ये जनौघस्य प्रविश्य मुनिपुङ्गवः ।
[2]सीतासहायो वाल्मीकिरिति प्राह च राघवम् ॥ २३ ॥
इयं दाशरथे सीता सुव्रता धर्मचारिणी ।
अपापा [3]ते पुरा त्यक्ता ममाऽऽश्रमसमीपतः ।
लोकापवादभीतेन त्वया राम महावने ॥ २४ ॥
प्रत्ययं दास्यते सीता तदनुज्ञातुमर्हसि ।
इमौ तु सीतातनया[4]विमौ [5]यमलजातकौ ।
[6]सुतौ तु तव दुर्धर्षौ [7]तथ्यमेतद् ब्रवीमि ते ॥ २५ ॥

---

२१ । अत्राऽऽह वाल्मीकिः—

तमृषिं पृष्ठतः सीता अन्वगच्छदवाङ्मुखी ।
कृताञ्जलिर्बाष्पवती कृत्वा रामं मनोगतम् ॥
दृष्ट्वा श्रियमिवाऽऽयान्तीं सुव्रतां ब्रह्मचारिणीम् ।
वाल्मीकेः पृष्ठतः सीतां साधुवादो महानभूत् ॥ इति ७।१०३।९-१० ।

२४ । पाद्मोत्तरखण्डेऽपि वाल्मीकिवाक्यम्—

अपापां मैथिलीं राम त्यक्तुं नार्हसि सुव्रत ।
इयन्तु विरजा साध्वी भास्करस्य प्रभा यथा ।
अन्यथा तव काकुत्स्थ कस्मात्त्यक्ता त्वयाऽनघ ॥ इति २४४।१८ ।

२५ । सा सीता प्रत्ययं विश्वासजनकं शपथम् । अत्र स्थाने ऋषेरतिकरुणरसाक्रान्तचित्ततया इमाविति पदपौनरुक्त्यं न दोषाय । रा० ।

[ इमौ यमलजातकौ सीतातनयौ इमौ तव सुतौ दुर्धर्षाविति सम्बन्धः । गो० ]

---

1. ग-च-छ '-किष्ट-' । 2. छ-पुस्तके अत आरभ्य चतुर्विंशश्लोकपूर्वार्धान्तोऽंशो नास्ति । 3. च 'च' । 4. च '-वतुलौ यमजातकौ' । 5. छ 'यमज-' । 6. च 'पुत्रौ' । 7. छ 'सत्य-' ।

प्रचेतसोऽहं दशमः पुत्रो रघुकुलो[1]द्वह ।
अनृतं न स्मराम्युक्तं यथेमौ तव [2]पुत्रकौ ॥ २६ ॥
[3]बहून् वर्षगणान् सम्यक् तपश्चर्या मया कृता ।
नोपाश्नीयां फलं तस्या दुष्टेयं यदि मैथिली ॥ २७ ॥
[4]वाल्मीकिनैवमुक्तस्तु राघवः प्रत्यभाषत ।
एव[5]मैतन्महा[6]प्राज्ञ यथा वदसि सुव्रत ॥ २८ ॥
प्रत्ययो[7] जनितो मह्यं तव वाक्यैरकिल्बिषैः ।
लङ्काया[8]मपि दत्तो मे वैदेह्या प्रत्ययो महान् ।
देवानां पुरतस्तेन मन्दिरे[9] सम्प्रवेशिता ॥ २९ ॥

---

२६। तत्राऽऽदौ भगवान् वाल्मीकिः स्वधर्मशपथैः सीताया अदुष्टत्वं ख्यापयति—प्रचेतस इत्यादिना। यथाऽद्य यावदनृतमुक्तं न स्मरामि तथा इमौ तव पुत्रकाविति वाक्यमपि सत्यमेवेत्यर्थः। रा०।

[ अहं प्रचेतसः दशमः दशानां पूरणः पुत्रः। देवपुत्रत्वान्मिथ्या न ब्रवीमीति भावः। अनृतं न स्मरामि ब्रवीमीत्युक्तम्, अत इमौ तव पुत्रावेव। गो० ]

२७। बहून् वर्षगणान् व्याप्येति शेषः। सम्यग् यथाविधीत्यर्थः। वाल्मीकीये तु सम्यगित्यत्र 'सौम्य' इति रामसम्बोधनम्। नोपाश्नीयां फलं न प्राप्नुयामित्यर्थः। अत्र वाल्मीकीये—

बहून् वर्षगणान् सौम्य तपश्चर्या मया कृता ।
प्राप्नुयां न फलं तस्या दुष्टेयं यदि मैथिली ॥
कर्मणा मनसा वाचा न मेऽस्ति कलुषीकृतम् ।
प्राप्नुयां न फलं तस्य दुष्टेयं यदि मैथिली ॥ इति ७।१०३।१८-१९ ।

२८। वाल्मीकेनैवमुक्तस्तु इत्यपि क्वचित् पाठः। तथात्वे वाल्मीकः शब्दः। तथाच शब्दार्णवे—'स्यातां वाल्मीकवाल्मीकी वल्मीकिभ्‍र्गुजर्क्षके' इति।

२९। मन्दिरे गृहे इत्यर्थः। व्यक्तं वाल्मीकीये—

प्रत्ययश्च पुरा दत्तो वैदेह्याः सुरसन्निधौ ।
शपथश्च कृतस्तत्र तेन वेश्म प्रवेशिता ॥ इति ७।१०४।३।

---

1. ग '-द्वव'। 2. क 'बालकौ'। 3. ग-च 'बहुव-'। 4. क 'वाल्मीकेनै-'। 5. च '-मेव म-'। 6. क '-भाग'। 7. च '-स्रं जनितं'। 8. क '-मेव'। 9. ग-च-क '-रं'।

सेयं लोकभयाद् ब्रह्मन् [1]अपापाऽपि सती पुरा ।
सीता मया परित्यक्ता [2]भवांस्तत् क्षन्तुमर्हति ॥ ३० ॥
[3]ममैव जातौ जानामि पुत्रावेतौ कुशीलवौ ।
शुद्धायां [4]जगतीमध्ये सीतायां प्रीतिरस्तु मे ॥ ३१ ॥
देवाः सर्वे परिज्ञाय रामाभिप्रायमुत्सुकाः ।
ब्रह्माणमग्रतः कृत्वा समाजग्मुः सहस्रशः ॥ ३२ ॥
प्रजाः समाग[5]मन् हृष्टाः सीता कौषेय[6]वासिनी ।
[7]उदङ्मुखी ह्यधोदृष्टिः प्राञ्जलिर्वाक्यमब्रवीत् ॥ ३३ ॥

---

३१ । जगतीमध्ये तद्वर्त्तिलोकमध्ये । शुद्धायां शपथेन सर्वलोकज्ञातशुद्धतायाम् । रा० ।

३२ । [ रामाभिप्रायं प्रथमं सीतां वैकुण्ठं गमयित्वा पश्चादहमपि गमिष्यामीति श्रीरामस्याभिप्रायं ज्ञात्वा उत्सुका अतिहृष्टाः सन्तः । गो० ]

देवानामागमनं वाल्मीकीये—

अभिप्रायं तु रामस्य विज्ञाय सुरसत्तमाः ।
पितामहं पुरस्कृत्य सर्वे एव समागताः ॥
आदित्या वसवो रुद्रा ऋषयो मरुदश्विनौ ।
गन्धर्वाप्सरसश्चैव सर्वे एव समागताः ॥
नागा यक्षाः सुपर्णाश्च तथा विद्याधरोत्तमाः ।
सीताशपथसंभ्रान्ताः सर्वे एव समागताः ॥
ततो वायुः सुखस्पर्शो दिव्यगन्धवहः शुभः ।
तं जनौघं सुरांश्चैव प्रह्लादयति सर्वतः ॥ इति ७।१०४।६-९ ।

३३ । देवाः समाजग्मुः हृष्टाः प्रजाश्च समागमन् । तान् सर्वान् समागतान् दृष्ट्वेति शेषः । एतदेवानुमतं वाल्मीकेः । तथाच—

तदद्भुतमिवाचिन्त्यं निरैक्षन्त समागताः ।
मानवाः सर्वराष्ट्रेभ्यः पूर्वं कृतयुगे यथा ॥
सर्वान् समागतान् दृष्ट्वा सीता काषायवासिनी ।
अवाङ्मुखी बाष्पकलं प्राञ्जलिर्वाक्यमब्रवीत् ॥ इति ७।१०४।१०-११ ।

---

1. च 'न पा-' । 2. ग-च 'तस्मा त्व क्षन्तुमर्हसि', क 'तद् भवान् क्षन्तुमर्हसि' । 3. ग 'मयैव' । 4. ग 'जगतां मध्ये' । 5. च '-मंश्चैव' । 6. क '-वाससी' । 7. क 'अवाङ्-' ।

रामादन्यं [1]यथाऽहं वै मनसाऽपि न चिन्तये।
तथा मे धरणी देवी विवरं दातुमर्ह[2]ति ॥ ३४ ॥
[3]तथा शपन्त्याः सीतायाः प्रादुरासीन्महाद्भुतम्।
भूतलाद्दिव्यमत्यर्थं सिंहासनमनुत्तमम्।
नागेन्द्रैर्ध्रियमा[4]णञ्च दिव्यदेहै[5] रविप्रभम् ॥ ३५ ॥
भूदेवी जानकीं दोर्भ्यां गृहीत्वा स्नेहसंयुता।
स्वागतं [6]तामुवाचैनामासने सन्न्यवेशयत् ॥ ३६ ॥

---

३५। नरो०। अविद्यमानमुत्तमं यस्मात्तत्तथा। रवेरिव प्रभा यस्य तत्।

---

३४। सीताप्रार्थना वाल्मीकीये—

यथाऽहं राघवादन्यं मनसाऽपि न चिन्तये।
तथा मे माधवी देवी विवरं दातुमर्हति ॥
मनसा कर्मणा वाचा राममेव यथाऽर्चये।
तथा मे माधवी देवी विवरं दातुमर्हति ॥
यथैतत् सत्यमुक्तं मे न रामात् कामये परम्।
तथा मे माधवी देवी विवरं दातुमर्हति ॥ इति ७।१०४।१२-१४।

३५। 'भूतलाद्दिव्यमत्यर्थमि'त्यत्र 'भूतलं भिद्य सहसे'ति वाल्मीकीये। तथाच—

तथा शपन्त्यां सीतायां प्रादुरासीन्महाद्भुतम्।
भूतलं भिद्य सहसा सिंहासनमनुत्तमम् ॥ इति ७।१०४।१५।

३६। दोर्भ्यां गृहीत्वा स्वागतमिति तामुवाच, अथैनामासने सन्न्यवेशयत्। रा०। अत्राऽऽह पाद्मोत्तरखण्डे—

ततो रत्नमयं पीठं पृष्ठे धृत्वा खगेश्वरः।
रसातलात्तदा वीरो विज्ञाय जननीं तदा ॥
ततस्तु धरणी देवी हस्ताभ्यां गृह्य मैथिलीम्।
स्वागतेनाभिनन्द्यैनामासने सन्न्यवेशयत् ॥ इति २४४।२७-२८।

एतेन गरुडधृतपीठेन सीताया गमनम्। अस्याग्रेऽपि—

साऽपि दिव्याप्सरोभिस्तु पूज्यमाना सनातनी।
वैनतेयं समारुह्य तस्मान्मार्गाद्दिवं ययौ ॥ इति २४४।३०।

---

1. क 'यदन्यं'। 2. च-छ '-सि'। 3. च 'तथालपन्त्याः'। 4. ग '-णं तद्', च '-णं वै'। 5 क 'देहं'। 6. च 'समुवा-'।

सिंहासनस्थां वैदेहीं प्रविशन्तीं रसातलम् ।
निरन्तरा पुष्पवृष्टिर्दिव्या सीतामवाकिरत् ॥ ३७ ॥
साधुवा[1]दश्च सुमहान् देवानां परमाद्[2]भुतः ।
[3]ऊचुश्च बहुधा वाचो [4]ह्यन्तरीक्षगताः सुराः ॥ ३८ ॥
अन्तरीक्षे च भूमौ च सर्वे स्थावरजङ्गमाः ।
वानराश्च महाकायाः सीताशपथ[5]कारणात् ॥ ३९ ॥
केचिच्चिन्तापरा[6]स्तस्याः केचिद् ध्यानपरायणाः ।
केचिद्राम निरीक्षन्तः केचित् सीतामचेतसः ॥ ४० ॥
[7]मुहूर्त्तमात्रं तत् सर्वं तूष्णीम्भूतमचेतनम् ।
सीताप्रवेशनं दृष्ट्वा सर्वं[8] सम्मोहितं जगत् ॥ ४१ ॥
रामस्तु सर्वं ज्ञात्वैव भवि[9]ष्यत्कार्यगौरवम् ।
अजान[10]न्निव दुःखेन शुशोच जनकात्मजाम् ॥ ४२ ॥

---

४१ । नरो० । सीताप्रवेशनं सीतापातालप्रवेशादि ।

---

३८ । साधुवादश्च आसीदिति शेषः । बहुधा वाचः बहुप्रकारवाचः, सीते मैवं कर्त्तुमर्हा इति राघवो गृहीतशपथोऽपि पुनः शपथग्रहणे प्रवृत्त इत्येवं बहुप्रकारवाचः । रा० ।

३९ । सीताशपथकारणाद् बहुधा वाच ऊचुरित्यनुकर्षः । रा० ।

४० । तस्याश्चिन्तापराः क्व सीता गमिष्यतीत्यादिचिन्तायुक्ताः, ध्यानपरायणाः भूप्रविष्टसीतारूपस्य ध्यानपरायणाः । रामं निरीक्षन्तः किं करिष्यतीत्याद्येवं सीतां निरीक्षन्तः कथं गच्छत्येवेत्याद्येवंप्रकारेण अचेतनमासीदिति । रा० ।

केचित् सीतामचिन्तयन्निति शेषः । उक्तमेवार्थं दृढीकरोति वाल्मीकिः—

केचिद्विनेदुः संहृष्टाः केचिद्ध्यानपरायणाः ।
केचिद्रामं निरीक्षन्ते केचित् सीतामचिन्तयन् ॥ इति ७।१०४।२३ ।

४२ । भविष्यतः कार्यस्य गौरवं निश्चयं ज्ञात्वैव ज्ञात्वाऽपि अजानन्निव शुशोच लोकव्यवहारानुसारेणेत्यर्थः । रा० ।

[ भविष्यत्कार्यगौरवमिति । भविष्यतः कार्यस्य वैकुण्ठगमनस्य गौरवं महत्त्वं सर्वं ज्ञात्वैव ज्ञात्वाऽपीत्यर्थः । गो० ]

अत्र वाल्मीकीये न केवलं शोकः परन्तु पृथ्वीं प्रति कोपश्च । तथाच—

---

1. ग '-दस्तु' । 2 ग-च-छ 'भुतम्' । 3. ग 'त ऊचुर्व-' । 4. ग-च-छ 'अन्त-' । 5. घ '-कारिणः' । 6. ग-छ '-रा. केचिद्', च '-रा भूत्वा' । 7. ग-च-छ 'स मुहूर्त्तम् वत् सर्वं' । 8. च '-वंश मो-' । 9. ग '-ष्यं का-' । 10. छ '-न्नेव' ।

[1]ब्रह्मणा [2]ऋषिभिः सार्धं बोधितो रघुनन्दनः ।
प्रतिबुद्ध इव स्वप्नाच्चकारानन्तराः क्रियाः ॥ ४३ ॥
विससर्ज ऋषीन् [3]सर्वान् ऋत्विजो ये समागताः ।
तान् सर्वान् धनरत्नाद्यैस्तोषयामास [4]भूरिशः ॥ ४४ ॥
उपादाय कुमारौ तावयोध्यामगमत् प्रभुः ।
तदादि निस्पृहो रामः सर्वभोगेषु सर्वदा ।
आत्मचिन्तापरो नित्यमेकान्ते समुपस्थितः ॥ ४५ ॥

---

४५ । नरो० । निस्पृहः स्पृहाशून्य इत्यर्थः । आत्मचिन्तापरः आत्मचिन्तानिष्ठः । एकान्ते निर्जने ।

---

स रुदित्वा चिरं कालमुष्णं बाष्पमवासृजत् ।
क्रोधशोकसमाविष्टो रामो वाक्यमथाब्रवीत् ॥
* * * * *
वसुधे त्वं भगवति सीतां निर्यातयस्व मे ।
दर्शयिष्यामि वा क्रोधं यथा मामवगच्छसि ॥
* * * * *
आनयध्वं खनित्रं मे अद्याहं मैथिलीकृते ।
सपर्वतवनां कृत्स्नां खनिष्यामि वसुन्धराम् ॥
अद्य दास्यति वा सीतां तथारूपां स्वयं मही ।
नाशयिष्यामि वा भूमिं सर्वमापो भविष्यति ॥ इत्यादि ७।१०९।४-१३ ।

४३ । वाल्मीकीये रामक्रोधानन्तरं ब्रह्मणोपदेशतो रसातलसम्भूता काचिद्वाणी राममन्वशासत् । सा च—

एतस्मिन्नन्तरे वाणी निःसृता धरणीतलात् ।
जहि त्वं राम सन्तापं कृतान्तो ह्यत्र कारणम् ॥
काङ्क्षसे यच्च वैदेहीं तद्वृथा परितप्यसे ।
दुर्लभं दर्शनं तस्यास्त्रैलोक्ये या प्रतिष्ठिता ॥
इहस्था पूज्यते नागैर्मर्त्यलोके च मानुषैः ।
पितॄणाञ्च सुधा स्वर्गे सा तृप्तिरमृताशिनाम् ॥
श्रीवत्सवक्षसो देहे सैव लक्ष्मीः प्रतिष्ठिता ।
सिद्धानां स्वर्गसंस्थानां सा च सिद्धिः प्रतिष्ठिता ॥

---

1. ख 'ब्राह्मणा', छ 'ब्राह्मणैश्च-' । 2. च 'मुनिभिः' । 3. ग 'राजा', च-छ 'राजन्' । 4. ख 'राघवः' ।

एकान्ते ध्यान[1]निरते एकदा राघवे सति ।
ज्ञात्वा नारायणं साक्षात् कौशल्या प्रियवादिनी ।
भक्त्यागत्य [2]प्रसन्नं तं प्रणता[3] प्राह हृष्टधीः ॥ ४६ ॥
राम त्वं जगतामादिरादिमध्यान्तवर्जितः ।
परमात्मा परानन्दः पूर्णः पुरुष ईश्वरः ॥ ४७ ॥

---

४६। नरो०। एकदा एकान्ते राघवे ध्याननिरते ध्यानासक्ते सति प्रियवादिनी कौशल्या साक्षाज् ज्ञात्वा भक्त्यागत्य प्रहृष्टधीः प्रहृष्टान्तःकरणा प्रणता सती प्रसन्नं निर्मलं तं श्रीराममाहेति योजना ।

४७। नरो०। कौशल्या श्रीरामं किमब्रवीदित्यपेक्षायामाह—राम त्वमित्यादि । परमात्मत्वे हेतुरीश्वर इति । ईश्वरत्वे हेतुः—पुरुष इति, सर्वशरीरेषु वर्त्तमान इत्यर्थः । तव जन्मादयः षड् विकारा न सन्तीति बोधयितुमाह—आदिमध्यान्तवर्जित इति । आदिमध्यान्तवर्जितः जन्मजीवनरहितः, अत एव जन्मान्तरास्तित्वलक्षणो विकारो नास्ति । पूर्णो वृद्धिपरिणामापक्षयशून्यः, यद्वा पूर्णो वृद्ध्यपक्षयरहितः । तत्र हेतुः—आदिमध्यान्तवर्जित इति, आद्यवस्थामध्यावस्थान्तावस्थारहित इत्यर्थः । नन्वेवमपि 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ती'त्यादि श्रुत्या 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इत्यादिश्रुत्या च यस्य जगत्कारणत्वं तस्यैव परमात्मत्वं प्रतिपादितम्, मम तत् कुतः ? इत्यत आह—जगतामादिरिति । आदिः कारणम् । ज्ञानस्वरूपस्य मम प्राप्त्या किमित्यत आह—परमानन्द इति ।

---

निवर्त्तय मतिं राम वैदेह्या दर्शनं प्रति ।
द्रष्टव्या यदि ते सीता पुत्रौ पश्य कुशीलवौ ॥
श्रूयताञ्च शुभं काव्यं सत्यं वाल्मीकिना कृतम् ।
उत्तरे यद् भविष्यच्च यथा प्राह पितामहः ॥ इति ७।१०५।२७-३२ ।

४५। अयोध्यामगमत् यज्ञशालात इत्यर्थः ।

४६। ध्याननिरते राघवे सतीत्यर्थः । रामं तच्चरित्रैर्ऋषिवाक्यैश्च तत्कृपावशान्नारायणं ज्ञात्वा प्रणता नारायणोऽयमिति बुद्ध्या । रा० ।

४७। आदिः कारणम् । स्वयञ्चोत्पत्तिनाशरहितस्तदभावादेव च मध्यवर्जितः । सर्वेषां परम उत्कृष्ट आत्मा, अन्तर्यामिविधया प्रेरकत्वात् । परमानन्दः हिरण्यगर्भानन्दादपि उत्कृष्टो य आनन्दस्तद्रूपः पूर्णः पुरुषः प्राप्तसर्वकामत्वात् पूर्णः । अत एवेश्वरः सर्वनियन्ता । रा० ।

---

1. छ '-विरते' । 2. ग 'प्रसन्ना', च 'प्रसन्नाभं प्रसन्नाङ्गं प्रसन्नधीः', छ 'प्रसन्नान्तः' । 3. ग-छ '-ताह प्रहृ-' ।

जातोऽसि मे गर्भ[1]गृहे मम पुण्यातिरेकतः ।
अव[2]साने ममाप्यद्य[3] सम[4]योऽभूद्रघूत्तम ।
नाद्याप्यबोधजः [5]कृत्स्नो भवबन्धो निवर्त्तते ॥ ४८ ॥
इदानीमपि मे ज्ञानं भवबन्धनिवर्त्तकम् ।
[6]यथा संक्षेपतो भूयात्तथा बोधय मां [7]विभो ॥ ४९ ॥

---

४८। नरो०। तर्हि कथं तव गर्भे जातोऽहमिति चेत्तत्राऽऽह—जातोऽसीत्यादि पुण्यातिरेकत इत्यन्तम्। अवसानो नाशः। अबोधजोऽज्ञानजः। भवेन संसारेण बन्धो भवबन्धः। भवबन्धस्य किञ्चिद् गतम् इति सूचनाय कृत्स्न इत्युक्तम्। कृत्स्नः सकल इत्यर्थः।

४९। नरो०। हे विभो, इदानीमपि भवबन्धनिवर्तकं मे मम ज्ञानं यथा भूयात्तथा बोधयेति सम्बन्धः।

---

[ राम त्वमित्यादि। त्वं जगतामादिः कारणम्। स्वयं पुनरादिमध्यान्तवर्जितः, तत्र हेतुः—परमात्मेति। अतः पुरुषः। यद्वा आदिमध्यान्तहीने हेतुः—पुरुष इति। पुराऽपि सन्। तथाच श्रुतिः—'तत् पुरुषस्य पुरुषत्वं यदहं सर्वमेवाऽऽसमि'ति। ननु तर्हि किं जीवः? न, परमात्मा। तत् कुत इत्यत आह—ईश्वर इति। ईश्वरो नियन्ता। ननु किं नियन्तृत्वं केनाप्युद्देशेन? न इत्याह—पूर्णः स्वभावेनैव प्राप्तसमस्तकामः, अतः परमानन्दः। गो० ]

४८। ईदृशोऽपि त्वं मम गर्भरूपे गृहे मदीयपुण्याधिक्याज्जातो जात इव। अवसाने स्वस्या अवसानकाले अतिवार्धके इत्यर्थः, त्वदवतारसमाप्तिकाले च। समयः प्रश्नावसरः। अबोधजः अज्ञानजः कृत्स्नो न निवर्त्तते। सर्वदा तत्सङ्गात् किञ्चिन्निवृत्तोऽपि सर्वथा न निवर्त्तत इति भावः। रा०।

[ नन्वेवंरूपस्य तस्य कथं जीववदाचरणमित्यत आह—जातोऽसीत्यादि। मम पुण्यातिरेकतः बहुजन्मार्जितपुण्यस्य बाहुल्यात्। मे मम गर्भरूपे गृहे जात आविर्भूतोऽसि, न तु जीववत् कर्माधीनः। संस्तुत्य स्तुत्यं ज्ञापयति—अवसान इत्यादि। न केवलं सीता भूतलमाविशत् ममाप्यद्य अवसानोऽवसानम् आयुःसमाप्तिः समीपो निकटवर्त्ती अभूत्। यद्वा अवसाययति समापयति इत्यवसानो मृत्युः। अद्यापि इदानीमपि अबोधजोऽज्ञानजन्यो बन्धः संसार. कृत्स्नः समग्रः न निवर्त्तते। कृत्स्नपदोपादानात् ईषदपि निवृत्तोऽस्तीत्युक्तम्। यद्वा अयं भवबन्धः अस्ति न निवर्त्तते। गो० ]

---

1. च '-गेहे'। 2 च '-सानो'। 3. क '-प्येष'। 4. च '-योऽव र-'। 5. क 'सूक्ष्मो'। 6. च 'कथ संचेपतश्च स्यात्तदा', क 'कथं'। 7. क 'प्रभो'।

निर्वेदवादिनीमेवं मातरं मातृवत्सलः ।
दयालुः प्राह धर्मात्मा जराजर्जरितां शुभाम्[1] ॥ ५० ॥
मार्गास्त्रयो मया प्रोक्ताः पुरा मोक्षाप्तिसाधकाः ।
[2]क्रियायोगो ज्ञानयोगो भक्तियोगश्च शाश्वतः ॥ ५१ ॥
[3]तेषान्तु सुलभो मार्गो भक्तियोगः सुपूजितः ।
[4]भक्तिर्विभिद्यते मातस्त्रिविधा गुणभेदतः ।
स्वभावो यस्य यस्तेन तस्य भक्तिर्विभिद्यते ॥ ५२ ॥

---

५० । नरो० । निर्वेदवादिनीमिति । वस्तुष्वलंबुद्धिर्निर्वेदः ।

५१ । नरो० । क्रियाकलापो योग उपायः क्रियायोगः । स च चित्तशुद्धिज्ञानद्वारा मुक्तिजनकः । ज्ञानलक्षणो योग उपायः ज्ञानयोगः, ज्ञानं तत्त्वज्ञानम् । भक्तिलक्षणो योग उपायः भक्तियोगः । तथा चामरः—'योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु' इति । शाश्वतः शश्वद्भवः ।

५२ । नरो० । अन्यापेक्षया सुलभत्वादतिपूजित(?)त्वाच्च भक्तियोग एव त्वया

---

४९ । [ ननु अज्ञानजन्यो बन्धः ज्ञाने सत्येव निवर्त्तते इति चेत् ज्ञानं यथा भवति तथा बोधय इत्याह—इदानीमित्यादि । भवबन्धं निवर्त्तयति नाशयतीति तथाभूतं ज्ञानं मे मम इदानीमपि यथा भूयात्तथा मां बोधय । ननु बह्वङ्गसाध्यं ज्ञानं कथं झटिति स्यादित्याह—संक्षेपतः संक्षेपेण । प्रभो इति सम्बोधनम्, ईश्वरस्य तव न किञ्चिदसाध्यमस्तीत्यर्थः । गो० ]

५० । निर्वेदो विषयेष्वलंप्रत्ययः, तेन वादिनीमीदृशवचनवक्त्रीम् । रा० ।

५१ । त्रीन् मार्गानाह—कर्मेत्यादि । अत्रेदं बोध्यम् । ज्ञानयोगस्त्रिधा—एतज्जन्मानुष्ठितकर्मयोगसंपादितचित्तशुद्ध्या जातः, एतज्जन्मानुष्ठितभक्तियोगकृतचित्तशुद्ध्या जातः, पूर्वार्जिताभ्यामाभ्यां सम्पादिततया एतज्जन्मनि तदनुष्ठानानपेक्षो वेति । अन्यथा केवलकर्मभक्तिभ्यां ज्ञानं विना मोक्षस्य 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' ( श्वेताश्व० ३।८ ) इति श्रुतिविरुद्धतया यथाश्रुतमूलासङ्गतिः स्यादिति दिक् । तेषां मध्ये भक्तियोगरूपो मार्गो ज्ञानजनने सुलभ इत्यर्थः । रा० ।

[ न केवलं ज्ञानेनैव मोक्षः किन्तु उपायान्तरेणापि भवतीत्याह—मार्गा इति । पुरा सृष्ट्यादौ मोक्षाप्तिसाधका मोक्षप्रापकास्त्रयो मार्गा उपाया मया वेदकर्त्रा प्रोक्ताः । तानेवाऽऽह—क्रियायोग इत्यादि । गो० ]

५२ । [ तत्र सत्त्वरजस्तमोभेदेन स्वभावस्त्रिविधः, स्वभावभेदेन च भक्तिस्त्रिविधा

---

1. घ-पुस्तके अतः परं 'श्रीरामचन्द्र उवाच' इत्यधिकम् । 2. क-ख ग घ-छ 'कर्म-', च 'ज्ञानयोगः क्रियायोगो' । 3. क-ख-घ-पुस्तकेष्विदमर्धं नास्ति । 4. च 'भक्तिर्हि भि-', छ 'भक्तिर्विभज्यते' ।

यस्तु हिंसां समुद्दिश्य [1]दम्भं मात्सर्यमेव [2]वा ।
भेददृष्टिश्च संरम्भी भक्तो मे तामसः स्मृतः ॥ ५३ ॥
[3]फलाभिसन्धिर्भोगार्थी[4] धन[5]कामो यशस्तथा ।
अर्चादौ भेद[6]बुद्ध्या मां पूजयेत् स तु राजसः ॥ ५४ ॥

---

विधेय इत्याशयेनाऽऽह—तेषान्त्वित्यादि । कतिविधा भक्तिर्भवतीत्यपेक्षायामाह—भक्तिरित्यादि । गुणभेदतः सत्त्वादिगुणभेदात् । तर्हि किं सत्त्वादिगुणभेदेन सर्वेषां भक्तिस्त्रिविधा भवतीत्यत आह—स्वभाव इत्यादि । स्वभावस्त्रिविधः तमोरूपो रजोरूपः सत्त्वरूपश्चेति ।

९३ । नरो० । भक्तिविभेदकतम-आदिस्वभावभेदेन भक्तिभेदं दर्शयति—यस्त्विति त्रिभिः । यो हिंसां परपीडां दम्भं महत्त्वख्यापनं मात्सर्यमन्यशुभद्वेषं वा उद्दिश्य भेददृष्टिः संरम्भी सन् अर्चादौ मां पूजयेत् स मे मम तामसो भक्तः स्मृत इति सम्बन्धः । भेददृष्टिर्जीवपरयोरिति शेषः । भेदस्य दृष्टिर्ज्ञानं यस्य सः । संरम्भी क्रोधी ।

९४ । नरो० । यः परत्र भोगार्थं फलाभिसन्धिरिह भोगार्थं धनकामः यशः यशःकामः अर्चादौ प्रतिमादौ मां भेदबुद्ध्या पूजयेत् स राजसो भक्त इति । भेदस्य बुद्धिर्भेदप्रकारिका भेदावगाहिका वा बुद्धिर्भेदबुद्धिस्तया भेदबुद्ध्या । फलस्य अभिसन्धिः अभिसन्धानं यस्य सः ।

---

सात्त्विकी राजसी तामसी चेति । प्रथमं त्रैविध्यमाह—हे मातः, गुणभेदतः गुणानां सत्त्वादीनां भेदतः सा भक्तिस्त्रिविधा त्रिप्रकारा भिद्यते । तत् किं सर्वेषामेव त्रिविधा ? नेत्याह—यस्य यः स्वभावः सात्त्विकादिस्तेन स्वभावेन हेतुना जनस्य विधेया भक्तिर्विभिद्यते, स्वभावस्यासरूपप्रवृत्तेः । गो० ]

९३ । भक्तित्रैविध्याद् भक्तस्यापि त्रैविध्यम्, तत्र तामसं भक्तमाह—यस्त्विति । हिंसां शत्रोः । दम्भं पूजालाभादिफलकम् । मात्सर्यं परगुणद्वेषः । भेददृष्टिः अरिमित्रादिदृष्टिः । संरम्भी तत्तद्विषयकाग्रहवान् । रा० ।

[ उत्तरोत्तरं श्रेष्ठं वक्तुं तामसादिक्रमेण वक्तुं प्रक्रमते—यस्त्वित्यादिना । यः पुरुषः । हिंसां द्विषदादीनां मारणम् । दम्भं परप्रतारणम् । मात्सर्यमन्यगुणद्वेषरूपम् । भेददृष्टिः शत्रुमित्रादिबुद्धिः । स मे भक्तस्तामसः । अत एव तद्विधेया भक्तिरपि तामसी । एवमुत्तरत्र । गो०]

९४ । फलं स्वर्गः, तदभिसन्धिस्तत्कामः । भोग ऐहिकः । यश इत्यस्य यशःकाम इत्यर्थः, गोबलीवर्दन्यायेन पृथङ्निर्देशः । अर्चादौ प्रतिमादौ, आदिना स्थण्डिलादिपूजास्थानसंग्रहः । भेदबुद्ध्या अयमुपास्योऽहमुपासक इत्येवंरूपया । रा० ।

---

1. क 'दम्भमात्-' । 2. क 'च' । 3. क 'तेनाभि-' । 4. ग-च '-र्थं' । 5. क '-लोभवशात्तदा' । 6. क '-बुद्ध्यादौ' ।

परस्मिन्नर्पितं यस्तु कर्मनि[1]र्हरणाय वा ।
कर्त्तव्यमिति [2]वा कुर्याद्[3] भेदबुद्ध्या स सात्त्विकः ॥ ५५ ॥
मद्गु[4]णाश्रयणादेव मय्यनन्तगुणालये ।
अविच्छिन्ना मनोवृत्तिर्यथा गङ्गाम्बुनोऽम्बुधौ ॥ ५६ ॥
[5]तदेव भक्तियोगस्य लक्षणं निर्गुणस्य हि ।
अहैतुक्यव्यवहिता या भक्तिर्मयि जायते ॥ ५७ ॥

५५ । नरो० । भेदबुद्ध्या परस्मिन् परमेश्वरे कर्मनिर्हरणाय पापक्षयाय, मत्प्रीतिमुद्दिश्य कर्तव्यम् अवश्यं कर्तव्यतया विहितं नित्यनैमित्तिकं कर्म अर्पितं कुर्यात् स सात्त्विक इत्यन्वयः । कर्मेति पूरणीयम् ।

५६ । नरो० । इदानीं निर्गुणं भक्तियोगमाह—मद्गुणाश्रयणादेवेति द्वाभ्याम् । मद्गुणश्रवणादिति । गुणाः सर्वज्ञत्वादयः । अनन्तगुणालये अपरिमितगुणाश्रये । अविच्छिन्ना सन्तता । दृष्टान्तमाह—यथेति । गङ्गाम्बुनो वृत्तिरिति ।

५७ । नरो० । लक्षणं स्वरूपम् । अहैतुकी फलानुसन्धानरहिता । अव्यवहिता निरन्तरा, भेददृष्टिरहिता वा ।

[ राजसमाह—फलेत्यादि । फले स्वर्गादौ अभिसन्धिः सङ्कल्पो यस्य तथाभूतः । भोगार्थम् ऐहिकामुष्मिकभोगार्थं धनकामः, यद्वा भोगार्थं धनं कामयते तथा । यशस्तथा । अर्चादौ प्रतिमादौ मां यः पूजयेत् स राजसो भक्तः । अस्य पूर्वोक्तादुत्तमत्वम्, हिंसाया अभावात् । गो० ]

५५ । यो निर्हरणाय पापनाशाय कर्म मत्पूजनरूपं परस्मिन् मयि अर्पितं कुर्यात् । 'भगवतः प्रेरणया यदस्वतन्त्रेण मया कृतं तेन स एव तुष्यत्वि'ति बुद्धिर्ब्रह्मार्पणं नाम । अथवा शास्त्रबोधितत्वादवश्यकर्तव्यमिति बुद्ध्या वा यः कुर्यात् स सात्त्विकः । अत्रापि भेदबुद्धेरत्युपादानादभेदबुद्धिरेतत्फलमिति सूचितम् । रा० ।

[ परस्मिन्निति । यः परस्मिन्नीश्वरे अर्पितं यथा स्यात् तथा अर्थात् केवलमीश्वरार्पणेनैव, अथवा कर्मनिर्हरणाय स्वकृतानां कर्मणां नाशार्थम्, अथवा कर्तव्यं वेदोक्तत्वादेतत् कर्तव्यमित्येतत् कृत्वा न तु ज्ञानार्थम् । यः कर्म कुर्यात् स इत्यर्थः । गो० ]

५६ । एतत्फलीभूतं निर्गुणभक्तियोगलक्षणमाह—मद्गुणेति अविच्छिन्ना मनोवृत्तिरित्यन्तेन । अनन्तगुणालये मयि या अवच्छिन्ना मनोवृत्तिरेतत् सगुणध्यानस्य निर्गुणध्यानस्य लक्षणं प्रापकम् । तत्र दृष्टान्तः— यथा गङ्गाम्बुनोऽम्बुधौ इति अनेनाभेदविषयत्वं मनोवृत्तेर्दर्शितम् । रा० ।

[ निर्गुणभक्तिमाह—मद्गुणश्रवणादेवेति । मद्गुणश्रवणादेव विशेषाग्रहमकुर्वतः अनन्तानां

1. च-छ '-र्हरणानि च' । 2. च 'यत्' । 3. च '-न्मद्बुद्ध्या वै' । 4. ग-च छ '-णश्रवणा-' ।
5. छ 'तदैव सात्त्विकी भक्तिर्लं-' ।

सा मे सालोक्यसामीप्य[1]सार्ष्टिसायुज्यमेव वा ।
[2]ददात्यपि न गृह्णन्ति भक्ता मत्सेवनं विना ॥ ५८ ॥
स एवाऽऽत्यन्तिको योगो भक्तिमार्गस्य भामिनि ।
मद्भावं प्राप्नुयात्तेन अतिक्रम्य गुणत्रयम् ॥ ५९ ॥

---

५८। नरो०। भक्तानां कामशून्यतां दर्शयति—सेति। सालोक्यञ्च सामीप्यञ्च सार्ष्टिश्च सायुज्यञ्च तेषां समाहारस्तत्तथा। सालोक्यम् एकस्मिन् लोके वासम्। सामीप्यं समीपवर्तित्वम्। सार्ष्टि.........सायुज्यमेकत्वम्। अत्र वाशब्दः समुच्चयार्थः। स च सारूप्यं समुच्चिनोति। सारूप्यं समानरूपत्वम्।

५९। नरो०। तर्हि फलं विना कथं सेवन्ते इत्यत आह—स एवेत्यादि। आत्यन्तिकोऽव्यभिचारी योग उपायः भक्तिरूपो मा...रसं फलमिति भावः। गुणत्रयत्यागपूर्वक-ब्रह्मत्वप्राप्तेः परमफलत्वेऽपि भक्तावानुषङ्गिकत्वमेवाऽऽह—मद्भावमित्यादिना। मद्भावं ब्रह्मत्वम्। तेन भक्तिमार्गेण।

---

गुणानामालये मयि या अविच्छिन्ना निरन्तरा मनोवृत्तिः। अविच्छिन्नत्वे दृष्टान्तमाह—गङ्गाजलस्य धारारूपस्य यथाऽम्बुधौ समुद्रे पतनं तदेव मनसो वृत्तिवर्त्तनं निर्गुणस्य भक्तियोगस्य लक्षणं स्वरूपमित्यर्थः। तथाच भागवते—

मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ॥ इति ३।२९।११। गो० ]

५७। अहैतुक्यं फलानुद्देशः। अत एवाव्यवहिता विशेषेणावहिता संबद्धा। रा०।

[ हेतुः फलाभिसन्धानं तद्रहिता अव्यवहिता निरन्तरा इत्यर्थः। गो० ]

५८। सार्ष्टिः सारूप्यम् उक्तफलानि ददात्यपि परं तु भक्ता मत्सेवनं विना तेषु मत्सेवाया अभावात् तानि न गृह्णन्ति नाङ्गीकुर्वन्ति। रा०।

[ सा भक्तिर्मे मम सालोक्यं सलोकवासित्वम्, सामीप्यं निकटवर्तित्वम्, सार्ष्टिं समानैश्वर्यम्, सायुज्यमेकत्वं जले जलमिव ददात्यपि मे मम भक्ता मत्सेवनं विना न गृह्णन्ति, एवम्भूतभक्तिमार्गेणैव कृतार्थत्वात्। गो० ]

५९। स एव सालोक्यादितिरस्कार एव आत्यन्तिको योगः। स एव पूर्णो भक्तो यो मत्सेवारहितं मोक्षमपि न बहुमन्यते इति तेन भक्तियोगेन गुणत्रयं तद्रूपां मायामतिक्रम्य मद्भावं मदैक्यं प्राप्नुयात्। रा०।

---

1. च '-सार्ष्णि-'। 2. ग-क्ष 'ददत्यपि', च 'दधत्यपि'।

महता कामहीनेन स्वधर्माचरणेन [1]च ।
कर्मयोगेण [2]शस्तेन वर्जितेन[3] विहिंसनम् ॥ ६० ॥
मद्दर्शन[4]स्तुतिमहापूजाभिः स्मृतिवन्दनैः ।
भूतेषु मद्भावनया[5]ऽसङ्गे[6]नासत्यवर्जनैः ॥ ६१ ॥

६० । नरो० । सगुणाया भक्तेः साधनान्याह—महतेति । कामहीनेनेति स्वधर्माचरणेनेत्यस्य विशेषणम् । महता श्रद्धादियुक्तेन कामहीनेन कामनाशून्येन स्वधर्माचरणेन नित्यनैमित्तिकाचरणेन कर्मयोगेण पञ्चरात्राद्युक्तप्रकारेण ।

६१ । नरो० । भूतेषु प्राणिषु । मद्भावनया मद्ध्यानेन । असङ्गेन पुत्रदारादिषु प्रीतिराहित्येन । असत्यवर्जनैरिति । सत्यं यथार्थभाषणं तद्विपरीतमसत्यम् ।

[ प्रागुक्तभक्तिमार्गस्य सर्वोत्कृष्टत्वमाह—स एवेत्यादि । हे भाविनि परार्थभावनशीले, भक्तिमार्गस्य मध्ये स एव पूर्वोक्तनिर्गुणभक्तियोग एव आत्यन्तिकः सर्वोत्तमो योगः, यतस्तेन योगेन गुणत्रयमतिक्रम्य तीर्त्वा मद्भावं मत्स्वरूपतां प्राप्नुयात् । तथाच तत्रैव—

स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः ।
येनातिव्रज्य त्रिगुणान्मद्भावायोपपद्यते ॥ इति भागवत० ३।२९।१३ ।

६० । अथ कर्मयोगमाह—महतेति । कामहीनेन फलोद्देशहीनेन स्वधर्मो नित्यनैमित्तिकरूपः, तादृशकर्मयोगेण मद्भावं प्राप्नुयात् । कथंभूतेन ? विहिंसनं हिंसावर्जितेन हिंसारहितेनेति यावत् । रा० ।

[ एवंविधो भक्तियोग एतैरेव शुद्धान्तःकरणस्य भवतीति तान् धर्मानाह—महतेत्यादिपञ्चभिः । कामहीनेन निष्कामेणात एव महता सर्वोत्तमेन स्वधर्माचरणेन वर्णाश्रमोक्तधर्मेण, यद्वा स्वधर्मो भागवतधर्मस्तदाचरणेन शस्तेन हिंसादिरहितत्वात् प्रशस्तेन कर्मयोगेण । शस्तत्वे हेतुः—अविहिंसनं वर्जितेन हिंसया रहितेन । सुपां सुलुगिति तृतीयायां द्वितीया । गो० ]

६१ । उक्तभक्तियोगप्राप्त्युपायमाह—मद्दर्शनेति । स्मृतिः स्मरणम् । वन्दनं प्रणतिः । सर्वभूतेषु मद्भावनया ईश्वरभावनया । असङ्गेन दुष्टसङ्गपरित्यागेन । रा० ।

[ दर्शनञ्च स्तुतिश्च महापूजा उच्चावचद्रव्यैः पूजा च ताभिः । स्मृतिः स्मरणञ्च वन्दनानि प्रणामाश्च तैः । भूतेषु चराचरेषु मद्भावनया मच्चिन्तया असङ्गेन विविक्तनिवासेन, यद्वा असङ्गोऽनासक्तिः पुत्रदारादिषु, तेन । असत्यं मिथ्याभाषणं तद्वर्जनैः । गो० ]

1. क 'वा' । 2. क 'शास्तेन' । 3 ग-च-क 'नातिहिं-' । 4. क '-महापूजापूजाभिः स्तुति-' । 5. ग '-या सङ्गे-' । 6. ग '-नासत्व-' ।

बहुमानेन [1]महतां दुःखि[2]नामनुकम्पया ।
[3]स्वसमानेषु मैत्र्या च [4]शमादीनां निषेवया ॥ ६२ ॥
वेदान्तवाक्यश्रवणान्मम नामानुकीर्त्तनात् ।
[5]सत्सङ्गेनाऽऽर्जवेनैव [6]ह्यहमः परिवर्जनात् ॥ ६३ ॥
काङ्क्षयाऽमलधर्मस्य परिशुद्धान्तरो जनः ।
मद्गुणश्रवणादेव याति मामञ्जसा [8]जनः ॥ ६४ ॥
यथा वायुवशाद् गन्धः [9]स्वाश्रयाद् घ्राणमावि[10]शेत् ।
[11]योगाभ्यासरतं चित्तमेवमात्मानमाविशेत् ॥ ६५ ॥

---

६२ । नरो० । बहुमानेन बहुपूजया । महतां साधूनाम् । शमादीनामिति आदिपदेन दमोपरतितितिक्षासमाधानश्रद्धानां ग्रहणम् ।

६३ । नरो० । सत्सङ्गेन...आर्जवेन अवक्रतया । अहमोऽहङ्कारस्य ।

६४ । नरो० । अमलधर्मस्य कामादिशून्यधर्मस्य । परिशुद्धं रागादिरहितम् अन्तरं चित्तं यस्य सः ।

६५ । नरो० । एवं सगुणभक्तियोगस्य फलं दर्शितम् । इदानीमेवंविधाया निर्गुणभक्तेः फलं मद्गुणश्रवणादेवेति अनायासप्राप्तिं सूचयन् दृष्टान्तमाह—यथेति । यथा वायुवशाद् वाताधीनत्वात् गन्धो गन्धयुक्तः पुष्पादिसूक्ष्मावयवश्चाऽऽश्रयात् स्वस्थानाद् घ्राणं नासिकामाविशेदेवं योगाभ्यासरतं चित्तमात्मानमाविशेदित्यन्वयः । योगश्चित्तवृत्तिनिरोधः, तस्याभ्यासः पुनः पुनरनुष्ठानम्, तत्र रतम् ।

---

६२ । [ महतां साधूनां बहुमानेन । दुःखिनां दीनानां सम्बन्धे अनुकम्पया कृपया । स्वसमानेषु आत्मतुल्येषु । शमादीनां शमदमप्रभृतीनां निषेवयाऽनुशीलनेन । गो० ]

६३ । [ वेदान्तवाक्यश्रवणात् वेदान्तेषु यद्वाक्यं तत्त्वमस्यादि, यद्वा लक्षणया वेदान्तवाक्यार्थं ब्रह्म, तस्य श्रवणात् 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' ( बृहदा० २।४।५ ) इति श्रुतेः । मम नाम्नामनुकीर्तनात् सततमुच्चारणात् । सतां भगवतां सङ्गेन आर्जवेन अकौटिल्येन अहमोऽहङ्कारस्य वर्जनात् । गो० ]

६४ । [ अमलधर्मस्य निष्कामभागवतधर्मस्य काङ्क्षया इच्छया । परिशुद्धमन्तरमन्तःकरणं यस्य । एतैरेव शुद्धान्तःकरणो जनो भवतीति तात्पर्यम् । स च जनः मद्गुणश्रवणादेव अञ्जसा शीघ्रमनायासेन वा मां याति मयि मग्नो भवतीत्यर्थः । गो० ]

---

1. च 'महता' । 2. छ '-तेनानु-' । 3. छ 'श्रम' । 4. क-ख-घ-च 'यमा-' । 5. छ 'मत्स-' । 6. च-छ 'दम्भस्य' । 7. क ख-ग-घ-च-छ '-यां मम ध-' । 8. छ 'नरः' । 9 छ 'स्वाश्रयं घ्रा-' । 10. छ '-शत्' । 11. छ-पुस्तके इदमर्धं नास्ति ।

सर्वेषु [1]प्राणिजातेषु ह्यहमात्मा व्यवस्थितः।
तम[2]ज्ञानविमूढात्मा [3]कुरुते केवलं बहिः ॥ ६६ ॥
क्रियोत्पन्नैर्नैकभेदैर्द्रव्यैर्मे [4]नाम्ब तोषणम्।
भूतावमा[5]निनोऽर्चायामर्चितोऽहं न पूजितः ॥ ६७ ॥
तावन्मामर्चयेद्देवं प्रतिमादौ स्वकर्मभिः।
यावत् सर्वेषु भूतेषु स्थितं[6] चाऽऽत्मनि न स्मरेत् ॥ ६८ ॥

---

६६। नरो०। अभेदबुद्धिं विना चित्तशुद्धिर्न भवतीति वक्तुं भेदबुद्ध्या प्रतिमादौ परमेश्वरपूजकं निन्दति चतुर्भिः। प्राणिजातेषु भूतसमूहेषु। तमात्मानम्। अज्ञानेन विमूढ आत्मा मनो यस्य सः। बहिः कुरुते अर्थात् प्राणिजातेभ्यः।

६७। नरो०। नैकभेदैर्नानाविधैः। मे मम। हे अम्ब हे मातः। भूतावमानिनः प्राण्यवज्ञायिनः। अर्चायां प्रतिमायाम्।

६८-६९। नरो०। तर्हि प्रतिमादौ पूजनं व्यर्थमिति चेत्तत्राऽऽह—तावदित्यादि।

---

६७। सर्वप्राण्यपमानकर्त्रा यावत् प्रतिमा न पूजिता, तावदेव विशिष्टानां सा पूजायोग्या, तदनन्तरं न तत्पूज्येत्यर्थः। अर्चित इत्यस्य व्याख्या पूजित इति। रा०।

[ क्रियोत्पन्नैरित्यादि। भूतावमानिना क्रियया उत्पन्नैरतियत्ननिष्पादितैर्नैकविधैर्बहुप्रकारैर्द्रव्यैः अपूपादिभिः मे मम तोषणं न भवति। न केवलं परितोषाभावः, किन्तु अर्चायां प्रतिमायाम् अर्चितोऽप्यहं न पूजितः स्यामिति। तदुक्तं श्रीभागवते—

अहं सर्वेषु भूतेषु भूतात्माऽवस्थितः सदा।
तमवज्ञाय मां मर्त्यः कुरुतेऽर्चाविडम्बनम् ॥ ३।२९।१७ इति। गो० ]

६८। तावन्मामर्चयेदित्यर्धं मध्यमणिन्यायेनोत्तरान्वय्यपि। यावत् सर्वभूतस्थितं मामात्मनि न स्मरेत् स एवाहमिति न जानीयात् तावदेव पूजादावधिकारो न तदुत्तरम्, पूज्यपूजकभावापगमादिति भावः। रा०।

[ ननु तर्हि प्रतिमया किं प्रयोजनमित्यत आह—तावदित्यादि। तावदेव स्वकर्मभिः स्वस्ववर्णाश्रमधर्माचरणैः प्रतिमादौ देवं मामर्चयेत्, यावत् सर्वेषु भूतेषु स्थितं माम् आत्मनि न स्मरेत् आत्मभेदेन सर्वं न जानीयात्। गो० ]

---

1. ग 'प्राण-' छ 'प्रणिपातेषु'। 2. क-ख-ग-घ-च-छ '-ज्ञात्वा'। 3. च 'केवलं कुरुते'। 4. ग-च 'माऽऽत्मतो-'। 5. क-ख-ग-घ-च छ '-निनाऽ-'। 6. च '-तमा-', छ '-ति।

यस्तु भेदं [1]प्रकुरुते [2]आत्मनश्च परस्य च ।
[3]भिन्नदृष्टिर्भयं मृत्युस्तस्य कुर्यान्न संशयः ॥ ६९ ॥

[4]मामतः सर्वभूतेषु परिच्छिन्नेषु संस्थितम् ।
[5]एकं ज्ञानेन मानेन मैत्र्या [6]वाऽर्चेद[7]नन्यधीः ॥ ७० ॥

---

स्वकर्मभिरिति वैशिष्ट्ये तृतीया। स्वकर्माणि कृत्वैव न तु हित्वेत्यर्थः। नित्यनैमित्तिकाचरणमपि सर्वभूतात्मदृष्टिर्यावन्न भवेदिति भावः। यस्त्विवति, यस्तु भिन्नदृष्टिः सन् आत्मनो जीवस्य परस्य परमेश्वरस्य भेदं कुरुते तस्य मृत्युरहं भयं कुर्यामित्यन्वयः।

७०। नरो०। इदानीं ज्ञानयोगमाह—मामत इत्यादिना ग्रन्थेन। अतो भिन्नदृष्टेर्भयदत्वात्। परिच्छिन्नेषु अन्तःकरणरहितत्वात् (?)। एकमद्वितीयम्। मैत्र्या मित्रतया। वाशब्दश्चार्थे। अर्चेत् पूजयेत्।

---

६९। इयमेव भावना मुख्येति ध्वनयितुं भेदं निन्दति—यस्त्विवति। भिन्नदृष्टेस्तस्य मृत्युर्भयं कुर्यात्, अत्र संशयो नास्तीत्यर्थः। रा०।

[ भेददृष्टेः पुनर्जन्ममरणे नैव निवर्त्तेते इत्याह—यस्त्वित्यादि। यस्तु भिन्नदृष्टिर्भेदबुद्धिरात्मनश्च परस्य च भेदं प्रकुरुते मृत्युस्तस्य जनस्य भयं जन्ममरणादिभयं प्रकुरुते। अत्र संशयो नास्ति। तथाच श्रुतिः—'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' ( बृहदा० ४।४।१९ ) इति। भागवते च—

आत्मनश्च परस्यापि यः करोत्यन्तरोदरम्।
तस्य भिन्नदृशो मृत्युर्विदधे भयमुल्बणम्॥ इति ३।२९।२१। गो० ]

७०। तस्माद् भेदं त्यक्त्वैवाहमुपास्य इत्याह—मामत इति। एकं मां ज्ञानेन मानेन एवं ज्ञानपूर्वकं सर्वप्राणिसम्माननेन मैत्र्या सर्वत्र मित्रबुद्ध्या मामर्चेदितीयमेव मे मुख्या पूजा। क्वापि शत्रुबुद्धिः सर्वथा न कार्येति भावः। अभिन्नधीः एक एव चेतनो भगवान् सर्वत्रेत्येवंबुद्धिरित्यर्थः। रा०।

[ उपसंहरति—मामत इत्यादि। यतः कारणात् परिच्छिन्नेषु देहाकारेण पृथग्भूतेषु सर्वभूतेषु पञ्चभूतारब्धेषु संस्थितम् एकं विशेषरहितं मां ध्यानेन बहुसम्मानेन मैत्र्या सख्येन अभिन्नधीरभेदबुद्धिः सन् अर्चेत् पूजयेत्। 'ध्यानेन' इत्यत्र 'दानेन' इति वा पाठः। गो० ]

---

1. क 'न कु-'। 2. क-ख-ग-घ 'स्वात्म-'। 3. क-ख-ग-घ-च 'भिन्नदृष्टे-', छ 'भिच-'। 4. छ 'समेतः'। 5. ग 'एवं', च-छ 'एकज्ञाने-'। 6. क-ख-घ-छ 'चार्चे-'। 7. क-ख-घ-छ '-भिन्न-'।

[1]चेतसैवानिशं[2]सर्वभूतानि प्रणमेत् सुधीः ।
ज्ञात्वा [3]मां [4]चिद्घनं शुद्धं जीवरूपेण संस्थितम् ॥ ७१ ॥
तस्मात् कदाचिन्नेक्षेत भेदमीश्वरजीवयोः ।
भक्तियोगो ज्ञानयोगो मया मातरु[5]दीरितः ॥ ७२ ॥
आलम्ब्यैकतरं [6]वाऽपि पुरुषः शममृच्छति ।
[7]ततो मां भक्तियोगेन मातः सर्वहृदि स्थितम् ।
[8]पुत्ररूपेण वा नित्यं स्मृत्वा शान्तिमवाप्स्यसि ॥ ७३ ॥
श्रुत्वा रामस्य वचनं कौशल्यानन्दसंयुता ।
[9]रामं सदा हृदि ध्यात्वा छित्त्वा संसारबन्धनम् ।
अतिक्रम्य गतीस्तिस्रो [10]ऽप्यवाप परमां गतिम् ॥ ७४ ॥

---

७१ । नरो० । सुधीः सर्वभूतानि मनसैवानिशं प्रणमेत् । अत्र हेतुः—ज्ञात्वेति । चिद्घनं चिन्मूर्त्तिम्, शुद्धं परमार्थतो रागादिदोषरहितम् ।

७२-७३ । नरो० । पूर्वोक्तमुपसंहरति—तस्मादिति । भक्तियोगं ज्ञानयोगं वा । शमं मोक्षम् ऋच्छति प्राप्नोति । यतः पुरुष एकतरमालम्ब्य शमं प्राप्नोति ततो हे मातः, सर्वहृदि स्थितं मां पुत्ररूपेण वा नित्यं सदा स्मृत्वा शान्तिं मुक्तिमवाप्स्यसि । सर्वहृदि स्थितं मां भावयितुमसमर्था चेत्तदा पुत्ररूपेण मां भावय इत्याशयेनाऽऽह—पुत्ररूपेण वेति ।

७४ । नरो० । संसारात्मकं बन्धनं संसारबन्धनम् । गतीस्तिस्र इति त्रिगुणानित्यर्थः, परमां गतिं मोक्षमित्यर्थः ।

---

७१ । [ न केवलमर्चेत् प्रणमेच्च इत्याह—चेतसेत्यादि । सर्वत्र चिद्घनं ज्ञानघनं शुद्धं निर्लेपं मां जीवरूपेण अनिशं सर्वदा स्थितं ज्ञात्वा सर्वभूतानि प्रणमेत् । गो० ]

७२-७३ । [ तस्मादिति । यतः सर्वभूतेषु जीवरूपेणाहमवस्थितः, तस्मादीश्वरजीवयोः कञ्चिदपि भेदं नेक्षेत । भक्तिज्ञानयोः परस्परानपेक्षत्वं समफलत्वञ्चाऽऽह—भक्तियोग इत्यादि । हे मातः, मया भक्तियोगः ज्ञानयोगश्च उदीरित उक्तः, एतयोर्मध्ये एकतमं भक्तियोगं ज्ञानयोगं वालम्ब्य आश्रित्य पुरुषः शमं शान्तिं मोक्षमिति यावत्, ऋच्छति प्राप्नोति । एतत्तु अन्येषामुक्तम्, तव तु मुक्तिः करकवलिता अस्तीत्याह—तत इति । ततः कारणात् हे मातः, सर्वहृदि स्थितं मां भक्तियोगेन स्मृत्वा शान्तिं मोक्षमाप्स्यसि, अनावृतब्रह्मणि श्रीरामे वस्तुज्ञानं विनाऽपि यथाकथञ्चिन्मनसः प्रवेशेनैव मुक्तेः सिद्धत्वात् । गो० ]

७४ । तिस्रो गतीः सात्त्विकराजसतामसीः । तत्र सात्त्विकी अर्चिरादिगतिः, राजसी

---

1. च 'चेतसैवा-' । 2 क 'सर्व भू-' । 3 क 'मच्चिन्तन सर्व' । 4 क-ख-घ 'चेतन' । 5. क '-दाहृत' । 6 च 'ब्रह्म', क 'चापि' । 7. च 'अतो' । 8. ग 'ब्रह्म-' । 9 घ 'समं' । 10. क 'ह्यवाप' ।

कैकेयी चापि योगं रघुपतिगदितं पूर्वमेवाधिगम्य
श्रद्धाभक्तिप्रशान्ता हृदि रघुतिलकं भावयन्ती गतासुः ।
गत्वा स्वर्गं स्फुरन्ती दशरथसहिता मोदमानाऽवतस्थे
माता श्रीलक्ष्मणस्याप्यतिविमल[1]मतिः प्राप भर्त्तुः समीपम् ॥ ७५ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे उत्तरकाण्डे
सप्तमोऽध्यायः ॥ ७ ॥

---

७९ । नरो० । कैकेयीति । योगं ध्यानं भावयन्ती गतासुर्मृता ।

गच्छस्व हृदि मां नित्यं भावयन्ती दिवानिशम् ।
सर्वत्र विगतस्नेहा मद्भक्त्या मोक्ष्यसेऽचिरात् ॥

इति श्रीरामेण यदुक्तं तेन सहास्याविरोधः, यतोऽनिशं सदा ध्यातुमशक्ता सर्वत्र स्नेहं विहातुमशक्ता च कैकेयीति । यद्वा अन्यकामनासत्त्वे क्रममुक्तिर्भवतीत्यविरोध इति दिक् ।

[ उत्तरकाण्डे सप्तमाध्यायव्याख्या समाप्ता ॥ ७ ॥

---

धूमादिगतिः, तामसी जायस्व म्रियस्वेत्येवंरूपा । तत्राऽऽद्या दहराद्युपासकानाम्, द्वितीया कर्मिणाम्, तृतीयाऽन्येषाम् । परमां गतिं 'नास्य प्राणा ह्युत्क्रामन्त्यत्रैव समवलीयन्ते' इति ज्ञानिप्राप्याम् । रा० ।

[ श्रुत्वेति । संसारबन्धनं संसारो बध्यतेऽनेनेति संसारबन्धनम् अहङ्कारं छित्त्वा विनाश्य तिस्रो गतीः जाग्रत्स्वप्नसुषुप्त्याख्या अतिक्रम्य लङ्घयित्वा परमां गतिं मुक्तिं श्रीवैकुण्ठाख्यं वा अवाप प्राप्तवती । गो० ]

मातॄणां स्वर्गारोहणमवलम्ब्य पाद्मोत्तरखण्डे—

अथ कालेन महता मातरः संशितव्रताः ।
कालधर्मं समापन्ना भर्त्तुः स्वर्गं प्रपेदिरे ॥ इति २४४।३४ ।

७९ । [ कैकेयीसुमित्रयोर्गतिमाह—कैकेयी चेत्यादि । कैकेयी च पूर्वमेव रघुपतिना रामेण गदितं योगं श्रुत्वा अभिगम्य भक्त्या प्रशान्ता विक्षेपरहिता सती रघुकुलतिलकं श्रीरामं हृदि भावयन्ती गतासुर्विगतप्राणा सती स्फुरन्ती तेजसा देदीप्यमाना । कौशल्यावन्नानयोः सद्यो मुक्तिः किन्तु भोगान्ते इति ज्ञातव्यम् । गो० ]

---

1. च '-मतिः' ।

# अष्टमोऽध्यायः

श्रीमहादेव उवाच—

अथ काले गते [1]कस्मिन् भरतो भीमविक्रमः ।
युधाजिता मातुलेन ह्याहूतोऽगात् ससैनिकः ॥ १ ॥
रामाज्ञया गतस्तत्र हत्वा गन्धर्वनायकान् ।
तिस्रः कोटीः पुरे [2]द्वे तु निवेश्य रघु[3]नन्दनः ॥ २ ॥
पुष्करं पुष्करावत्यां तक्षं तक्षशिलाह्वये ।
अभिषिच्य सुतौ तत्र धनधान्यसुहृद्[4]वृतौ ।
पुनरागत्य भरतो रामसेवापरोऽभवत् ॥ ३ ॥

---

३ । नरो० । पुष्करं पुष्करनामानं सुतम् । पुष्करावत्यां नगर्याम् । तक्षं तक्षनामानं सुनम् । तक्षशिलाह्वये तक्षशिलानाम्नि पुरे । रामसेवापरो रामसेवानिष्ठः ।

---

१ । कस्मिन् कस्मिंश्चिदित्यर्थः । मातुलेनाऽऽहूतः स्वदेशसमीपवर्त्तिगन्धर्वविषयस्थ-गन्धर्ववधार्थम् । रा० ।

युधाजिता कैकयराजाधिपेन पुरोधसं प्रीतिदानादिकञ्च प्रेष्य गन्धर्वविनाशार्थं राम आहूतोऽभवत् । ततो रामाज्ञया ससैनिकः ससुतश्च तत्र गतो भरतस्तिस्रः कोटीर्गन्धर्व-नायकान् हत्वा द्वे पुरे निवेश्य तत्र सुतौ अभिषिच्य पुनरागत्य रामसेवापरोऽभवदित्यर्थो वाल्मीकीयानुमतः ।

कस्यचित्त्वथ कालस्य युधाजित् कैकयाधिपः ।
पुरोहितं प्रहितवान् राघवस्य महात्मनः ॥
गार्ग्यमाङ्गिरसः पुत्रं ब्रह्मर्षिममितप्रभम् ।
दश चाश्वसहस्राणि प्रीतिदानमनुत्तमम् ॥
कम्बलादीनि रत्नानि चीरपट्टांस्तथोत्तमान् ।
बहु चाऽऽभरणं मुख्यं रामाय प्राहिणोन्नृपः ॥ ७।१०७।१-३

इत्याद्युक्त्या स्पष्टं रामायोपढौकनादिप्रेरणं न भरताय । गन्धर्वजयार्थमिति च व्यक्तं वक्ष्यमाणेन वचनजातेन । तथाच—

---

1. च-क 'तस्मिन्' । 2. क 'स्वे' । 3. क '-सत्तमः' । 4. क '-वृतः' ।

ततः प्रीतो रघुश्रेष्ठो लक्ष्मणं प्राह सादरम् ।
उभौ कुमारौ सौमित्रे गृहीत्वा पश्चिमां दिशम् ॥ ४ ॥

---

अस्ति गन्धर्वविषयः फलमूलोपशोभितः ।
सिन्धोरुभयतः पार्श्वे देशः परमशोभनः ॥
तं तु रक्षन्ति गन्धर्वाः सायुधा युद्धकाङ्क्षिणः ।
शैलूषस्य सुता वीरास्तिस्रः कोट्यो महाबलाः ॥
तान् विनिर्जित्य काकुत्स्थ गन्धर्वविषयं शुभम् ।
निवेशय महाबाहो द्वे पुरे सुसमाहितः ॥
नान्यस्य न गतिर्वीर देशश्चायं सुशोभनः ।
रम्यं पुष्पफलाकीर्णं निवेशय महामते ॥ इति ७।१०७।११-१४ ।

रामाज्ञया कुमारद्वयसहितस्य ससैनिकस्य भरतस्य गमनमपि तत्रैव—

तच्छ्रुत्वा राघवः प्रीतः सन्देशं मातुलस्य च ।
उवाच बाढमित्येव भरतं चान्ववैक्षत ॥
सोऽब्रवीद् राघवः प्रीतः प्राञ्जलिप्रग्रहो द्विजम् ।
इमौ कुमारौ ब्रह्मर्षे तं देशं विजयिष्यतः ॥
भरतस्याऽऽत्मजौ वीरौ तक्षः पुष्कर एव च ।
मातुलेन सुसंगुप्तौ धर्मेण सुसमाहितौ ॥
भरतश्चाग्रतः कृत्वा कुमारौ सबलानुगौ ।
निहत्य गन्धर्वसुतान् पुरे द्वे विभजिष्यति ॥ इत्यादि ७।१०७।१६-१९ ।

तच्च युद्धं सप्तरात्रात्मकम्

ततः समभवद् युद्धं तुमुलं लोमहर्षणम् ।
सप्तरात्रं महाघोरं न चाभूद्विजयः क्वचित् ॥ ७।१०८।६

इत्याद्युक्त्या व्यक्तम् । तत्र पुरनिवेशनं पुत्रयोः स्थापनञ्चापि

हत्वा चैव हि तान् वीरान् भरतः केकयीसुतः ।
निवेशयामास तदा समृद्धे द्वे पुरोत्तमे ॥
तक्षस्तक्षशिलाञ्चैव पुष्करः पुष्करावतीम् ।
गन्धर्वदेशे रुचिरे गान्धारविषये च सः ॥ ७।१०८।१०-११

एतद्ग्रन्थेनाऽऽख्यातम् । भरतस्य रामपादमूलप्रत्यावर्त्तनमपि तत्रैव—

निवेश्य पञ्चभिर्वर्षैर्भरतो राघवानुजः ।
पुनरायान्महाबाहुरयोध्यां कैकयीसुतः ॥ इति ७।१०८।१९।

तत्र [1]भिल्लान् विनिर्जित्य दुष्टान् सर्वापकारिणः ।
अङ्गदश्चित्रकेतुश्च महा[2]बलपराक्रमौ ॥ ५ ॥
द्वयोर्द्वे नगरे कृत्वा गजाश्वधन[3]रत्नके ।
अभिषिच्य सुतौ तत्र शीघ्रमागच्छ मां पुनः ॥ ६ ॥
[4]रामस्याऽऽज्ञां पुरस्कृत्य गजाश्वबलवाह[5]नः ।
गत्वा हत्वा रिपून् सर्वान् स्थापयित्वा कुमारकौ ।
— सौमित्रिः पुनरागत्य रामसेवापरोऽभवत् ॥ ७ ॥

---

५ । नरो० । दुष्टान् असूयादिदोषाश्रयाम्, अत एव सर्वापकारिणः सर्वद्रोहिणः । महाबलपराक्रमौ महाशक्तिप्रभावौ ।

६ । नरो० । गजा अश्वा धनानि रत्नानि च यत्र ते तथा ।

७ । नरो० । गजा अश्वा बलानि वाहनानि यस्य स तथा । अत एव न पदादि-परम् (?) । वाहनानि रथादीनि ।

---

४ । ततो भरतागमनानन्तरमित्यर्थः, हृष्टः भरतकृतशत्रुविजयेन । पश्चिमां दिशं गच्छेति शेषः । लक्ष्मणं प्राह । अत्र भ्रातृनाहेति वाल्मीकीये—

तच्छ्रुत्वा हर्षमापेदे भ्रातृभिः सह राघवः ।
वाक्यं चाद्भुतसङ्काशं रामो भ्रातृनभाषत ॥ इति ७।१०९।१ ।

५ । तत्र भिल्लान् विनिर्जित्येति वाल्मीकीये न दृश्यते । तत्र—

इमौ कुमारौ सौमित्रे तव धर्मविशारदौ ।
अङ्गदश्चन्द्रकेतुश्च राज्यार्हौ दृढधन्विनौ ॥
उभौ राज्येऽभिषेक्ष्यामि देशं साधु निरूपय ।
रमणीयमसंबाधं रमेतां यत्र संस्थितौ ॥
न राज्ञां यत्र पीडा स्यान्न चैवाऽऽश्रमवासिनाम् ।
स देशो दृश्यतां सौम्य नापराध्यामहे यथा ॥ ७।१०९।२-४

इति । ततश्च—

तथोक्तवति रामे तु भरतः प्रत्युवाच ह ।
अयं कारपथो देशो रमणीयो निरामयः ॥
निवेशय पुरीं वीर अङ्गदस्य महात्मनः ।
चन्द्रकेतोश्च रुचिरं चन्द्रवक्त्रं मनोरमम् ॥ ७।१०९।५-६ ।

---

1. ग-च-छ 'मल्लान्' । 2. क-ख-घ छ '-सत्त्व-' । 3. क-ख-घ '-रत्नकैः' । 4. ग-च 'रामाज्ञान्तु', छ 'रामाज्ञा स' । 5. छ '-नैः' ।

ततस्तु काले महति प्रयाते रामं सदा धर्मपथे स्थितं हरिम् ।
द्रष्टुं समागादृषिवेशधारी काल[1]स्ततो लक्ष्मणमित्युवाच ॥ ८ ॥
निवेदयस्वातिबलस्य [2]दूतं मां द्रष्टुकामं पुरुषो[3]त्तमाय ।
रामाय विज्ञापनमस्ति तस्य महर्षिमुख्यस्य चिराय धीमन् ॥ ९ ॥
तस्य तद्वचनं श्रुत्वा सौमित्रिस्त्वरयाऽन्वितः ।
आचचक्षे[4]ऽथ रामाय स सम्प्राप्तं[5] तपोधनम् ॥ १० ॥
एवं [6]ब्रुवन्तं प्रोवाच लक्ष्मणं राघवो[7] वचः ।
शीघ्रं प्रवेश्यतां तात मुनिः सत्कारपूर्वकम् ॥ ११ ॥

---

८ । नरो० । धर्मपथे स्थितमिति, श्रीरामस्य धर्ममार्गे स्थानं लोकशिक्षार्थम् ।

९ । नरो० । पुरुषेभ्य उत्तमः पुरुषोत्तमस्तस्मै । यद्वा पुरुषेषु उत्तमः पुरुषोत्तमस्तस्मै । 'वनेकशेरुकादयः संज्ञायामि'ति । रामायेति यदभिप्रेत्य धात्वर्थ इति संप्रदानसंज्ञा । हे धीमन्, तस्य महर्षिमुख्यस्य ब्रह्मणो विज्ञापनं चिरायास्ति इत्यन्वयः ।

---

भरतस्तमेवमाह । तदनन्तरञ्च रामेण—

तद्वाक्यं भरतेनोक्तं प्रतिजग्राह राघवः ।
तच्च कारपथं देशमङ्गदस्य न्यवेशयत् ॥
अङ्गदीया पुरी रम्या अङ्गदस्य निवेशिता ।
रमणीया सुगुप्ता च रामेणाक्लिष्टकर्मणा ॥
चन्द्रकेतोः कुमारस्य मल्लभूमिर्निवेशिता ।
चन्द्रवक्त्रेति विख्याता दिव्या स्वर्गपुरी यथा ॥ ७।१०९।७-९

इत्युक्तदिशा कुमारावुभौ तत्र तत्र संस्थापिताविति प्रकृतवृत्तेनानेन किञ्चिदसामञ्जस्यमेव दृश्यते ।

९ । अतिबलस्य महर्षिमुख्यस्य दूतं रामं द्रष्टुकामं पुरुषोत्तमाय निवेदयस्व यस्याहं दूतस्तस्य महर्षिमुख्यस्य रामाय चिराय विज्ञापनमस्ति रामं प्रति चिरकालं बोधनीयं वाक्यमस्ति । रा० ।

[ अतिबलो ब्रह्मा सर्वस्रष्टृत्वात् । अतिबलस्य दूतं मां द्रष्टुकामं पुरुषोत्तमाय श्रीरामाय निवेदयस्व कथय । गो० ]

निवेदयस्वेति । वाल्मीकीयेऽपि—

दूतो ह्यतिबलस्याहं महर्षेरमितौजसः ।
दिदृक्षुरागतो रामं त्वरितं मां निवेदय ॥ इति ७।११०।६ ।

---

1. ग-च छ '-सदा' । 2. छ 'पुत्र' । 3. छ '-त्तमोत्तमम्' । 4. च-छ '-चे च' । 5. ग '-न्नसपो-' । 6. छ 'वदन्तं' । 7. च-छ '-वोऽनुजम्' ।

नान्येन चैतच्छ्रोतव्यं नाऽऽख्यातव्यञ्च कस्यचित्।
शृणुयाद् वा निरीक्षेद् वा [1]यः स वध्यस्त्वया प्रभो ॥ १७ ॥

तथेति च प्रतिज्ञाय रामो लक्ष्मणमब्रवीत्।
तिष्ठ त्वं द्वारि सौमित्रे नाऽऽया[2]त्वत्र जनो रहः।
यद्यागच्छति को वाऽपि स वध्यो मे न संशयः ॥ १८ ॥

ततः प्राह मुनिं रामो येन [3]वा त्वं विसर्जितः।
यत्ते मनीषितं वाक्यं तद् वदस्व ममाग्रतः ॥ १९ ॥

ततः प्राह मुनिर्वाक्यं शृणु राम यथा[4]तथम्।
ब्रह्मणा [5]प्रेषितोऽस्मीश कार्या[6]र्थे तेऽन्तिकं प्रभो ॥ २० ॥

अहं [7]हि पूर्वजो देव तव पुत्रः [8]परन्तप।
मायासङ्गमजो वीर कालः सर्वहरः [9]स्मृतः ॥ २१ ॥

---

१९। नरो०। विसर्जितः प्रेरितः। मनीषितं वक्तुमिष्टम्।

२०। नरो०। यथातथं यथार्थम्। अन्तिकं निकटम्।

---

१७। तदेव स्पष्टयति—नान्येनेति। निरीक्षेद्वा, कथयन्तावावामिति शेषः। रा०।

१८। अत्र रहो रहस्थाने जन आवाभ्यामतिरिक्तस्तृतीयो जन इत्यर्थः; को वाऽपि त्वं वा अन्यो वा। रा०।

१९। येन त्वं विसर्जितः प्रेषितस्तस्य वा मनीषितम् अथवा ते तवैव मनीषितं यद्वाक्यं तद्वदस्व। रा०।

२१। त्वं क इति जिज्ञासां सम्भाव्य स्वयमेवोत्तरमाह—अहं हीति। पूर्वजः पूर्वसृष्ट्यपेक्षया पूर्वः। महत्तत्त्वस्यैवायमंशविशेष इत्याह। अतिरिक्तमेवेदं तत्त्वमिति शैवाः। मायासङ्गमस्तदीक्षणमात्रम्। रा०।

[ ततः प्रथममात्मनः परिचयं करोति—अहमित्यादिना। अहं तव पूर्वजः प्रथमजः पुत्रः। तत्र कस्यां जातोऽस्मीत्याह—मायासङ्गमज इति। मायया सह यः सङ्गमस्तस्माज्जातः। तथाच श्रीभागवते—

प्रभावं पौरुषं प्राहुः कालमेके यतोऽभयम्।
अहङ्कारविमूढस्य कर्तुः प्रकृतिमीयुषः ॥ इति (भागवत० ३।२६।१६)।

---

1. ग च 'स च वध्यस्त्व-'। 2. च '-दत्र'। 3 ग-व 'त्व वा वि-'। 4 ग '-गतम्', क '-ऽतः'। 5. ग-क 'प्रेरितो-'। 6. घ-च '-र्थ'। 7. क 'पूर्वजो हि', ग 'तु'। 8. क 'परन्तथा'। 9. क 'सुतः'।

ब्रह्मा त्वामाह भगवान् सर्वदेवर्षिपूजित ।
रक्षितुं स्वर्गलोकस्य समयस्ते महामते ॥ २२ ॥

२२ । नरो० । रक्षितुं स्वर्गलोकस्येति, अत्र सम्बन्धविवक्षया षष्ठी । समयस्ते ते तव समयः प्रतिज्ञा अस्तीति शेषः । दृढप्रतिज्ञस्त्वं प्रतिज्ञां प्रतिपालयितुमर्हसीति भावः ।

व्याख्यातञ्च स्वामिपादैः—कालमेतद्द्वयं प्रकृतेरेवाङ्गविशेषः काल इत्येके । केचित्तु पुरुषस्य प्रभावं विक्रमं—शक्तिविशेषमाहुः । अत एव कालशक्त्यां मायायाम् इति तत्रोक्तम् । एकादशे प्रतिसंहारे च कालस्य लय उक्तः । यथा—

कालो मायामये जीवे जीवात्मनि च मय्यजे इति । ( भागवत० ११।२४।२७ )

जीवयतीति जीवः प्रकृत्यधिष्ठाता पुरुषः, न तु क्षेत्रज्ञ इति पौराणिकी व्यवस्था । कालस्य जन्मादिवादतत्त्वञ्च बहुशः प्रोक्तम् । अहं कीदृश. ? सर्वहरः सर्वेषामपहारक. स्मृतो मुनिभिरुक्तः । गो० ]

त्वत्सकाशं ब्रह्मणा प्रेषितो दूतोऽहं तव सम्बन्धी एवेत्याह—तवाहं पूर्वज इति । पूर्वजः पूर्वावस्थायां हिरण्यगर्भोत्पत्तिसमये हिरण्यगर्भावस्थायां वा ।

अत्र पाश्चात्त्ये वाल्मीकीये—

तवाहं पूर्वके भावे पुत्रः परपुरञ्जयः ।
मायासम्भावितो वीर कालः सर्वसमाहरः ॥ ७।११७।२

एवं पठन्ति । एतट्टीकायामपि—

कथमहं पुत्रस्तत्राऽऽह—मायासम्भावितः मायया सङ्कल्पेन सम्भावित उत्पादितः, सर्वसमाहरः सर्ववस्तुसंहारकर्त्तेति तीर्थः । कतकस्तु तवाहं पूर्वसद्भावे इति पाठः । पूर्वं सृष्टेः प्राक्, सद्भावे 'सदेव सौम्येदमग्र आसीदि'ति श्रुतेः सत्तारूपब्रह्मभावे करिष्यमाणाखिलसंसारस्य सृष्टिस्थितिसंहारनिग्रहानुग्रहलक्षणपञ्चकृत्यनिर्वाहकः कालाख्यः क्षणधारारूपो नाडीदिनपक्षादिविभागनिर्वाहकः पुत्रो मायासम्भावितस्त्वदीयमायापरिणाम इत्यर्थः' । इति ।

२२ । अथ ब्रह्मवाक्यमाह—रक्षितुमिति । समयः अवतारसमये कृतः कालः एतावन्तं कालं भूलोके स्थित्वा पुनः स्वर्गमागन्तेत्येवंरूपः । रा० ।

[ ब्रह्मणोक्तमाह—ब्रह्मेत्यादि । हे देवर्षिपूजित, देवाश्च ऋषयश्च तैः पूजित । प्रथमान्तपाठे ब्रह्मविशेषणम् । ब्रह्मा त्वामाह, किं तदित्याह—रक्षितुमित्यादि । स्वर्गः लोको वसतिस्थानं यस्य स स्वर्गलोको देववर्गः तस्य । समयो मर्यादा, राक्षसनाशेन यज्ञभागाधिकारादिः । ते त्वया । गो० ]

स्वर्गलोकस्य रक्षितुमित्यत्र—

पितामहस्त्वां भगवानाह देवर्षिपूजितः ।
समयस्ते महाबाहो त्रींल्लोकान् परिरक्षितुम् ॥ ७।१११।६ ।

1. ग '-वन्' । 2. क '-योऽय' ।

पुरा [1]त्वमेक एवाऽऽसीर्लोकान् संहृत्य[2] मायया ।
भार्यया सहितस्त्वं मामादौ पुत्रमजीजनः ।
[2]तथा [3]भोगवतं नागमनन्तमुदकेशयम् ॥ २३ ॥

२३ । नरो० । भार्यया सहितस्त्वम् आदौ मां पुत्रमजीजनः । तथा तेन प्रकारेण भोगवतमुदकेशयमनन्तं नागमजीजन इत्यन्वयः ।

इत्याद्युक्त्या त्रिलोकं रक्षितुमित्याह वाल्मीकिः । समयः प्रतिज्ञा, स च कालमवलम्ब्य । व्यक्तं वाल्मीकीये—

दशवर्षसहस्राणि दशवर्षशतानि च ।
कृतो रामस्य नियमः स्वयमेवाऽऽत्मनस्त्वया ॥ इति ७।१११।१२ ।

२३ । ननु मम स्वर्गेण कः सम्बन्ध इत्याशङ्कां निवर्त्तयितुं पूर्वकथामाह—पुरेति । 'सदेव सौम्येदमग्र आसीत्' इति श्रुतेः । मायाऽपि कार्याक्षमत्वात् त्वदभेदेनैव तदेति भावः । भार्यया मायया भवत्सान्निध्येन तस्या अप्येवं परिणामशीलत्वादिति भावः । भोगवतं शेषम्, नुमभाव आर्षः । एतावुभावपि महत्तत्त्वाधिष्ठाताराविति आहुः । रा० ।

[ पुरा पूर्वं त्वं लोकान् संहृत्य एकोऽद्वितीय एवाऽऽसीः । तथाच श्रुतिः—'वासुदेवो वा इदमग्र आसीदि'ति । अनन्तरम् आदौ सृष्ट्यारम्भे मायया भार्यया सहितः सन् मायाख्यां शक्तिं विधाय तत्सहितः सन्नित्यर्थः । तथाच श्रीभागवते—'तन्मायाफलरूपेण द्विधा समभवद् बृहत् ।' इति । मां पुत्रं सुताग्र्यमजीजनः, तथा उदकेशयं जलशायिनं भोगवतम् अनन्तम् अनन्ताख्यं सङ्कर्षणमिति यावत् । गो० ]

भार्यया मायया सहितस्त्वम् आदौ सृष्टेः प्राक् माम् अजीजनः

अहं हि पूर्वजो देव तव पुत्रः परन्तप ।
मायासङ्गमजो वीर कालः सर्वहरः स्मृतः ॥ ७।८।२

इत्युक्तदिशा मां कालरूपं पुत्रं न तु ब्रह्मरूपम्, ब्रह्मरूपस्य वक्ष्यमाणेन

पद्मे दिव्यार्कसङ्काशे नाभ्यामुत्पाद्य मामपि ॥ ७।८।२९

इत्यनेन ७।११७।७ । इति पाश्चात्त्यवाल्मीकीयेन च परत्रोत्पत्तिदर्शनात् । ब्रह्मणप्रेरितकाल-मुखेन ब्रह्मसंवादरूपमिदमिति दिक् पाश्चात्त्ये वाल्मीकीये पुनः—

सङ्क्षिप्य हि पुरा लोकान् मायया स्वयमेव हि ।
महार्णवे शयानोऽप्सु मां त्वं पुत्रमजीजनः ॥ इति ७।११७।४ ।

1. च 'त्वमेष' । 2. क 'ततो' । 3. ग-छ 'भागवत' ।

मायया जनयित्वा त्वं द्वौ [1]ससत्त्वौ महाबलौ ।
मधुकैटभकौ दैत्यौ हत्वा मेदोऽस्थिसञ्चयम् ॥ २४ ॥
इमां पर्वतसम्बद्धां मेदिनीं पुरुषर्षभ ।
पद्मे दिव्यार्क[2]संकाशे नाभ्यामुत्पाद्य मामपि ।
मां विधाय प्रजाध्यक्षं मयि सर्वं न्यवे[3]दयः ॥ २५ ॥

---

२४-२९। नरो०। हे पुरुषर्षभ, त्वं द्वौ मधुकैटभौ महाबलौ ससत्त्वौ मायया जनयित्वा हत्वा अर्थात् तयोर्मेदोऽस्थिसञ्चयं पर्वतसम्बद्धां मेदिनीमजीजन इत्यन्वयः। अजीजन इत्यनुषञ्जनीयम्। ससत्त्वौ सवीर्यौ। मेदश्चयः पृथिवी जातः, अस्थिचयः पर्वतो जात इति बोध्यम्। प्रजाध्यक्षं प्रजास्रष्टारम्।

---

अस्य टीकायाम्—पुरा जगत्सृष्टेः पूर्वकाले मायया सर्वसंहारसमर्थस्वशक्त्या सङ्क्षिप्य उपसंहृत्य, एतेनाप्रयासेन सकलसंहारकर्तृत्वं ब्रह्मलक्षणमुक्तम्। स्वयमेवेत्यनेनास्य संहारस्य न रुद्रादिद्वारकत्वम्, तेषामपि संहार्यकोटिनिविष्टत्वादिति दर्शितम्। एवं संहारं कृत्वा महदहङ्कार-पञ्चतन्मात्रादिसृष्टिद्वारेणैव तां सृष्टिं कृत्वा तदवयवरूपे महार्णवे शयान इत्यनेनैवोदकशायित्वे लब्धे पुनरप्स्विति तदा पृथिवीतत्त्वाद्यभावप्रदर्शनार्थः। मां पूर्वमजीजनः 'यो ब्रह्माणं विदधाति पूर्वमि'ति श्रुतेः। हिरण्यगर्भसृष्टिद्वारा ब्रह्माण्डसृष्टौ क्रियमाणायां तदण्डान्ममोद्भव इत्यर्थः। इत्याद्युक्त्या जगत्सृष्टेः पूर्वं ब्रह्मण उत्पत्तिर्व्याख्याता।

प्राच्ये पुनरेतावान् पाठ एव न दृश्यते, तत्र—

संक्षिप्य हि पुरा लोकान् वीर त्वं मायया सह।
भार्यया शुभया देव्या जलं पूर्वमजीजनः॥ ७।१११।४

इत्याद्युक्त्या 'अप एव ससर्जाऽऽदौ' इति वाक्यमङ्गीकृतम्।

भोगवतमिति भोगवन्तं प्रशस्तभोगमिति यावत्, उदकेशयम् अनन्ताख्यं नागम् अजीजन इति सम्बन्धः।

२४-२९। इमां मेदिनीं निर्मितवानिति शेषः। तत्र ह्यस्य नाभ्यां विद्यमाने पद्मे मामुत्पाद्य तञ्च मां प्रजाध्यक्षं विधाय भवान् मयि सर्वं प्रजोत्पादनपालनादिभारं न्यवेदयत् स्थापितवान्। रा०।

[ मायया ससत्त्वौ महाबलौ अतिबलवन्तौ द्वौ दैत्यौ अर्थात् तव कर्णमलोद्भूतौ

---

1. ग-च-छ 'समर्थौ'। 2. छ '-सदृशे'। 3. ख-च-च-छ '-दयत्'।

मधुकैटभौ तन्नामानौ हत्वा मेदोऽस्थिसञ्चयं तद्रूपामित्यर्थः। पर्वतैरस्थिपरिणामभूतैः सम्बद्धां युक्तां धृतां वा इमां मेदिनीमुत्पाद्य, आकाशादिक्रमेण पृथिवी सूक्ष्मरूपा प्रागेवोत्पन्ना, तयोर्मेदसा उपचिताऽभूत्। केचित्तु जले पतितयोस्तच्छरीरयोर्मिलितमेदसैव मेदिनी जातेत्याहुः। मेदांसि सन्त्यस्यामिति मेदिनी। हे पुरुषर्षभ पुरुषश्रेष्ठ, ततः स्वनाभ्यां दिव्यं मनोहरम् अलौकिकं वा, अर्कसङ्काश इति तेजस्वित्वात्। सूर्यतुल्यं यत् पद्मं तत्र मामपि चतुर्मुखमुत्पाद्य प्रजाध्यक्षं प्रजापतिं विधाय मयि सर्वं चतुर्दशभुवनात्मकं जगन्न्यवेदयः समर्पितवानसि। गो० ]

त्वं ससत्त्वौ महाबलौ मधुकैटभौ दैत्यौ जनयित्वा। मधुकैटभयोर्जननप्रकारमाह देवीभागवते—

पुरा चैकार्णवे जाते विलीने भुवनत्रये।
शेषपर्यङ्कसुप्ते च देवदेवे जनार्दने॥
विष्णुकर्णमलोद्भूतौ दानवौ मधुकैटभौ।
महाबलौ च तौ दैत्यौ विवृद्धौ सागरे जले॥ १।६।२०-१।

मायया मायामाश्रित्येत्यर्थः। सा च मधुकैटभयोः सकाशाद् वरग्रहणरूपा। तथाच देवीभागवते—मधुकैटभवाक्यम्—

प्रार्थय त्वं हृषीकेश मनोऽभिलषितं वरम्।
तुष्टौ स्वस्तव युद्धेन वासुदेवाद्भुतेन च॥ १।९।७१।

तयोर्वचनानन्तरं वरप्रार्थना तत्रैव—

तयोस्तद्वचनं श्रुत्वा प्रत्युवाच जनार्दनः।
भवेतामद्य मे तुष्टौ मम वध्यावुभावपि॥ १।९।७२।

वरप्रार्थनानन्तरं मधुकैटभयोर्वाक्यञ्चापि तत्रैव—

निर्जले विपुले देशे हनस्व मधुसूदन।
वध्यावावां तु भवतः सत्यवाग् भव केशव॥ १।९।७६।

विष्णोरत्यद्भुतमायावलम्बनं तयोर्वधश्चापि तत्रैव—

स्मृत्वा चक्रं तदा विष्णुस्तावुवाच हसन् हरिः।
हन्म्यद्य तु महाभागौ निर्जले विपुलस्थले॥

इत्युक्त्वा देवदेवेश ऊरू कृत्वाऽतिविस्तरम्।
दर्शयामास तौ तत्र निर्जलञ्च जलोपरि॥
नास्त्यत्र दानवौ वारि शिरसी मुञ्चतामिह।
सत्यवागहमद्यैव भविष्यामि च वां तथा॥

सोऽहं [1]संत्यक्तसम्भारस्त्वामवोचं जगत्पते ।
रक्षां विधत्स्व भूतेभ्यो ये मे वीर्यापहारिणः ॥ २६ ॥

२६ । नरो० । संभाराः साधनानि ।

तदाकर्ण्य वचस्तथ्यं विचिन्त्य मनसा च तौ ।
वर्धयामासतुर्देहं योजनानां सहस्रकम् ॥
भगवान् द्विगुणं चक्रे जघनं विस्मितौ तदा ।
शीर्षे सन्दधतां तत्र जघने परमाद्भुते ॥
रथाङ्गेन तदा छिन्ने विष्णुना प्रभविष्णुना ।
जघनोपरि वेगेन प्रकृष्टे शिरसी तयोः ॥ १।९।७७-८२

एवं मायावलम्बनेन तौ हत्वा तयोर्मेदोऽस्थिसञ्चयं कृत्वा इमां पृथिवीं मेदिनीति नाम्ना ख्याता-मकरोदिति संकलितोऽर्थः । मेदिनीनामकरणमपि तत्र देवीभागवत एव—

गतप्राणौ तदा जातौ दानवौ मधुकैटभौ ।
सागरः सकलो व्याप्तस्तदा वै मेदसा तयोः ॥
मेदिनीति ततो जातं नाम पृथ्व्याः समन्ततः ।
अभक्ष्या मृत्तिका तेन कारणेन मुनीश्वराः ॥ इति १।९।८३-८४ ।

वाल्मीकीयेऽपि—

भोगवन्तं ततो नागमनन्तमुदकेशयम् ।
मायया जनयित्वा तु द्वे सत्त्वे सुमहाबले ॥
मधुकैटभविख्याते ययोर्भूरस्थिसञ्चयैः ।
अभूत् पर्वतसंबाधा मेदिनी मेदसा तथा ॥ इति ७।१११।५-६ ।

पद्मे इत्यादिना चतुर्मुखसृष्टिं वक्तुमुपक्रमते । ततोऽर्कसङ्काशे अर्कप्रभे पद्मे नाभिपद्मे मां च चतुर्मुखमुत्पाद्य मामेव प्रजाध्यक्षं विधाय मयि सर्वं प्रजासृष्टिरूपं कर्म न्यवेदयः निवेशित-वानसीत्यर्थः ।

२६ । संयुक्तसम्भारः अङ्गीकृतप्रजोत्पादनादिव्यवहारः । मे वीर्यापहारिणः मे वीर्यस्य मत्प्रजानां दुःखदा इत्यर्थः । रा० ।

[ ननु यदि सर्वजनितेश्वरोऽहं तर्हि कथं निग्रहानुग्रहलक्षणं वैषम्यं मम पालनपरत्वादि-त्याह—सोऽहमित्यादि । स त्वया नियुक्तोऽहं संत्यक्तसंभारः असुरादिभ्यो भयेन त्यक्तसम्भारः परित्यक्तसृष्ट्युपकरणः सन् त्वामवोचम् । किन्तदित्याह—रक्षामिति । ये मम वीर्यापहारिण-स्तेभ्यो भूतेभ्योऽसुरादिभ्यो रक्षां विधत्स्व कुरु । गो० ]

1. क-ख-घ-च 'संयुक्त-' ।

'ततस्त्वं कश्यपाज्जातो विष्णुर्वामनरूपधृक् ।
हृतवानसि भूभारं वधाद्रक्षोगणस्य च ॥ २७ ॥
सर्वासूत्सार्यमाणासु प्रजासु धरणीधर ।
रावणस्य वधाकाङ्क्षी मर्त्यलोकमुपागतः ॥ २८ ॥

---

२८-२९ । नरो० । हे धरणीधर, सर्वासु प्रजासु उत्सार्यमाणासु उद्वेज्यमानासु रावणस्य

---

सोऽहं प्रजापतिः संत्यक्तसंभारः संन्यस्तसृष्टिभारस्त्वामवोचम्, किन्तदित्याह—रक्षां विधत्स्वेति । यतो भवान् सृष्टिसमर्थदानक्रियाशक्तिमयतेजःप्रदोऽभूरतस्त्वमेव मम वीर्यापहारिणो मम वीर्यापहारिभ्य इत्यर्थः, भूतेभ्यो रक्षां विधत्स्व इत्यहं प्रार्थितवान् । अत्र वाल्मीकीये—

सोऽहं संन्यस्तभारोऽपि त्वामवोचं जगत्पते ।
रक्षां विधत्स्व भूतेषु मम तेजस्करो भव ॥ इति ७।११।८ ।

२७ । ततः मां प्रति तथा प्रतिज्ञानोत्तरमित्यर्थः । रा० ।

अत्र पाश्चात्ये वाल्मीकीये—

ततस्त्वमसि दुर्धर्षात्तस्माद्भावात् सनातनात् ।
रक्षां विधास्यन् भूतानां विष्णुत्वमुपजग्मिवान् ॥
अदित्यां वीर्यवान् पुत्रो भ्रातॄणां वीर्यवर्धनः ।
समुत्पन्नेषु कृत्येषु तेषां साह्याय कल्पसे ॥
स त्वमुज्जास्यमानासु प्रजासु जगतो वर ।
रावणस्य वधाकाङ्क्षी मानुषेषु मनोऽदधाः ॥ इति ७।११८।९-११ ।

'ततो हेतोः रक्षणस्य सर्वशक्तौ त्वय्येव निवेशितत्वाद्धेतोः दुर्धर्षात्तस्माद् भावाद् ब्रह्मैव भूतानां ज्येष्ठं तेन कोऽर्हति स्पर्द्धितुमिति दुर्द्धर्षत्वस्वभावात् सनातनात् सकलसंसारमूलकारणत्वेन कालापरिच्छेद्यात् त्रिगुणमहत्तत्त्वाख्यहैरण्यगर्भभावात् सत्त्वप्राधान्येन विष्णुत्वं प्राप्तवान् ।' इति च रामायणतिलकटीकायाम् ।

२८ । उत्सार्यमाणासु इत्यत्र वाल्मीकीये उज्जास्यमानासु इति पठित्वा हिंस्यमानासु इत्यर्थं व्याचष्टे ।

---

१. च-क 'भत-'।

[1]दशवर्षसहस्राणि दशवर्षशतानि च ।
कृत्वा वासस्य समयं त्रिदशेष्वात्मनः पुरा ॥ २९ ॥
स ते मनोरथः पूर्णः पूर्णे चाऽऽयुषि ते नृषु ।
कालस्तापसरूपेण त्वत्समीपमुपा[2]गमत् ॥ ३० ॥
ततो भूयश्च [3]ते बुद्धिर्यदि राज्यमुपासितुम् ।
तत्तथा भव भद्रं ते एवमाह पितामहः ॥ ३१ ॥

---

वधाकाङ्क्षी सन् पुरा त्रिदशेषु दशवर्षसहस्राणि दशवर्षशतानि आत्मनो वासस्य समयं कृत्वा मर्त्यलोकमुपागतः ।

३० । नरो० । नृषु स ते तव मनोरथः पूर्णः, पूर्णे च त्वयि नृणां ते मनोरथाः पूर्णा इति । पूर्णः समाप्तिं प्राप्तः । पूर्णे परमानन्दस्वभावे । यद्वा पूर्णे ऐश्वर्यादिषड्गुणयुक्ते, अथवा पूर्णे सर्वज्ञत्वादिषड्गुणयुक्ते । सर्वज्ञत्वादयः षड्गुणा यथा—सर्वज्ञता व्याप्तिरनादिबोधः स्वतन्त्रताऽनुपमशक्तिरनन्तशक्तिश्चेति । अथवा पूर्णे वृद्ध्यादिषड्भावविकारशून्ये ।

---

२९ । समयं वासकालप्रतिज्ञाम् । रा० ।

[ दशवर्षेत्यादि । पुरा त्रिदशानां मध्ये आत्मनः श्रीरामस्य मर्त्यलोकोचितक्रीडाया दशवर्षसहस्राणि दशवर्षशतानि च समयं सङ्केतं कृत्वा मर्त्यलोकमुपागतोऽसि । गो० ]

३० । मनोरथः प्रतिज्ञाविषयः कालः । नृषु नृलोके । आयुषि पूर्णे सति अहं कालस्तापसरूपेण त्वत्समीपमुपागमं प्राप्तवानस्मि । रा० ।

[ स ते इत्यादि । ते तव मनोरथः पूर्णः, नृषु नृणां मध्ये आयुषि सङ्केतितकाले च पूर्णे तापसरूपेण कालस्त्वत्समीपमागतः, एतद्रहस्यं निवेदयितुमिति शेषः । गो० ]

अत्रापि पाश्चात्त्ये—

स त्वं मनोमयः पुत्रः पूर्णायुर्मानुषेष्विह ।
कालो नरवरश्रेष्ठ समीपमुपवर्त्तितुम् ॥ ७।११७।१३

इति पठन्ति । अत्र टीकायामपि 'स त्वं मानुषेषु मनोमयः स्वसङ्कल्पमयः स्वसङ्कल्पादेव कस्यचित् पुत्रो जातः स च तत्र पूर्णायुः त्वत्सङ्कल्पितायुषः पूर्णत्वमित्यर्थः । यद्वा श्रीमदादिगुरोस्तुरीयब्रह्मणो 'यस्य भासा सर्वमिदं विभाति' इत्यादिश्रुतिसिद्धस्य सङ्कल्पमयो ज्येष्ठपुत्रो हिरण्यगर्भः कार्यब्रह्मरूपस्तदभिन्नत्वभूतब्रह्मगणनावृतज्ञानः स्वसङ्कल्पादेव मानुषेष्वपि कस्यचित् पुत्रस्तत्रापि पूर्णायुर्जातः, यदेवमतो हे नरवरश्रेष्ठ, अयं कालस्ते समीपमुपगत्योपवर्त्तितुं विज्ञापयितुं प्रेषित इति शेषः ।' इत्याह ।

३१ । तत्तथा भव राज्यमुपास्वेत्यर्थः । रा० ।

---

१. क-पुस्तके अत आरभ्य विंशश्लोकान्तोऽशो नास्ति । २. ख-घ '-गमम्', ग-च '-गतः' । ३. क 'मे' ।

यदि ते गमने बुद्धिर्देवलोकं जितेन्द्रिय ।
सनाथा विष्णुना देवा भवन्तु विगतज्वराः ॥ ३२ ॥
चतुर्मुखस्य तद् वाक्यं श्रुत्वा कालेन भाषितम् ।
हसन् रामस्तदा वाक्यं कृत्स्नस्यान्तकमब्रवीत् ॥ ३३ ॥
श्रुतं तव वचो मेऽद्य [1]ममापीष्टत[2]रन्तु तत् ।
सन्तोषः परमो [3]ज्ञेयस्त्वदागमनकारणात् ॥ ३४ ॥

---

[ तत इति, ततः सङ्केतितकालात् परमपि भूयः प्रचुरं यथा स्यात्तथा राज्यमुपासितुमत्र राज्यं कर्त्तुं यदि ते बुद्धिर्भवति तत्तदा तथा भव राज्यं कुरु, सर्वनियन्तरि त्वयि नियामकाभावात् । ते तुभ्यं भद्रमस्तु, पितामहो ब्रह्मा एवमाह । गो० ]

तत इत्यादि । ततस्तदनन्तरं प्रतिज्ञातसमयानन्तरमपीत्यर्थः । अत्र वाल्मीकीये—

अतो भूयश्च ते श्रद्धा यदि राज्यमुपासितुम् ।
एवम्भवतु काकुत्स्थ एवमाह पितामहः ॥ इति ७।१११।१४ ।

३२ । यदि ते देवलोकं स्वलोकं विष्णुलोकमिति यावत्, प्रतीति शेषः, गमने बुद्धिर्भवेत् तदा गम्यताम्, तव विरहेणानाथा देवास्तव सङ्गमेन सनाथा विगतज्वरा व्यपगतार्त्तयश्च भवन्तु इत्यन्वयः ।

अत्रापि वाल्मीकीये—

यदि वा गमने बुद्धिर्देवलोकं जितेन्द्रियः ।
सनाथा विष्णुना देवा भवन्तु विगतज्वराः ॥ इति ७।१११।१५ ।

[ हे जितेन्द्रिय, यदि, अनेन विषयभोगासक्तिं वारयति । देवलोकं वैकुण्ठं प्रति ते तव गमने बुद्धिर्भवति तदा देवा विष्णुना सनाथाः सन्तो विगतज्वरा भवन्तु । गो० ]

३३ । कृत्स्नस्य समग्रस्य अन्तकः संहारकः, तम् ।

राघवः प्रहसन् वाक्यं सर्वसंहारमब्रवीत् ७।१११।१७

इति वाल्मीकीये ।

३४ । तव वचो मे मया श्रुतम् । अथ इदानीन्तनत्वेन तद्वचो ममापीष्टतरम् अभिलषितम् । एतेन स्वलोकगमनाय रामस्यापि त्वरेति सूचितम् । त्वदागमनकारणात् त्वदागमनेनेत्यर्थः । त्वदागमनं विना सहसाऽस्माकं स्वस्थानगमनमसुलभमिवेति त्वदागमनेन तदुपलभ्यं भवेदित्याशयः ।

---

1. ग 'ममाभीष्टत-' । 2. च '-रञ्च' । 3. ग-च 'जज्ञे त्वदा-' ।

त्रयाणामपि लोकानां कार्यार्थं मम सम्भवः ।
भद्रं [1]तेऽस्त्वागमिष्यामि यत एवाहमागतः ॥ ३५ ॥
मनो[2]रथस्तु संप्राप्तो न मेऽत्रास्ति विचारणा ।
मत्सेवकानां देवानां सर्वकार्येषु वै मया ।
स्थातव्यं मायया पुत्र यथा [3]प्राह प्रजापतिः ॥ ३६ ॥
एवं तयोः कथयतोर्दुर्वासा मुनिरभ्यगात् ।
राज[4]द्वारं राघवस्य दर्शनापेक्षयाद्रुतम् ॥ ३७ ॥
मुनिर्लक्ष्मणमासाद्य दुर्वासा वाक्यमब्रवीत् ।
शीघ्रं दर्शय रामं मे कार्यं[5] मेऽत्यन्तमाहितम् ॥ ३८ ॥
तच्छ्रुत्वा प्राह सौमित्रिर्मुनिं ज्वलनतेजसम् ।
[6]रामेण कार्यं किं तेऽद्य [7]किं तेऽभीष्टं करोम्यहम् ।
राजा कार्यान्तरे व्यग्रो मुहूर्त्तं सम्प्रतीक्षताम् ॥ ३९ ॥

---

३९ । नरो० । ज्वलनस्येव वह्नेरिव तेजो यस्य तम् ।

---

३५ । त्रयाणामिति । त्रयाणां भूर्भुवःस्वर्लोकानां कार्यार्थं प्रयोजनानुष्ठानार्थं मम सम्भव उत्पत्तिः । ते भद्रमस्तु प्रतिगम्यतामिति शेषः । अहं यत आगतस्तत्र आगमिष्यामि तव पश्चात् यास्यामीत्यर्थः ।

३६ । स्थातव्यं तद्रक्षणाय उद्युक्तेन भाव्यम् । माययेत्यनेन सर्वमिदं मायैवेति ध्वनयति । रा० ।

मनोरथोऽभिलषितो विष्णुलोकगमनानुकूलः प्रस्ताव एव प्राप्तस्त्वया उपस्थापितः । अत्र तव प्रस्तावे विचारणा गन्तव्यं न गन्तव्यं वेति विचारो न, एतेन अवश्यमेव गन्तव्यमिति ध्वनितम् । मायया स्वप्रकृत्येत्यर्थः, प्रकृतिं विना पुरुषस्य स्वाधीनसामर्थ्यविरहात् ।

३७ । आद्रुतं यथा भवति तथा दर्शनेच्छया राजद्वारमभ्यगात् । रा० ।

३८ । अत्यन्तम् अतिप्रयोजनीयमित्यर्थः, कार्यमाहितमुपस्थितम् ।

३९ । रामेण कार्यं किन्ते इति, तत् सर्वं कार्यमहं सम्पादयामीति भावः । तदेवाऽऽह— किन्ते इत्यादि । रा० ।

सौमित्रिरभिवादनानन्तरं प्राह । तथाच वाल्मीकीये—

ऋषेस्तु वचनं श्रुत्वा लक्ष्मणो वाक्यमब्रवीत् ।
अभिवाद्य महात्मानं मुनिं ज्वलनसन्निभम् ॥ इति ७।१११।२३ ।

---

1 ग-च 'तेऽस्तु ग-' । 2 ग-च क '-गतस्तु' । 3. ख-ग च-क 'चाऽऽह' । 4. क 'द्वारि' ।
5. ग-च '-र्यमत्यन्तमाहितम्' । 6 च 'कार्यं रामेण' । 7. च 'यत्तेऽभीष्टं' ।

तच्छ्रुत्वा क्रोध[1]सन्तप्तो मुनिः सौमित्रिमब्रवीत् ।
अस्मिन् क्षणे तु सौमित्रे न दर्शयसि चेद्विभुम् ।
रामं सविषयं [2]वंशं भस्मीकुर्यान्न संशयः ॥ ४० ॥

श्रुत्वा तद्वचनं घोरमृषेर्दुर्वाससो भृशम् ।
स्वरूपं तस्य वाक्यस्य चिन्तयित्वा स लक्ष्मणः ॥ ४१ ॥

सर्वनाशाद्वरं मेऽद्य नाशो ह्येकस्य कारणात् ।
निश्चित्यैवं [3]ततो गत्वा रामाय प्राह लक्ष्मणः ॥ ४२ ॥

सौमि[4]त्रेर्वचनं श्रुत्वा रामः कालं व्यसर्जयत् ।
शीघ्रं निर्गम्य[5] रामोऽपि दद[6]र्शात्रेः सुतं मुनिम् ॥ ४३ ॥

[7]रामोऽभिवाद्य संप्रीतो मुनिं पप्रच्छ सादरम् ।
किं कार्यं ते करोमीति मुनिमाह रघूत्तमः ॥ ४४ ॥

---

४० । नरो० । सविषयं वंशं भस्मीकुर्यामित्यन्वयः ।

---

४० । वंशं सवंशमित्यर्थः । वाल्मीकीये दुर्वाससो वाक्यम्—

अस्मिन् मुहूर्त्ते सौमित्रे राघवाय निवेदय ।
अन्यथा क्रियमाणे तु वाक्ये वाक्यविशारद ॥
विषयञ्च पुरञ्चैव शपेयं राघवं तथा ।
भरतं त्वाञ्च शत्रुघ्नं युष्माकञ्चैव सन्ततिम् ॥
न हि शक्याम्यहं भूयो मुनिना व्याहृतं वचः ॥ इति ७।१११।२६-२८ ।

४१ । भृशं घोरम् अतिभयङ्करम् । तस्य वाक्यस्य स्वरूपं दत्तेऽभिशापे वंशादिकं सर्वमेव सशयितं स्यादितिप्रकारकमित्यर्थः ।

४२ । एकस्य कारणात् सर्वनाशात् मे नाशो वरं श्रेयान् । हि निश्चये । अत्रार्थे वाल्मीकिः—

एकस्य मरण मेऽस्तु मा भूत् सर्वविनाशनम् । इति ७।१११।२९ ।

४३ । अत्रेः सुतं दुर्वाससम् । रामोऽपीत्यपिशब्दाल्लक्ष्मणोऽपि, सलक्ष्मणस्य रामस्य मुनेः समीपागमनात् ।

---

1. ग-च-छ '-संव्याप्तो' । 2. छ 'सर्वं' । 3. च 'तदा' । 4. छ '-चिव-' । 5. च '-त्य' । 6. ग '-र्शं मुनिपुङ्गवम्' । 7. ग 'अभिवाद्य च' ।

तच्छ्रुत्वा रामवचनं दुर्वासा राममब्रवीत् ।
अद्य वर्षसहस्राणामुपवाससमापनम् ।
अतो भोजनमिच्छामि सिद्धं यत्ते रघूत्तम ॥ ४५ ॥
रामो मुनिवचः श्रुत्वा सन्तोषेण समन्वितः ।
[1]स सिद्धमन्नं मुनये यथावत् समुपाहरत् ॥ ४६ ॥
मुनिर्भुक्त्वाऽन्नममृतं सन्तुष्टः पुनरभ्यगात् ।
स्वमाश्रमं[2] गते तस्मिन् रामः सस्मार भाषितम् ॥ ४७ ॥
कालेन शोकदुःखार्त्तो विमना[3]श्चातिविह्वलः ।
अवाङ्मुखो दीनमना न शशाकाभिभाषितुम् ॥ ४८ ॥
मनसा लक्ष्मणं ज्ञात्वा हतप्रायं रघू[4]द्वहः ।
अवाङ्मुखो बभूवाथ तूष्णीमेवाखिलेश्वरः ॥ ४९ ॥
ततो रामं विलो[5]क्याऽऽह सौमित्रिर्दुःखसंप्लु[6]तम् ।
तूष्णीम्भूतं चिन्तयन्तं गर्हन्तं स्नेहबन्धनम् ॥ ५० ॥

---

४५ । वर्षसहस्राणामनशननियमपरिगृहीतानामित्यर्थः । सिद्धम् उपपन्नं यथायुक्तमित्यर्थः । मुनिवाक्यं वाल्मीकीये—

प्रत्युवाच ततो रामं दुर्वासाः श्रूयतामिति ।
अद्य वर्षसहस्रस्य समाप्तिर्मम राघव ॥
क्षुधितो भोक्तुमिच्छन् वै त्वामायातो रघूत्तम ।
सोऽहं भोजनमिच्छामि यथासिद्धं तवानघ ॥ इति ७।१११।३३-३४ ।

४६ । स रामो मुनिवचः दुर्वाससो वाक्यं श्रुत्वा यथावद् यथोपयुक्तम् । सिद्धमन्नं पक्वान्नम् ।

तच्छ्रुत्वा वचनं रामो हर्षेणाभिपरिप्लुतः ।
भोजनं विप्रमुख्याय यथासिद्धमुपानयत् ॥ ७।१११।३५

इति वाल्मीकीयेनायमेवार्थः प्रायेण प्रकटीकृतः ।

४७ । अभ्यगात् स्वमाश्रमं प्रतीति शेषः । भाषितं कालेनेति परेणान्वयः ।

५० । स्नेहकृतं बन्धनं गर्हन्तं निन्दन्तं स्नेहाद्वधेऽशक्तता तदकरणे च प्रतिज्ञाहानिरिति चिन्तयन्तम् । रा० ।

---

1. च-छ 'सत्ति-' । 2. छ '-मे' । 3. छ '-ना इव वि-' । 4. च-छ '-त्तमः' । 5 च '-क्याथ' । 6 छ '-त' ।

मत्कृते त्यज सन्तापं जहि मां रघुनन्दन ।
गतिः कालस्य [1]कलिता पूर्वमेवेदृशी प्रभो ॥ ५१ ॥
त्वयि हीनप्रतिज्ञे तु [2]नरको मे [3]ध्रुवं भवेत् ।
मयि प्रीतिर्यदि [4]भवेद् यद्यनुग्राह्यता तव ।
त्यक्त्वा [5]शङ्कां जहि प्राज्ञ मा मा धर्मं त्यज प्रभो ॥ ५२ ॥
सौमित्रिणोक्तं तच्छ्रुत्वा रामश्चलितमानसः ।
आहूय मन्त्रिणः सर्वान् वशिष्ठं चेदमब्रवीत् ॥ ५३ ॥
मुनेरागमनं यत्तु काल[6]स्यापि हि भाषितम् ।
प्रतिज्ञामात्मन[7]श्चैव सर्वमावेदयत् प्रभुः ॥ ५४ ॥

---

५१ । पूर्वमेवेदृशीति, इदमवश्यं भावीति भावः । रा० ।

[ गतिः कालस्य कलितेति । पूर्वमेव कालस्य गतिरागमनम् ईदृशी समस्तनाशार्थम् इति मया कलिता ज्ञाता । गो० ]

कालस्य ईदृशी 'संयोगो विप्रयोगान्तो मरणान्तञ्च जीवितमि'त्याकारिका गतिर्विधानं पूर्वमेव कलिता विनिश्चितासीदिति शेषः । अत्रार्थे वाल्मीकिरपि—

न सन्तापं महाबाहो कर्त्तुमर्हसि मत्कृते ।
पूर्वनिर्माणबद्धा हि कालस्य गतिरीदृशी ॥ इति ७।११२।२ ।

५२ । नरकः मत्कृते त्वत्प्रतिज्ञाहानौ ममापि नरक इत्यर्थः । धर्मं मा त्यजेत्यन्वयः । अनेन प्रतिज्ञापालनमेव क्षत्रियस्य मुख्यो धर्मस्तद्विधेयानां च तत्प्रतिज्ञानिर्वाहणं परमो धर्म इति सूचितम् । रा० ।

मे ध्रुवं भवेदित्यत्र—

जहि मां निर्विशङ्कस्त्वं सत्यं पालय सुव्रत ।
हीनप्रतिज्ञः काकुत्स्थ व्रजेद्धि नरकं ध्रुवम् ॥ ७।११२।३

इत्यादिना वाल्मीकीयेन प्रतिज्ञाहानौ रामस्यैव नरकभोगो निर्दिश्यते ।

मयि प्रीतिरित्यादावपि वाल्मीकिः—

मयि ते यद्यनुक्रोशो यद्यनुग्राह्यता मयि ।
जहि मां निर्विशङ्कस्त्वं सत्यं पालय सुव्रत ॥ इति ७।११२।४ ।

५४ । किमब्रवीदित्याह—मुनेरागमनमिति । मुनेर्दुर्वाससः आगमनम् ।

---

1. ग-च 'फलिता' । 2 च 'नरलोकाद्व्ययं भवेत्' । 3. छ 'द्रुत' । 4. ग 'भवेद् यद्यनुग्रहता', च 'भवेत्तदाऽनुग्रहता' । 5. ग 'च शङ्कां जहि मामधर्मं सन्त्यज' । 6. ग '-स्य हि विभा-' । 8. ग '-श्चापि' ।

श्रुत्वा रामस्य वचनं मन्त्रिणः सपुरोहिताः ।
ऊचुः प्राञ्जलयः सर्वे राममक्लिष्टकारिणम् ॥ ५५ ॥

पूर्वमेव हि निर्दिष्टं तव भूभारहारिणः ।
लक्ष्मणेन वियोगस्ते [1]ज्ञातं विज्ञानचक्षुषा ॥ ५६ ॥

त्यजाऽऽशु लक्ष्मणं राम मा प्रतिज्ञां त्यज प्रभो ।
प्रतिज्ञाते परित्यक्ते धर्मो भवति निष्फलः ।
धर्मे नष्टेऽखिले राम त्रैलोक्यं नश्यति ध्रुवम् ॥ ५७ ॥

त्वन्तु सर्वस्य लोकस्य पालकोऽसि रघूत्तम ।
त्यक्त्वा लक्ष्मणमे[2]वैकं त्रैलोक्यं त्रातुमर्हसि ॥ ५८ ॥

रामो धर्मार्थसहितं वाक्यं तेषामनिन्दितम् ।
सभामध्ये समा[3]श्रुत्य प्राह सौमित्रिमञ्जसा ॥ ५९ ॥

यथेष्टं गच्छ सौमित्रे मा भूद्धर्मस्य [4]संक्षयः ।
परित्यागो वधो वाऽपि [5]सतामेवोभयं समम् ॥ ६० ॥
एवमुक्तो[6] रघुश्रेष्ठो दुःखव्याकुलितेक्षणः ।
रामं प्रणम्य सौमित्रिः शीघ्रं गृहमगात् स्वकम् ॥ ६१ ॥

---

५६ । नरो० । लक्ष्मणवियोगस्ते भविष्यतीति विज्ञानचक्षुषा ज्ञातमिति ।

---

५६ । भूभारहारिणस्तावन्मात्रफलकतया धृतशरीरस्य तव पूर्वं त्वत्तः पूर्वमित्यर्थः । लक्ष्मणगमनं निर्दिष्टम्, भावी स त्वर्थोऽस्माभिर्ज्ञात एवाऽऽस्ते । रा० ।

५७ । प्रतिज्ञाते अर्थे परित्यक्ते अन्यथा कृते । रा० ।

५८ । ततो धर्मे विनष्टे तु त्रैलोक्यं सचराचरम् ।
सदेवर्षिगणं सर्वं विपद्येत न संशयः ॥ ७।११२।१०

इत्यादिवाल्मीकीयेन देवर्षिगणसहितत्रैलोक्यनाशः फलं धर्महानेरुक्तम् ।

६० । परित्यागवधयोः साम्यमवलम्ब्य वाल्मीकिः—

परित्यक्तोऽसि सौमित्रे मा भूद्धर्मविपर्ययः ।
परित्यागो वधो वाऽपि साधूनामुभयं समम् ॥ इति ७।११२।१८ ।

६१ । गृहमगात् स्वकमिति पाश्चात्त्यवाल्मीकीयविरोधि, तत्र—

---

1. क-ख-घ-छ 'ज्ञातो', च 'जातो' । 2. च '-मेव त्व' । 3. ग-छ '-श्रित्य' । 4. घ 'संशय.' । 5. छ 'सतामितत्र संशयः' । 6. ख-ग-च '-क्तो रघुश्रेष्ठ' ।

[1]ततोऽगात् सरयूतीरमाचम्य स कृताञ्जलिः ।
नव द्वाराणि संयम्य मूर्ध्नि प्राणमधारयत् ॥ ६२ ॥
यदक्षरं परं ब्रह्म वासुदेवाख्यमव्ययम् ।
परं तत् परमं धाम [2]चेतसा सोऽभ्यचिन्तयत् ॥ ६३ ॥
वायुरोधेन संयुक्तं सर्वे देवाः [3]सहर्षयः ।
[4]साग्नयो लक्ष्मणं पुष्पैस्तुष्टुवुश्च समाकिरन् ॥ ६४ ॥

---

६२ । नरो० । नव द्वाराणि मुखादीनि ।

६३ । नरो० । यदक्षरमिति । अक्षरं प्रदेशनाशशून्यम् (?), यतोऽव्ययं नित्यं वासुदेवाख्यं सर्वान्तर्यामि, अत एव परं परमं तद् धाम तेजःपुञ्जरूपम् ।

---

रामेण भाषिते वाक्ये बाष्पव्याकुलितेन्द्रियः ।
लक्ष्मणस्त्वरितं प्रायात् स्वगृहं न विवेश ह ॥ ७।१२०।१४

इत्यादिना तेन गृहं न गतमिति उक्तत्वात् ।

प्राच्येऽपि—

रामस्य भाषितं श्रुत्वा शोकव्याकुलिताक्षरम् ।
तत्क्षणं त्वरितं प्रागाल्लक्ष्मणो व्याकुलेन्द्रियः ॥
स गत्वा सरयूतीरमुपस्पृश्य यथाविधि ।
निगृह्य सर्वस्रोतांसि नोच्छ्वासं प्रमुमोच ह ॥ ७।११२।१९-२०

इत्यादिना सरयूगमनमेव स्पष्टं प्रतीयते, न गृहगमनम् ।

६४ । तुष्टुवुः पुष्पैः समाकिरंश्च । रा० ।

लक्ष्मणस्य रूपान्तरग्रहणमवलम्ब्य पाद्मे उत्तरखण्डे—

अग्रजस्य प्रतिज्ञातं विज्ञाय रघुसत्तमः ।
तत्याज मानुषं रूपं प्रविवेश स्वकां तनुम् ॥
फणासहस्रसंयुक्तः कोटीन्दुसमवर्चसः ।
दिव्यमाल्याम्बरधरो दिव्यगन्धानुलेपनः ॥
नागकन्यासहस्रैस्तु संवृतः समलङ्कृतः ।
विमानं दिव्यमारुह्य प्रययौ वैष्णवं पदम् ॥ इति २४४।४८-५० ।

---

1. क 'अगच्छत्'। 2 क 'तेजसा'। 3 च 'महर्षयः'। 4. च 'अग्रग'।

अदृश्यं विबुधैः कैश्चित् सशरीरं स वासवः ।
गृहीत्वा लक्ष्मणं शक्रः स्वर्गलोकमथागमत् ॥ ६५ ॥
ततो विष्णोश्चतुर्भागं तं देवं सुरसत्तमाः ।
सर्वे देवर्षयो दृष्ट्वा लक्ष्मणं समपूजयन् ॥ ६६ ॥
लक्ष्मणे[1]ऽपि दिवमागते हरौ सिद्धलोकगतयोगिनस्तदा ।
ब्रह्मणा सह समागमन्मुदा द्रष्टुमाहितमहाहिरू[2]पकम् ॥ ६७ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे उत्तरकाण्डे अष्टमोऽध्यायः ॥ ८ ॥

---

६५ । नरो० । सशरीरं शरीरेण सह वर्त्तमानम् ।

६६ । नरो० । चतुर्णां पूरणो भागश्चतुर्भागस्तं तथा । सुरसत्तमाः सुरश्रेष्ठाः ।

६७ । नरो० । लक्ष्मणेऽपि दिवमागते हराविति, लक्ष्मणे इन्द्रे च स्वर्गमागते सतीत्यर्थः । आहितञ्च तत् महाहिरूपञ्च तद् यस्यास्ति तं तथा ।

[ उत्तरकाण्डे अष्टमाध्यायव्याख्या समाप्ता ॥ ८ ॥ ]

---

६५ । विबुधैः कैश्चिददृश्यं कैरपि देवैर्न दृश्यमित्यर्थः । रा० ।

[ अदृश्यमिति । स प्रसिद्धो वासव इन्द्रः । शक्नोति दुष्करमपि कर्त्तुमिति शक्रः । सर्वैः सहागतरप्यदृष्टं सशरीरं लक्ष्मणं गृहीत्वा स्वर्लोकमगमत् । शक्र इति सामर्थ्यविशेषणसूचनाय विशेषणम् । गो० ]

अत्र पाश्चात्ये वाल्मीकीये—

अदृश्यं सर्वमनुजैः सशरीरं महाबलम् ।
प्रगृह्य लक्ष्मणं शक्रस्त्रिदिवं संविवेश ह ॥ इति ७।१२०।१७ ।

'अदृश्यं योगबलादन्तर्धानं गतम् । यद्वाऽदृश्यं यथा तथा सशरीरं लक्ष्मणं प्रगृह्य शक्रस्त्रिदिव संविवेश, अनेन मनुष्यशरीरसंस्थानमेव देवशरीरसंस्थानं प्राप्तम्, न तु पूर्वशरीरपरित्यागः शरीरान्तरपरिग्रहश्चेति सूचितमेव । एतेन जन्मापि तथैवेति सूचितम् ।' इति एतट्टीकायाम् ।

६६ । चतुर्भागं चतुर्थभागम् । अत्र कतकः—शेषसुपर्णविष्वक्सेनैः शेषशायी विष्णुः स्वमूर्त्या चतुर्भागवान् । तत्र शेषांशो लक्ष्मणः, गरुडांशो भरतः, विष्वक्सेनांशः शत्रुघ्न इति । एतत्तु पद्मपुराणमतविरुद्धम् । तत्र भरतशत्रुघ्नौ शङ्खचक्रांशाविति प्राग् बहुश आलोचितम् ।

६७ । हरौ हर्यंशे सिद्धलोकगतयोगिनस्तल्लोकस्य योगिन इत्यर्थः । आहितं प्राप्तं महाहिरूपं येन तत्, दुग्धं यथा दधिभावमापद्यते तथाऽयमेव देहस्तत्राहिरूपतां प्राप्त इत्यर्थः । रा० ।

[ सिद्धलोकाः महर्लोकादयः, तद्गतास्तद्वासिनः । महाहिरनन्तस्तद्रूपकम् । गो० ]

---

1. क-ख-घ-ङ '-णे हि', च '-णे च' । 2. ग-च-छ '-पिणम्' ।

# नवमोऽध्यायः

—— ०·——

श्रीमहादेव उवाच—

लक्ष्मणं तु परित्यज्य [1]रामो दुःखसमन्वितः ।
मन्त्रिणो [2]नैगमांश्चैव वसिष्ठं चेदमब्रवीत् ॥ १ ॥

अभिषेक्ष्यामि भरतम[3]धिराज्ये महामतिम् ।
अद्य चाहं गमिष्यामि लक्ष्मणस्य पदानुगः ॥ २ ॥

एवमुक्ते रघुश्रेष्ठे पौरजानपदा[4]स्तदा ।
द्रुमा इव च्छिन्नमूला [5]दुःखार्त्ताः पतिता भुवि ॥ ३ ॥

---

१। नैगमान् बणिज इति रामवर्मा, वयन्तु नैगमान् वेदविदः पण्डितानित्यर्थमेव समीचीनं मन्यामहे, अभिषेकादिकार्योपदेशकत्वेन तेषाम् ।

२। पदानुगः पदान्यनु लक्षीकृत्य गन्ता। अन्यथा तेन बहु व्यवधानं स्यादित्यर्थः । रा० ।

अधिराज्ये अयोध्याराज्ये इत्यर्थः । तच्च व्यक्तम्—

अद्य राज्येऽभिषेक्ष्यामि भरतं धर्मवत्सलम् ।
अयोध्यायां महाबाहुं ततो यास्याम्यहं भुवि ॥ ७।११३।२

इत्यादिना वाल्मीकीये । तत्र प्रथममनेनारण्यागमनप्रस्तावः । ततः

प्रवेशयत सम्भारान् न स्यात् कालात्ययो यथा ।
अद्यैवाहं गमिष्यामि लक्ष्मणस्य पदानुगः ॥ ७।११३।३

इत्यनेन पदानुसरणप्रस्तावः ।

३। अत्र वाल्मीकीये—

एवं ब्रुवति काकुत्स्थे सर्वाः प्रकृतयस्तदा ।
मूर्धभिः प्रणता भूमौ गतसत्त्वा इवाभवन् ॥ इति ७।११३।४ ।

---

1. क 'दुःखशोक-' । 2. क 'निग-' । 3. ग-च-छ '-ध्यराज्ये' । 4. ग-च-छ '-स्तथा' । 5. क 'दुःखिताः' ।

मूर्छितो भर[1]तश्चाऽपि श्रुत्वा रामाभिभाषितम्।
गर्हयामास राज्यं स [2]प्राहेदं [3]रामसन्निधौ ॥ ४ ॥
सत्येन [4]च शपे॰नाहं त्वां विना दिवि वा भुवि।
काङ्क्षे राज्यं रघुश्रेष्ठ शपे त्वत्पादयोः प्रभो ॥ ५ ॥
इमौ [5]कुशलवौ राजन्नभि[6]षिञ्चस्व राघव।
कोशलेषु कुशं वीरमुत्तरेषु लवं तथा ॥ ६ ॥
गच्छन्तु दूतास्त्वरितं शत्रुघ्नानयनाय हि।
अस्माकमेतद् गमनं स्ववासाय शृणोतु सः ॥ ७ ॥
भरतेनोदितं श्रुत्वा पतितास्ताः समीक्ष्य तम्।
प्रजाश्च भयसंविग्ना रामविश्लेषकातराः।
वसिष्ठो भगवान् राममुवाच सदयं वचः ॥ ८ ॥

---

४। भरतो वाऽपि भरतश्चापीत्यर्थः। राज्यं गर्हयामास तन्निन्दापूर्वकमिदं प्राह चेत्यर्थः। रा०।

प्राच्ये वाल्मीकीये न तु श्रवणमात्रेण भरतस्य मूर्च्छा, अपि तु विषण्णता। तथा च तत्र—

भरतश्च विषण्णोऽभूच्छ्रुत्वा रामस्य भाषितम्।
राज्यं विगर्हयामास राघवश्चेदमब्रवीत् ॥ इति ७।११३।५।

पाश्चात्ये पुनः

भरतश्च विसंज्ञोऽभूच्छ्रुत्वा रामस्य भाषितम्। ७।१२१।५

इत्यादिना मूर्च्छैवाभिहिता।

५। सत्येन शपे सत्यं मे नश्यतु यदि राज्याकाङ्क्षेत्येकः शपथः। त्वत्पादयोश्च शपे त्वत्पादयोः स्पर्शनेन च शपथ इत्यपरः शपथः। रा०।

सत्येन शपे किमित्याह—त्वां विनेति। त्वां विना दिवि भुवि वा राज्यं न काङ्क्षे इत्यन्वयः। किं वाङ्मात्रेण विश्वसिमीति पुनराह शपे इति। यदि वाक्यमात्रेण ते न विश्वासस्तर्हि त्वत्पादयोस्त्वत्पादस्पर्शपूर्वकमित्यर्थः। अत्र वाल्मीकि —

सत्येनाह शपे राजन् सर्वलोकेन चैव हि।
न कामये यथा राज्यं विना त्वां रघुनन्दन ॥ इति ७।११३।६।

६। तर्हि सर्वगमने को राज्यं पालयिष्यतीत्याशङ्क्याऽऽह—इमाविति। रा०।

८। भरतेनोदितं श्रुत्वा रामविश्लेषकातरा भयसंविग्नाः प्रजाः पतिता निम्नमस्तकाः

---

1. क-ख-ग-घ '-तो वाऽपि'। 2. ङ 'चाऽऽहेदं'। 3. ग 'राज-'। 4. ग-च ङ 'तु'। 5. ग च कुशी-'। 6. ङ '-षेचय'।

पश्य ताताऽऽदरात् सर्वाः पतिता भूतले प्रजाः ।
तासां भावानुगं राम प्रसादं कर्त्तुमर्हसि ॥ ९ ॥

श्रुत्वा वसिष्ठवचनं ताः समुत्थाप्य पूज्य च ।
सस्नेहो रघुनाथस्ताः किं करोमीति चाब्रवीत् ॥ १० ॥

ततः प्राञ्जलयः प्रोचुः प्रजा भक्त्या रघूद्वहम् ।
[1]यातुमिच्छसि यत्र त्वमनुगच्छामहे वयम् ॥ ११ ॥

अस्माकमेषा परमा प्रीतिर्धर्मोऽयमक्षयः ।
तवानुगमने[2] राम हृद्गता नो दृढा मतिः ॥ १२ ॥

पुत्रदारादिभिः सार्धमनुयामोऽद्य सर्वथा ।
तपोवनं वा स्वर्गं वा पुरं वा रघुनन्दन ॥ १३ ॥

ज्ञात्वा तेषां मनोदार्ढ्यं कालस्य वचनं [3]यथा ।
भक्तं[4] पौरजनं चैव बाढमि[5]त्याह राघवः ॥ १४ ॥

[6]कृत्वैव निश्चयं रामस्तस्मिन्नेवाहनि प्रभुः ।
प्रस्थापयामास च तौ राम[7]भद्रः कुशीलवौ ॥ १५ ॥

---

अधोमुखा इत्यर्थः, अभवन्निति शेषः। ताः समीक्ष्य वसिष्ठस्तं रामम् उवाचेत्यन्वयः, वाल्मीकीये प्रायस्तथाऽवलोकनात्। तथाच प्राच्ये—

भरतस्य वचः श्रुत्वा प्रकृतीस्ताः सुदुःखिताः ।
दृष्ट्वा चाधोमुखीः सर्वा वसिष्ठो वाक्यमब्रवीत् ॥ इति ७।११३।९ ।

पाश्चात्त्ये पुनः

तच्छ्रुत्वा भरतेनोक्तं दृष्ट्वा चापि ह्यधोमुखान् ।
पौरान् दुःखेन सन्तप्तान् वशिष्ठो वाक्यमब्रवीत् ॥ इति ७।१२१।९ ।

९। तासाम् आसामित्यर्थः। भावानुगम् अभिलाषानुरूपम्। वाल्मीकीयेऽपि—

वत्स राम इमाः पश्य धरणीं प्रकृतीर्गताः ।
विद्ध्यासामीप्सितं काममासां मा विप्रियं कृथाः ॥ इति ७।११३।१० ।

१०। पूज्य संपूज्य अनुरागादिदर्शनेन सम्मान्य इत्यर्थः।

---

1 ग-घ-च-क 'गन्तु-'। 2. क '-नेऽस्माकं'। 3. ग-च 'तथा'। 4. ग '-क्तपौर-'। 5. च '-त्येव'। 6. म 'ज्ञात्वैवं', क 'कृत्वैवं'। 7. ग-च '-चन्द्रः'।

अष्टौ रथसहस्राणि सहस्रञ्चैव दन्तिनाम् ।
षष्टिं [1]चाश्वसहस्राणामेकैकस्मै ददौ [2]बलम् ॥ १६ ॥

बहु[3]रत्नौ बहुधनौ हृष्टपुष्टजनावृतौ ।
अभिवाद्य गतौ रामं कृच्छ्रेण तु कुशीलवौ ॥ १७ ॥

शत्रुघ्नानयने दूतान् प्रेषयामास राघवः ।
ते दूतास्त्वरितं गत्वा शत्रुघ्नाय न्यवेदयन् ॥ १८ ॥

काल[4]स्याऽऽगमनं पश्चादत्रिपुत्रस्य चेष्टितम् ।
लक्ष्मणस्य च निर्याणं प्रतिज्ञां राघवस्य च ।
पुत्राभिषेचनं चैव सर्वं रामचिकीर्षितम् ॥ १९ ॥

---

१९ । नरो० । अत्रिपुत्रस्य दुर्वाससः ।

---

१७ । कृच्छ्रेण भगवद्वियोगजदुःखासहिष्णुतया क्लेशेन । रा० ।

गताविति नगर्यौरित्यर्थः । कुशीलवौ विशिनष्टि—बहुरत्नौ बहुधनाविति । हृष्टपुष्टजनावृताविति हृष्टपुष्टजनानुगतावित्यर्थः ।

१८ । प्रेषयामास मथुरामिति शेषः, तदानीं शत्रुघ्नस्य तत्रैवावस्थितिरासीत् । अत्राऽऽह वाल्मीकिः—

ते दूताः कोशलेन्द्रेण चोदिता लघुविक्रमाः ।
प्रयाता मथुरां शीघ्रं न च मार्गे तदाऽवसन् ॥
अहोरात्रैस्त्रिभिस्ते तु संप्राप्ता मथुरां पुरीम् ।
शत्रुघ्नाय यथावृत्तं सर्वं ते व्याचचक्षिरे ॥
लक्ष्मणस्य च निर्याणं प्रतिज्ञां राघवस्य च ।
अनुरागञ्च पौराणामभिषेकञ्च पुत्रयोः ॥ इति ७।११३।२०-२२।

१९ । अत्रिपुत्रस्य दुर्वाससः । प्रतिज्ञां प्रजासु सहनयनविषयाम् । चिकीर्षितं स्वगमनरूपम् । रा० ।

पुत्राभिषेचनं पुत्रयोरभिषेचनम् । तयो राज्यमाह वाल्मीकीये—

कुशस्य च पुरीं रम्यां विन्ध्यपर्वतसानुषु ।
कुशावतीति या नाम्ना विख्याता सर्वतो दिशम् ॥
लवस्य च पुरीं रम्यां श्रावतीं लोकविश्रुताम् । इति ७।११३।२३-२४ ।

---

1. क 'चाथ सह-' । 2. क 'प्रभुः' । 3. क '-रत्नैर्बहुधनैर्हृ-' । 4 च-क '-स्य गम-' ।

श्रुत्वा तद् दूतवचनं शत्रुघ्नः कुलनाशनम् ।
व्यथितोऽपि धृतिं [1]लब्ध्वा पुत्रावाहूय सत्वरः ॥ २० ॥
अभिषिच्य सुबाहुं [2]वै मथुरायां महाबलः ।
यूपकेतुश्च[3] विदिशानगरे शत्रुसूदनः[4] ।
अयोध्यां त्वरितं प्रागात् स्वयं रामदिदृक्षया ॥ २१ ॥
ददर्श च महात्मानं तेजसा ज्वलनप्रभम् ।
दुकूलयुगसंवीतमृषिभि[5]श्चाक्षयैर्वृतम् ॥ २२ ॥
अभिवाद्य रमानाथं शत्रुघ्नो रघु[6]पुङ्गवम् ।
प्राञ्जलिर्धर्मसहितं वाक्यं प्राह महामतिः ॥ २३ ॥
अभिषिच्य सुतौ तत्र राज्ये राजीवलोचन ।
तवानुगमने राजन् विद्धि मां कृतनिश्चयम् ।
त्यक्तुं नार्हसि मां वीर भक्तं तव विशेषतः ॥ २४ ॥
शत्रुघ्नस्य दृढां बुद्धिं विज्ञाय रघुनन्दनः ।
सज्जीभवतु मध्याह्ने भवानित्यब्रवीद् वचः ॥ २५ ॥

---

पाश्चात्त्यास्तु

श्रावन्तीति पुरी रम्या श्राविता च लवस्य च । ७।१२१।९

इत्यादिना श्रावतीत्यत्र श्रावन्तीति पठन्ति ।

पाद्मे पुनः कुशावती शरवतीति राज्ययोः संज्ञा । तथाचोत्तरखण्डे—

कुशवत्यां कुशं तञ्च शरवत्यां लवन्तथा ।
स्थापयामास धर्मेण राज्ये स्वे रघुसत्तमः ॥ इति २४४।९३।

२० । कुलस्य भ्रातृसमूहस्य नाशनम् । रा० ।

२१ । वाल्मीकीये सुबाहुशत्रुघातिनौ शत्रुघ्नपुत्रौ । तथाच—

सुबाहुर्मथुरां लेभे शत्रुघाती तु वैदिशम् । इति ७।११३।२९।

पाश्चात्त्येऽपि—

सुबाहुं मथुरायाञ्च वैदिशे शत्रुघातिनम् ।
ययौ स्थाप्य तदाऽयोध्यां रथेनैकेन राघवः ॥ इति ७।१२१।११।

२२ । अक्षयैर्ऋषिभिरतिचिरजीविभिर्वशिष्ठाद्यैः । रा० ।

२४ । तत्र राज्ये सुतावभिषिच्य आगतम् इति शेषः ।

---

1. ग-च 'बद्ध्वा' । 2. च 'स' । 3. क '-श्चाऽऽदिदेश नगरे' । 4. ग-क '-नम्' । 5. च '-श्चाक्षये-' । 6. च '-नन्दनम्' ।

अथ क्षणात् [1]समुत्पेतुर्वानराः कामरूपिणः ।
ऋक्षाश्च राक्षसा[2]श्चैव गोपुच्छाश्च सहस्रशः ॥ २६ ॥
ऋषीणां देवतानाञ्च [3]पुत्रा रामस्य निर्गमम् ।
श्रुत्वा प्रोचू रघुश्रेष्ठं सर्वे वानरराक्षसाः ।
तवानुगमने [4]विद्धि निश्चि[5]तार्थान् हि नः प्रभो ॥ २७ ॥
एतस्मिन्नन्तरे रामं सुग्रीवोऽपि महाबलः ।
यथावदभिवाद्याऽऽह राघवं भक्तवत्सलम् ॥ २८ ॥
अभिषिच्याङ्गदं राज्येऽप्यागतोऽस्मि महा[6]बलम् ।
तवानुगमने राम विद्धि मां कृतनिश्चयम् ॥ २९ ॥
श्रुत्वा तेषां दृढं वाक्यमृक्षवानररक्षसाम् ।
विभीषणमुवाचेदं वचनं मृदु सादरम् ॥ ३० ।
धरिष्यति धरा यावत् प्रजास्तावत् प्रशाधि [7]मे ।
वचनाद्राक्षसं राज्यं शापितोऽसि ममोपरि ।
[8]न किञ्चिदुत्तरं [9]वाक्यं त्वया मत्[10]प्रियकारणात् ॥ ३१ ॥

---

२६ । अथ रामवाक्यानन्तरमित्यर्थः । वानरादीनामागमनमवलम्ब्य वाल्मीकीये—

तस्य वाक्यस्य चाथान्ते वानराः कामरूपिणः ।
ऋक्षराक्षससङ्घाश्च समापेतुरनेकशः ॥
देवपुत्रा ऋषिसुता गन्धर्वाणां सुतास्तथा ।
रामक्षयं विदित्वा ते सर्व एव समागताः ॥ इत्यादि ७।११३।२६-२७।

२७ । ऋषीणां देवतानाञ्च पुत्रा वानरराक्षसाश्चाऽऽगत्य रामस्य निर्गमं श्रुत्वा रघुश्रेष्ठं प्रोचुरित्यन्वयः । वानरराक्षसानां वाक्यं वाल्मीकीये—

ते राममभिवाद्याऽऽहुर्ऋक्षवानरराक्षसाः ।
तवानुगमनार्थं हि संप्राप्ताः स्मो महामते ॥
यदि राम विनाऽस्माभिर्गच्छेस्त्वं पुरुषर्षभ ।
यमदण्डमिवोद्यम्य त्वया स्म विनिपातिताः ॥ इति ७।११३।३८-३९।

२९ । सुग्रीवस्येदं वाक्यं प्राच्ये वाल्मीकीये न दृश्यते, दृश्यते पुनः पाश्चात्त्ये (७।१२१।२२-२३) ।

३० । विभीषणं प्रति रामवाक्यं वाल्मीकीये—

---

1. ग 'खमुत्-', छ 'समापे-' । 2. च '-श्चापि' । 3 छ 'स्रुत्वा' । 4. च 'बुद्धिर्नि-' । 5. च '-तार्था हि' । 6. ग '-वने', च-छ '-बलः' । 7. क 'च' । 8. छ-पुस्तके इदमर्धं द्वात्रिंशश्लोकस्य पूर्वार्धञ्च नास्ति । 9. ख-च 'वाच्य' । 10. क-ख-च-छ '-ह्लत-' ।

एवं विभीषणं [1]तूक्त्वा हनूमन्तमथाब्रवीत् ।
मारुते त्वं चिरं जीव ममाऽऽज्ञां मा मृषा कृथाः ॥ ३२ ॥

---

यावदेव धरिष्यन्ति प्रजास्तावद् विभीषण ।
राक्षसेषु महद्राज्यं लङ्कास्थं पालयिष्यसि ॥
शापितस्त्वं सखित्वेन कार्यान्ते मम शासनम् ।
प्रजास्त्वं रक्ष धर्मेण नोत्तरं वक्तुमर्हसि ॥ इति ७।११३।४१-४२ ।

दृश्यते चात्र नवीनत्वं किञ्चित् पाश्चात्त्ये वाल्मीकीये—

यावत् प्रजा धरिष्यन्ति तावत्त्वं वै विभीषण ।
राक्षसेन्द्र महावीर्य लङ्कास्थः स्वं धरिष्यति ॥
यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी ।
यावच्च मत्कथा लोके तावद्राज्यं तवास्त्विह ॥
शासितश्च सखित्वेन कार्यन्ते मम शासनम् ।
प्रजाः संरक्ष धर्मेण नोत्तरं वक्तुमर्हसि ॥
किञ्चान्यद्वक्तुमिच्छामि राक्षसेन्द्र महाबल ।
आराधय जगन्नाथमिक्ष्वाकुकुलदैवतम् ॥
राजा राक्षसमुख्यानां राघवाज्ञामनुस्मरन् ॥ इति ७।१२१।२५-२९ ।

पाद्मेऽप्युत्तरखण्डे—

राज्यं प्रशाधि धर्मेण मा प्रतिज्ञां वृथा कृथाः ।
यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी ।
तावद्रमस्व सुप्रीतः काले मम पदं व्रज ॥
इत्युक्त्वाऽथ स काकुत्स्थः शार्ङ्गं विष्णुः सनातनम् ।
श्रीरङ्गशायिनं सौम्यमिक्ष्वाकुकुलदैवतम् ॥
सम्प्रीत्या प्रददौ तस्मै रामो राजीवलोचनः ॥ इति २४४।५९-६२ ।

३१ । मे वचनात् प्रशाधि राक्षसं रक्षःसम्बन्धि राज्यञ्च प्रशाधि । अतोऽन्यन्मा वदेत्याह—शापितोऽसीति । अन्यवचनोक्तौ मद्वधपातकं तवेति भावः । रा० ।

३२ । हनूमत्सन्देशानन्तरम्—

मैन्दश्च द्विविदश्चोभावमृतप्राशिनौ हरी ।
यावल्लोका धरिष्यन्ति तावदेतौ भविष्यतः ॥ ७।११३।४५

इत्यादिना वाल्मीकीये अनयोरपि चिरजीवित्वमुक्तम् ।

---

1. क-ख 'त्यक्त्वा' ।

जाम्बवन्तमथ प्राह तिष्ठ त्वं द्वापरान्तरे ।
मया सार्धं भवेद् युद्धं यत्किञ्चित् कारणान्तरे ॥ ३३ ॥

---

३३ । द्वापरान्तरे एतच्चतुर्युगीभिन्नं यत्किञ्चिच्चतुर्युग्यन्तर्गतद्वापरे । युद्धं भवेत् भविष्यति, ततः स्वर्गं गमिष्यसीति शेषः । अत्र जाम्बवद्ग्रहणं मैन्दद्विविदयोरप्युपलक्षणम् । रा० ।

[ जाम्बवन्तमित्यादि । द्वापरान्तरे द्वापरयुगावसरे चतुर्विंशतिचतुर्युगावतारे, न तु नामान्तरद्वापरे । चतुर्युगसम्बन्धिद्वापरावसाने श्रीकृष्णावतारस्य कलिकालीनत्वेऽपि युगसन्धौ द्वापरधर्मस्य बाहुल्यात् कलिधर्मस्याप्रभावात् । यत्किञ्चित्कारणान्तरे स्यमन्तकमणिहेतौ । गो० ]

अत्रस्थोऽयं जाम्बवत्प्रसङ्गो नाम्नाऽपि प्राच्ये वाल्मीकीये न दृश्यते । पाश्चात्त्येऽपि 'जाम्बवन्तं तथोक्त्वा तु' ( ७।१२१।३४ ) एतावन्मात्रम् । अथ जाम्बवन्तं प्राह, त्वं तिष्ठ, मया सह न गमिष्यसीति भावः । कथं त्वां परित्यज्याहं तिष्ठामीत्याह—द्वापरान्तरे इति । द्वापरान्तरे कारणान्तरे कारणान्तरमवलम्ब्य स्यमन्तकमणिनिमित्तमित्यर्थः । यत्किञ्चित् क्षुद्रमतितुच्छमिति यावत्, तथात्वञ्च रावणजरासन्धादियुद्धापेक्षयेति बोद्धव्यम् । युद्धं भवेद् भविष्यतीत्यर्थः । स्यमन्तकमणिनिमित्तमिदं युद्धं भागवते हरिवंशे च दृश्यते । तथाच भागवते दशमस्कन्धे—

आसीत् सत्राजितः सूर्यो भक्तस्य परमः सखा ।
प्रीतस्तस्मै मणिं प्रादात् स च तुष्टः स्यमन्तकम् ॥ ५६।३

इत्यादिना स्यमन्तकनामानं मणिं सत्राजिते सूर्यः प्रददौ ।

तमेकदा मणिं कण्ठे प्रतिमुच्य महाप्रभम् ।
प्रसेनो हयमारुह्य मृगयां व्यचरद् वने ॥
प्रसेनं सहयं हत्वा मणिमाच्छिद्य केशरी ।
गिरिं विशञ् जाम्बवता निहतो मणिमिच्छता ॥ ५६।१३-१४

इत्यादिना जाम्बवतस्तन्मणिलाभः ।

सोऽपि चक्रे कुमारस्य मणिं क्रीडनकं बिले ।
अपश्यन् भ्रातरं भ्राता सत्राजित् पर्यतप्यत ॥
प्रायः कृष्णेन निहतो मणिग्रीवो वनं गतः ।
भ्राता ममेति तच्छ्रुत्वा कर्णे कर्णेऽजपञ् जनाः ॥
भगवांस्तदुपश्रुत्य दुर्यशो लिप्तमात्मनि ।
माष्टुं प्रसेनपदवीमन्वपद्यत नागरैः ॥ ५६।१५-१८

ततस्तान् राघवः प्राह ऋक्ष[1]राक्षसवानरान् ।
सर्वानेव मया सार्धं प्रयातेति दयान्वितः ॥ ३४ ॥

---

इत्यादिना मणेरन्वेषणाय सपौरस्य कृष्णस्य वनगमनम् ।

हतं प्रसेनमश्वञ्च वीक्ष्य केशरिणा वने ।
तञ्चाद्रिपृष्ठे निहतमृक्षेण ददृशुर्जनाः ॥ ५६।१९

इति तत्र ऋक्षं प्रसेनस्य हन्तारमवलोक्य तेन सह युद्धाय भगवतो जाम्बवद्विलप्रवेशो युद्धञ्च । तथाच—

एको विवेश भगवानवस्थाप्य बहिः प्रजाः ॥
तत्र दृष्ट्वा मणिश्रेष्ठं बालक्रीडनकं कृतम् ।
हर्तुं कृतमतिस्तस्मिन्नवतस्थेऽर्भकान्तिके ॥
तमपूर्वं नरं दृष्ट्वा धात्री चुक्रोश भीतवत् ।
तच्छ्रुत्वाऽभ्यद्रवत् क्रुद्धो जाम्बवान् बलिनां वरः ॥
स वै भगवता तेन युयुधे स्वामिनात्मनः ।
पुरुषं प्राकृतं मत्वा कुपितो नानुभाववित् ॥
द्वन्द्वयुद्धं सुतुमुलमुभयोर्विजिगीषतोः ।
आयुधाश्मद्रुमैर्दोर्भिः क्रव्यार्थे श्येनयोरिव ॥
आसीत् तदष्टाविंशाहमितरेतरमुष्टिभिः ।
वज्रनिष्पेषपरुषैरविश्रममहर्निशम् ॥ इति ५६।१९-२४ ।

हरिवंशेऽपि प्राय एवमेव ( ३८ अ० १२-४४ ) ।

अत्राऽऽह पाद्मोत्तरखण्डे—

द्वापरे समनुप्राप्ते यदूनामन्वये पुनः ।
भूभारस्य विनाशाय समुत्पत्स्याम्यहं भुवि ।
करिष्ये तत्र संग्रामं स्वयं भल्लूकसत्तम ॥ इति २४४।६४-६५ ।

३४ । ततो जाम्बवत्प्रबोधानन्तरं राघवस्तान् समागतान् ऋक्षवानरराक्षसान् सर्वानेव 'मया सार्धं प्रयात यूयम्' इत्याह । वाल्मीकीयेऽपि—

एवमुक्त्वा तु काकुत्स्थस्तदा तानृक्षवानरान् ।
बाढमित्येव गच्छध्वं मया सार्धमथाब्रवीत् ॥ इति ७।११३।४७ ।

---

1. क-च '-वानरराक्षसान्' ।

ततः प्रभाते रघुवंशनाथो विशालवक्षाः सितकञ्ज[1]नेत्रः ।
पुरोधसं प्राह वसिष्ठ[2]मार्यं यान्त्वग्निहोत्राणि पुरो गुरो मे ॥ ३५ ॥
ततो वसिष्ठोऽपि चकार सर्वं प्रास्थानिकं कर्म महद्विधानात् ।
क्षौमाम्बरो दर्भपवित्रपाणिर्महाप्रयाणाय गृहीतबुद्धिः ॥ ३६ ॥
[3]निष्क्रम्य रामो नगरात् सिताभ्राच्छशीव यातः शशिकोटि[4]कान्तिः ।
रामस्य सव्ये सितपद्महस्ता पद्मा गता पद्मविशालनेत्रा ॥ ३७ ॥

---

३५ । नरो० । विशालं बृहद् वक्षो यस्य सः ।

३६ । नरो० । क्षौममम्बरं वस्त्रं यस्य सः । दर्भेण पवित्रौ पाणी यस्य सः ।

३७ । नरो० । शशिकोटिकान्तिरिति । शशिकोटिकान्तिः सन् शरीरं प्राप्तः शशिकोटिकान्तिशरीर इत्यर्थः । सव्ये वामे । सितपद्मे हस्ते यस्याः सा तथा । पद्मे इव विशाले लोचने नेत्रे यस्याः सा । यद्वा पद्मे इव पद्मदले इव विशाले दीर्घे नेत्रे यस्याः सा । पद्मपदस्य दले लक्षणा ।

---

३५ । अग्निहोत्राणीति । अत्राऽऽह वाल्मीकिः—

अग्नयो मे प्रयान्त्वग्रे दीप्यमाना द्विजैर्वृताः ।
वाजपेयातपत्राणि निर्यान्तु मम चाग्रतः ॥ इति ७।११४।२।

३६ । प्रास्थानिकं महाप्रस्थानोचितम् । क्षौमाम्बर इत्यादि रामविशेषणम् । रा० । महाप्रयाणं हि सङ्कल्पपूर्वकम् अन्यलोकप्राप्तये गमनम् । दर्भपवित्रपाणिरङ्गुलिविवरगृहीताभ्यां कुशाभ्यां पवित्रीकृतकरः । अत्राऽऽह वाल्मीकिः—

ततो वशिष्ठस्तेजस्वी सर्वं निरवशेषतः ।
चकार विधिवद्धर्मं महाप्रस्थानिकीं विधिम् ॥
ततः क्षौमाम्बरो रामो ब्रह्मचारी समाहितः ।
कुशान् गृहीत्वा पाणिभ्यां महाप्रस्थानमुद्यतः ॥ इति ७।११४।३-४ ।

पाद्मोत्तरखण्डेऽपि—

ततः शुक्लाम्बरधरो ब्रह्मचारी ययौ परम् ।
कुशान् गृहीत्वा पाणिभ्यां संसक्तः प्रययौ परम् ॥ इति २४४।६८ ।

३७ । [ नगरात् सिताभ्रादिति । सौधमयत्वान्नगरस्य सिताभ्रतुल्यत्वम्, यथा सिताभ्रात् शशी निष्क्रामति तद्वत् । पद्मा लक्ष्मीः सितपद्महस्ता सती रामस्य सव्ये पार्श्वे स्थिताऽभूत् । गो० ]

---

1. ग-च '-लोचनः' । 2. च '-मादराद्' । 3 च 'चक्राम' । 4 क '-कान्तः' ।

पा[1]र्श्वेऽथ दक्षेऽरुणकञ्जहस्ता श्यामा ययौ [2]भूरपि दीप्यमाना ।
[3]शस्त्राणि शास्त्राणि धनुश्च बाणा जग्मुः पुरस्ताद् धृतविग्रहास्ते ॥ ३८ ॥
वेदाश्च सर्वे धृतविग्रहाश्च ययुश्च सर्वे मुनयश्च दिव्याः ।
माता श्रुतीनां प्रणवेन [4]साध्वी ययौ हरिं व्याहृतिभिः समेता ॥ ३९ ॥
गच्छन्तमेवानुगता जनास्ते सपुत्रदाराः सह बन्धु[5]वर्गैः ।
अनावृत[6]द्वारमिवापवर्गं रामं व्रजन्तं ययुरात्तकामाः ॥ ४० ॥
सान्तःपुरः सानुचरः सभार्यः शत्रुघ्नयुक्तो भरतोऽ[7]नुयायात् ।
गच्छन्तमालोक्य रमासमेतं श्रीराघवं पौरजनाः समस्ताः ।
सबालवृद्धाश्च ययुर्द्विजाग्र्याः सामात्यवर्गाश्च समन्त्रिणो ययुः ॥ ४१ ॥

---

पद्मा लक्ष्मीः । पूर्वगता सीता तत्काले लक्ष्मीरूपेण सन्निहिता जातेत्यर्थः ।

३८ । अरुणकञ्जहस्ता रक्तपद्महस्ता, भूस्तदधिष्ठात्री देवता । एवमग्रेऽपि बोध्यम् । रा० ।

[ भूः शक्तिविशेषो रक्तपद्महस्ता सती श्यामा श्यामवर्णा दक्षिणपार्श्वे ययौ । इयं रूपान्तरमापन्ना पृथिवी एव । 'वसुधाकमलाशोभि पार्श्वद्वन्द्वमि'ति गौतमीयसंवादात् । गो० ]

सव्ये पार्श्वे तु रामस्य पद्मा श्रीः सुसमाहिता ।
दक्षिणे श्रीर्विशालाक्षी व्यवसायस्तथाऽग्रतः ॥ ७।११४।६

इत्यादिना भूरित्यत्र ह्रीरिति पठन्ति प्राच्ये वाल्मीकीये । पाश्चात्त्ये पुनः—

रामस्य दक्षिणे पार्श्वे पद्मा श्रीः समुपाश्रिता ।
सव्येऽपि च मही देवी व्यवसायस्तथाऽग्रतः ॥ ७।१२२।६

इत्यादिना अस्य समत्वमेव ।

शस्त्राणि शास्त्राणि च परिगृहीतमानुषशरीराणीत्यर्थः । तथाच—

शरा नानाविधास्तत्र धनुश्चाऽऽयतमुत्तमम् ।
अनुव्रजन्ति काकुत्स्थं सर्वे मानुषविग्रहाः ॥
वेदा ब्राह्मणरूपेण ... ... ... ।७।११४।६-७ ।

३९ । [ माता श्रुतीनामिति । श्रुतीनां माता गायत्री प्रणवेन सप्रणवा सव्याहृतिश्च धृतविग्रहा गृहीतशरीरा ययाविति सम्बन्धः । गो० ]

४० । अनावृतद्वारमिवापवर्गतुल्यं व्रजन्तं राममनुययुः । रा० ।

४१ । सामात्यवर्गाः समन्त्रिणो द्विजाग्र्या ययुः । रा० ।

---

1. च '-र्श्वे च' । 2. ग-ङ 'ह्रीरपि' । 3. ख-घ-ङ 'शास्त्राणि शस्त्राणि' । 4. ग च-छ 'साध्वी' । 5. ङ '-वर्गः' । 6. ङ '-द्वार इवा-' । 7. ङ '-न्वगात्तत:' ।

सर्वे गताः क्षत्रमुखाः प्रहृष्टा वैश्याश्च शूद्राश्च तथाऽपरे [1]च ।
सुग्रीवमुख्या हरिपुङ्गवाश्च स्नाता विशुद्धाः शुभशब्दयुक्ताः ॥ ४२ ॥

न कश्चिदासी[2]द्धवदुःखयुक्तो दीनोऽथवा [3]बाह्यसुखेषु सक्तः ।
आनन्दरूपानुग[4]तानुरक्ता ययुश्च रामं पशुभृत्यवर्गैः[5] ॥ ४३ ॥

भूतान्यदृश्यानि च यानि [6]तत्र ये प्राणिनः स्थावरजङ्गमाश्च ।
साक्षात् परात्मानमनन्तशक्तिं जग्मुर्विरक्ताः परमेकमीशम् ॥ ४४ ॥

[7]नाऽऽसीदयोध्यानगरे[8] तु जन्तुः कश्चित्तदा राममना न यातः ।
शून्यं बभूवाखिलमेव तत्र [9]पुरं गते राजनि रामचन्द्रे ॥ ४५ ॥

---

४३ । नरो० । आनन्दरूपानुगते आनन्दरूपानुगमने अनुरक्ताः ।

---

४२ । क्षत्रमुखाः क्षत्रं क्षत्रिया मुखं मुख्या अग्रेसरा येषां तादृशा वैश्यादयः । रा० ।

४३ । दुःखबाह्यसुखयोगाभावे हेतुः आनन्दरूपानुगताः, आनन्दरूपं राममनुगताः । तदनुगमनात्तदानन्दप्रतिभासात्तदयोगः सर्वत्र वैराग्यञ्चेति भावः । रा० ।

४४ । जग्मुरनुजग्मुः । रा० ।

४५ । यो राममना रामं न यातो नानुयातस्तादृशो जन्तुर्नाऽऽसीदित्यन्वयः । रा० ।

अत्र विशेषेणाऽऽह वाल्मीकिः—

द्रष्टुकामोऽथ निर्याणं राज्ञो जानपदो जनः ।
संप्राप्तः सोऽपि संप्रेक्ष्य राममेवाभ्ययात्तदा ॥
ऋक्षवानररक्षांसि जनाश्च पुरवासिनः ।
जग्मुः परमया लक्ष्म्या पृष्ठतः सुसमाहिताः ॥
यानि भूतानि नगरे ह्यन्तर्धानगतान्यपि ।
रामं तान्यनुयान्ति स्म स्वर्गद्वारमुपागतम् ॥
यानि पश्यन्ति काकुत्स्थं स्थावराणि चराणि च ।
सत्त्वानि प्रस्थितं स्वर्गमनुयान्ति स्म तान्यपि ॥
नोच्छ्वसत् तदयोध्यायां सुसूक्ष्ममपि दृश्यते ।
राममेवानुयातेषु तिर्यग्योनिगतेष्वपि ॥ इति ७।११४।१७-२१ ।

---

1. ङ 'वा' । 2. ग '-ह्रय-' । 3. ग-च 'राज्य-' । 4. क-ख-घ-ङ '-ता विर-', च '-तानुरागा' । 5. ग-च '-र्गाः' । 6. क-घ 'यच' । 7. च 'भा-' । 8. च 'न', ङ '-रेषु' । 9. ङ 'याते पुर' ।

[1]ततोऽतिदूरं नगरात् स गत्वा दृष्ट्वा [2]नदीं तां हरिनेत्रजाताम् ।
ननन्द रामः स्मृतपाव[3]नोऽसौ ददर्श चाशेषमिदं हृदि[4]स्थम् ॥ ४६ ॥
अथाऽऽगतस्तत्र पितामहो महान् देवाश्च सर्वे ऋषयश्च सिद्धाः ।
विमानकोटीभिरपारपारं समावृतं खं सुर[5]सेविताभिः ॥ ४७ ॥
रविप्रकाशाभिरभिस्फुर[6]त् खं ज्योतिर्मयं तत्र नभो बभूव ।
स्वयंप्रकाशैर्महतां महद्भिः समावृतं [7]पुण्य[8]कृतां वरिष्ठैः ॥ ४८ ॥

---

४६ । नरो० । आदौ स्मृतः पश्चात् पावनः स्मृतपावनः ।

४७-४८ । नरो० । सुरसेविताभी रविप्रकाशाभिः विमानकोटीभिरभिस्फुरत् खमपारपारं ......तत्र काले नभो बभूव तत्र हेत्वन्तरमाह—स्वयंप्रकाशैरिति । यतः पुण्यकृतां वरिष्ठैरतिशयेन उरुभिरत एव महतां महद्भिः ( असौ सुरा देवता यासां ताभिः ? ) अभिस्फुरत् । तथाच व्याडिः—'खशब्दः शून्यबिन्द्वोश्च स्वर्गकोषेन्द्रियेष्वपी'ति । अविद्यमानं पारमन्तो यस्य तादृशं पारं यस्य तत् । महतां महद्भिरतिमहद्भिरित्यर्थः ।

---

४६ । हरिनेत्रजातां सरयूम् । स्मृतं पावनं विराड्रूपमात्मनो येन सः । अशेषमिदं जगद् हृदिस्थं ददर्श, आत्मानं विराड्रूपं स्मृतवानित्यर्थः । रा० ।

अतिदूरम्—

अध्यर्धयोजनं गत्वा नदीं पश्चान्मुखाश्रिताम् । ७।११०।१

इत्यादिना अर्धयोजनाधिकं गत्वेति वाल्मीकिः, पाद्मोत्तरखण्डे पुनः—

अथ त्रियोजनं गत्वा नदीं पश्चान्मुखीं स्थिताम् । २४४।७६

इत्यादिना त्रियोजनगमनात् परमित्युक्तम् । हरिनेत्रजातां सरयूमित्यर्थः । तथाच वाल्मीकीये—

सरयूं पुण्यसलिलां ददर्श रघुनन्दनः ॥ ७।११०।१ ।

पाद्मोत्तरेऽपि—

सरयूं पुण्यसलिलां प्रविवेश सहानुगः । इति २४४।७६ ।

४७ । अपारपारम् अवधिरूपपारद्वयहीनं तादृशमपि विमानावृतमासीत् । येऽत्र लोके पुण्यं कृत्वा स्वर्गे सर्वेभ्य आधिक्यं प्राप्तास्तैश्च नभः समावृतम् । रा० ।

[ अपारपारम् अपारमनवच्छेद्यं पारं यस्य तथाभूतं खमाकाशम् । सुरदेवताभिः सुरेषु गन्धर्वादिष्वपि देवताभिः पूज्यतमैरिन्द्रादिभिः समावृतं व्याप्तम् । गो० ]

४८ । ज्योतिर्मयं नक्षत्रगणप्रचुरमिव । रा० ।

---

1. ख 'ततो वि-' । 2. छ 'तदा' । 3. ख-ग-घ '-नोऽतो', च '-नस्ततो' । 4. छ 'स्थितम्' । 5. ग-च-छ '-द्रैव-' । 6 ग '-न्मुहुर्व्यो-' । 7 छ 'व्योम विमानसङ्घैः' । 8. च '-ववा' ।

ववुश्च वाताश्च सुगन्धवन्तो ववर्ष [1]वृष्टिः कुसुमावलीनाम् ।
उपस्थिते देवमृदङ्गनादे [2]गायत्सु विद्याधरकिन्नरेषु ॥ ४९ ॥
रामस्तु पद्भ्यां सरयूजलं सकृत् स्पृष्ट्वा [3]परिक्रामदनन्तशक्तिः ।
ब्रह्मा तदा प्राह कृताञ्जलिस्तं रामं परात्मन् परमेश्वरस्त्वम् ॥ ५० ॥
विष्णुः सदानन्दमयोऽसि पूर्णो जानासि तत्त्वं [4]निजमैशमेकम् ।
तथाऽपि दासस्य ममाखिलेश कृतं वचो भक्तपरोऽसि विद्वन् ॥ ५१ ॥
त्वं भ्रातृभिर्वैष्णवमेकमाद्यं प्रविश्य देहं परिपाहि देवान् ।
यद्वा [5]परो वा यदि रोचते तं प्रविश्य देहं परिपाहि नस्त्वम् ॥ ५२ ॥

---

५० । नरो० । परिक्रामत् पर्यक्रामत् । तदानीं ब्रह्मा स्तुत्या श्रीरामं प्रार्थयते—परमेश्वरस्त्वमित्यादि परिपाहि नस्त्वमित्यन्तेन ।

५१ । नरो० । विष्णुः सर्वव्यापकः । तत्त्वं स्वरूपम् । एकमद्वितीयम् । तथाऽपि अखिलेश, मम दासस्य वचः कृतम्, यतो भक्तपरोऽसि ।

५२ । नरो० । भ्रातृभिः, गम्यमानैश्च 'सहार्थे'रिति तृतीया ।

---

[ पुनः कीदृशं नभः स्वयं प्रकाशो येषां ज्योतिर्मयत्वात् । महतामपि महद्भिर्यतः पुण्यवतां वरिष्ठैः श्रेष्ठैः समावृतम् । गो० ]

५० । हे परात्मन् परमेश्वर, जगत्सृष्टिस्थितिलयकर्त्ता त्वमेवेत्यर्थः । रा० ।

परिक्रामत् स्ववासाय गन्तुमुपचक्रमे इत्यर्थः । तथाच वाल्मीकीये—

तस्मिंस्तूर्यशताकीर्णे गन्धर्वाप्सरसायुते ।
सरयूपुलिने रामः पद्भ्यामेवोपचक्रमे ॥ इति ७।११९।७ ।

५१ । त्वमैशमेकं निजं तत्त्वं ब्रह्मरूपं जानासि । नन्वेवं ब्रह्मज्ञस्य ब्रह्मरूपस्य कथं शरीरपरिग्रहोऽत आह—तथाऽपीति । भक्तानुग्रहार्थं मायया सर्वमिदं कृतमिति भावः । रा० ।

[ तथाऽपि एवमपि हे अखिलेश, दासस्य मम वचः कृतं तत्र हेतुः—हे विद्वन् सर्वज्ञ, भक्तपरोऽसि भक्ता एव परे श्रेष्ठाः प्रियत्वे यस्य सः । गो० ]

५२ । अतो वैष्णवं देहं प्रविश्य देवान् पाहि रक्ष । यदीति य इत्यर्थः । अथवा योऽपरो देहस्तव रोचते तं वा प्रविश्य पाहि । रा० ।

[ प्रस्तुतं ज्ञापयति—त्वमित्यादि । त्वं भ्रातृभिः सह लक्ष्मणस्यापि तदानीं नेतुमागतत्वेन बहुवचनम् । एकमद्वितीयम् । आद्यं सर्वकारणम् । वैष्णवं देहं तु चतुर्भुजं तदानीमपि नराकारत्वात् प्रविश्य वैष्णवरूपं धृत्वा देवान् परिपाहि । गो० ]

---

1. क 'वृष्टि' । 2. क 'गन्धर्ववि-' । 3. च 'पराक्राम-' । 4. क 'निजमैश-' । 5. च 'परात्मा', क 'वरो' ।

त्वमेव देवाधिपतिश्च विष्णुर्जानन्ति न त्वां [1]पुरुषा [2]विना माम् ।
सहस्रकृत्वस्तु नमो नमस्ते प्रसीद देवेश पुनर्नमस्ते ॥ ५३ ॥
पितामहप्रार्थनया स रामः पश्यत्सु देवेषु महाप्रकाशः ।
मुष्णंश्च चक्षूंषि दिवौकसां [3]तदा बभूव चक्राच्युतश्चतुर्भुजः ॥ ५४ ॥

---

५३ । नरो० । स्तुत्वाऽसकृन्नमस्करोति—त्वमेवेति पद्येन । जानन्ति न त्वां पुरुषा विना मामिति । मां विना पुरुषास्त्वां न जानन्ति अहमेव जानामीत्यर्थः ।

---

५३ । एवं विष्णुरूपं त्वां मां विना अन्ये पुरुषा न जानन्ति । एवं विष्णुरूपं ज्ञात्वा भक्त्या प्रणमति—सहस्रेति । रा० ।

[ ननु देवाधिपतिरिन्द्र एव पालकस्तेषां किं मया तत्र कार्यमित्यत आह—त्वमेवेत्यादि । त्वमेव देवाधिपतिः शक्रः, त्वमेव विष्णुः पालकोऽपि त्वमेव । तथाच श्रुतिः । 'एकमेवाद्वितीयं ब्रह्म नेह नानाऽस्ति किञ्चन' इत्याद्या । ततो भक्त्युद्रेकेण बहुशः प्रणमति—सहस्रकृत्व इति । सहस्रशब्दोऽत्रासंख्यपरः । गो० ]

५४ । चक्षूंषि मुष्णन् स्वप्रभयेति शेषः । रामदेह एव तथाभूतो जातः । अनेन विष्णुदेह एव मायया द्विभुजत्ववैशिष्ट्येन लोकदृग्गोचर आसीदिति सूचितम् । रा० ।

विष्णो रूपधारणमवलम्ब्य पाद्मोत्तरखण्डे—

तस्मिन् सूर्यकराकीर्णे पुष्पवृष्टिनिपातिते ।
उत्सृज्य मानुषं रूपं स्वां तनुं प्रविवेश ह ॥
अंशाभ्यां शङ्खचक्राभ्यां शत्रुघ्नभरतावुभौ ।
तदा तेन महात्मानौ दिव्यतेजःसमन्वितौ ॥
शङ्खचक्रगदाशार्ङ्गपद्महस्तश्चतुर्भुजः ।
दिव्याभरणसम्पन्नो दिव्यगन्धानुलेपनः ॥
दिव्यपीताम्बरधरः पद्मपत्रनिभेक्षणः ।
युवा कुमारः सौम्याङ्गः कोमलावयवोज्ज्वलः ॥
सुस्निग्धनीलकुटिलकुन्तलः शुभलक्षणः ।
नवदूर्वाङ्कुरश्यामः पूर्णचन्द्रनिभाननः ॥
देवीभ्यां सहितः श्रीमान् विमानमधिरुह्य च ।
तस्मिन् महासने दिव्ये मूले कल्पतरोः प्रभुः ॥
निषसाद महातेजाः सर्वदेवैरभिष्टुतः ॥ इति २५४।८१-८८ ।

---

1. च 'पुरुषाभिमानाः' । 2. ग 'विमूढाः', छ 'विमलम्' । 3. ग-घ-छ 'सदा' ।

शेषो बभूवेश्वरतल्पभूतः सौमित्रिरत्यद्भुतभोगधारी ।
बभूवतु[1]श्चक्रदरौ [2]च दिव्यौ कैकेयिसूनुर्लवणान्तकश्च ॥ ५५ ॥
सीता च लक्ष्मीरभवत् पुरैव रामो हि विष्णुः पुरुषः पुराणः ।
[3]सहानुजः [4]पूर्वशरीरकेण बभूव तेजोमयदिव्यमूर्त्तिः ॥ ५६ ॥
विष्णुं समासाद्य सुरेन्द्रमुख्या देवाश्च सिद्धा मुनयश्च यक्षाः ।
पितामहाद्याः [5]परितः परेशं स्तवैर्गृणन्तः परिपूजयन्तः ॥ ५७ ॥
आनन्दसंप्लावितपूर्णचित्ता बभूविरे प्राप्तमनोरथास्ते ।
तदाह विष्णुर्द्रुहिणं महात्मा [6]एते हि भक्ता [7]मयि चानुरक्ताः ॥ ५८ ॥

---

५५ । नरो० । चक्रदराविति । दरः शङ्खः । कै···रः लवणान्तकः शत्रुघ्नः ।

५८ । नरो० । आनन्दसंप्लावितम् आनन्दव्याप्तम्, अत एव पूर्णं सुखेच्छादुःखेच्छारहितं चित्तं येषां ते तथा ।

---

५५ । भोगः सर्पशरीरम् । पूर्वगतोऽपि स तस्मिन्नवसरे तेन देहेन सन्निहितः । दरः शङ्खः । लवणान्तकः शत्रुघ्नः । रा० ।

[ ईश्वरतल्पभूत ईश्वरस्य शय्यारूपः अत्यद्भुतभोगधारी भोगः फणः तद्युक्तः सौमित्रिर्लक्ष्मणः शेषोऽनन्तो बभूव । चक्रदरौ चक्रशङ्खौ । लवणान्तकः शत्रुघ्नः । गो० ]

५६ । सीता च पुरैव लक्ष्मीरूपाऽभवत् । साऽपि तत्काले लक्ष्मीरूपेण सन्निहिता आसीदिति शेषः । हि यतो रामो विष्णुरित्यर्थः । पूर्वशरीरकेण विष्णुदेहेन । नन्वेवं भगवतो विष्णुरूपप्राप्त्या वैकुण्ठवास इत्यायातम् । एवञ्च सभापर्वणि भारते सर्वदिक्पालसभावर्णने यमसभाप्रस्तावे दाशरथी रामो यमसभायां दृष्ट इति नारदेनोक्तम्, तद् विरुध्यते इति चेत्? अत्र वदामः—अवतारपरिग्रहस्य हि प्रयोजनद्वयम्—दुष्टवधेन शिष्टपालनम्, स्वाचरणेन लोकानां धर्ममर्यादाबोधनञ्च । एतदर्थमेव तेषां तत्तत्कर्मानुष्ठाने प्रवृत्तिरन्यथा अकामस्य भगवतः किं यज्ञाद्यनुष्ठानेन । एवञ्च धर्मबोधनार्थं तदनुष्ठानवत् [illegible]ष्ठानस्यामुकलोकवासः फलमिति बोधयितुं दाशरथिरामत्वप्रत्यभिज्ञापकेन केनचिच्छरीरेण तल्लोके वासेनाक्षतेः । रामायणे एतदर्थाकथनं तु इतिहासेषु उक्तत्वात् सर्वज्ञानां वाल्मीक्यादीनां भूतभाविसर्वार्थज्ञानवत्त्वादित्यन्यत्र विस्तरः । रा० ।

५८ । तदेति । तदा तस्मिन् समये विष्णुर्द्रुहिणं ब्रह्माणमाह । रा० ।

---

1. क-छ '-श्चक्रधरौ,' च '-श्छत्रधरौ' । 2. ग 'तु' । 3. ग 'एवं स वै' । 4. च 'सर्वेश-' । 5. ग-च-छ 'पितरः' । 6. ग-च-छ 'ह्येते' । 7. ग 'मम' ।

यान्तं दिवं मामनु[1]यान्ति सर्वे तिर्यक्शरीरा अपि पुण्य[2]युक्ताः ।
वैकुण्ठसाम्यं परमं प्रयान्तु [3]समाविश[4]स्वाऽऽशु ममाऽऽज्ञया त्वम् ॥ ५९ ॥
श्रुत्वा हरेर्वाक्यमथाब्रवीत् कः सान्तानिकान् यान्तु विचित्रभोगान् ।
लोका[5]न्मदीयोपरि दीप्यमानांस्त्वद्भावयुक्ताः कृतपुण्यपुञ्जाः ॥ ६० ॥
ये चापि ते राम पवित्रनाम [6]गृणन्ति मर्त्या लयकाल [7]एव ।
अज्ञानतो वाऽपि [8]भजन्तु लोकांस्तानेव योगैरपि चाधिगम्यान् ॥ ६१ ॥

---

५९ । नरो० । वैकुण्ठस्य साम्यं यत्र तत्तथा ।

६० । नरो० । को ब्रह्मा । त्वद्भावयुक्तास्त्वद्भक्तियुक्ताः ।

[ उत्तरकाण्डे नवमाध्यायव्याख्या समाप्ता ॥ ९ ॥ ]

समाप्ताऽस्य ग्रन्थस्य व्याख्या ॥

---

५९ । [ वैकुण्ठेन साम्यं तुल्यत्वं यस्य तत् परमं स्थानम् । पुनरपि अवतारसमये तेषां सहजननार्थं निरतिशयसुखार्थञ्च वैकुण्ठतुल्यस्थानदानम् । ननु धर्महीनानां तिर्यगादीनां कथं त्वत्तुल्यस्थानं दातव्यमित्याह—ममाऽऽज्ञयेति । कथं तवेदृशी आज्ञेत्याह—भक्ता इति । गो० ]

मदनुगमनादेव पुण्ययुक्तत्वानुमानम् । वैकुण्ठसाम्यं वैकुण्ठसमानलोकम् । स्वार्थे ष्यञ् चातुर्वर्ण्यादित्वादार्षत्वाद्वा । एतान् ममाऽऽज्ञया समाविशस्व तादृशलोकं प्रवेशयस्व । रा० ।

६० । को ब्रह्मा । सान्तानिका लोक(वि)शेषाः । तेषां लोकानामुत्तमत्वमाह—मदीयोपरि दीप्यमानान् ब्रह्मलोकादूर्ध्वं दीप्यमानान् । रा० ।

[ श्रुत्वेत्यादि । सान्तानिकान् सान्तानिकसंज्ञकान् लोकान् । व्यक्तिविवक्षया बहुत्वम् । यद्वा सन्तानो भोगपरम्परा तमर्हन्तीति सान्तानिकाः । विचित्रा भोगा येषु तान् यान्तु । यतस्त्वद्भावयुक्तास्त्वयि भक्तियुक्ता अतः कृतपुण्यपुञ्जाः कृतानां पुण्यानां पुञ्जा येषां अगणितपुण्यराशिभाज इत्यर्थः । गो० ]

६१ । अपि च येऽपि मनुष्या लयकाल एव मरणकाल एव न तु ततः प्रागपि कदाचित् । अत्राप्यज्ञानतो वा अज्ञानत एव । वाशब्द एवार्थः । ये पवित्रनाम रामेत्येतद् गृणन्ति वदन्ति तेऽपि तानेव लोकान् योगैः प्राप्यान् भजन्तु । अनेनाऽऽजन्माभ्यस्तयोगोऽन्तकाले त्वन्नामस्मर्त्ता च सम इति सूचितम् । रा० ।

[ आस्तां त्वयि भक्तिवार्त्ता लयकाले त्वन्नामस्मरणमात्रेणैव त्वल्लोकान् व्रजन्तीत्याह—ये चापीति । ये चापि मर्त्या मानुषा लयकाल एव मरणसमकाल एव तव राम इति पवित्रनाम

---

1. च '-यान्तु' । 2. च '-पुञ्जाः' । 3. ग 'समं विश' । 4. च '-स्वाऽऽश्रममाज्ञ-' । 5 च '-न् मदीयान् परिदीप्य-' । 6. छ 'शृणन्ति' । 7. छ 'एवम्' । 8. च 'भजन्ति', छ 'भवन्तु' ।